आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९७

भट्टकुमारिलप्रणीतटुप्टीकाख्यव्याख्यासहितं

# श्रीमज्जैमिनिप्रणीतं मीमांसादर्शनम् ।

अष्टमाध्यायमारभ्य दशमाध्यायान्तो विभागः ।

५०/

~~मूल्यम् चत्वारिंशद्रूपकाः~~

(~~रु. ४०-००~~)

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९७

# श्रीमज्जैमिनिप्रणीते मीमांसादर्शने

( अष्टमाध्यायमारभ्य दशमाध्यायान्तो विभागः)

( मीमांसाकण्ठीरव–भट्टकुमारिलप्रणीत–टुप्टीकाख्य-व्याख्यासहितशाबरभाष्योपेतः )

एतत्पुस्तकम्

म. म. प्राध्यापक

**काशीनाथ वासुदेवशास्त्री अभ्यंकर,**

एम्. ए.

विश्वस्तः आनन्दाश्रमसंस्था

तथा

**पं. गणेशशास्त्री जोशी**

आयुर्वेदविशारदः, साहित्यविशारदः

इत्येतैः

**पाठभेदटिप्पण्यादिभिः पुनः संशोधितम् ।**

तच्च

**श्रीमान् गणपतराव यादवराव नातू**

एम्. ए.

कार्यकारी विश्वस्तः, आनन्दाश्रमसंस्था

इत्येतैः

पुण्याख्यपत्तने

श्रीमान् महादेव चिमणाजी आपटे

इत्यभिधेयमहाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये मुद्रयित्वा

शालिवाहन (१८९६) शकाब्दे श्रीकृष्णजन्माष्टम्यां

(श्रावण वद्य अष्टम्यां, मन्दवासरे, १९७४ खिस्ताब्दस्य

अष्टममासस्य दशमदिनाङ्के प्रकाशितम् ।)

मूल्यम् – चत्वारिंशद्रूपकाः (रु. ४०–००)

## मीमांसादर्शने अष्टम-नवम दशमाध्यायस्थाधिकरणानां वर्णानुक्रमसूचपित्रम् ।

---

| अधिकरणम् । | पृष्ठसंख्या । |
|---|---|
| अतिरात्रे षोडशिग्रहणप्रतिषेधाधिकरणम् । | ५३१ |
| अध्रिगुप्रैषगतप्रशंसाशब्दस्य बाहुप्रशंसापरत्वाधिकरणम् । | २१९ |
| अध्रिगुप्रैषगतमेधपतिशब्दस्य देवतापरत्वाधिकरणम् । | १९८ |
| अध्रिगुप्रैषगतश्येनशल्ाकश्यपादिशब्दानां कात्स्न्येंनोद्धरणप्रकाशकत्वाधिकरणम् । | २२० |
| अध्रिगुप्रैषगतोरूकशब्देन वपाभिधानाधिकरणम् । | २१८ |
| अघ्यूघ्न्या होतुः प्राकृतकृत्स्नेडाभक्षानिवृत्त्यधिकरणम् । | ४९३ |
| अनुष्टुब्गायत्रीद्वयप्रग्रथनेन संपादिते; आनुष्टुभे तृचे श्यावाश्वान्धीगवसाम्नोर्गानाधिकरणम् । | १५० |
| अनुयाज–महापितृयज्ञयोर्थैयजामहहोतृवरणपर्युदासाधिकरणम् । | ५२४ |
| अभ्युदयेष्टौ दधिपयसोः प्रणीताधर्मानुष्ठानाधिकरणम् । | १६८ |
| अभ्युदयेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम् । | २३० |
| अवभृथस्यापूर्वत्वाधिकरणम् । | ५१३ |
| अवभृथे स्विष्टकृद्यागीयनिगमादिषु स्विष्टकृद्गुणकयोरग्निवरुणयोरभिधानाधिकरणम् । | ३८८ |
| अव्यक्तयागेषूद्भिदादिषु सौमिकधर्मातिदेशाधिकरणम् । | १० |
| अस्थियज्ञस्य जीवदधिकारिकत्वाधिकरणम् । | २९३ |
| अस्थियज्ञस्य मृताधिकारिकत्वपक्षे क्रत्वर्थानामनुष्ठानाधिकरणम् । | २९६ |
| अस्थियस्य मृताधिकारित्वपक्षे गुणकामानामननुष्ठानाधिकरणम् । | २९६ |
| अस्थियज्ञस्य मृताधिकारित्वपक्षे जपसंस्कारेष्टीना लोपाधिकरणम् । | २९५ |
| अस्थियज्ञस्य मृताधिकारिकत्वपक्षे सूक्तवाकान्तर्गतायुरादिफलप्रकाशकभागाननुष्ठानाधिकरणम् । | २९७ |
| अस्थियज्ञे मृताधिकारपक्षे होतृकामनयाऽनुष्ठीयमानानां गुणकामानामननुष्ठानाधिकरणम् । | २९८ |
| अश्वमेधे विहिताभ्यां प्राकाशाभ्यां प्राकृताध्वर्युभागमात्रस्य बाधाधिकरणम् । | ३४८ |

अधिकरणम् । पुटसंख्या

| अधिकरणम् । | पृष्टसंख्या । |
|---|---|

अधिकरणम् । पुटसंख्या ।

अधिकरणम् । पुटसंख्या ।



फ.



ब.



भ.

अधिकरणम् । पृष्ठसंख्या

| अधिकरणम् । | पुटसंख्या । |
|---|---|



ह.



अष्टम–नवम–दशमाध्यायस्थाधिकरणानां
वर्णानुक्रमसूचीपत्रं संपूर्णम् ।

# अष्टम-नवम-दशमाध्यायस्थ-पूर्वमीमांसासूत्राणां वर्णानुक्रमसूचीपत्रम् ।

—

अष्टम–नवम–दशमाध्यायस्थ–पूर्वमीमांसासूत्राणां
वर्णानुक्रमसूचीपत्रं समाप्तम् ।



ॐ तत्सद्ब्रह्मणे नमः ।

टुप्टीकासहितशाबरभाष्यसमेतं

# श्रीमज्जैमिनिप्रणीतं मीमांसादर्शनम् ।

## अथाष्टमाध्यायस्य प्रथमः पादः ।

( विशेषातिदेशप्रतिज्ञाधिकरणम् ॥ १ ॥ )

[ १ ] अथ विशेषलक्षणम् ॥ १ ॥ प्र० सू०

एवं तावत्सप्तमेनाध्यायेन सामान्यतोऽतिदेशलक्षणमुक्तम् । अविहितधर्मकेष्वैन्द्राग्नादिषु कर्मसु विहितधर्मकेभ्यो दर्शपूर्णमासादिभ्यो धर्मा अतिदिश्यन्त इति । तत्र चिन्ता भवति । किमेकस्मिन् कर्मणि सर्वकर्मसु÷ धर्मातिदेश उतैकस्मादिति । अविशेषात्सर्वेभ्य इति प्राप्तम् । एकेन तु निराकाङ्क्षीकृते कर्मणि द्वितीयधर्मप्राप्तौ किंचि-

---

किमेकस्मिन्कर्मणि सर्वकर्मसु धर्मातिदेश इति । एकस्मिन्कर्मणि ये धर्माः समाम्नायन्ते ते सर्वकर्मस्वतिदिश्यन्त उताहो नैकस्मात्सर्वकर्मस्वतिदेशः। एतस्मिन्ग्रन्थार्थे न्यायो न विरुध्यते । परस्तु× ग्रन्थो न संबध्यते । इतरेण,= यद्येकस्यां विकृतौ सर्वधर्मातिदेश इत्ययं पक्ष आश्रितः स्यात्तदेदमुत्तरं युज्यते, एकेन विध्यन्तेन निराकाङ्क्षीकृते द्वितीयस्य प्राप्तिर्नास्ति । अथैकस्मिन्कर्मणि सर्वधर्मातिदेश उताहो नैकस्मादिति +। सर्वकर्मधर्मातिदेश इत्ययं पक्षो निराकृतः ।

अथ कस्मादुभे इतिकर्तव्यते न प्रवर्तेते*, 'मिथो= विप्रतिषेधात्' इति सूत्रेण निराकृतोयं पक्षः । एकया निराकाङ्क्षीकृते द्वितीया न प्रवर्तते । प्रमा-

---

÷ सर्वकर्मभ्यः-पा० । × परस्तु ग्रन्थः—' एकेन निराकाङ्क्षीकृते ' इत्याद्युपरितनभाष्यग्रन्थ इत्यर्थः । = इतरेण-संशयग्रन्थेनेति शेषः । + नैकस्मादिति-नैवं, किंत्वेकस्मादेवेत्यर्थः । * प्रवर्तेते इति-संशयेनेति पूरणम् । ( अ० ७ पा० ४ अ० १ सू० ६ ) ।

त्कारणं नास्ति । सत्यम् । तदेव तु न ज्ञायते । कस्मिन् कस्येति । तदर्थं विशेषलक्षणं वक्तव्यमास्मिन्नस्येति । तदिदमध्यायादौ प्रतिज्ञायते । अथ विशेषलक्षणमिति । अथेदानीं वृत्तात्सामान्यातिदेशलक्षणादनन्तरं विशेषलक्षणं वक्ष्यामः । तदुच्यमानं यथाकालं बोद्धव्यमिति ॥ १ ॥

( सादृश्यविशेषेण नियतप्रकृतितो धर्मातिदेशाधिकरणम् ॥ २ ॥ )

तदेतत्संक्षेपेणैवोच्यते—

[ २ ] यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ २ ॥ सि०

---

णाभावात् । तस्मात्सर्वधर्मातिदेश इति निर्मूलोऽयं× पक्षः। ईदृशः संशयो युक्तः—किमनियमेन यस्य कस्यचित्सकाशादितिकर्तव्यता प्रवर्तते, उतास्ति कश्चिन्नियम इति । तत्रानियम इति पूर्वः पक्षः । उत्तरस्तु नियमेनैव प्रवर्तते 'अथ विशेषलक्षणम्' इति—एकस्मान्नियमेन* प्रवर्तत इत्यर्थः। विशेष इत्यसाधारण्यमुच्यते । यदि वाऽनियमेन, ततोऽसाधारण्यं न स्यात् । असाधारण्याभावाच्च विशेषो न स्यात् ।

अथवाऽन्यः सूत्रार्थः । विशेषाद्विशेषस्य धर्माः प्रवर्तन्ते । कतरस्मात्कतरस्येत्यत आह—'यस्य लिङ्गमर्थसंयोगात्' इति । संशयस्तु नैव कार्योऽस्मिन् पक्षे ॥ १ ॥

---

तस्यार्थस्य लिङ्गस्य तेन विध्यन्तविशेषेण संयोगोऽनुभूतपूर्वः। संयोगिनोश्चान्यतरो दृश्यमान इतरमदृश्यमानमनुमानाद्बुद्धौ संनिधापयतीति—अयुक्तोऽयं ग्रन्थः । कथम् । यथाऽग्निधूमयोः संबन्धेऽवगते धूमो दृश्यमानोऽग्निमवगमयति, एवं निर्वापादयो न शक्नुवन्त्यनुमापयितुम् । न चामीषां प्रयाजादीनां च संबन्धोऽस्ति । प्रधानेनैव सहामीषां संबन्धः । परस्परसंबन्धे नास्ति तेषां प्रमाणम् । यत्र निर्वापादयो न श्रूयेरन्, तत्राग्न्यन्वाधानादीनामवबोधो न स्यात् । यथा धूमाभावेऽग्न्यवबोधाभावः, एवमिहापि ।

अथोच्येत, कर्मास्माभिरितिकर्तव्यतायुक्तं फलसाधनं दृष्टम् । इदमपि कर्म । तस्यापीतिकर्तव्यतया भवितव्यम् । (एवं= सति दर्वीहोमानामपीति-

---

× निर्मूल.—निराकरणानर्ह इत्यर्थः * नियता प्रवर्तते-पा० । =( ) एवंचिह्नितमध्यस्थः पाठः क्वचिन्नास्ति ।

यस्य वैदिकस्य विध्यन्तरस्य लिङ्गं किंचित्, शब्दगतमर्थगतं वा वैकृत्यां कर्मचोदनायां, तद्गुणवाक्ये वा दृश्यते । तत्र स विध्यन्तः स्यात् । कुतः। अर्थसंयोगात् । तस्यार्थस्य लिङ्गस्य तेन विध्यन्तविशेषणेन संयोगोऽनुभूत पूर्वः । संयोगिनोश्चान्यतरो दृश्यमान इतरमदृश्यमानमप्यनु मानाद्बुद्धौ संनिधापयति । अभिधानवत् । यथा, अग्निहोत्रमित्यभिधानं कौण्डपायिनामयने श्रूयमाणं नैयमिकाग्निहोत्रधर्मान् बुद्धौ संनिधापयति । किमतोऽत्र । एतदतो भवति । अपूर्णं यद्वाक्यं तत्पूरणसमर्थेनावयवेन बुद्धौ संनिहितेनैकवाक्यतां याति । यथा दर्शपूर्णमासभ्यां यजेतेति विध्यादिः, कथमिति विध्यन्तापेक्षः, अग्न्यन्वाधानादिविधानकाण्डेन पाठाद्बुद्धौ संनिहितेनैकवाक्यतां याति । दर्शपूर्णमासाभ्यां यजेतेत्थमिति । एवं विध्यन्तापेक्षो यो वैकृतो विध्यादिः, सोऽपि वैदिकेन विध्यन्तेनानुमानाद्बुद्धौ संनिहितेनैकवाक्यतां यास्यति । यथा, सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इति । तत्र

---

कर्तव्यता । अथोच्येत, यदेकदेवतं सत्फलसाधनं पुरोडाशद्रव्यकं वा तदितिकर्तव्यतया युक्तं दृष्टम् । इहाप्येकदेवतत्वात्पुरोडाशद्रव्यकत्वाच्चेतिकर्तव्यतया भवितव्यम् )। उच्यते । अनुमानादितिकर्तव्यतासद्भाव उक्तः। स चाऽऽग्नेयात्प्रवर्तत इति नैतद्विषयमनुमानम् । अथोच्यते, येनैकदेवत्यस्य फलं साधयतोऽग्न्यन्वाधानादि दृष्टमयमपि चैकदेवत्यः, तस्मादस्य भवितव्यमग्न्यन्वाधानादिभिरिति । तन्न । देवदत्तस्य प्रयोजनं साधयतः ( शुक्ले वाससी+ ज्ञाते यदन्यस्यापि प्रयोजनं साधयतः ) ते एव प्राप्नुतस्तदीयेन । किंच फलवतोऽङ्गं प्रयाजा दृष्टा अग्निहोत्रस्यापि फलवत्त्वात्तस्य स्युः । तस्मादनुमानेनेतिकर्तव्यतायां बहसमञ्जसम् । अत उपमानेन धर्मप्राप्तिः । यजेतेत्युक्ते—किं, केन, कथमित्याकाङ्क्षात्रयं भवति । तत्र किं, केनेति फलकरणाभ्यां निराकाङ्क्षीकृते । कथमिति, अव्यावृत्तायामाकाङ्क्षायां संनिधानेऽनाम्नानादितिकर्तव्यतायास्तुल्यं वाक्यं बुद्धौ संनिधीयते । तत्संनिधापितमात्मीयमर्थं संनिधापयति । अनेन÷ द्वारेणाग्न्यन्वाधानादिकेतिकर्तव्यताऽनुपज्यते । एवं चेदत्र सादृश्यं तत्र धर्माः प्राप्यन्ते । असति सादृश्ये नास्ति धर्मप्राप्तिः ।

---

+ ( ) चिह्नान्तर्गतः पाठः क्वचिन्नास्ति । ÷ अयंद्वारेणाग्न्यन्वाधानेति कर्तव्यता—पा०।

कथमिति विध्यन्तापेक्षायामनेकविध्यन्तसंनिपातेऽसाधारणेन निर्वपतिशब्देन दार्शपौर्णमासिकविध्यन्तसंयोगिना लिङ्गेन तदीयो विध्यन्तः प्रसज्यते। तत्राप्याग्नेयाद्यनेकापूर्वविध्यन्तप्रसङ्गे, एकदेवतात्वेन वौषधिना वाऽसाधारेण लिङ्गेनाऽऽग्नेयविध्यन्तो नियम्यते। तदेतदेवं विज्ञायते, सौर्यं चरुं निर्वपेदाग्नेयवत्। आग्नावैष्णवमेकादशकपालं निर्वपेदग्नीषोमीयवत्। सर्वत्रैवम्। प्रतिपदाख्याने तु गौरवं परिहरद्भिर्वृत्तिकारैः सर्वसामान्यः शब्दः परिगृहीतः प्रकृतिवदिति। एवं यत्र सूक्ष्ममपि किंचित्सामान्यं, शब्दो वाऽर्थो वा, हविर्देवतादि तद्गुणा वा रूपादय उपलभ्येरन्, तत्र तदीयो विध्यन्तः कल्प्यः। तदेतत्संक्षेपेणात्रैव सर्वमुक्तम्। शिष्यहितार्थमुत्तर प्रपञ्चः। श्लोकमप्युदाहरन्ति—

वितीर्य हि महज्जालमृषिः संक्षिप्य चाब्रवीत्।
इष्टं हि विदुषां लोके समासव्यासधारणम्॥ इति॥ २॥

( सोमे, ऐष्टिकधर्मातिदेशाधिकरणम्॥ ३॥ )

[ ३ ] प्रवृत्तत्वादिष्टेः× सोमे प्रवृत्तिः स्यात्॥ ३॥ पू०

ज्योतिष्टोमेन स्वर्गकामो यजेतेति श्रूयते। तत्र विध्यन्तं प्रति चिन्ता। कुतोऽस्मिन् विध्यन्तः स्यादिति। तदुच्यते। प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यात्। दार्शपौर्णमासिको विध्यन्तः सोमे स्यात्। कुतः। प्रवृत्तत्वात् ÷। दीक्षणीयादिष्विष्टिषु दार्शपौर्णमासिको विध्यन्तः प्रवृत्तः। दीक्षणीयायाम्, आतिथ्यायां, प्रायणीयायां, पशौ च। तदनन्तरं सोमः। तत्रापि स एव प्रवृत्त्या विज्ञायते। यथा, देवदत्तो भोजयितव्यः, विष्णुमित्रो भोजयितव्यः, माठरः कौण्डिन्यो भारद्वाज इत्युत्तरेष्वपि भोजयितव्य इति प्रवृत्त्याऽनुबध्यते। तस्मादैष्टिकः सोमे विध्यन्तः॥ ३॥

---

ननु चैवमाकाङ्क्षायामुत्पन्नायामितिकर्तव्यतासंनिधाने नास्ति। तस्माद्भ्रान्तिराकाङ्क्षेति। तदाऽसौ भ्रान्तो भवति। प्रकृतावप्याकाङ्क्षासद्भावे, इतिकर्तव्यतासंबन्धः। एवं चेत्प्रकृतिविकृत्योर्न कश्चिद्विशेषः॥ २॥ [॥ ३॥

---

× प्रवृत्तित्वात्—पा०। ÷ प्रवृत्तित्वात्—पा०।

लिङ्गदर्शनाच्च ॥ ४ ॥

तस्यैकशतं प्रयाजानुयाजाः, इति च ऐष्टिका धर्माः सोमे दृश्यन्ते । तस्माच्चास्मिन् ऐष्टिको विध्यन्तः ॥ ४ ॥

कृत्स्नविधानाद्वाऽपूर्वत्वम् ॥ ५ ॥ सि०

अपूर्वत्वमेव हि सोमे । स न कुतश्चिद्धर्मान् गृह्णाति । कुतः।

अत्र सूत्रं भाष्यं चोभयमप्ययुक्तम् । न ज्ञायते कियत्येतिकर्तव्यतया निराकाङ्क्षीकृतो× भवतीति । अथोच्यते, यस्य संनिधान एको द्वौ बहवो वा पदार्थाः समाम्नायन्ते, तावत्या निराकाङ्क्षी भवति । एवं सत्युपहोमादिभिर्निराकाङ्क्षीकृतत्वादतिदेशो+ न प्राप्नोति । तत्रैवं वर्णयन्ति-उपहोमाः प्रयाजानुयाजमध्ये श्रुतास्तत्संबद्धपदव्यवायेऽपि कथंभावनियन्त्रिता एव गृह्यन्ते । एवं वर्ण्यमाने यत्रापूर्वमङ्गं प्राकृतेनासंबद्धं श्रूयते तत्र तेनैव निराकाङ्क्षी भवति । कृत्स्नविधानतास्कृतत्वादतिदेशो न प्राप्नोति । न चेष्यते ।

तस्मादन्यथा वर्ण्यते । कथमित्याकाङ्क्षायां यत्र संनिधावाम्नानं निराकाङ्क्षीकरणक्षमं, तत्र तेनैव निराकाङ्क्षत्वाद्भवति कृत्स्नविधानता । इह च संनिपत्योपकारकाः सर्व आम्नायमाना निराकाङ्क्षीकरणसमर्थाः । उपहोमादिषु*, संनिपत्योपकारकाभावात्कृत्स्नविधानता नास्ति । तस्मात्तत्राऽऽकाङ्क्षा संनिवर्तते । अथवा सादृश्येन विध्यन्तो नियम्यते । न च सोमस्य दर्शपूर्णमासाभ्यां सादृश्यम् । अव्यक्तचोदनत्वात् । ननूत्पत्तिवाक्ये÷ 'सोमेन यजेत' इत्यव्यक्तचोदनः । प्रयोगवाक्ये तु देवतानां विद्यमानत्वाद्व्यक्तचोदनः ।

उच्यते । ग्रहणे देवताश्रवणं, न यागे । प्रसङ्गात्तु यागं निर्वर्तयति, न तु तासां यागं प्रति तादर्थ्ये प्रमाणमस्ति । कथम् । क्रत्वर्थेन= ग्रहणेन देवताः संयुक्ताः, ता यागमभिलषन्ति । यागोऽपि देवताभिलाषी । तयोः संबन्धोऽर्था-

॥ ४ ॥

× निराकाङ्क्षीकृता—पा० । + उपहोमादिति निरा—पा० । * उपहोमादिषु—यत्र नक्षत्रेष्ट्यादिसंनिधावुपहोमा आम्नायन्ते, तत्र निराकाङ्क्षीकरणसमर्थसंनिपत्योपकारकाङ्गानाम्नानात्कृत्स्नविधानाभावेनापूर्वैरुपहोमादिभिराकाङ्क्षा न निवर्तत इत्याशयः । ÷ अनुत्पत्तिवाक्ये इति सर्वत्र पाठः । = क्रत्वर्थत्वात्—पा० ।

कृत्स्नविधानात् । इतिकर्तव्यताविधेर्यजतेः× पूर्ववत्त्वमुक्तम् । विहितेतिकर्तव्यताकश्चायम् । तस्मादपूर्वः ॥ ५ ॥

स्रुगभिघारणाभावस्य च नित्यानुवादात् ॥ ६ ॥

स्रुगभिघारणस्य चाभावानुवादः सोमे भवति । घृतं वै देवा वज्रं कृत्वा सोममघ्नन्, स्रुचौ बाहू । तस्मात्स्रुचि सोमहविर्नाऽऽसाद्यते । न सोममाज्येनाभिघारयतीति । तदुपपद्यते, यद्यपूर्वः सोमः । अथ दर्शपूर्णमासप्रकृतिः स्यात्, आज्येनाभिघार्य स्रुग्भ्यां हूयेत । तत्रैतद्दर्शनं नोपपद्यते । तस्मादपूर्वः ॥ ६ ॥

विधिरिति चेत् ॥ ७ ॥

इति चेत्पश्यसि, स्रुगभिघारणाभावानुवाददर्शनादपूर्वः सोम इति । अथ कस्माद्दर्शपूर्णमासप्रकृतित्वेन प्राप्तस्य स्रुगभिघारणस्य प्रतिषेधकोऽयं विधिर्न भवतीति, स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ॥ ७ ॥

न वाक्यशेषत्वात् ॥ ८ ॥

नायं विधिः । कस्मात् । वाक्यशेषत्वात् । अन्योऽत्र विधिराम्नातः । यदाह, अंशुरंशुस्ते देव सोमाऽऽप्यायतामिति । तस्य वा-

---

द्भविष्यति । यागोऽपि द्रव्यं गृह्णन्, तदाश्रितां देवतां गृह्णाति । यथा प्रणयनं क्रत्वर्थमात्मनिर्वर्तकं साधनमपेक्षमाणं गोदोहनं पुरुषार्थं गृह्णाति । गोदोहनमपि पुरुषार्थं सदाश्रयमपेक्षमाणं प्रणयनं प्रसक्तं गृह्णाति । यथा तत्संबन्ध एवमिहापि । तस्मात्तादर्थ्याद्देवताभावः *। एवं चेदव्यक्तचोदनः । अत आह सूत्रकारः, 'अव्यक्तासु+ तु सोमस्य' इति ।

ननूपांशुयाजस्योत्पत्तिवाक्ये देवताभावादव्यक्तता । उच्यते । मन्त्रवर्णात्तत्र देवतायास्तादर्थ्याद्व्यक्तचोदनः । अतः सादृश्याभावादपूर्वं, कृत्स्नविधानादिति—यदाम्नायते धर्मजातं तेन निराकाङ्क्षत्वादर्थप्राप्तं न गृह्णाति ॥ ५ ॥ ६ ॥ ॥ ७ ॥

---

×( अ० ७ पा० ४ अ० १ सू० १ ). * तादर्थ्यादिति—ग्रहणाङ्गत्वाद्देवतानां यागाङ्गतया देवताभाव इत्यर्थः । +( अ० ८ पा० १ अ० ९ सू० १६ ) ।

कथशेषोयम्। कथं ज्ञायते। तेनाऽऽकाङ्क्षितत्वात्। अत्राधिषुर्वा एतत्सोमं यदभिषुण्वन्ति। यदस्य स्रुचौ बाहू कुर्वन्ति। यच्चाऽऽज्यमन्तिकमकार्षुः। यदाह, अंशुरंशुस्ते देव सोमाऽऽप्यायतामिति। यदेवास्याघ्नन्तं× क्षुरमकुर्वंस्तदाप्याययन्तीति। यद्ययमपि विधिः स्याद्वाक्यं भिद्येत। तस्मान्न विधिः॥ ८॥

शङ्कते चानुपोषणात्॥ ९॥

सोमे÷ शङ्कते, यदनुपोष्य प्रयायाद्ग्रीवबद्धमेनममुष्मिल्लोके नेनीयेरन्निति। दार्शपौर्णमासिके विध्यन्ते सति नियतमुपोषणं स्यात्। तदानुपोषणाशङ्का न युज्यते। अपूर्वत्वे+ तु प्रागुपोषणविधानादुपोष्यानुपोष्य वा प्रयायात्। तत्रानुपोषणशङ्का युज्यते। तस्मादपूर्वः॥ ९॥

दर्शनमैष्टिकानां स्यात्॥ १०॥

यच्च प्रयाजानुयाजानां दर्शनं लिङ्गत्वेनापदिष्टं*, तस्यैकशतं प्रयाजानुयाजा इति। तद्दीक्षणीयादीनां सोमाङ्गभूतानां कर्मणां ये प्रयाजानुयाजास्तेषां समुच्चयवचनम्। किं कारणम्। सोमस्यापूर्वत्वात्। तेषां च तावतां तत्राभावात्=। अङ्गाङ्गमपि च तस्येति शक्यते वक्तुम्। यथा वाजपेयस्य यूप इति। तस्मादपूर्वः सोमः॥ १०॥

(ऐन्द्राग्नादिषु दार्शपूर्णमासिकधर्मातिदेशाधिकरणम्॥ ४॥)

[४] इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात्॥ ११॥ सि०

इष्टय उदाहरणम्, ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम इत्येवमाद्याः। तत्र संदेहः। किं दार्शपौर्णमासिको वा, सौमिको वा विध्यन्त उत दार्शपौर्णमासिक एवेति। किं प्राप्तम्। अनियमः।

॥ ८॥ ९॥ १०॥

— —

× यदेवास्याऽऽदातुः क्षुरमक्षुरस्तदाप्याययन्तीति पा०। ÷ बर्हिषश्चानुपोषणात्सोमे–पा०। + अपूर्वत्वे त्वित्यारभ्य–युज्यत इत्यन्तो ग्रन्थः क्वचिन्नास्ति। * लिङ्गत्वेनापदिष्टम्–पा०। = तत्रभावात्–पा०।

दर्शपूर्णमासयोरपि विध्यन्तोऽस्ति सोमेऽपि। इमाश्चेष्टयो विध्यन्तापेक्षाः। एकेन च विध्यन्तेन भवितव्यमित्युक्तम्। न च गृह्यतेऽन्यतरनियमे विशेषः। तस्मादनियमः।

एवं प्राप्त उच्यते। इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः। हेतुर्नोक्तः प्रज्ञात इति। कः पुनरसौ। चोदनायां प्रकृतिलिङ्गसंयोगः। किं पुनस्तत्प्रकृतिलिङ्गम्। तद्धितेन देवतोपदेशः, कपालवत्ता, निर्वपति शब्दश्च, ऐन्द्राग्नमेकादशकपालं निर्वपेदिति। इतरत्रापि तथैव, ऐन्द्राग्नो द्वादशकपाल इति। निर्वपतिरपि, अग्निहोत्रहवण्या हवींषि निर्वपतीति। प्रकृतिलिङ्गेन च विध्यन्तविशेष उक्तः, यस्य× लिङ्गमर्थसंयोगादिति। तस्माद्दार्शपौर्णमासिकस्तासु विध्यन्तः। तच्च दर्शयति, प्रयाजे प्रयाजे कृष्णलं जुहोतीति। अलिङ्गास्वपि स्थालीपुलाकवत्सिद्धिः॥ ११॥

( अग्नीषोमीये पशौ दार्शपूर्णमासिकधर्मातिदेशाधिकरणम् ॥ ५॥ )

[ ५ ] पशौ च लिङ्गदर्शनात्॥ १२॥ सि०

पशावग्नीषोमीये चिन्त्यते। किं दार्शपौर्णमासिको विध्यन्त उत सौमिक इति। किं प्राप्तम्। तथैव पूर्वपक्षः*। तत्रोत्तरमभिधीयते। पशौ च लिङ्गदर्शनात्। पशौ च दार्शपौर्णमासिक एव विध्यन्तः। कुतः। लिङ्गदर्शनात्। एकादश प्रयाजान्यजति, एकादशानुयाजानिति। तथा, स्रौचमाघारमाघार्य+ जुह्वा पशुमनक्तीति। ननु लिङ्गमपादिष्टं, कुतः प्राप्तिः। चोदनासामान्यात्। किं सामान्यम्। व्यक्तचोदनात्वम्÷। का व्यक्तिः द्रव्यदेवतावत्ता, अग्नीषोमीयं पशुमिति। इतरत्, ऐन्द्रं पय इति। अव्यक्तचोदनस्तु सोमः॥ १२॥

॥ ११ ॥ १२ ॥

---

×( ८ पा० १ अ० २ सू० २ )। * पूर्वः पक्षः– पा०। + स्रौबमिति मुद्रितपुस्तके पाठः। ÷ व्यक्तचोदनत्वं–पा०।

( सवनीयादिपशुष्वग्नीषोमीयधर्मातिदेशाधिकरणम् ॥ ६ ॥ )

[ ६ ] दैक्षस्य चेतरेषु ॥ १३ ॥ सि०

इह पशुबन्धा उदाहरणम् । सवनीयो, निरूढः पशुः, सौम्यादयश्च । तेषु किं दार्शपौर्णमासिको विध्यन्त उत दैक्षस्येति । दैक्ष इत्यग्नीषोमीय उच्यते । दीक्षासंबन्धात् । किं प्राप्तम् । यथोक्तेन न्यायेन दार्शपौर्णमासिक इति । तथा प्राप्ते, उच्यते । दैक्षस्य चेतरेषु पशुषु सवनीयादिष्वग्नीषोमीयस्य विध्यन्तः । आलभतिचोदनासामान्यात्, पशुत्वचोदनासामान्याच्च । तच्च दर्शयति, वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने, इति वपापुरोडाशाङ्गप्रचारं दर्शयति । भेदेन च तथा क्वचित्, औदुम्बरो यूपो भवतीति यूपं दर्शयति । तस्मादग्नीषोमीयः पशूनां प्रकृतिः ॥ १३ ॥

( ऐकादशिनेषु पशुषु सवनीयपशुधर्मातिदेशाधिकरणम् ॥ ७ ॥ )

[ ७ ] ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात् ॥ १४ ॥ सि०

ऐकादशिनाः पशव उदाहरणम् । कृष्णशीर्ष आग्नेय इत्यारभ्याऽऽम्नाताः । अन्येषां च,+ आग्नेयेन वापयति, मिथुनं सारस्वत्या करोति, प्रजनयति सौम्येनेति । तेषु संदेहः । किमग्नीषोमीयविध्यन्त उत सवनीयविध्यन्त इति । किं प्राप्तम् । पूर्वोक्तेन न्यायेनाग्नीषोमीयस्येति प्राप्ते ।

उच्यते । ऐकादशिनेषु सौत्यस्य । सौत्य इति सुत्याकालत्वात्सवनीयमाहुः । तदीयो विध्यन्त ऐकादशिनेषु । कुतः । द्वैरशन्यस्य दर्शनात् । अग्निष्ठाद्द्वे द्वे रशने आदाय द्वाभ्यां रशनाभ्यामेकैकं यूपं परिव्ययतीति । अग्नीषोमीयप्रकृतित्वे एकैकरशन्यं स्यात् । अथ वचनमिदं कस्मान्न भवति । अग्निष्ठाद् द्वे द्वे रशने आदायेत्येतदत्र विधीयते । यदि रशनाद्वित्वमपि विधीयते तदा वाक्यं भिद्यते । तस्मात्तदनूद्यते । ननु लिङ्गमपदिष्टं, कुतः प्राप्तिः । उच्यते । समाने पशुत्वे सुत्याकालता वैशेषिकं लिङ्गम् । ततः प्राप्तिः ॥ १४ ॥

---

॥ १३ ॥ १४ ॥

---

+ चैवम्—पा० ।

( पशुगणेष्वैकादशिनधर्मातिदेशाधिकरणम् ॥ ८ ॥ )

[ ८ ] तत्प्रवृत्तिर्गणेषु स्यात्प्रतिपशु यूपदर्श-
नात् ॥ १५ ॥ सि०

इह पशुगणा उदाहरणम् । वसन्ते ललामांस्त्रीन् वृषभानालभते। तथा, मैत्रं श्वेतमालभेत, वारुणं कृष्णमपां चौषधीनां च संधावन्न-काम इति । तत्र विचार्यते । किमग्नीषोमीयस्य विध्यन्त उतैकाद-शिनानामिति । यथोक्तेन न्यायेनाग्नीषोमीयस्य ।

एवं प्राप्त उच्यते । तत्प्रवृत्तिर्गणेषु स्यात् । तेषामैकादशिनानां प्रवृत्तिः पशुगणेषु स्यात् । कुतः । प्रतिपशु यूपदर्शनात् । यत्त्रिषु यूपेष्वालभेत बहिर्धाऽस्मादिन्द्रियं वीर्यं दध्यात्, भ्रातृव्यमस्य जन-येदेकयूप आलभेतेति यूपात्रित्वं प्रतिषिध्यैकं यूपं सौत्रामण्यां विद-धाति । तदुपपद्यते, यदि ऐकादशिनविध्यन्तः । तत्र हि प्रतिपशु यूपाः । अग्नीषोमीयप्रकृतित्वे एक एव यूपः स्यात् । तत्रैतन्नोपपद्यते। तस्मादैकादशिनानां विध्यन्तः पशुगणेषु ॥ १५ ॥

( अव्यक्तयागेषूद्भिदादिषु सौमिकधर्मातिदेशाधिकरणम् ॥ ९ ॥ )

[ ९ ] अव्यक्तासु तु सोमस्य ॥ १६ ॥ सि०

इदं श्रूयते, अभिजिता यजेत, विश्वजिता यजेत, इत्येवंजाती-यका यजतयः । तेषु विध्यन्तचिन्ता । किमेषु सौमिको विध्यन्त उत दार्शपौर्णमासिक इति । अविशेषादनियमे प्राप्ते । उच्यते । अव्य-क्तासु तु सोमस्य । काऽव्यक्तता । द्रव्यदेवतस्याभावः । द्रव्यदेवतेन हि यागोऽभिव्यज्यते । एताश्चाद्रव्यदेवताश्चोदनाः, अभिजिता यजे-तेति । एतास्वव्यक्तासु सौमिको विध्यन्तः स्यात् । कुतः । अव्यक्त-सामान्यात् । सोमोऽप्यव्यक्तचोदनः । ज्योतिष्टोमेन यजेतेति । ननु, सोमेन यजेतेत्येषा व्यक्तचोदना । तथाऽपि देवताया अभावादव्य-क्तता । तथा च, श्येनेन= यजेतेत्यव्यक्तचोदिते, दीक्षणीयादीनि

॥ १५ ॥ १६ ॥

---

= दूणाशेन—इति पाठो लिखिते मुद्रिते च दृश्य ते ।

सोमाङ्गानि दर्शयति, दीक्षणीयायां द्वादशमानं हिरण्यं दक्षिणा। चतुर्विंशतिमानं प्रायणीयायामिति। तस्मात्तासु सौमिको विध्यन्तः ॥ १६ ॥

( अहर्गणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ॥ १० ॥

[ १० ] गणेषु द्वादशाहस्य ॥ १७ ॥ सि०

इह, अहर्गणा उदाहरणम्, द्विरात्रादयः शतरात्रपर्यन्ताः। तेषु संदेहः। किं ज्यौतिष्टोमिको विध्यन्त उत द्वादशाहिक इति। पूर्वेण न्यायेन सौमिके प्राप्ते, उच्यते। गणेषु द्वादशाहिको विध्यन्त इति। कुतः। चोदनासामान्यात्। द्वादशाहेन यजेत, द्विरात्रेण यजेतेति। अहःशब्दोऽप्यहोरात्रवचनः। रात्रिशब्दोऽपि। एतच्छब्दगतं लिङ्गम्। अर्थगतमपि गणत्वम्। गण एव संघातधर्मैर्गणमनुग्रहीतुं समर्थो, नैकाहः। द्वाभ्यां लोमावद्यति, द्वाभ्यां मांसमित्येतदारभ्य* द्वादशोपसत्त्वं द्वादशाहिकं धर्मं गवामयने दर्शयति। तस्मादहर्गणानां द्वादशाहः प्रकृतिः ॥ १७ ॥

( संवत्सरसत्रेषु गावामयनिकधर्मातिदेशाधिकरणम् ॥ ११ ॥ )

[ ११ ] गव्यस्य च तदादिषु ॥ १८ ॥ सि०

इह संवत्सरसत्राण्युदाहरणम्, आदित्यानामयनप्रभृतीनि। तेषु चिन्ता, किं द्वादशाहिको विध्यन्त उत गवामयनिक इति। पूर्वोक्तेन न्यायेन द्वादशाहिके प्राप्तेऽभिधीयते। गव्यस्य च तदादिषु। गव्यमिति, गवामयनं ब्रूमः। गोसंबन्धात्। गावो वा एतत्सत्रमासत, इति। तस्य विध्यन्तस्तदादिषु संवत्सरसत्रेषु स्यात्। कुतः। संवत्सरसामान्यात्। पत्नय उपगायन्तीति च माहाव्रतिकं धर्मं संवत्सरसत्रे दर्शयति। ऋत्विज उपगायन्तीति च सहस्रसंवत्सरे ॥ १८ ॥

॥ १७ ॥ १८ ॥

---

* मांसमिति चैवमादिनाऽऽरभ्य—पा०।

( निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणम् ॥ १२ ॥ )

[ १२ ] निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् ॥ १९ ॥ सि०

निकाय इति संघात औत्तराधर्येणावस्थित उच्यते । स येषां ते निकायिनः । यथा, साहस्राः, साद्यस्काः । तेषां पूर्वस्य केचिद्धर्मा आम्नाताः । उत्तरे त्वधर्मकाः तत्र चिन्त्यते । किं ज्योतिष्टोमस्य विध्यन्त उत प्रथमस्य निकायिन इति । अव्यक्तचोदनत्वाज्ज्योतिष्टोमस्य । इति प्राप्ते, उच्यते । निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् । कुतः । निकायित्वसामान्यात् । साहस्राणां साहस्रसामान्यात् । साद्यस्काणां साद्यस्कसामान्यात् * । एवं सर्वत्र । पूर्वस्मिंश्च साहस्रे सहस्रं दक्षिणामाम्नायोत्तरस्मिन् दर्शयति । यावदस्य साहस्रस्योत्तरा गौः समाहिता भवति, तावदस्माल्लोकादसौ लोक इति । तथा पूर्वस्मिन् साद्यस्के, साण्डस्त्रिसंवत्सरः सोमक्रयणः । स्पर्धमानानामित्याम्नायोत्तरस्मिन्नपि तमेव दर्शयति । स्त्री गौः सोमक्रयणी व्यावृत्ता ह्येषां स्पर्धिता, इति । तस्मात्पूर्वस्योत्तरेषु धर्माः ॥ १९ ॥

( फलादीनामनतिदेशाधिकरणम् ॥ १३ ॥ )

[ १३ ] कर्मणस्त्वप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वात् ॥ २० ॥ सि० ॥

इह फलनियमकर्तृसमुदाया उदाहरणम् । फलं स्वर्गः, नियमो यावज्जीविकोऽभ्यासः, कर्ता स्वर्गकामः, समुदायो दर्शपूर्णमासाविति । तत्र चिन्त्यते । किं फलनियमकर्तृसमुदायानां सौर्यादिषु प्रवृत्तिः, नेति किं प्राप्तम् । इष्टिषु= दर्शपूर्णमासयोः प्रवृत्तिः, इत्यनेन न्यायेन प्रवृत्तिरिति प्राप्तम् । तथा प्राप्त उच्यते । फलनियमकर्तृसमुदायस्याप्रवृत्तिः । कुतः । कर्मणोऽप्रवृत्तित्वात् । तद्बन्धनत्वाच्च फलादीनाम् ।

। १९ ॥ २० ॥

* साद्यस्कधमसामान्यात्–पा० । =( अ० ८ पा० १ अ० ४ सू० ११ ) ।

कर्म तावन्न प्रवर्तते । किं कारणम् । विध्यन्तेन धर्माः प्रवर्तन्ते । न च कर्म विध्यन्तविहितम् । विध्यादिहितं तत् । तस्मान्न प्रवर्तते । तस्याप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयः, अप्रवृत्तिरित्यर्थः । कुतः । तद्बन्धनत्वात् । फलं तावत्, दर्शपूर्णमासाभ्यां यजेतेति दर्शपूर्णमाससंयुक्तं श्रुतम् । तद्यत्र दर्शपूर्णमासौ, तत्र भवितुमर्हति । न च सौर्यादिषु तौ स्तः । अतः स्वर्गस्यापि तत्राभावः । एवं नियमोऽपि कर्मबन्धनः । यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति । स दर्शपूर्णमासाभावे कथं स्यात् । तथा कर्ता कर्मबन्धनः । दर्शपूर्णमासाभ्यां स्वर्गकाम इति । सोऽपि कथं तयोरसतोः स्यात् । समुदायोऽप्याग्नेयादीनाम् । तानि सौर्यादिषु न सन्तीति तत्समुदायः कथं तत्र भवेत् । तस्मात्तेषामप्रवृत्तिः× ॥ २० ॥

प्रवृत्तौ चापि तादर्थ्यात् ॥ २१ ॥

अपि च धर्माणां प्रवृत्तिः कर्मार्था, कर्मण उपकर्तुम् । न च फलादीनि कर्मण उपकुर्वन्ति । फलं तावत्पुरुषस्यापकरोति, न कर्मणः । उक्तं हि, फलं= च पुरुषार्थत्वादिति । नियमोऽपि न कर्मधर्मः । कर्तृधर्मोऽसावित्युक्तम् । कर्तुर्वा+ श्रुतिसंयोगादिति । तथा,

सौर्ये* करणस्य प्रत्यक्षत्वात्करणान्तरस्याप्रवृत्तेः, आनुमानिकत्वात् । इतिकर्तव्यताकाङ्क्षायामितिकर्तव्यताऽतिदिश्यते । न च फलमितिकर्तव्यता । यावज्जीविको नियमः कर्तृधर्मः, स पुरुषार्थत्वान्नातिदिश्यते । फलेन व्याप्यमानो यः कर्ता स नातिदिश्यते । तेनांशेनान्यत्र= प्रधानत्वान्न क्रत्वर्थः । यः पुनर्यजेतेत्यत्र कर्ता स क्रतुं निर्वर्तयतीति क्रत्वर्थः, सोऽतिदेशात्प्राप्नोति । किंतु यत्र बहवः कर्तारः श्रूयन्ते, तत्र तावदानुमानिको÷ नातिदिश्यते । यत्राप्येकसंख्यस्तत्राप्यनुवादोऽतिदेशः×। तस्मादर्थालाभात्कर्तुरनतिदेशो गुणभूतस्यापि ।

समुदायः करणपरिच्छेदेनोपकृतवान् । स इह परिच्छेद्याभावान्नातिदेश्यः* । समुदायं च गृह्णताऽऽग्नेयादयः कार्याः । ते तु क्रियमाणाः स्वर्ग

× तस्मादेषामप्रवृत्तिः—पा० । = ( अ० ३ पा० १ अ० ३ सू० ५) । + ( अ०२ पा० ४ अ० १ सू० २ ) । * सौर्येकरणस्य —पा० । = तेनांशेनेति–फलिरूपेणे त्यर्थः । ÷ आनुमानिक इति–एकसंख्यः कर्ता प्राकृत इति पूर्व शेषः × यद्येक–पा० । * परिच्छेद्याभावादिति —विकृतौ सौर्यादेः करणस्यैकत्वादित्यर्थः । यत्राप्यध्वरकल्पादौ करणबहुत्वेन परिच्छेद्यलाभ इति मन्यते तदाऽपि प्रत्यक्षसमुदायरुद्भावे नाऽऽनुमानिकस्य प्राकृतसमुदायस्यातिदेशसंभव इत्यूह्यम् ।

कर्ता स्वर्गकामो न कर्मार्थः। कर्म स्वर्गकामार्थम्। न हि स्वर्गकामः कर्मण उपदिश्यते, स्वर्गकामो यजेतेति। किं तर्हि। कर्म स्वर्गकामस्योपदिश्यते। स्वर्गकामो यजेत, नान्यत्कुर्यादिति। तथा, समुदायो न कर्मार्थः। फलार्थोऽसौ, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति। एवमेतेषां कर्मणोऽनुपकारकत्वात्प्रवृत्तिरनर्थिका स्यात्। तस्माच्च प्रवर्तेरन् ॥ २१ ॥

अश्रुतित्वाच्च ॥ २२ ॥

अत्राऽऽह। यदि दर्शपूर्णमाससंयोगात्फलादीनामप्रवृत्तिः, प्रयाजादीनामपि तत्संबन्धादप्रवृत्तिः प्राप्ता। तान्यपि हि तत्संयुक्तानीति। उच्यते। यद्यपि तानि दर्शपूर्णमासयोः श्रुतानि। विध्यन्तेन तु सौर्यादिष्वप्यतिदिष्टानि। फलादीनि तु न विध्यन्तेनातिदिश्यन्ते। तेषां यदि प्रत्यक्षा प्रवर्तिका श्रुतिः स्यात्, ततः प्रवर्तेरन्। न चासावस्ति। तस्मादश्रुतित्वान्न प्रवर्तन्ते ॥ २२ ॥

( काम्यगुणानां विकृतावनतिदेशाधिकरणम् ॥ १४ ॥ )

[ १४ ] गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यात् ॥ २३ ॥ पू०

इह गुणकामा उदाहरणं, गोदोहनेन प्रणयेत्पशुकामस्य, उपास्मै गायता नर इति ग्रामकामाय प्रतिपदं कुर्यादित्येवमादयः। तत्र विचार्यते। किं गुणकामानां वैकृतेषु प्रवृत्तिः, उत नेति। ततः सूत्रेणैवोपक्रमः। गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यात्। प्रवृत्तिर्गुणकामानाम्। कुतः। आश्रितत्वात्। गोदोहनं प्रणयनाश्रितं गोदोहनेन प्रणयेदिति। तच्च* प्रणयनं प्रवर्तते। आश्रये च प्रवर्तमाने तदाश्रितमपि प्रवर्तते। यथा पटे आकृष्यमाणे तदाश्रितं चित्रमप्याकृ-

---

साधयेयुः। तथा सति यथाश्रुतफलव्याघातः। अथोच्येत, समुदायं गृह्णान्तरीयकतयाऽऽग्नेयादीन्करिष्यति न फलसाधनत्वेन। उच्यते। समुदाय एषां गुणभूतः। न च गुण आकृष्यमाणो गुणिनमाकर्षति। अनादर्थ्यात् ॥ २० ॥ ( २१ ॥ २२ ॥ २३ ॥ )

---

* तत्र पा०।

ष्यते । यथा च चमसः प्रवर्तते । यथा च, खादिरं वीर्यकामाय यूपं कुर्यादिति । एवं गोदोहनमपि प्रवर्तते । गोदोहने च प्रवर्तमाने तदाश्रितः कामोऽपि प्रवर्तितुमर्हति । तस्माद्गुणकामानां प्रवृत्तिः ॥२३॥

निवृत्तिर्वा कर्मभेदात् ॥ २४ ॥ सि०

निवृत्तिर्वा गुणकामानामप्रवृत्तिः । कुतः । कर्मभेदात् । कार्यभेदादित्यर्थः । अन्यत्कार्यं गोदोहनस्य, अन्यच्चमसस्य । चमसः क्रत्वर्थो, गोदोहनं तु पुरुषार्थः । तदुक्तं, यस्मिन्* प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वादित्यत्र । अक्रत्वर्थः किमर्थं प्रवर्तेत । क्रतूपकाराय हि तस्य प्रवृत्तिः । एवं प्रतिपदः । तस्मान्न प्रवर्तेरन् गुणकामाः ॥ २४ ॥

यत्तूपन्यस्तं, यथा खादिरं वीर्यकामाय यूपं कुर्यादित्यत्र प्रवृत्तिरेवमत्रापीति । तत्र ब्रूमः—

अपि वाऽतद्विकारत्वात्क्रत्वर्थत्वात्प्रवृत्तिः स्यात् ॥ २५ ॥

अपि वा, एवंविधेषु प्रवृत्तिः स्यात् । कुतः । अतद्विकारत्वात् । न खादिरः क्रत्वर्थविकारः । अयमपि क्रत्वर्थ एव । तदुक्तम्, एकस्य= तूभयत्वे संयोगपृथक्त्वमिति । क्रत्वर्थश्चेत्पलाशवत्प्रवर्तेत । तस्मिंश्च प्रवर्तमाने तदाश्रितः कामोऽपि प्रवर्तते । खादिरेण हि स

---

यत्क्रत्वर्थं तदतिदिश्यते । न च गोदोहनादीनां क्रत्वर्थता ॥ २४ ॥

---

गोदोहनादि पुरुषार्थत्वाच्चमसं विकृत्य निविशते । खदिरस्तु क्रत्वर्थत्वान्न कंचिद्विकरोति । एवं चेत्खदिरः प्रवर्तत एव । तस्मिन्प्रवर्तमाने तदाश्रितः कामोऽपि प्रवर्तत इत्येतदयुक्तम् । यत्क्रत्वर्थं तदतिदिश्यते । वीर्यकामो यदि खादिरार्थस्ततः खदिरे प्रवर्तमाने तदाश्रितत्वात्प्रवर्तते । स× च विपरीतः, खादिरस्तदर्थः । खादिरः पुरुषार्थत्वान्न प्रवर्तत इति चेत् । उच्यते । येन

---

* (अ० ४ पा० १ अ० २ सू० २) । = (अ०४ पा०३ अ० ३ सू० ५) ।
× स च विपरीत इति—अङ्गाङ्गिभावो विपरीत इत्यर्थः ।

सिध्यति । स च खादिरोऽस्ति । तस्मात्कामं साधयिष्यति ॥ २५ ॥

( सौर्ययागे विकल्पेनाऽऽग्नेयद्रव्यधर्मातिदेशाधिकरणम् ॥ २५ ॥ )

[ १५ ] एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥ २६ ॥ सि०

सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इति श्रूयते । अस्ति तु प्रकृतावभिमर्शनद्वयं, चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्राऽमावास्यामिति। तदिह चोदकेन प्राप्यते । तत्र संशयः। किं सौर्यो यदा पौर्णमास्यां प्रयुज्यते तदा चतुर्होत्राऽभिमृष्टव्यः, यदाऽमावास्यां तदा पञ्चहोत्रा, उतोभयत्र विकल्पः, चतुर्होत्रा वा पञ्चहोत्रा वेति । किं प्राप्तम् । व्यवस्थेति । कुतः । चोदकानुग्रहात् । प्रकृतौ व्यवस्था कृता । चोदको व्यवस्थां प्रापयति ।

एवं प्राप्त उच्यते । एकस्मिन् कर्मण्यत्र सौर्ये विकल्पः । कुतः। अविभागो हि चोदनैकत्वात् । एकैषा चोदना, सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इति । तत्राविभागो भवति । उभावप्यभिमर्शने प्राप्येते। तयोरेकार्थत्वात्समुच्चयो न संभवति । तस्माद्विकल्पः । यत्तु, प्रकृतौ व्यवस्थेति। नासौ कालकृता । किं तर्हि । समुदायकृता । न च सौर्ये तौ समुदायौ स्तः । यद्येवमभिमर्शनमेव तर्हि न प्राप्नोति, तयोः समुदाययोरभावादिति । अत्रोच्यते । न प्राप्नोति, यदि समुदाययोरभिमर्शनमुच्येत । तयोस्त्वनभिमृष्टव्यत्वात्समुदायिनां तदुच्यते लक्षणया । समुदायिविकारश्च सौर्यः । तस्मात्तत्रापि चोदकः प्रापयति तत् ॥ २६ ॥

---

रूपेण क्रत्वर्थस्तेन प्रवृत्तिरिष्यते, न द्वितीयेन = ॥ २५ ॥

—·—

सौर्य आग्नेयादुपमितलक्षितप्रापणेनेतिकर्तव्यतां गृह्णाति । आग्नेयस्य च पौर्णमास्याममावास्यायां च विद्यमानत्वादशक्यमवधारयितुं, किं पौर्णमास्येतिकर्तव्यता* प्रवर्तत उतामावास्यायाः ×। तस्मादगृह्यमाणविशेषत्वाद्विकल्पः ।

---

= द्वितीयेन—पुरुषार्थांशेन । * पौर्णमासीकालिकाग्नेयसंबन्धिनीतिकर्तव्यतेत्यर्थः । × अमावास्याया इति—अमावास्याकालिकाग्नेयसंबन्धिनीतिकर्तव्यतेत्यर्थः ।

( सौर्ये चरावाग्नेयधर्मातिदेशाधिकरणम् ॥ १६ ॥ )

[ १६ ] लिङ्गसाधारण्याद्विकल्पः स्यात् ॥ २७ ॥ पू०

सौर्ये कर्मणि दार्शपौर्णमासिको विध्यन्त इत्युक्तम्, इष्टिषु* दर्शपूर्णमासयोः प्रवृत्तिरिति । सन्ति तु तत्र कर्माण्याग्नेयादीनि । तत्र विचारः । किं यस्य कस्यचिद्दार्शपौर्णमासिकस्य कर्मणः सौर्ये विध्यन्त उताऽऽग्नेयस्येति । किं प्राप्तम् । विकल्पः । कुतः । लिङ्गसाधारण्यात् । सौर्ये दार्शपौर्णमासिकाविध्यन्तप्राप्तौ यल्लिङ्गमुपादिष्टं,= प्रयाजे प्रयाजे कृष्णलं जुहोतीति, तत्साधारणं सर्वेषां विध्यन्ते संभवति । न च समुच्चयः । तस्माद्विकल्पः ॥ २७ ॥

ऐकार्थ्याद्वा नियम्येत पूर्ववत्त्वाद्विकारो हि ॥ २८ ॥ सि०

आग्नेयस्य विध्यन्तो नियम्येत । कुतः । ऐकार्थ्यात् । एकदेवतत्वादित्यर्थः । आग्नेय एकदेवत्यः । सौर्योऽपि । तेनैकदेवतत्वेन लिङ्गेनाऽऽग्नेयविध्यन्तो नियम्येत । पूर्ववत्त्वात् । पूर्ववानयं सौर्यः । पूर्वत्राभिहितं विध्यन्तमपेक्षते । विकारो हि । विकृतिरेषा । सर्वाश्च विकृतयः पूर्ववत्यः । चोदनावाक्यानामसमाप्तत्वात् । तत्र लिङ्गेन विध्यन्तनियमो भवतीत्युक्तम् । अस्ति चैकदेवतत्वं लिङ्गम् । तेनाऽऽग्नेयविध्यन्तः ॥ २८ ॥

अश्रुतत्वान्नेति+ चेत् ॥ २९ ॥

अत्राऽऽह । स्यादेतदेवं, यद्यत्रैकत्वं श्रूयेत । न तु श्रूयते । कथम् । ताद्धितेनायं निर्देशः, सौर्यमिति । तथा, आग्नेयमिति । तत्र वचनव्यक्तिर्न ज्ञायते, किं सूर्यो देवताऽस्य, उत सूर्यौ च सूर्याश्चेति । तथा, आग्नेयेऽपि ॥ २९ ॥

---

'आसन्नानि हवींष्याभिमृशति' इति हविरभिमर्शने मन्त्रस्य करणत्वाद्विकल्पः प्राप्तः । यद्यपि कालकृता व्यवस्था हविरन्तरवशेन प्रकृतौ जाता तथाऽपि विकृतावशक्या व्यवस्था कर्तुम् । नैतज्ज्ञायते सौर्ये कतरस्याऽऽग्नेयस्य धर्मः प्रवर्तत इति । तस्मादाग्नेयाविशेषाद्विकल्पः ॥ २६ ॥ ( २७ ॥ २८ ॥ २९ ॥

——

* ( अ० ८ पा० १ अ० ४ सू० ११ ) । = अपदिष्टम्—पा० । + अश्रुतित्वान्नेति चेत्—पा० ।

स्याल्लिङ्गभावात् ॥ ३० ॥

स्याद्व्यवस्थितिरेकत्वस्य । कुतः । लिङ्गभावात् । लिङ्गमत्रास्ति । किम् । वाक्यशेष एकत्वं श्रूयते, सौर्ये तावत् , अमुमेवाऽऽदित्यं स्वेन भागधेयेनोपधावति, स एवैनं ब्रह्मवर्चसं गमयतीति । आग्नेयेऽपि, अङ्गिरसो वा इत उत्तमाः स्वर्गं लोकमायंस्ते यज्ञवास्त्वभ्यायंस्ते पुरोडाशं कूर्मं भूत्वा प्रसर्पन्तमपश्यंस्तमब्रुवन् , इन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व विश्वेभ्यो देवेभ्यो ध्रियस्वेति । स तानाह न ध्रिये । तमब्रुवन् , अग्नये ध्रियस्वेति । सोऽब्रवीत् , ध्रियेऽहम् । यदाग्नेयोऽष्टाकपालोऽमावास्यायां पूर्णमास्यां चाच्युतो भवति । अग्निमेव स्वेन भागधेयेन समर्धयतीति ॥ ३० ॥

तथा चान्यार्थदर्शनम् ॥ ३१ ॥

अनुवाक्यायामेकत्वश्रवणम् , अग्निर्मूर्धा दिव इत्याग्नेये, उदुत्यं जातवेदसमिति सौर्ये । ननु पुनरुक्तमेतल्लिङ्गद्वयोपदर्शनामिति । तदुच्यते । नैतत्पुनरुक्तम् । एकमत्र चोदनागतम् , एकं मन्त्रगतम् । चोदनागतं प्रापकं, मन्त्रागतं प्राप्तस्य द्योतकमिति ॥ ३१ ॥

( देवताघटितसादृश्यापेक्षया द्रव्यघटितसादृश्यस्य बलीयस्त्वाधिकरणम् ॥ १७ ॥ )

[ १७ ] विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात् ॥ ३२ ॥ सि०

इदं श्रूयते, ऐन्द्रमेकादशकपालं निर्वपेदिति । तथा,× आग्नेयं पय इति । तत्र संदेहः । किं देवतासामान्यादैन्द्रपुरोडाशे सांनाय्यस्य विध्यन्तः, आग्नेये च पयस्यौषधस्य, देवतासामान्यं, बलवत्तरम् । अथ हविःसामान्यादुत्तरत्र सांन्याय्यस्य,* पूर्वत्रौषधस्य, हविःसामान्यं बलीय इति । किं प्राप्तम् । उच्यते । देवतासामान्यं बलीय इति । कुतः । मुख्यत्वात् । मुख्यनियन्त्रिता देवता । ऐन्द्रमाग्नेयमिति । जघ-

॥ ३० ॥ ३१ ॥

— —

× तथेति क्वचिन्नास्ति । * सांनायस्य विध्यन्तः-पा० ।

न्यानियन्त्रितं हविः। तयोर्विरोधे मुख्यानुग्रहो न्याय्यः। मुख्यस्याविरुद्धप्रवृत्तित्वात्। जघन्यस्य तु मुख्येन विरुद्धा प्रवृत्तिः। तस्माद्देवतासामान्यं बलीय इति प्राप्ते, ब्रूमः।

विप्रतिपत्तौ हविषा नियम्येत। विप्रतिपत्तावेतस्यां हविर्देवतयोः, हविषा विध्यन्तो नियम्येत। कुतः। कर्मणस्तदुपाख्यत्वात्। कर्म देवतां प्रति द्रव्यस्योत्सर्गः। स च हविःरूपाख्यायते, उपलक्ष्यत इत्यर्थः। हविस्त्यज्यमानं दृश्यते। किमतः। अतो हविः कर्मणः प्रत्यासन्नम्। प्रत्यासत्तिश्च लिङ्गम्। ननु देवताऽपि यागेन संबद्धा। न तया विना यागो भवति। उच्यते। सत्यं संबद्धा। आरादुपकारिणी तु सा। नासौ त्यज्यते। तस्माद्बहिरङ्गम्। अतो हविःसामान्यं बलीयः॥ ३२॥

तेन च कर्मसंयोगात्॥ ३३॥

तेन च हविषा संयुज्य कर्म चोद्यते, ऐन्द्रम्, आग्नेयमिति। हविःप्रधानः शब्दः। किमतः। अतो हविरत्र बुद्धौ संनिहितं, तल्लिङ्गं भवति। यथा धूमो बुद्धिविषयतामापन्नोऽग्नेर्लिङ्गं, न× विद्यमानः॥ ३३॥

ननु देवताऽन्यत्र श्रूयते, ऐन्द्रमाग्नेयमिति। उच्यते—

गुणत्वेन देवताश्रुतिः॥ ३४॥

विशेषणत्वेन देवता श्रूयते, हविर्विशेष्यत्वेन। विशेष्यं च बुद्धौ संनिहितं भवति, न विशेषणम्। तद्विशेष्यं* विशेष्य निवर्तते। कथं ज्ञायते। विशेष्यानुबन्धसंयोगात्। यथा राजपुरुषः पूज्य इत्युक्ते पुरुषः पूज्यो गम्यते, न राजा। एवमिहापि, ऐन्द्रं पय इत्युक्ते हविर्बुद्धौ संनिधीयते, न देवता। यच्च बुद्धौ संनिहितं, तल्लिङ्गमित्युक्तम्। तस्माद्धविःसामान्यं बलीयः। अत ऐन्द्रे पुरोडाश आग्नेयस्य विध्यन्तः। आग्नेये च पयसि सांनाय्यस्येति।

---

॥ ३२॥ ३३॥

---

× नाविद्यमानः—पा०। * तद्विशेष्य विशेष्यं—पा०।

गुणत्वेन देवताश्रुतिः—इत्येतस्य सूत्रस्यापरा व्याख्या। इदं पदोत्तरं सूत्रम्। यदुक्तं हविःसामान्यं बलीय इति, नैतद्युक्तम्। देवतासामान्यं बलीय इति। कुतः। सर्वोऽयं प्रयासो देवताराधनार्थ एव। साऽस्य प्रसन्ना फलं ददाति। एवं श्रूयते। तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयतीति। यश्चेन्द्रस्य प्रसादनोपाय इति ज्ञातः, पुनरपीन्द्रे प्रसादयितव्ये स एवाऽऽस्थेयो भवति। तस्माद्देवतासामान्यं बलीय इति।

अत्र ब्रूमः। स्यादेतदेवं, यदि देवतातः फलं स्यात्। यागात्तु फलं, स्वर्गकामो यजेतेति श्रूयते। यत्तु, तृप्त एवैनमिन्द्र इति। तत्रेदमुच्यते। गुणत्वेन देवताश्रुतिः। यागे गुणभूता देवता। तस्या दातृत्वं स्तुत्योच्यते। यथा, अमात्येन मे ग्रामो दत्तः, सेनापतिना मे ग्रामो दत्त इति। न चामात्यः सेनापतिर्वा ग्रामस्य प्रभवति। राजैव प्रभवति। इतरस्मिन् गुणभूते स्तुत्या दातृत्ववादः। तस्माद्यथोक्तेनैव न्यायेन हविःसामान्यमेव बलीय इति ॥ ३४ ॥

( कृष्णलचरावाग्नेयधर्मातिदेशाधिकरणम् ॥ १८ ॥ )

[ १८ ] हिरण्यमाज्यधर्मस्तेजस्त्वात् ॥ ३५ ॥ पू०

प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम इति श्रूयते। तद्धिरण्यमाज्यधर्मः* स्यात्। उपांशुयाजविध्यन्तस्तत्र भवेत्। कुतः। तेजस्त्वसामान्यात्। तेजस्त्वं सामान्यम्। हिरण्यमश्मनां तेजः। आज्यमपि गवां सार× इत्यर्थः। अथवा हिरण्यमपि तेजस्वित्वादुज्ज्वलम्। आज्यमपि स्निग्धत्वादुज्ज्वलमेव। तस्मात्सामान्यादुपांशुयाजधर्मा शतकृष्णलश्चरुः ॥ ३५ ॥

धर्मानुग्रहाच्च ॥ ३६ ॥

हिरण्ये च बहव आज्यधर्मा अनुगृह्यन्ते, अवेक्षणादयः। तस्मादप्याज्यधर्माः ॥ ३६ ॥

---

॥ ३४ ॥ ३५ ॥ ३६ ॥

---

* धर्मा स्यात्—पा०। × सारमित्यर्थः—पा०।

औषधं वा विशदत्वात् ॥ ३७ ॥ सि०

अथवा, औषधस्य हिरण्ये विध्यन्तः। कुतः। विशदत्वात्। हिरण्यमपि विशदम्, औषधमपि विशदम्। कः पुनरनयोः सामान्ययोर्विशेषः। न खलु कश्चित्। किंतु विशदत्वस्य कारणद्वयमुपोद्बलकम्। तेजस्वितायास्तद्धर्मानुग्रह एकः ॥ ३७ ॥

चरुशब्दाच्च ॥ ३८ ॥

चरुशब्दश्चात्र, भवति, प्राजापत्यं चरुमिति। चरुशब्दश्चौषधस्य वक्ता, तद्बलवदौषधस्य लिङ्गम् ॥ ३८ ॥

तस्मिंश्च श्रपणश्रुतेः ॥ ३९ ॥

तस्मिंश्चाऽऽज्ये श्रपणं श्रूयते, घृते श्रपयतीति। किमतः। अत एतद्भवति। औषधविध्यन्तेन श्रपणं प्राप्यते। तत्र केवलमाज्यं विधायिष्यते। आज्यविध्यन्ते तु श्रपणमाज्यं च विधीयेयाताम्। तथा वाक्यं भिद्येत।

तस्मिंश्च श्रपणश्रुतेः—इत्येतस्यापरा व्याख्या। आह। साक्षादेवेहाऽऽज्यं श्रूयते। तस्मात्तस्य विध्यन्त इति। तत उत्तरमिदम्। तस्मिंश्च श्रवणश्रुतेः। दार्शपौर्णमासिकं श्रपणं तस्मिंश्चाऽऽज्ये श्रूयते। गुणगतं तत्सामान्यम्। हविर्गतं तु वैशद्यं, चरुशब्दश्च। तस्मात्ते बलवती ॥ ३९ ॥

( मधूकयोरुपांशुयाजधर्मातिदेशाधिकरणम् ॥ १९ ॥ )

[ १९ ] मधूदके द्रवसामान्यात्पयोविकारः स्यात् ॥ ४० ॥ पू०

चित्रायामिष्टौ श्रूयते, दधि मधु घृतं पयो धाना उदकं तण्डु-

---

॥ ३७ ॥ ३८ ॥ ३९ ॥

---

प्रथमपादान्ते—मधूदके द्रवसामान्यात्पयोविकारः स्यात्।

तदिति+ सर्वनाम्नैकवचनान्तेन यत्परामृश्यते तद्देवतासंबन्धि। न च धानादीनि परामृश्यन्ते। यदि च परामृश्येरंस्तानीति बहुवचनं स्यात्। यदि वा

---

+ तदिति—' दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम् ' इति प्रकृतविषयवाक्यस्थतच्छब्देनेत्यर्थः।

**लास्तत्संसृष्टं प्राजापत्यं भवतीति । तत्र, मधूदके पयोविकारः स्यात्। कुतः । द्रवसामान्यात् । द्रवे च मधूदके, पयोऽपि द्रवम् ॥ ४० ॥**

---

तत्तदिति वीप्सानिर्देशः । तस्मान्न धानादीनां परामर्शः । यदि वा, एतानि परामृश्य देवतायां संबन्धेरन् प्राज्यापत्यानीति बहुवचनमभविष्यत् । अतः सर्वनाम्नैकवचनान्तेन संसृष्टमिति* ( संसृज्य ) परामृश्य देवतासंबन्धः ।

तत्रैवं+ वर्णयन्ति सर्वनाम निर्दिष्टस्य प्रतिनिर्देशकम् । द्रव्याणि च निर्दिष्टानि, न संसर्गः । बहुवचनाभावः कथम् । प्रतिपादिकविरोधाद्विवक्षितं पाशवत् । अथवा--गुणत्वाद्यद्यत्परामृशति= तदीयं लिङ्गं संख्यां च भजते । तस्य चैकैकस्य परामर्शादेकवचनमविरुद्धम् असत्यामपि वीप्सायां वीप्साकार्ये वर्तते । संसृष्टमित्येकधानत्वादनूद्यते । प्राजापत्यमित्येकदेवताभिप्रायेणैकवचनम् ।

इदमपि÷ दर्शनमशोभनम् । संनिहितस्य प्रातिपदिकार्थस्य वाचकम् । अतो यत्र नपुंसकलिङ्गं विद्यते तदनेन परामृष्टव्यम् । धानानां तण्डुलानां न नपुंसकपरामर्शनिर्देशः× । अतो न तेन परामर्शः । अयं च न्यायोऽन्यत्राप्यभिहितः, 'लिङ्गविशेषनिर्देशात्समानेष्वप्राप्ता* सारस्वती स्त्रीत्वात्' इति पुंलिङ्गं न मेष्या संबध्यते, स्त्रीत्वात् । एवमिहापि । संसृष्टशब्देन= नपुंसकलिङ्गेनास्य संबन्धः । तस्य चैकत्वादेकदेवतासंबन्धे, एकवचनं न विरुध्यते - अत एको÷ यागः । 'मधूदके द्रवसामान्यात्' इति । विरोधे धर्माणां भूयस्त्वेन धर्मनियमं वक्ष्यति+ । तेन सिद्धेनेदमधिकरणमारभ्यते, किमाज्याद्धर्मप्राप्तिरुत सांनाय्यादिति ॥ ४० ॥

---

* संसृष्टमिति-भावव्युत्पन्नेन संसृष्टपदेनोपात्तं दध्यादिसमुदायं परामृश्येत्यर्थः। एवं च द्रव्यदेवतासंबन्धैक्यादेको यागोऽनेन वाक्येन विधीयत इत्याशयः. + अस्मिंश्च वाक्ये यागभेदं वदतां परेषां मतमाह-तत्रैवमित्यादिना । = गुणत्वात्-गुणवचनत्वादित्यर्थः । ÷ इदमपि न शोभनम्-ग० । × नपुंसकेति-नपुंसकेन सर्वनाम्ना तच्छब्देन परामर्शयोग्यो निर्देशो नास्तीत्यर्थः । * ( अ० ९ पा० १ अ० १६ सू० ४५ )। = संसृष्टशब्देनेति-अत इति पूर्वं शेषः । ÷ एको याग इति-एतावता प्राजापत्यवाक्येऽविशेषेण मतद्वयमात्रं प्रदर्शितम् । नात्रैकस्मिन्नपि पक्ष आग्रहो दर्शितः । परंतु यागभेदपक्ष एव ज्यायानित्यनुसंधेयम् । + (अ० १२ पा० २ अ० ७ सू० २४ ) इत्यत्रेति शेषः ।

आज्यं वा वर्णसामान्यात् ॥ ४१ ॥

आज्यं÷ वा, इमे विकुर्याताम्, उपांशुयाजस्य तयोर्विध्यन्तः स्यात् । कुतः । वर्णसामान्यात् । समानवर्णे मधूदके आज्येन ॥४१॥

धर्मानुग्रहाच्च ॥ ४२ ॥

आज्यधर्माश्च बहवो मधूदकयोः शक्याः कर्तुमुत्पवनादयो, न तु पयोधर्मा दोहनादयः ॥ ४२ ॥

पूर्वस्य चाविशिष्टत्वात् ॥ ४३ ॥

यत्तु पूर्वं कारणमुक्तं द्रवत्वसामान्यं, तदविशिष्टम् । आज्यमप्यग्निसंयोगाद्द्रवी भवति । तस्मादुपांशुयाजविध्यन्तो मधूदकयोरिति ॥ ४३ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्येऽष्टमस्याध्यायस्य प्रथमः पादः ॥

---

अथाष्टमस्याध्यायस्य द्वितीयः पादः ॥

( वाजिनयागसुराग्रहयोरौष्टिकधर्मातिदेशाधिकरणम् ॥ १ ॥ )

[ १ ] वाजिने सोमपूर्वत्वं सौत्रामण्यां च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥ पू०

चातुर्मास्येषु वाजिनेज्या श्रुता, वाजिभ्यो वाजिनमिति । सौत्रामण्यां च सुराग्रहाः, आश्विनं ग्रहं गृह्णाति, सारस्वतमैन्द्रमिति। तत्र संशयः । किमुभयोः सौमिको विध्यन्त उत दार्शपौर्णमासिक इति । तदुच्यते । वाजिने, सौत्रामण्यां च ग्रहेषु सोमपूर्वत्वम् । सौमिको विध्यन्तः । कुतः । ताच्छब्द्यात् , सोमशब्दत्वात् । सोमशब्दस्त्वत्र श्रूयते, सोमो वै वाजिनं, सुरा सोम इति । न तावद्वाजिनं

---

॥ ४१ ॥ ४२ ॥ ४३ ॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायामष्टमाध्यायस्य प्रथम पादः

---

÷ आज्यं वा विकुर्यातां ते–पा० ।

सोमो, न सुरा। न च तयोः सोमेन सादृश्यमस्ति। सादृश्याच्च परशब्दः परत्र प्रवर्तते। तस्मात्सादृश्यमत्र विधीयते। सादृश्यं चात्र सोमधर्मकत्वं शक्यं विधातुं, नान्यत्। स एष नाम्ना धर्मातिदेशो, न विध्यन्तेन। यथा, कौण्डपायिनामयनेऽग्निहोत्रे ॥ १ ॥

अनुवषट्काराच्च ॥ २ ॥

अनुवषट्कारं च सोमधर्मं दर्शयति, वाजिनस्याग्ने वीहीत्यनुवषट्करोति, सुराया वीहीत्यनुवषट्करोतीति ॥ २ ॥

समुपहूय भक्षणाच्च ॥ ३ ॥

समुपहूय भक्षणं च सोमधर्मः, तत्र दृश्यते। शेषं समं* विभज्य समुपहूय भक्षयन्तीति ॥ ३ ॥

[क्रयणश्रयणपुरोरुगुपयामग्रहणासादन-
वासोपनहनं च तद्वत् ॥ ४ ॥

क्रयणादींश्च सोमधर्मान् सुरायां दर्शयति, सीसेन क्लीबात्क्रय्या, कुवलसक्तुभिराश्विनं श्रीणातीति। एका पुरोरुक्, एका याज्या। उपयामगृहीतोऽस्यच्छिद्राय त्वाऽच्छिद्रेणाऽऽश्विनं ग्रहं गृह्णाति। गृहीत्वाऽऽसादयति। त्रिरात्रं संहता वसन्ति। क्षौमे वासस्युपनद्धानि तोक्मानि शष्पाणि भवन्तीति। विधौ सति, अनेकार्थानि वाक्यानि स्युः। क्रयादीन् सीसकादींश्च विदधति। तस्मादुभयोः सौमिको विध्यन्तः ॥ ४ ॥

हविषा वा नियम्येत तद्विकारत्वात् ॥ ५ ॥ सि०

हविःसामान्येन वाऽत्र दार्शपौर्णमासिको विध्यन्तो नियम्येत। कुतः। तद्विकारत्वात्। दार्शपौर्णमासिकस्य हविषो विकारः सुरावाजिने। औषधविकृतिः सुरा, सांनाय्यविकृतं वाजिनम् ॥ ५ ॥

प्रशंसा सोमशब्दः ॥ ६ ॥

अथ यदुक्तं, ताच्छब्द्यादिति। तत्र ब्रूमः। प्रशंसार्थोऽयं सोम-

॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

———

* सोमधर्मत्वकृतं—पा०। × सप्तधा—पा०।

शब्दो, न विध्यर्थः। विधायकस्याभावात्। सोमो वै वाजिनं, सुरा सोम इति। प्रकृष्टफलवत्त्वात्सोमस्य। तद्भावेन सुरावाजिनयोः प्रशंसा। यथा, सिंहो देवदत्त इति पुरुषस्य। तस्मान्नायं नाम्ना धर्मातिदेशः॥ ६॥

वचनानीतराणि॥ ७॥

इतराणि तु सौत्रामण्यादीनि वाचनिकानि। प्राप्तेरभावात्। अगत्या च वाक्यानामनेकार्थता, सगुणकर्मविधानेन॥ ७॥

व्यपदेशश्च तद्वत्॥ ८॥

शष्पैरेव दीक्षणीयामाप्नोति, तोक्मभिः प्रायणीयां, सिंहलोमभिरातिथ्यामिति। सोमविकारत्वे प्रत्यक्षमेव दीक्षणीयादीनि प्राप्नुयुः। प्राप्तानां शष्पादिभिस्तदाप्तिवचनं नोपपद्यते॥ ८॥

पशुपुरोडाशस्य च लिङ्गदर्शनम्॥ ९॥

पशुपुरोडाशता च ग्रहाणां श्रूयते, नैतेषां पशूनां पुरोडाशा विद्यन्ते। ग्रहपुरोडाशा ह्येते पशव इति। तत्र तावदत्र ग्रहाः पुरोडाशाः। ग्रहा एव ते। यदि तु पुरोडाशधर्मकास्तत एतदुपपद्यते। तस्मात्पौरोडाशिकस्तेषु विध्यन्तः॥ ९॥

( अग्नीषोमीयपशोः सांनाय्यविकारत्वाधिकरणम्॥ २॥ )

[ २ ] पशुः पुरोडाशविकारः स्याद्देवतासामान्यात्॥ १०॥ पू०

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः। यो दीक्षितो यदग्नीषोमीयं पशुमालभत इति। तत्र संदेहः। किं पशुः पुरोडाशविकार उत सांनाय्यविकार इति। किं प्राप्तम्। पशुः पुरोडाशविकारः स्यात्। कुतः। देवतासामान्यात्। अग्नीषोमीयः पशुः। पुरोडाशोऽपि तद्देवत्य एव॥ १०॥

---

॥ ६॥ ७॥ ८॥ ९॥ १०॥

प्रोक्षणाच्च ॥ ११ ॥

प्रोक्षणं पुरोडाशधर्मः पशौ दर्शयति*। अद्भयस्त्वौषधीभ्यो जुष्टं प्रोक्षामीति पशुं प्रोक्षतीति ॥ ११ ॥

पर्यग्निकरणाच्च ॥ १२ ॥

पर्यग्निकरणमपि पुरोडाशधर्मः। तदपि पशौ दृश्यते। आहवनीयादुल्मुकेन पशुं पर्यग्निकरोतीति। तस्मात्पुरोडाशविकारः ॥१२॥

सांनाय्यं वा तत्प्रभवत्वात् ॥ १३ ॥ सि०

सांनाय्यं वा पशुर्विकुर्यान्न पुरोडाशम्। कुतः। तत्प्रभवत्वात्। पशुतः सांनाय्यं प्रभवति, पशुश्च। तन्मिथः प्रत्यासन्नम्। प्रत्यासत्तिश्च लिङ्गम्। हविःसामान्यं च देवतासामान्याद्बलीय इत्युक्तम् ॥ १३ ॥

तस्य च पात्रदर्शनात् ॥ १४ ॥

तस्य च सांनाय्यस्य यत्पात्रमुखा, सा पशौ दृश्यते। यदि पशुरुखायां पचेदिति ॥ १४ ॥

[ अग्नीषोमीयस्य पशोः पयोविकारत्वाधिकरणम् ॥ ३ ॥ ]

[ ३ ] दध्नः स्यान्मूर्तिसामान्यात् ॥ १५ ॥ पू०

सांनाय्यविकारोऽपि दध्नो विकारः स्यात्पशुः, न पयसः। कुतः। मूर्तिसामान्यात्। घनत्वं मूर्तिः ॥ १५ ॥

पयो वा कालसामान्यात् ॥ १६ ॥ सि०

पयो वा पशुर्विकुर्यान्न दधि। सद्यःकालः पशुः, पयोऽपि सद्यःकालम्। दधि तु द्व्यहकालम्। ( पयोऽन्तरितं,× तद्बहिरङ्गम् ) ॥ १६ ॥

पश्चानन्तर्यात् ॥ १७ ॥

पशोश्च पयोऽनन्तरं, तत्प्रत्यासन्नं, न दधि ॥ १७ ॥

द्रवत्वं चाविशिष्टम् ॥ १८ ॥

---

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

---

* दृश्यते–पा०। × ( ) चिह्नान्तर्गतः पाठः क्वचिन्नास्ति।

द्रवत्वं पशुपयसोः समानम् । पशुरपि द्रवति, पयोऽपि । तस्मात्पयोविकारः पशुः ॥ १८ ॥

( आमिक्षायागे पयोयागधर्मातिदेशाधिकरणम् ॥ ४ ॥ )

[ ४ ] आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् ॥ १९ ॥ पू०

वैश्वदेव्यामिक्षा, उभयोर्दधिपयसोर्विकारः स्यात् । उभयभाव्यत्वात् । उभाभ्यां हि सा भाव्यते । तत्र न गृह्यते× विशेषोऽस्यैव, नेतरस्येति । तस्मादुभयोः ॥ १९ ॥

एकं वा चोदनैकत्वात् ॥ २० ॥

एकं वा विकुर्यात्, दधि पयो वा, नोभे । चोदनैकत्वात् । एकैषा चोदना, वैश्वदेव्यामिक्षा, इति । सैकेन विध्यन्तेन निराकाङ्क्षी क्रियते । तस्मादेकं विकुर्यात् ॥ २० ॥

यत्तु न गृह्यते* विशेष इति । तत्रोच्यते—

दधि संघातसामान्यात् ॥ २१ ॥

संहतं दधि, आमिक्षाऽपि संहता । पयो द्रवम् । एष विशेषः । तस्माद्दध्नो विकार इति ॥ २१ ॥

पयो वा तत्प्रधानत्वाल्लोकवद्दध्नस्तदर्थत्वात् ॥ २२ ॥ सि०

पयो वाऽऽमिक्षया विक्रियते, न दधि । पयःप्रधानत्वादस्य संसर्गस्य । किं प्राधान्यं पयसः । भूयस्त्वम् । प्रभूतं तत्र पयः, अल्पं दधि । दध्नश्च तदर्थत्वात् । दधि च तत्र पयो घनीभावयितुमुपादीयते । लोकवत् । लोकेऽपि पय एव घनीभावयितुं दध्युपादीयते । कथम् । दध्यभावेऽन्येनाम्लेनापि काञ्जिकादिना क्रियते । तत्रापि चाऽऽमिक्षाशब्दो भवति । दधिनियमोऽम्ले ह्यदृष्टार्थः । तस्मात्पय एवाम्लसंयोगेन घनीभूतमामिक्षेत्युच्यते । पयश्चेदामिक्षा, पयस एव विकारो न्याय्यः ॥ २२ ॥

---

॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

---

× युज्यते—पा० । * युज्यते—पा० ।

धर्मानुग्रहाच्च ॥ २३ ॥

सद्यःकालता धर्मः पयोविकारत्वेनानुग्रहीष्यते । वैश्वदेवस्य सद्यःकालत्वात् । दधिविकारत्वे बाध्येत । वैश्वदेवोऽपि द्व्यहकालः क्रियेत । तथा तस्य धर्मो बाध्येत । सद्योभावं च दर्शयति । जुषन्तां युज्यं पय इति । यदि दध्नो विकारः स्यात् । तथा द्व्यहकालभावे दातव्यं, न कथंचन पयः स्यात् । तत्रैतद्दर्शनं नोपपद्यते । तस्मात्पयोविकारआमिक्षा*, दध्नश्चाधर्मकत्वम् ॥२३॥

( सत्राहीनयोः सत्राहीनोभयात्मकद्वादशाहधर्माणां व्यवस्थयाऽतिदेशाधिकरणम् ॥ ५ ॥ )

सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ २४ ॥ पू०

द्वादशाहोऽगर्हणः, प्रायणीयोऽतिरात्रः, पृष्ठ्यः षडहः, त्रयश्छन्दोमाः । अविवाक्यमहः, उदयनीयोऽतिरात्र इति । स उभयसंज्ञकः, सत्रमहीनश्च । कथं ज्ञायते । अभियुक्तानामुपदेशात् । एवं ह्युपदिशन्ति, सत्रमहीनश्च द्वादशाह इति । शब्दार्थाधिगमे चाभियुक्तोपदेशः प्रमाणम् । संज्ञाव्यवस्थया च तस्य धर्मा आम्नाताः । एको द्वौ बहवोऽपि= वाऽहीनेन यजेरन् । तान् दीक्षिता याजयेयुः । गृहपतिसप्तदशाः स्वयमृत्विजो ब्राह्मणाः सत्रमुपेयुरित्येवमादयः । धर्मभेदाच्च संज्ञाव्यवस्था । यथा, ब्राह्मणः, परिव्राट्, वानप्रस्थ इति । तद्दशमेऽध्याये वक्ष्यते–द्वादशाहस्य× सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात् । यजतिचोदनादहीनत्वं+ स्वामिनां चास्थितपरिमाणत्वादिति । स द्विरात्रादिष्वहर्गणेषु प्रवर्तत इत्युक्तं–गणेषु÷ द्वादशाहस्येति । तत्र संदिह्यते । किमुभयप्रकारोऽसौ विकृ-

॥ २३ ॥ २४ ॥

* पयोविकारश्चाऽऽमिक्षा–पा० । = बह्वो वा–पा० । × ( अ० १० पा० ६ अ० १६ सू० ५९ ) । + ( अ० १० पा० ६ अ० १६ सू० ६० ) । ÷ ( अ० ८ पा० १ अ० १० सू० १७ ) ।

तौ प्रवर्तते, उत व्यवस्थया, क्वाचिदहीनभूतः, क्वाचित्सत्रभूत इति । किं प्राप्तम् । तस्योभयथा, प्रवृत्तिः स्यात् । ऐककर्म्यात् । उभयविधस्तत्र प्रवर्तेत । कुतः । ऐककर्म्यात् । एकमिदं कर्मोभयविधमित्युक्तम् । न तस्य प्रवृत्तौ विशेषो गृह्यते, इहैवं विध इह नेति । तस्मादुभयविधः प्रवर्तेत । नन्वेका चेद्द्विधा प्रवृत्ता, द्वितीयया कार्यं नास्ति । ऐककर्म्याद्विकल्पो भविष्यति । यथा, आग्नेयविकारेष्वाभिमर्शनस्य ॥ २४ ॥

अपि वा यजतिश्रुतेरहीनभूतप्रवृत्तिः स्यात्प्रकृत्या तुल्यशब्दत्वात् ॥ २५ ॥ सि०

अपि वा—नैतदेवं सर्वत्रोभयथा प्रवृत्तिरिति । यत्र यजतिः श्रूयते, तत्राहीनभूतस्य प्रवृत्तिः । पारिशेष्याद्यत्राऽऽसनोपायिचोदना, तत्र सत्रभूतस्य । कस्मात् । प्रकृत्या तुल्यशब्दत्वात् । प्रकृत्या हि विकृतिस्तुल्यशब्दा भवति । तस्माच्चोदनासामान्यात्प्रकृतिनियमः । अहीनभूतश्च यजतिचोदनः द्वादशाहेन प्रजाकामो यजेतेति । सत्रभूत आसनोपायिचोदनः । द्वादशाहमृद्धिकामा उपेयुः, द्वादशाहमृद्धिकामा उपासीरन्निति ॥ २५ ॥

द्विरात्रादीनामैकादशरात्रादहीनत्वं यजतिचोदनात् ॥ २६ ॥

अत्राऽऽह । के पुनस्तेऽहर्गणा यजतिचोदनाः, येष्वहीनभूतः प्रवर्तते । के वाऽऽसनोपायिचोदनाः, येषु सत्रभूत इति । तदुच्यते । द्विरात्रादीनामैकादशरात्रादहीनत्वम् । तत्राहीनभूतः प्रवर्तते । तेषां यजतिशब्देन चोदनात् । द्विरात्रेण यजेतेति ॥ २६ ॥

त्रयोदशरात्रादिषु सत्रभूतस्तेष्वासनोपायिचोदनात् ॥ २७ ॥

त्रयोदशरात्रमृद्धिकामा उपेयुः, चतुर्दशरात्रं प्रतिष्ठाकामा उपासीरन्निति सुहृद्भूत्वाऽऽचष्टे ।

एवं वा । यस्माद्यजतिचोदनोऽहीनस्तस्माद्द्विरात्रादीनामप्यहीनत्वम् । तेऽपि हि यजतिचोदनाः । यस्मादासनोपायिचोदनं सत्रं, तस्मात्त्रयोदशरात्रादीनि सत्राणि । तान्यपि तच्चोदनानीति ॥२७॥

---

॥ २५ ॥ २६ ॥ २७ ॥

लिङ्गाच्च ॥ २८ ॥

अग्निष्टोमो वै प्रजापतिः, स उत्तरानेकाहानसृजत । तमेतं द्विरात्रादयोऽहर्गणा ऊचुस्त्वमस्मान् मा हासीरिति । तदेषामहीनत्वमिति द्विरात्रादीनामहीनत्वं दर्शयति ॥ २८ ॥

( पञ्चदशरात्रकुण्डपायिनामयनयोः सत्रत्वात्सत्रात्मकद्वादशाहधर्मातिदेशाधिकरणम् ॥ ६ ॥ )

[ ६ ] अन्यतरतोऽतिरात्रत्वात्पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् ॥ २९ ॥ पू०

पञ्चदशरात्रं, कुण्डपायिनामयनं चोभावप्यहीनौ । कस्मात् । अन्यतरतोऽतिरात्रत्वात् । उभावप्येतावन्यतरतोऽतिरात्रौ, तेनाहीनाविति * । पञ्चदशरात्रस्तावत्, त्रिवृदग्निष्टुदग्निष्टोमास्त्रिरात्रो दशरात्र उदयनीयोऽतिरात्र इति । कुण्डपायिनामयनमपि, मासमग्निहोत्रं जुह्वतीत्यारभ्य, यावद्दशरात्रो महाव्रतमुदयनीयोऽतिरात्र इति । यश्चान्यतरतोऽतिरात्रः, सोऽहीनः । कथं ज्ञायते । तद्भूतेष्वहीनत्वस्य दर्शनात् । तद्भूतेषु—अन्यतरतोऽतिरात्रभूतेष्वहीनत्व श्रूयते । यदन्यतरतोऽतिरात्रास्तेनाहीन इति ॥ २९ ॥

अहीनवचनाच्च ॥ ३० ॥

अहीन इति चायं पञ्चदशरात्रः प्रत्यक्षमुक्तः । यदन्यतरतोऽतिरात्रास्तेनाहीन इति । तस्मादप्यहीन इति ॥ ३० ॥

सत्रे वोपायिचोदनात् ॥ ३१ ॥ सि०

सत्रे वैते, नाहीनौ । कुतः । उपायिचोदनात् । य एव भूतिकार्यमिच्छन्तस्त एनं पञ्चदशरात्रमुपेयुः । कुण्डपायिनामयनेऽपि, भूतिकामा उपेयुरिति । कः पुनरेतयोर्लिङ्गयोर्विशेषः । चोदनागत-

---

यत्रातिरात्रोऽन्ते दृश्यते सोऽहीनः । अत्रान्तेऽतिरात्रः× । तस्मादहीनत्वम् । एवं चेदहीनविध्यन्तोऽत्र ॥ २८ ॥ २९ ॥ [ ३० ॥

---

* तेनाहीनाविति क्वचिन्नास्ति । × अत्र—पञ्चदशरात्रे कुण्डपायिनामयने चेत्यर्थः ।

मेकं, वाक्यान्तरगतमन्यच्च। चोदनागतं यत्तदन्तरङ्गं भवति, बहिरङ्गमितरत्। अयं चापरो विशेषः। अहीनलिङ्गेन च नित्येनाहीनस्य संस्तुतिर्नोपपद्यते। उपपत्त्यैतदहीनत्वमुच्यते,= यदन्यतरतोऽतिरात्रास्तेनाहीन इति सा यदि तावदुपपत्तिः साधिका, ततोऽन्तरेणापि वचनं, सिद्धमहीनत्वम्। अथ न साधिका, उच्यमानमपि न सिध्यति। तस्मान्नैतद्वचनम्। किं तर्हि। अनुवादोऽयं स्तुत्यर्थः। स्तुतिश्च नित्येनाहीनलिङ्गेनान्यतरतोऽतिरात्रत्वेनाहीनस्य नोपपद्यते। यत्कारणं, सर्व एवाहीनोऽन्यतरतोऽतिरात्रः। सत्रस्य तूपपद्यते, येन तावदयमन्यतरतोऽतिरात्रः, तेनाहीनः। आत्मना च सत्रम्। अत उभयात्मा विशिष्टोऽयमन्येभ्यः सत्रेभ्य इति॥ ३१॥

सत्रलिङ्गं च दर्शयति॥ ३२॥

सत्रलिङ्गं च कुण्डपायिनामयने दर्शयति। गृहपतिर्गृहपतिः, सुब्रह्मण्यः सुब्रह्मण्य इति। गृहपतिर्हि सत्र आम्नातः। गृहपतिसप्तदशाः सत्रमुपेयुरिति। सत्रे च तेनार्थः क्रत्वर्थान् याजमानान् कर्तुम्। अन्येषां यजमानानां व्यावृतत्वात्। तस्मात्सत्रे एवैते इति॥ ३२॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्येऽष्टमस्याध्यायस्य
द्वितीयः पादः॥

---

अध्येतारः सत्रमिदं स्मरन्ति। म चेद्दृग्वचनमस्ति, योऽन्यतरतोऽतिरात्रः सोऽहीन इति। यदध्येतारोऽहीन* इति। उपायिचोदनेन सत्रलिङ्गेन सत्रत्वम्॥ ३१॥ ३२॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां
टुप्टीकायामष्टमाध्यायस्य द्वितीय पादः॥

---

= यत्कारणम्। सर्व एवाहीनोऽन्यतरतोऽतिरात्राद्युपज्ञातः। तदहीनत्वमुच्यते—पा०।
* अहीन इतीति—इति स्मरन्ति सोऽहीन इत्यर्थः।

## अथाष्टमस्याध्यायस्य तृतीयः पादः ॥

( आग्नावैष्णवादौ देवतासामान्यादग्नीषोमियादिधर्मातिदेशाधिकरणम् ॥१॥ )

[ १ ] हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ १ ॥ पू०

इह हविर्गण= उदाहरणम् । आग्नावैष्णवमेकादशकपालं निर्वपेत्, सारस्वतं चरुम्, बार्हस्पत्यं चरुम्, अग्नये पावकाय, अग्नये शुचये, इत्येवमादयः । तत्र चिन्त्यते । किं शुचिदेवतस्याग्नीषोमीयविध्यन्तः, आग्नावैष्णवस्याप्याग्नेयविध्यन्त उत विपर्यय इति । किं प्राप्तम् । हविर्गणे परं शुचिदेवतम्, उत्तरस्याग्नीषोमीयस्य विकारः। पूर्वमप्याग्नावैष्णवं, पूर्वस्याऽऽग्नेयस्य विकारः । कुतः । देशसामान्यात् । क्रमसामान्यादित्यर्थः । इह शुचिदेवतो द्वितीयः । प्रकृतावप्यग्नीषोमीयो द्वितीयः । इतरत्राप्याग्नावैष्णवः प्रथमः । प्रकृतावप्याग्नेयः प्रथमः । देशसामान्येन लिङ्गेन परमुत्तरस्य, पूर्वं पूर्वस्य विकारः ॥ १ ॥

देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् ॥ २ ॥ सि०

न वा देशेन नियमः स्यात । किं तर्हि । देवतया । देवतासामान्यात् । कुतः । शब्दवती देवता । आग्नावैष्णवमग्नये शुचये, इति । इतरस्य देशस्य, अश्रुतित्वात् । देशो न श्रूयते । किं तर्हि । प्रचयाद्गम्यते+ । किमतः । एतदतो भवति । देवताप्रत्ययः कर्मचोदनायामनन्तरत्वान्मुख्यः । इतरस्तु पौर्वापर्यापेक्षयोत्पद्यते । तस्माज्जघन्यः । मुख्यानुग्रहश्च न्याय्यः । अतः शुचिदेवत्य आग्नेयस्य विध्यन्तः । आग्नावैष्णवे चाग्नीषोमीयस्य ॥ २ ॥

---

॥ १ ॥ २ ॥

– · —

---

= हविर्गणाः—पा० । + प्रत्ययाद्गम्यते—पा० ।

( जनकसप्तरात्रे द्वादशाहिकानां सप्तानामह्नां क्रमेण धर्मातिदेशाधिकरणम् ॥ २ ॥ )

[ २ ] गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताऽऽग्नेयवत् ॥ ३ ॥ पू०

जनकसप्तरात्रे श्रूयते, चत्वारि त्रिवृन्त्यहानि भवन्तीति । तथाऽन्यत्र श्रूयते, नव त्रिवृन्त्यहानि भवन्तीति । तत्र संदेहः । किं पार्ष्ठिकस्य प्रथमस्यायमभ्यास उत नानाह्नां द्वादशाहिकानां स्तोमविधिरिति । किं प्राप्तम् । गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताऽऽग्नेयवत् । गणचोदनायामेवंविधायां यस्य लिङ्गं पार्ष्ठिकस्य प्रथमस्याह्नस्त्रिवृत्त्वं, तस्यवाऽऽवृत्तिः प्रतीयेत । चोदनासामान्यात् । आग्नेयवत् । तद्यथा, अग्नये पावकाय, अग्नये शुचये, इति देवतैकयाचोदनासामान्यादाग्नेयस्य विध्यन्ताभ्यासः । एवमिहापि ॥३॥

नानाहानि वा संघातत्वात्प्रवृत्तलिङ्गेन चोदनात् ॥ ४ ॥ सि०

नानाहानि वा द्वादशाहिकानि प्रवर्तेरन्, न पार्ष्ठिकं प्रथममहः। कस्मात् । संघातत्वात् । संघात एष उच्यते, चत्वारि त्रिवृन्त्यहानीति । पृथक्त्वनिवेशिनी हि चत्वारीति संख्या, पृथक्त्वेनाह्नां भवतीति । सन्ति च तत्र सप्तरात्रे चोदनया प्रवृत्तानि नानाहानि द्वादशाहिकानि चत्वारि । तान्यनूद्य त्रिवृत्त्वं विधातुं शक्यते ।

न तु त्रिवृन्ति बहून्यहान्यनूद्य तत्र चतुःसंख्या विधीयते ॥ ४ ॥

---

सन्ति तत्र चोदनया प्रवृत्तानि नानाहानि द्वादशाहिकानि चत्वारि । तान्यनूद्य त्रिवृत्त्वं विधातुं शक्यत इत्येदयुक्तम् । जनकसप्तरात्रेण यजेत ' इति प्रयोगचोदनेयम् । प्रयोगश्चोत्पत्तिं* × न त्यजति । अहःशब्दो= यागविशेषवचनोऽश्रुतमपि विशेष्यमनुमापयति । नेदं विशेषणं

---

* ' प्रयोगश्चोत्पत्तिर्न त्यज्यते ' इति यथाश्रुतः पाठ उपलभ्यते । × उत्पत्तिं न त्यजति–उत्पत्तिमपेक्षत इत्यर्थः । = प्रयोगचोदनयाऽपेक्षितायाः अपि कर्मोत्पत्तेरन्यतोऽलाभात्स्वयमेवोत्पत्तिमपि चोदयतीति शङ्कायामाह–अहःशब्द इति । ' चत्वारि त्रिवृन्त्यहानि ' इति वाक्यस्थाहःशब्द इत्यर्थः ।

तथा चान्यार्थदर्शनम् ॥ ५ ॥

चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानीति । येषामग्निष्टोमः प्रथमः, इतरेऽनाग्निष्टोमाः, त एवमुक्ते प्रतीयन्ते, न ये सर्वेऽग्निष्टोमाः । यथा, अयोमुखं पिण्डच्छेदनमित्युक्ते न सर्वायसं प्रतीयते । यदि च त्रिवृतोऽभ्यासः स्यात्, सर्वेऽग्निष्टोमा भवेयुः अग्निष्टोमो ह्यसौ । तस्माद्द्वादशाहिकानां चोदकप्राप्तानामह्नां त्रिवृत्ता विधीयते । एवं नव त्रिवृन्त्यहानि भवन्तीति ॥ ५ ॥

षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् ॥३॥ )

[ ३ ] कालाभ्यासेऽपि बादरिः कर्मभेदात् ॥ ६ ॥ पू०

क्वचित्कर्मविशेषे श्रूयते । षडहा भवन्ति, चत्वारो भवन्ति, पञ्चहा भवन्ति । तत्र संदेहः । किं द्वादशाहिकानामह्नां प्रवृत्तिः, उत षडहस्येति । किं प्राप्तम् । कलाभ्यासेऽपि बादरिः । षडहकालाभ्यासेऽप्येतस्मिन् श्रूयमाणे बादरिराचार्यो द्वादशाहिकानामह्नां* प्रवृतिं

---

यागमन्तरेण संभवति । यथा, वज्रीतीन्द्रमनुमापयति । बहुवचनादनियतबहुत्वेषु× चत्वारीति नियम्यते । तेषां त्रिवृत्त्वमग्निष्टोममुखत्वं च विधीयते । ननु ÷ ' चत्वारि त्रिवृन्त्यहानि भवन्ति ' अत+ उत्पन्नानि ' जनकसप्तरात्रेण यजेत ' इति फले विधीयन्ते । पूर्वपक्ष, त्रिवृत्तेन लिङ्गेन प्रथमस्याह्नो विध्यन्तश्चतुर्ष्वपि ।

सिद्धान्ते, यागानां गुणः संघातः । तदीयेन* गुणेन नानाह्नां यो धर्मः सोऽतिदिश्यते, संघातसामान्यात् । त्रिवृत्त्वं पुनरङ्गावस्थितं, तद्बहिरङ्गत्वाद्दुर्बलम् । एवं वर्णयितव्यमधिकरणम् ×। यथा भाष्यकारेण वर्णितं तथा बहवो दोषाः। कथं । चत्वारीत्यनूद्य त्रिवृत्त्वं विधीयते÷। न च सप्तरात्रे चत्वारि सन्ति । अविधीयमानत्वाच्चतुर्णां, यान्यनूद्येरन् । अभ्युपेत्य ब्रूमः । सन्तु वा चत्वारि । तत्राग्निष्टोममुखानीति द्वितीयो गुणो विधेयः । तत्र वाक्यं भिद्येतेति सिद्धम् + ॥ ४ ॥ ५ ॥ ६ ॥

---

* नानाह्नां—पा० । × बहुत्वे—पा० । ÷ एवं चेत्यर्थः । + अत उत्पन्नानीति—इत्यनेन वाक्येनोत्पन्नानि कर्माण्यनूद्य जनकसप्तरात्रेणेति वाक्येन फले विधीयन्त इत्यर्थः । * तदीयेन गुणेन-प्रधानसंबन्धिना संघाख्येन बलवता गुणेनेत्यर्थः । × वर्णितव्यं—पा० । ÷ विधीयते—इत्युक्तं भाष्यकारेणेति शेषः । + अष्टमतुरीयचरणो वार्तिककृता न व्याख्यातः ।

मन्यते स्म। कुतः। कर्मभेदात्। षडशब्देनात्राहामितानि षट् सौत्यानि कर्माण्युच्यन्ते। तेषां च षट्कानां भेदो गम्यते। चत्वारः षडहा इति पृथक्त्वनिवेशात्संख्यायाः। यद्येकस्यैव कर्मषट्कस्य पार्ष्ठिकस्याऽऽभिप्लविकस्य वाऽभ्यासः कल्प्येत, ततश्चतुःषडहा इति स्यात्। अथ पुनः, चत्वारः षडहा इत्युक्ते चतुर्विंशत्यहानि प्रतीयन्ते, साऽहःसंघातचोदना प्रकृतिलिङ्गत्वाद्द्वादशाहिकीमहःप्रवृत्तिं गृह्णाति तस्मान्नानाह्नां द्वादशाहिकानां प्रवृत्तिः ॥ ६ ॥

तदावृत्तिं तु जैमिनिरह्नामप्रत्यक्षसंख्यत्वात् ॥ ७ ॥ सि०

तदावृत्तिं, पार्ष्ठिकस्यैव प्रज्ञातस्य षडहस्याऽऽवृत्तिं जैमिनिराचार्यो मेने। कुतः। अह्नामप्रत्यक्षसंख्यत्वात्। चतुर्विंशतिरह्नामप्रत्यक्षा संख्याऽनुमानाद्गम्यते। तस्याश्च षडहचतुष्टयेनैवानुमानम्। तेन पूर्वं तावत्षडहचतुष्टयमेव प्रत्येति। तत्समाहृत्य* चतुर्विंशतिसंख्याम्। यथा, पूर्वं धूमं प्रतिपद्यते, पश्चादग्निम्। यश्च धूमप्रत्ययेनैव कृतार्थो भवति नासावग्निप्रत्ययमाद्रियते। इहापि षडहप्रत्ययादेव तत्प्रवृत्तिः प्रसज्यते। तथा च कृतार्थः, किं चतुर्विंशतिसंख्यया प्रतीतया= करिष्यति। तस्मात्षडहाभ्यासः।

अथ यदुक्तं, पृथक्त्वनिवेशिनी संख्याऽऽवृत्तौ बाध्येतेति। तत्र ब्रूमः। षडह इति प्रज्ञातः षडहः संनिहितो गृह्यते। तस्य चतुःसंख्यासंबन्धः साक्षान्नास्तीत्यावृत्त्या भविष्यति। यथा, उपसदां प्रयाजानुयाजानां च। यस्यापि, चतुर्विंशतिरात्रश्चत्वारः षडहा इत्येवं चोद्यते, तस्यापि दशरात्रे प्रवर्तमान आवृत्त्यैव संख्यापूरणम्। भिन्नानां षडहानामभावात्। यश्चोभयोर्दोषो नासावेकं पक्षं निवर्तयति ॥ ७ ॥

( शतोक्थ्यादिसंस्थागणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ॥ ४ ॥ )

[ ४ ] संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ॥ ८ ॥ पू०

---

॥ ७ ॥ ८ ॥

---

* परतः समाहृत्य—पा०। = प्रतीतयाऽपि—पा०।

इह संस्थागणा उदाहरणम् । अग्निष्टोमः पश्चोक्थ्यः, शताग्निष्टोमं भवति, शतातिरात्रं भवतीत्येवमादयः । अत्र चिन्त्यते । किं ज्योतिष्टोमस्यायमभ्यास उतैवंसंख्यानां संस्थाविशिष्टानामह्नां वाद इति । किं प्राप्तम् । संस्थागणेषु तदभ्यासः प्रतीयेत । तस्यैव प्राकृतस्य ज्योतिष्टोमस्यायमभ्यासः । कुतः । कृतलक्षणग्रहणात् । तस्यैतत्कृतं लक्षणम् । अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्र इति। तत्संयोगेनैताः संस्था उत्पन्नाः । स ताभिः शक्यते लक्षयितुम् । तं च लक्षयित्वा संख्यां केवलां विधास्यति । नानाह्नां तु वादे संस्था संख्या चोभयं विधीयते । उक्थ्यसंस्था* भवन्ति, ते च पञ्च भवन्तीति । तथा वाक्यं भिद्यते । तस्माज्ज्योतिष्टोमाभ्यासः ॥ ८ ॥

अधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्यादभिधानस्य
तन्निमित्तत्वात् ॥ ९ ॥ सि०

नैतदेवं, ज्योतिष्टोमाभ्यास इति । कथं तर्हि । प्रकृतिस्तद्विशिष्टा स्यात् । द्वादशाहिकान्यहानि संस्थाविशिष्टानि स्युः । कस्मात् । अधिकारात् । तान्यत्र चोदकेनाधिकृतानि । एवं चोदकानुग्रहो भविष्यति । ननु प्रत्यक्षविहितो ज्योतिष्टोमोऽग्निष्टोमादिभिः शब्दैः । नेत्याह । कथम् । अभिधानस्य तन्निमित्तत्वात् । अग्निष्टोमाद्यभिधानं संस्थानिमित्तं, न ज्योतिष्टोमाभिधायकम् ÷ । तत्तत्संस्थं= क्रतुं वदितुं शक्नोति, न ज्योतिष्टोममेव । यत्तु—अनेकार्थत्वमिति +। नानेकार्थत्वं× भविष्यति । गणचोदनया प्राप्तानामह्नां पञ्चानां संस्थामात्रं विधायिष्यते । शताग्निष्टोममित्यपि समास उभयविशेषणविशिष्टं गणमाह ।

स एक एवार्थः । यथा, लोहितोष्णीषा ऋत्विजः प्रचरन्तीति । पृथक्त्वनिवेशिनी चैवं संख्याऽनुगृहीता भविष्यति । तस्माद्द्वादशाहिकानां नानाह्नां वादः ॥ ९ ॥

॥ ९ ॥

* उक्थ्याः संस्थाः—पा० । ÷ ज्योतिष्टोमवाचकम्—पा० । = तत्संस्थं—पा० । + अनेकार्थमिति–पा० । × नानेकार्थम्—पा० ।

( शतोक्थ्यादौ ज्यौतिष्टोमिकोक्थ्यादिस्तोत्रानुष्ठानाधिकरणम् ॥ ५ ॥ )

[ ५ ] गणादुपचयस्तत्प्रकृतित्वात् ॥ १० ॥ पू०

शतोक्थ्यं भवति, शतातिरात्रं भवतीति श्रूयते। तत्र द्वादशाहिकान्यहानि प्रवर्तन्ते। तानि च प्रायेणोक्थ्यसंस्थानि। द्वावग्निष्टोमौ। शतोक्थ्यं भवतीत्युक्ते, अग्निष्टोमयोरुक्थ्यस्तोत्रोपचयः प्राप्तः। शतातिरात्रं भवतीति सर्वेषु रात्रिपर्यायोपचयः। तत्र चिन्त्यते। किं द्वादशाहादुपचयः कर्तव्य उत ज्योतिष्टोमादिति। किं प्राप्तम्। गणादुपचयः। कुतः। तत्प्रकृतित्वात्। द्वादशाहप्रकृतय एतेऽहर्गणाः। तेषु द्वादशाहिको विध्यन्तः प्राप्यते। यदि द्वादशाहादुपचयः, एवं चोदकानुग्रहो भविष्यति। तस्माद्गणादुपचयः ॥१०॥

एकाहाद्वा तेषां समत्वात्स्यात् ॥ ११ ॥ सि०

एकाहाद्वा ज्योतिष्टोमादुपचयो, न द्वादशाहात्। कस्मात्। तेषां समत्वात्। द्वादशाहिकानामह्नामितरैर्वैकृतैः समत्वं भवति। तान्यप्यन्यतः संस्थामाकाङ्क्षन्ति, इमान्यपि। न च भिक्षुका भिक्षुकादाकाङ्क्षन्ति सत्यन्यस्मिन् प्रसवसमर्थेऽभिक्षुके+। किमेतदुक्तं भवति। द्वादशाहे संस्थास्तोत्राण्यनाम्नातानीतरेता यत्राऽऽम्नातानि तत आकाङ्क्षन्ति। वैकृतेष्वहःसु तानि नाऽऽम्नातानीति। तस्माद्वैकृतान्यहानि यत्र विहितानि तत एवाऽऽकाङ्क्षितुमर्हन्ति। ज्योतिष्टोमे च तान्याम्नातानि। तस्माज्ज्योतिष्टोमादुपचयः ॥ ११ ॥

( बृहस्पतिसवादौ दाशतयीभ्य उत्पन्नगायत्रीणां समानयनाधिकरणम् ॥६॥ )

[ ६ ] गायत्रीषु प्राकृतीनामवच्छेदः प्रकृत्यधिकारात्संख्यात्वादग्निष्टोमवदव्यतिरेकात्तदाख्यत्वम् ॥ १२ ॥ पू०

उपचयश्चिन्तितः। अपचय इदानीं चिन्त्यते। इदं श्रूयते। वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति। तत्रेदं समाम्नातं, गायत्रमेतदहर्भवतीति। अत्र विचार्यते। किं प्राकृतीनां त्रिष्टुब्जगतीनामक्षरावलोपं कृत्वा गायत्रं तदहः कर्तव्यमुतोत्पत्तिगायत्रीणां दाशतयीभ्य

॥ १० ॥ ११ ॥ १२ ॥

---

+ प्रसमर्थे—पा०।

आगमं कृत्वेति। अत्र सूत्रेणैवोपक्रमः। गायत्रीषु प्राकृतीनामवच्छेदः। गायत्रीषु श्रूयमाणासु गायत्रमेतदहर्भवतीति, प्राकृतीनां त्रिष्टुब्जगतीनामवच्छेदोऽक्षरावलोपः कर्तव्यः। कुतः। प्रकृत्यधिकारात्। चोदकेनात्र प्राकृतयस्त्रिष्टुब्जगत्यः प्राप्ता अधिकृता विद्यन्ते। यद्यन्यासामृचामागमः क्रियेत, प्राकृतः प्रत्ययो बाध्येत।

ननु प्रत्यक्षश्रुता गायत्र्यः। ताभिश्चोदकप्राप्ता इतरा बाधितव्याः। नेत्याह। कस्मात्। संख्यात्वात्। अयं गायत्रीशब्दः संख्यावाचकः। कथं ज्ञायते। अव्यतिरेकाच्चतुर्विंशतिसंख्यामेष न व्यभिचरति। न क्वचिच्चतुर्विंशतिसंख्यया विना दृष्टः। चतुर्विंशतिसंख्याहीनासु त्रिष्टुब्जगतीषु न कदाचिद्भवति। तस्मात्संख्याशब्दोऽयम्। संख्याशब्दश्चेदक्षरावलोपः कर्तव्यः। अग्निष्टोमवत्। यथा, शताग्निष्टोमं भवतीत्युक्ते द्वादशाहिकानामह्नामुक्थ्यावलोपः क्रियते। एवमिहापि ॥ १२ ॥

तन्नित्यवच्च पृथक्सतीषु तद्वचनम् ॥ १३ ॥

तन्नित्यवत्संख्यामात्रं ब्रुवन्तं गायत्रीशब्दं मत्वा, पृथक्सतीषु पृथग्भूतासु गायत्रीभ्यो जगतीषु, अगायत्रीषु तद्वचनं भवति, गायत्रीवचनं भवति। ये हि द्वे गायत्र्यौ, सैका जगतीति। यदि संख्यायां गायत्रीशब्दस्ततो जगत्यां द्वे चतुर्विंशतिसंख्ये इत्येतद्वचनमुपपद्यते। अथ, ऋचि ततो द्वे ऋचौ जगत्यां न स्त इत्येतद्वचनमनुपपन्नं स्यात्। तस्मादपि संख्यायां गायत्रीशब्दः। तथेदमपरं च दर्शनम्। तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोतीति ॥ १३ ॥

न विंशतौ दशेति चेत् ॥ १४ ॥

अथ, कश्चिद्ब्रूयात्, न विंशतौ दशसंख्याऽस्ति। न संख्या संख्यान्तरे वर्तते। गुणो हि संख्या। न च गुणा गुणेषु वर्तन्ते। एवमष्टाचत्वारिंशत्संख्यायां चतुर्विंशतिसंख्या नास्ति। तस्मात्संख्यार्थेऽपि गायत्रीशब्दे, एका जगती, द्वे गायत्र्यौ, इत्येतदनुपपन्नमेव। यश्चोभयोर्दोषो नासावेकस्य वाच्यः ॥ १४ ॥

---

॥ १३ ॥ १४ ॥

ऐकसंख्यमेव स्यात्॥ १५॥

अत्रोच्यते। न ब्रूमः संख्यायां संख्या वर्तत इति। किं तर्हि। अष्टाचत्वारिंशत्संख्यापरिच्छिन्नेष्वक्षरेष्ववयवभूते द्वे चतुर्विंशतिसंख्ये, न तु द्वे ऋचौ, इति। न च संख्या संख्यान्तरं निवर्तयति। यदि निवर्तयेदैकसंख्यमेव स्यात्। यस्य दश गावस्तस्य द्वौ पञ्चकौ गवामित्येतद्वचनं न स्यात्। भवति च तत्। तस्मान्न संख्या संख्यान्तरं निवर्तयति।

एवं वा॥ न विंशतौ दशेति चेत्। यद्यपि संख्यायां गायत्रीशब्दः, एवमपि नाक्षरावलोपः कर्तव्यः। किं कारणम्। विंशतौ दश विद्यन्ते। किमतः। इदं तावदतः। येन विंशतिरुपात्ताः, उपात्तास्तेन दश भवन्ति। एवं येन त्रिष्टुब्जगत्यः प्रयुक्ताः, प्रयुक्तास्तेन तदन्तर्गता गायत्र्यो भवन्ति। तस्माददविकारेण प्रयोगः। एवं चोदकानुग्रहश्च भवति। गायत्रं चाहः कृतं भवति।

ऐकसंख्यमेव स्यात्। अत्राऽऽह। जगत्यां त्रिष्टुभि चोपात्तायां न गायत्र्य उपात्ता भवन्ति। कथम्। साधनं परिच्छिन्दती संख्या कर्मणि, अङ्गी भवति। न जगत्याः, त्रिष्टुभो वाऽवयवः साधनम्। किं तर्हि। त्रिष्टुब्जगत्यः। अथोच्येत, गायत्रमेतदहर्भवतीति वचनादवयव एवात्र साधनमिति। तथा सत्यक्षरावलोप एव* प्राप्नोति। उत्तरस्यावयवस्यानङ्गत्वात्। न चानङ्गेऽनुपादीयमाने चोदको बाध्यते। तस्माद्यदुक्तं, यद्यपि संख्यायां गायत्रीशब्दः, एवमप्यविकारेण प्रयोग इति।

एतदयुक्तम्। दर्शयति= च। नोत्तरस्यां संख्यायामुपात्तायां पूर्वाः संख्या उपात्ता भवन्तीति ×। यदयमेका च दश च शतं च सहस्रं च परार्धं चेति सर्वसंख्या अनुक्रामति। यदि चोत्तरस्यां संख्यायामुपात्तायां पूर्वाः संख्या उपात्ता भवन्ति, ऐकसंख्यमेव स्यात्। एकैव परार्धसंख्या भवेत्। सा हि सर्वाभ्य उत्तरा। यतस्त्वेकाद्या

॥ १५॥

* एवं-पा०। = दर्शयति। न च-पा०। × भवन्ति-पा०।

अप्यनुक्रान्ताः । अतो विज्ञायते, नोत्तरस्यां संख्यायामुपात्तायां पूर्वाः संख्या उपात्ता भवन्तीति ॥ १५ ॥

गुणाद्वा द्रव्यशब्दः स्यादसर्वविषयत्वात् ॥ १६ ॥ सि०

नैतदेवं= संख्यायां गायत्रीशब्द इति । कथं तर्हि । गुणाद्द्रव्यशब्दः स्यात् । चतुर्विंशत्यक्षरयुक्तस्य द्रव्यस्य वाचकः । कस्मात् । असर्वविषयत्वात् । यदि संख्याशब्दः स्यात्, सर्वस्मिंश्चतुर्विंशतिसंख्यासंख्येये * वर्तेत गोयूथादौ । न च वर्तते । तस्मान्न संख्याशब्दः ॥ १६ ॥

गोत्ववच्च समन्वयः ॥ १७ ॥

यथा, गौरिति सत्यपि गमननिमित्ते सामान्यद्रव्याभिधाने सास्नादिमत्येव समन्वयो, नान्यत्रेति तद्वचन एव गोशब्दो विज्ञायते । एवमयमप्यृग्वचन एव विज्ञातुं न्याय्यः ॥ १७ ॥

संख्यायाश्च शब्दवत्त्वात् ॥ १८ ॥

चतुर्विंशतिसंख्यावाचकः शब्दोऽस्ति, चतुर्विंशतिरिति । नास्यापरेण गायत्रीशब्देनार्थः । संज्ञाया व्यवहारार्थत्वादेकेन व्यवहारसिद्धेः ॥ १८ ॥

इतरस्याश्रुतित्वाच्च ॥ १९ ॥

इतरस्य ऋग्द्रव्यस्याश्रुतित्वात् । अशब्दत्वादित्यर्थः । तस्यापि व्यवहारार्थेन संज्ञाशब्देन प्रयोजनम्× । तत्रायं गायत्रीशब्दोऽर्थवान् भवति । संख्यायां निष्प्रयोजनः । तस्मादपि ऋक्शब्दो न्याय्यः । अतो गायत्रीणामृचामागमः कर्तव्य इति ॥ १९ ॥

द्रव्यान्तरे निवेशादुक्थ्यलोपो विशिष्टं स्यात् ॥ २० ॥

यदुपवर्णितम्, अग्निष्टोमवदिति । तत्र ब्रूमः। अग्निष्टोमशब्दस्य द्रव्यान्तरे कस्मिंश्चिन्निवेशो नास्ति । यथा गायत्रीशब्द ऋग्द्रव्ये । अयं हि केवलाग्निष्टोमान्ततां ब्रूते । न चोक्थ्यलोपमन्तरेण द्वादशाहिकानामह्नामग्निष्टोमान्तता भवतीत्यवश्यकार्य उक्थ्यलोपः । अयं

---

॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

---

= न चैतदेवं-पा० । * चतुर्विंशतिसंख्येये-पा० । × कार्यं प्रयोजनं-पा० ।

पुनर्गायत्रीशब्दः त्र्यक्षरद्वयस्य वाचक इत्युक्तम्। न चाक्षरावलोपेन तद्द्वयं प्राप्यते। तस्माद्विषमोऽयमुपन्यास इति ॥ २० ॥

अशास्त्रलक्षणत्वाच्च ॥ २१ ॥

अशास्त्रलक्षणानि चोक्थस्तोत्राणि शताग्निष्टोमे, तानि शास्त्रलक्षणयाऽग्निष्टोमान्ततया बाध्यन्ते। इह पुनर्विपरीतं, शास्त्रलक्षणा गायत्र्यः, आनुमानिक्यस्त्रिष्टुब्जगत्यः। ता न शक्नुवन्ति गायत्रीं बाधितुम् ॥ २१ ॥

उत्पत्तिनामधेयत्वाद्भक्त्या पृथक्सतीषु स्यात् ॥ २२ ॥

अथ यदुक्तं, संख्यायां गायत्रीशब्दो दृष्टः। ये हि द्वे गायत्र्यौ, सैका जगतीति। तस्य कः परिहारः। उच्यते। औत्पत्तिकमेतद्वचो नामधेयमित्युक्तम्। अत उत्पत्तिनामधेयत्वाद्योऽयं जगत्यवयवे चतुर्विंशत्यक्षरे पदसंचये प्रयोगः, स भक्त्या* विज्ञेयः। न ह्येकस्य शब्दस्यानेकार्थता सत्यां गतौ न्याय्या। कया पुनर्भक्त्या। परिमाणसामान्यात्। यत्परिमाणं द्वयोर्गायत्र्योस्तदेकस्या जगत्याः। अत एतदुक्तम्। ये हि द्वे गायत्र्यौ, सैका जगतीति। यथा, यौ द्वौ कौरवौ× स एको वाहिक+ इति। एतच्च गायत्रीद्वयप्रशंसार्थं वचनम्। कथम्। इदं श्रूयते, द्वाभ्यां गायत्रीभ्यां वैश्यस्येति। तदेतदयुक्तमिवोच्यते। जगत्या वैश्यस्य कार्यम्। जागतो हि वैश्यः। तदेतद्द्वाभ्यां गायत्रीभ्यां क्रियते। जगत्यैव तत्कृतं भवति। ये हि द्वे गायत्र्यौ सैका जगतीति। तस्मादहेतुरयं संख्यार्थत्वे गायत्रीशब्दस्य ॥ २२ ॥

वचनमिति चेत् ॥ २३ ॥

शक्यं तावत्तत्रैतद्वक्तुं=, यत्रानुवादो गायत्रीशब्दः। यत्र तु विधिस्तत्र कथम्। यत्रा, तिस्रोऽनुष्टुभः, चतस्रो गायत्रीः करोति, इति। कः पुनर्विधौ विशेषः। विधौ शब्दार्थेन व्यवहारो भवति। तिस्रोऽनु-

---

॥ १ ॥ २२ ॥ २३ ॥

---

* भाक्तः—पा० × कौरवकौ – पा०। + वाहिकः—पा०। = तत्रैतदुक्तं—पा०।

ष्टुभश्चतस्रो गायत्र्यो न शक्याः कर्तुम्। शक्यास्तु चतस्रश्चतुर्विंशतयः। तस्मात्तत्र संख्यायां गायत्रीशब्द इति ॥ २३ ॥

अथ ब्रूमः—

यावदुक्तम् ॥ २४ ॥

इहैवैकत्र संख्यार्थो नान्यत्र। क्वचिद्दर्शनात्। आह। यद्येवं न संख्यावचनः। कथमिह संख्यार्थो जात इति। उच्यते। लक्षणयाऽपि विधानं भवति। यथा लोके, अमी पिष्टपिण्डाः सिंहाः क्रियन्तामिति। वेदेऽपि, पृष्ठैरुपतिष्ठत इति। न च तत्र सिंहशब्दः प्रतिकृतिवचनो दृष्ट इत्यन्यत्रापि प्रतिकृतिवचनो विज्ञायते। पृष्ठशब्दो वा पृष्ठसाधनमन्त्रवचनः*। न च लक्षणया प्रयोगे शब्दार्थः× परिच्छिद्यते। यत्कारणं, स्वार्थ एव वर्तमानोऽर्थान्तरं लक्षयति। स्वार्थं जहन्नैव लक्षयेत्। तस्मादयमप्यहेतुः ॥ २४ ॥

अपूर्वे च विकल्पः स्याद्यदि संख्याविधानम् ॥ २५ ॥

अपूर्वे च दर्शपूर्णमासकर्मणि विकल्पः स्यात्, यदि संख्यायां गायत्रीशब्दः। तत्र हि श्रूयते, गायत्र्या परिदध्यादिति। एवं श्रुते, आजुहोतायाश्चतुर्विंशत्यक्षरस्य पदसंचयस्य च विकल्पः स्यात्। विकल्पे पक्ष आजुहोताया बाधः। स चायुक्तः सत्यां गतौ। तस्मादपि नैतत्संख्याविधानम् ॥ २५ ॥

ऋग्गुणत्वान्नेति चेत् ॥ २६ ॥

अत्रोच्यते। न प्रकृतौ विकल्पो भविष्यति। कुतः। ऋग्गुणत्वात्। ऋग्गुणो हि तत्र प्रयोगोऽङ्गीकृतः। ऋचस्तस्य सामिधेन्य आम्नाताः। यदि, अनृचा परिदधीत, ऋग्गुणत्वं बाध्येत। तस्मात्तत्राऽऽजुहोतयैव परिधास्यति। तथा सति गायत्र्या परिहितं भविष्यति। ऋग्गुणत्वं चोपसंगृहीतम्÷ ॥ २६ ॥

---

॥ २४ ॥ २५ ॥ २६ ॥

---

---

* पृष्ठसाधन–इति क्वचिन्नास्ति। × अशब्दार्थः—पा०। ÷ उपगृहीतं–पा०।

तथा पूर्ववति स्यात् ॥ २७ ॥

पूर्ववत्यपि बृहस्पतिसवे तथा स्यात्, यथाऽपूर्वे। अत्रापि ऋग्गुणकः प्रयोगोऽङ्गीकृतश्चोदकेन। तत्रापि ऋक्षूपादीयमानासु गायत्रं चैवाहः कृतं भवति। ऋग्गुणकत्वं च न बाधितम्। तस्मान्नाक्षरावलोपः ॥ २७ ॥

गुणावेशश्च सर्वत्र ॥ २८ ॥

तुशब्दस्य स्थाने चशब्दः। दृष्टश्च तुशब्दस्यार्थे चशब्दः। यथा, किंचेह भवतीति। गुणस्य चतुर्विंशतिसंख्यायाः सर्वत्राऽऽवेशः कृत्स्नायामाजुहोतायां, नावयवे। अतस्तस्यामुपादीयमानायामृग्गुणत्वं चोपगृहीतं भवति, संख्या च। बृहस्पतिसवे पुनर्या ऋचश्चोदकेनाङ्गीकृताः, तासामवयवे चतुर्विंशतिसंख्या निविष्टा। तस्मिन्नुपादीयमान ऋग्गुणत्वमनुपात्तं भवति। प्रकृतिगायत्रीषु तूपात्तं भवति। तस्मान्न संख्याभिधाने गायत्रीशब्दे प्रकृतिगायत्रीणामागमः प्राप्नोति।

अपर आह। इदं तावदयं संख्यावादी प्रष्टव्यः। कस्मादक्षरगतायामेव संख्याया भवानवस्थितो, न पुनरन्यसंख्येयगतायामपि, ग्रहगतायां चमसगतायां वा। यावताऽविशेषेण श्रुतं, गायत्रमेतदहर्भवतीति। एवं सति सर्वत्र गुणावेशः, संख्यावेशः+ प्राप्नोति ॥ २८ ॥

निष्पन्नग्रहणान्नेति चेत् ॥ २९ ॥

स चेद्ब्रूयात्, यत्रायं निष्पन्नो गायत्रीशब्दः, प्रसिद्ध इत्यर्थः। तस्य ग्रहणं न्याय्यम्। अयं चाक्षरगतायामेव संख्यायां प्रसिद्धो न सर्वत्र। तस्मान्न सर्वसंख्येयगतो गृह्यत इति ॥ २९ ॥

स वक्तव्यः-

तथेहापि स्यात् ॥ ३० ॥

यथाऽक्षरगतायामेव संख्यायां दृष्टो नान्यत्र, एवमृक्ष्वेव दृष्टो

॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

---

+ संख्यावेश इति क्वचिन्नास्ति।

नान्यस्मिंश्चतुर्विंशत्यक्षरे गद्ये वा। यथा चाक्षरेष्वेव दृष्ट इति नानक्षरे विज्ञायते। एवमृक्षु दृष्ट इति नानृक्षु विज्ञातुं न्याय्यः। अत्राऽऽह। यद्यप्ययमृक्षु* गायत्रीशब्दः, एवमप्यक्षरावलोप एव कार्यः। किं कारणम्। प्रकृत्युपबन्धनात्। चोदकेनात्र प्राकृतास्त्रिष्टुब्जगत्यः प्रापिताः। ता इमा नोज्झिता भविष्यन्ति। गायत्रीशब्दश्च संख्यासामान्याच्छक्नोति तदवयवान् वक्तुम्। एवमुभौ विधी अनुगृहीतौ भविष्यतः—प्राकृतो वैकृतश्चेति ॥ ३० ॥

अत उत्तरं पठति—

यदि वाऽविशये नियमः प्रकृत्युपबन्धाच्छरेष्वपि प्रसिद्धः स्यात् ॥ ३१ ॥

यद्यविशये—असंशयेऽपि, गायत्रीषु विहितासु प्रकृत्युपबन्धनादगायत्र्यां गायत्रीशब्दः कल्प्यते, शरेष्वपि, शरमयं बर्हिर्भवतीति कुशेषु शरशब्दः कल्पयितव्यः। कौशमेव बर्हिः कार्यम्। वक्तव्यो वा विशेषः ॥ ३१ ॥

दृष्टः प्रयोग इति चेत् ॥ ३२ ॥

अयं विशेषो दृष्टः। चतुर्विंशतिसंख्यायामक्षरगतायां गायत्रीशब्दस्य प्रयोगः। ये द्वे गायत्र्यौ सैका जगतीति। तेन शक्यते कल्पयितुम् ॥ ३२ ॥

तथा शरेष्वपि ॥ ३३ ॥

शरशब्दस्यापि कुशेषु प्रयोगो दृश्यते, शरवणमेवेदं कुशवनमिति ॥ ३३ ॥

भक्त्येति चेत ॥ ३४ ॥

अत्रोच्यते। स तत्र शरशब्दो भाक्तः प्रयुज्यते। दीर्घत्वात्पृथुपत्रत्वात्सादृश्यवादोऽसौ, शरवणमेवेदं कुशवनमिति। स्वार्थे वर्तमानः सादृश्यं गमयति। स्वार्थं जहत्कथं गमयेत्। तस्माच्छरेष्वेव तत्र शरशब्दस्य प्रयोगो न कुशेष्विति ॥ ३४ ॥

॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

---

* यद्यप्यृक्षु—पा०।

तथेतरस्मिन् ॥ ३५ ॥

तथेतरास्मिन्नपि, ये द्वे गायत्र्यौ सैका जगतीति भाक्त एव गायत्रीशब्द इत्युक्तम् । सोऽपि स्वार्थ एव वर्तमानस्तत्सदृशं गमयतीति, ऋक्ष्वेव प्रयुक्तो न संख्यायाम् । तस्मान्न संख्यायां गायत्रीशब्दः । अतो नाक्षरावलोपः कर्तव्यः ॥ ३५ ॥

अर्थस्य चासमाप्तत्वान्न तासामेकदेशे स्यात् ॥ ३६ ॥

अपि च त्रिष्टुब्जगतीनामेकदेशे वाक्यमपरिसमाप्तं भवति । न चापरिसमाप्तेन वाक्येनार्थः कश्चिदभिधीयते । अर्थाभिधानार्थश्च मन्त्रप्रयोगः । तत्र मन्त्रप्रयोग एवानर्थकः स्यात् । तस्मान्न तासां त्रिष्टुब्जगतीनामेकदेशे गायत्रीशब्दः स्यात् । तस्मादुत्पत्तिगायत्रीणामेव दाशतयीभ्य आगमः कर्तव्य इति ॥ ३६ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्येऽष्टमस्याध्यायस्य तृतीयः पादः ॥

---

॥ ३५ ॥ ३६ ॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायामष्टमाध्यायस्य तृतीयः पादः ॥

---

अथाष्टमस्याध्यायस्य चतुर्थः पादः ॥

दर्विहोमशब्दस्य कर्मनामधेयत्वाधिकरणम् ॥ १ ॥ )

[ १ ] दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥ १ ॥ सि०

यदेकया* जुहुयात्, दर्विहोमं कुर्यादिति श्रूयते । अस्मिन् दर्विहोमशब्दे भवति संशयः । किं गुणविधिरुत कर्मनामधेयमिति । किं प्राप्तम् । दर्विहोमो यज्ञाभिधानं, कर्मनामधेयमित्यर्थः । कुतः । होमसंयोगात् । होमशब्दोऽत्र श्रूयते । तत्प्रधानश्चायं समासः । दर्विशब्द उपसर्जनं, होमश्च कर्म । अथवा जुहुयादिति कर्मोच्यते । तेन समुच्चितो, यदेकया जुहुयादिति । तस्मात्कर्मनामधेयं स्थितं तावत् । तथोऽर्थान्तरं प्रक्रियते ॥ १ ॥

---

॥ १ ॥

---

* एतत्पादस्थं समग्रमपि भाष्यं सुस्पष्टमिति वार्तिककृता न व्याख्यातमिति ज्ञेयम् ।

( दर्विहोमशब्दस्य स्मार्तानां वैदिकानां च कर्मणां नामधेयताधिकरणम् ॥ २ ॥ )

[ २ ] स लौकिकानां स्यात्कर्तुस्तदाख्यत्वात् ॥ २ ॥ पू०

यदा कर्मनामधेयं, तदा चिन्त्यते, किं लौकिकानां स्मार्तानां कर्मणामष्टकादीनां नामधेयं दर्विहोमशब्द उत सर्वेषामेव लौकिकानां वैदिकानां चेति। किं प्राप्तम्। स लौकिकानां स्यात्। स खलु दर्विहोमशब्दो लौकिकानां कर्मणां नामधेयं स्यात्। कुतः। कर्तुस्तदाख्यत्वात्। तेषां कर्ता, तेन दर्विहोमशब्देन समाख्यायते। शिनीनां दार्विहोमिको ब्राह्मणः, अम्बष्ठानां दार्विहोमिको ब्राह्मण इति। यश्च यत्करोति स तेनाऽऽख्यायते। यथा, लावकः पावक इति। यदि चाष्टकादीनां नामधेयमेतत्, ततस्तेषां कर्मणां कर्ता दार्विहोमिकसमाख्यामर्हतीति। तस्माल्लौकिकानां नामधेयम् ॥ २ ॥

सर्वेषां वा दर्शनाद्वास्तुहोमे ॥ ३ ॥ सि०

सर्वेषां लौकिकानां वैदिकानां च नामधेयमेतत्। न लौकिकानामेव। कस्मात्। दर्शनाद्वास्तुहोमे। वास्तुहोमे हि वैदिके दर्विहोमत्वं दर्शयति। यदेकया जुहुयाद्दर्विहोमं कुर्यात्। पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवतत्वायेति। ननु विपरीतमेतद्दर्शनं, यदेकया जुहुयाद्दर्विहोमं कुर्यात्। अदर्विहोमं सन्तमित्यापद्यते। यदि दर्विहोम एवासौ, तत एकया द्वाभ्यां च हूयमानो दर्विहोम एव भवति। तत्रैतद्दर्शनं नोपपद्यते। यदेकया जुहुयाद्दर्विहोमं कुर्यादिति।

अत्रोच्यते। यदि लौकिकानामेव नामधेयं न वैदिकानाम्। तत एकयाऽपि हूयमानोऽसौ नैव दर्विहोमो भवति। अलौकिकत्वात्, तत्रैतद्वचनं नोपपद्यते। यदेकया जुहुयाद्दर्विहोमं कुर्यादिति। तस्माज्ज्ञापकमेवेदं वैदिकानां दर्विहोमत्वे एवमपि ज्ञापकमुक्तम्। कुतः प्राप्तिः। उच्यते। होमशब्दस्य सामान्याभिधायित्वात्प्राप्तिः। तस्माल्लौकिकवैदिकानां नामधेयमेतत् ॥ ३ ॥

( दर्विहोमशब्दस्य होमनामधेयत्वाधिकरणम् ॥ ३ ॥ )

[ ३ ] जुहोतिचोदनानां वा तत्संयोगात् ॥ ४ ॥ सि०

लौकिकानां वैदिकानां च नामधेयं दर्विहोमशब्द इति स्थित-

म् । इदानीं चिन्त्यते । किं यजतिचोदनानां जुहोतिचोदनानां च सर्वेषां नामधेयमुत जुहोतिचोदनानामेवेति । अविशेषात्सर्वेषामिति प्राप्ते, उच्यते । जुहोतीनां नामधेयं न यजतीनाम् । कुतः । तत्संयोगात् । होमशब्दसंयोगात् । अयं होमशब्दो जुहोतेर्वाचको न यजतेः । यजतौ लक्षणया स्यात् । तस्माज्जुहोतिनामधेयम् ॥ ४ ॥

( दर्विहोमशब्दस्य गुणविधित्वनिराकरणाधिकरणम् ॥ ४ ॥ )

[ ४ ] द्रव्योपदेशाद्वा गुणाभिधानं स्यात् ॥ ५ ॥ पू०

स्थितादुत्तरमुच्यते । यदुक्तं कर्मनामधेयं दर्विहोम इति । तन्न । किं तर्हि । गुणाभिधानं स्यात् । गुणविधिरित्यर्थः । कुतः । द्रव्योपदेशात् । द्रव्योपदेशोऽवगम्यते. दर्व्या होमो दर्विहोम इति । एवमेतौ दर्विहोमशब्दौ यथाप्रसिद्धिकल्पितौ भविष्यतः । तस्माद्गुणविधिः ॥ ५ ॥

न लौकिकानामाचारग्रहणत्वाच्छब्दवता चान्यार्थविधानात् ॥ ६ ॥ सि०

नायं गुणविधिर्युज्यते । किं कारणम् । लौकिकानां तावदाचारगृहीता दार्विः । न्यग्बिलया मूलदण्डया दर्व्या जुहोतीति । सा न विधातव्या । श्रौतानामप्यन्यानि होमार्थानि पात्राण्याम्नातानि । स्रुवेण जुहोति, चमसेन जुहोतीति । तैः सह दर्वेर्विकल्पः स्यात् । स चान्याय्यः । यत्कारणं, स्रुवादीनां+ विधायकः शब्दोऽस्ति, स्रुवेण जुहोतीति । न तु दर्वेः । तत्र ह्यानुमानिको विधिशब्दः ॥ ६ ॥

दर्शनाच्चान्यपात्रस्य ॥ ७ ॥

अन्यच्च पात्रं दर्विहोमे दृश्यते । भूतेभ्यस्त्वेत्यपूर्वां स्रुवमुद्गृह्णातीति । तस्मान्न गुणविधिः ॥ ७ ॥

तथाऽग्निहविषोः ॥ ८ ॥

---

॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

— —

---

+ स्रुचादीनां - पां० ।

अथोच्येत, अग्निहविषोः कार्ये दर्विर्भविष्यति। दर्वौ होमो दर्विहोमो, दर्व्या होमो दर्विहोम इति । तत्र ब्रूमः । तथाऽग्निहविषोरपि । यथा, पात्रकार्ये दर्विर्न युज्यते, तथाऽग्निहविषोः कार्येऽपि । तत्राप्याहवनीय आधारत्वेन विहितः, यदाहवनीये जुहोतीति । अन्यच्च प्रदेयत्वेन पुरोडाशादि । तस्मादग्निहविषोरपि कार्ये न दर्व्या निवेशः ॥ ८ ॥

उक्तश्चार्थसंबन्धः ॥ ९ ॥

उक्तं चास्माभिरग्नेः कार्येऽन्यद्द्रव्यमसमर्थम् । दहनपचनप्रकाशनकर्म, अग्नेः । न चैतत्कार्यमन्यद्द्रव्यं शक्नोति कर्तुमिति । तस्मान्नाग्निकार्ये दर्वेरुपदेशः । अतो न गुणविधिः । कर्मनामधेयमेव दर्विहोमशब्द इति ॥ ९ ॥

दर्विहोमशब्दः कर्मनामधेयमित्युक्तम् । तत्र चिन्त्यते । किमपूर्वा दर्विहोमा उत कुतश्चिद्धर्मग्राहिण इति । किं प्राप्तम् । नापूर्वा इति । कुतः । इतिकर्तव्यताविधेः । अविहितेतिकर्तव्यताकं कर्म विहितेतिकर्तव्यताकाद्धर्मान् गृह्णातीत्युक्तम् । अविहितेतिकर्तव्यताकाश्चामी । तस्मात्पूर्ववन्त इति । यदेतदेवं, तदेतदापतति=। किंपूर्वा इति । अत्रोच्यते–

( दर्विहोमानामपूर्वताधिकरणम् ॥ ५ ॥ )

[ १० ] तस्मिन् सोमः प्रवर्तेताव्यक्तत्वात् ॥ १० ॥ पू०

तस्मिन् खलु दर्विहोमे सोमः प्रवर्तेत । सौमिको विध्यन्तः स्यात् । कुतः । अव्यक्तत्वात् । अव्यक्तचोदनः+ सोमः । अमी अपि चाव्य-

॥ ९ ॥ १० ॥

---

= तदेतत्तावदापतति–पा० । + अव्यक्तचोदन इति -अव्यक्तत्वं च स्वाङ्गत्वेनाविहितदेवताकत्वम् । सोमयागाङ्गत्वेन विहितदेवताया अभावात्सोमयागोऽव्यक्त इति कथ्यते । कथमत्र सोमयागाङ्गत्वेन विहितदेवताया अप्रसिद्ध्या तद्राहित्यरूपमव्यक्तत्वमिति चेन्न । स्वाङ्गत्वेन विहितदेवताकं यद्यत्तत्तदन्यत्वं, अव्यक्तत्वमित्येवं प्रतियोगिस्वत्वमन्तर्भाव्य परिष्कारे निरुक्तदोषानवकाशादिति ध्येयम् ।

क्चोदनाः भिन्ने जुहोतीति। अतश्चोदनासामान्यात्सौमिको विध्यन्त इति॥ १०॥

न वा स्वाहाकारेण संयोगाद्वषट्कारस्य च निर्देशात्तन्त्रे तेन विप्रतिषेधात्॥ ११॥ सि०

वाशब्दः पक्षं व्यावर्तयति। नात्र सौमिको विध्यन्तो न्याय्यः। किं कारणम्। स्वाहाकारेण संयोगात्। स्वाहाकारेण संयुक्ता दर्विहोमाः। पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहेति। किमतः। वषट्कारस्य निर्देशात्तन्त्रे तेन च विप्रतिषेधः। तन्त्रे च सौमिके वषट्कारो निर्दिष्टः। तेनास्य विप्रतिषेधः। उभयोः प्रदानार्थत्वात्। यदि सौमिको विध्यन्तः, ततो वषट्कारेण भवितव्यम्। तत्रैतत्स्वाहाकाराम्नानमनर्थकं स्यात्। अथ विकल्पः क्रियते, तथाऽप्युभयोः पक्षे बाधः। अथ त्वपूर्वा दर्विहोमाः, नैष विरोधो भविष्यति। तस्मादपूर्वाः॥ ११॥

शब्दान्तरत्वात्॥ १२॥

शब्दान्तरं च यजतिशब्दाज्जुहोतिशब्दः। यजतिचोदनश्च सोमः। दर्विहोमाः पुनर्जुहोतिचोदनाः। चोदनासामान्येन च धर्मप्राप्तिरिष्यते। तस्मादप्ययुक्ता सौमिकी धर्मप्राप्तिः। नन्वव्यक्तत्वाच्चोदनासामान्यमुक्तम्। अत्रोच्यते। सामान्येऽव्यक्तत्वे, यजतिशब्दो विशेषलिङ्गम्। तेन यजिमतीष्वव्यक्तासु धर्मनियमः। यथा, समान औषधगुणत्वे देवतैकत्वेन विशेषलिङ्गेन सौर्यकर्मण्याग्नेयविध्यन्त इति॥ १२॥

लिङ्गदर्शनाच्च॥ १३॥

लिङ्गदर्शनाच्चैतद्विज्ञायते, नात्र सौमिको विध्यन्त इति। औदुम्बरीहोमे हि स्वाहाकारं विधायाऽऽज्यविधिपरे वाक्ये दर्शयति। घृतेन द्यावापृथिवी आपृणेथामित्यन्तरा कर्णौ जुहोति। आ मूलाद-

॥ ११॥ १२॥॥ १३॥

वंस्रावयति । भूमिगते स्वाहा करोतीति । यद्यत्र सौमिको विध्यन्तः स्याद्वषट्कारस्ततो भवेत्, न स्वाहाकारः ॥ १३ ॥

उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यं तत्राविप्रतिषिद्धा पुनः प्रवृत्तिर्लिङ्गदर्शनात्पशुवत् ॥ १४ ॥

लिङ्गदर्शनस्य परिहार उच्यते । यदुक्तम्, औदुम्बरीहोमे सिद्धवत्स्वाहाकारस्य दर्शनान्न सौमिको विध्यन्त इति । अत्र ब्रूमः । उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यम् । तद्यथा, साप्तदश्यमनारभ्याधीतं, सप्तदश सामिधेनीरन्वाहेति । अनारभ्यवादानां प्रकृत्यर्थत्वाद्दर्शपूर्णमासावागतम् । ततः प्राकरणिकेन पाञ्चदश्येन बाधितं सद्विकृत्यर्थं जातम् । एवमयं स्वाहाकारोऽनारभ्याधीतः, स्वाहाकारेण वषट्कारेण वा देवेभ्यो हविः प्रदीयत इति । तेनैव न्यायेन प्रकृतिं निविविक्षुः सोमं दर्शपूर्णमासौ च । ततस्तथैव वषट्कारेणोपरुद्धस्तद्वर्जमन्यानि प्रदानान्युपसंक्रामति । तत्राविप्रतिषिद्धा सोमधर्मप्रवृत्तिः, पशुवत् । तद्यथा, पशौ साप्तदश्ये श्रूयमाणे न दार्शपौर्णमासिकी तत्र प्रवृत्तिर्विप्रतिषिध्यते । वाचनिकत्वात्साप्तदश्यस्य । एवमिहापि वाचनिकत्वात्स्वाहाकारं प्रति लिङ्गदर्शनान्न सौमिकधर्मप्रवृत्तिर्विप्रतिषिध्यते । पुनःशब्दश्चानर्थकः । यथा किं पुनरिदमिति ॥ १४ ॥

अनुत्तरार्थो वाऽर्थवत्त्वादानर्थक्याद्धि प्राकृतस्योपरोधः स्यात् ॥ १५ ॥

यदुक्तम्, उत्तरार्थः स्वाहाकार इति । तन्न । कुतः । अनुत्तरार्थः । अर्थवत्त्वात् । प्रकृतावेवास्यार्थवत्त्वं, नारिष्ठहोमेषु । पार्वणहोमयोश्च, पूर्णमासाय सुराधसे स्वाहा, इति । अनर्थकत्वाद्धि प्राकृतस्योपरोधः स्यात् । यदि प्रकृतावनर्थकः स्यात्स्वाहाकारः, ततः प्राकृतस्य वषट्कारस्य विकृतौ प्राप्तस्यानारभ्यवादेन स्यादुपरोधः, वषट्कारबाध इत्यर्थः । न त्वस्याऽऽनर्थक्यम् । तस्मान्नोत्तरार्थः ।

---

॥ १४ ॥ १५ ॥

---

न चेदुत्तरार्थः, लिङ्गमेवैतद्ध्रुवत्यसोमपूर्वत्वे दर्विहोमानां, भूमिगते स्वाहा करोतीति ॥ १५ ॥

न प्रकृतावपीति चेत् ॥ १६ ॥

एवं चेत्पश्यसि, नारिष्ठहोमेषु पार्वणहोमयोश्च स्वाहाकारस्य निवेश इति । प्रकृतावपि नारिष्ठहोमादौ नास्य निवेशो घटते । तत्रापि वषट्कार एव प्राप्नोति । स ह्यविशेषेण दर्शपूर्णमासयोर्विहितः । द्व्यक्षरो× वषट्कार एष वै प्रजापतिः सप्तदशो यज्ञेऽन्वायत्त इति ननु स्वाहाकारोऽपि प्रत्यक्षं पठितः । सत्यं पठितः । वषट्कारस्तु विहितः । अतश्चोदनेति । नास्य यज्ञो व्यथते प्रजापतौ यज्ञेन प्रतितिष्ठतीति स्वाहाकारं पाठेन प्राप्तं बाधते । पाठे ह्यानुमानिको विधिः प्रत्यक्षेण विधिना बाध्यते । न= चेत्तत्रापि निवेशः, उत्तरार्थ एव स्वाहाकारो भवति विकृत्यर्थः ॥ १६ ॥

उक्तं समवाये पारदौर्बल्यम् ॥ १७ ॥

अत्राऽऽह । नैतद्युक्तं, वषट्कारेण स्वाहाकारो बाध्यत इति । कुतः । यत उक्तं श्रुत्यादीनां समवाये परस्य दुर्बलत्वम् । इह च वाक्यप्रकरणयोः संनिपातः । प्रकरणेन वषट्कारः प्राप्नोति नारिष्ठहोमेषु, तन्मन्त्रपदैरेकवाक्यत्वात्स्वाहाकारः। वाक्यं च प्रकरणाद्बलीयः । ननु स्वाहाकारस्योपरिष्टात्प्रदानार्थो वषट्कारः प्रयोक्ष्यते । न खलु स्वाहाकारेणैव प्रदानं निर्वर्तितम् । कथमविहितः प्रदानार्थे स्वाहाकारः प्रदानार्थं निर्वर्तयिष्यति । विहितश्च । कथम् । स्वाहाकारेण वा वषट्कारेण वा देवेभ्यो हविः प्रदीयत इति । ननूभयोः स्वाहाकारवषट्कारयोः प्रकृतावाम्नानादनारभ्यवादस्याऽऽनर्थक्यम् । अत उच्यते, प्रदानार्थतामनयोर्विधास्यति । तस्मान्न सोमप्रकृतयो दर्विहोमः ॥ १७ ॥

॥ १६ ॥ १७ ॥

---

× 'आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं, यजेति द्व्यक्षरं, ये यजामह इति पञ्चाक्षरं, द्व्यक्षरो वषट्कारः । एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः' इत्येवं खण्डदेवादिधृतः पाठः । = न चेदत्रापि—पा० ।

तच्चोदना वेष्टेः प्रवृत्तित्वात्तविधिः स्यात् ॥ १८ ॥

वाशब्दः पक्षान्तरपरिग्रहे । तच्चोदना वा । तादित्यनेन दार्विहोमाः । प्रतिनिर्दिश्यन्ते । जुहोतिचोदना ये दर्शपूर्णमासयोरङ्गकर्मविशेषास्ते दर्विहोमेषु प्रवर्तेरन् । के पुनस्ते । नारिष्ठहोमाः । कस्मात्कारणात् । ते हि प्रवृत्तधर्माणः, सर्वेष्टिषु सर्वपशुबन्धेषु प्रवर्तमाना दृष्टाः । यस्य च यो धर्मः प्रायेण दृष्टः, स तस्यादृश्यमानोऽप्यनुमीयते । यथा यः परार्थान् प्रायेण करोति, अन्यस्मिन्नपि परार्थकरणे स एव संभाव्यते । तस्मातेषां प्रवृत्तिः ॥ १८ ॥

शब्दसामर्थ्याच्च ॥ १९ ॥

शब्दसामर्थ्यं च । चोदनासामान्यं दर्विहोमानाम् । नारिष्ठहोमेऽपि हि जुहोतिचोदना । नारिष्ठाञ्जुहोति, भिन्ने जुहोतीति । चोदनासामान्याद्धर्मप्राप्तिः ॥ १९ ॥

लिङ्गदर्शनाच्च ॥ २० ॥

लिङ्गं चैतमर्थं दर्शयति । यथा नारिष्ठहोमपूर्वत्वं दर्विहोमानामिति । किं लिङ्गं भवति । अग्निहोत्रे श्रूयते, यदि कीटोऽवपद्येतान्तःपरिधि निनयेदिति । तथाऽग्नौ श्रूयते, अन्तर्वेदि तिष्ठन् सावित्राणि जुहोतीति । परिधयो वेदिश्चाङ्गप्रधानार्थत्वान्नारिष्ठहोमाङ्गम् । यदि तेषां धर्माः प्रवर्तेरंस्तत एतद्दर्शनमुपपद्यते । तस्मात्तेषां प्रवृत्तिः ॥ २० ॥

तत्राभावस्य हेतुत्वाद्गुणार्थे स्याददर्शनम् ॥ २१ ॥

यदेतद्गुणार्थे नारिष्ठहोमार्थे दर्शनमुपदिष्टं, नारिष्ठहोमानां प्रवृत्तावित्यर्थः । अदर्शनं तत्, असाधकमित्यर्थः । कुतः । तत्राभावस्य हेतुत्वात् । त्र्यम्बकेषु, अप्रतिष्ठिता वै त्र्यम्बका इत्याहुः । नेध्मावर्हिः संनह्यते, प्रयाजा इज्यन्ते, नानुयाजा इज्यन्ते, न सामिधेनीरन्वाहेति, अप्रतिष्ठितत्वं त्र्यम्बकाणां प्रतिज्ञाय तदुपपादनार्थमिध्मादीनामभावो हेतुत्वेनोपदिश्यते । यदि च नारिष्ठहोमाः प्रवर्तेरंस्त-

---

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

तोऽङ्गप्रधानार्थत्वादिध्माबर्हिषोः सामिधेनीनां च त्र्यम्बकेषु भाव एव स्यात् । तत्रायं तदभावोऽसत्त्वाद्धेतुत्वेन न युज्यते । तस्मान्नारिष्ठहोमानामप्रवृत्तिः ॥ २१ ॥

विधिरिति चेत् ॥ २२ ॥

इति चेत्पश्यसि, दर्शनमेतदिति । अथ कस्माद्विधिर्न भवति, नारिष्ठहोमप्रकृतित्वात्प्राप्तानामिध्मादीनां प्रतिषेधको विधिः सन्नपूर्वमर्थं विधास्यति । अनुवादोऽप्रवृत्तिविशेषकरोऽनर्थकः स्यात् । स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ॥ २२ ॥

न वाक्यशेषत्वाद्गुणार्थे च समाधानं नाना-
त्वेनोपपद्यते ॥ २३ ॥

नायं विधिर्युज्यते । किं कारणम् । अन्योऽत्र विधिराम्नातः । आदित्यं घृते चरुं निर्वपेत्, पुनरेत्य गृहेष्विति । तस्य वाक्यशेषोऽयम् । कथं ज्ञायते । तेनाऽऽकाङ्क्षितत्वात् । अप्रतिष्ठिता वै त्र्यम्बका इति दोषमनुकीर्त्येदं श्रूयते, आदित्यं घृते चरुं निर्वपेत्, पुनरेत्य गृहेष्विति । इयं वा अदितिरियं प्रतिष्ठा, यदादित्योऽस्यामेव प्रतितिष्ठतीति । तदेतत्तस्य दोषस्य परिहारार्थमिति विज्ञायते । अतस्तेन सहैकवाक्यतां याति । तन्मध्ये च य इध्माद्यभाववचनास्तेऽपि तच्छेषा एव समुच्चारणान्न्याय्याः । ते यदि विधयः कल्पेरन् पृथग्वाक्यानि भवेयुः । तत्रैकवाक्यरूपं बाध्येत । व्यवहितकल्पना च स्यात् । न चैषां विधायकत्वम् । अनुवादसरूपत्वात्* । तस्मान्न विधयः । अथ कोऽत्र विशेषो, यत्समाने लिङ्गत्वेऽन्तःपरिधिदर्शनमसाधकमितरत्साधकमिति । विशेषमुपरिष्टाद्वक्ष्यामः ॥ २३ ॥

येषां वाऽपरयोर्होमस्तेषां स्यादविरोधात् ॥ २४ ॥

येषां वा यागानामपरयोरग्न्योर्होमः, तेषां प्रवृत्तिः स्यात् । पत्नीसंयाजानामित्यर्थः । कुतः । अविरोधात् । तत्र विरोधो नास्ति, यो नारिष्ठहोमाना प्रवृत्तावुक्तः । तत्राभावस्य हेतुत्वादिति । तेषां

॥ ३२ ॥ २३ ॥ २४ ॥

* अनुवादस्वरूपत्वात्–पा० ।

हीध्माबर्हिःसामिधेन्यश्च नैवाङ्गम् । तदभावदर्शनं तत्र न विरुध्यते । प्रवृतिधर्माणस्तेऽपि जुहोतिचोदनाश्च । सह पत्न्या जुहोतीति । तस्मात्तेषां प्रवृत्तिः ॥ २४ ॥

तत्रौषधानि चोद्यन्ते तानि स्थानेन गम्येरन् ॥ २५ ॥

नैतद्युक्तम् । किं कारणम् । यतस्तत्रौषधानि चोद्यन्ते दर्विहोमे । यथा, त्र्यम्बकेषु पुरोडाशः करंभपात्राणि तण्डुला इत्येवमादीनि । तानि स्थानेन गम्येरन् । आज्यस्थानापत्त्याऽऽज्यधर्माः प्राप्येरन् । ते न शक्यास्तत्रानुष्ठातुम् । अनुष्ठीयमाना वाऽप्राकृतकार्याः स्युः । तत्र चोदको बाध्येत । तस्मान्न तेषां प्रवृत्तौ किंचित्प्रयोजनमस्ति । याज्यानुवाक्ये अपि मन्त्रान्तरेण निवर्त्येते, वषट्कारः स्वाहाकारेण ॥ २५ ॥

लिङ्गाद्वा शेषहोमयोः ॥ २६ ॥

पिष्टलेपफलीकरणहोमयोर्वा प्रवृत्तिः स्यात् । कुतः । लिङ्गात् । औषधसामान्यात् । यश्च पत्नीसंयाजानां प्रवृत्तौ दोष उक्तो धर्माणामानर्थक्यं, तदत्र नास्ति । तत्रौषधधर्मा निर्वपणादयः शक्याः कर्तुम् । तस्मात्तयोः प्रवृत्तिरिति ॥ २६ ॥

प्रतिपत्ती तु ते भवतस्तस्मादताद्विकारत्वम् ॥ २७ ॥

न त्वेतदेवम् । कुतः । यतः प्रतिपत्तिकर्मणी एतौ होमौ । दर्विहोमाश्च प्रधानकर्माणि । तेषां दूरतो भेदः । सामान्यतश्च* धर्मप्राप्तिरिष्यते । यच्चोक्तम्, औषधधर्माः शक्यास्तत्र कर्तुमिति । प्रतिपत्तित्वादप्रयोजकावेव निर्वपणादीनां धर्माणाम् । अतस्तत्प्रकृतित्वं तेनैव न्यायेन नोपपन्नम् । नापि प्रयोजनवत् । तस्मादेतदप्ययुक्तम् । एवं न कुतश्चिदपि दर्विहोमानां धर्मप्राप्तिर्युज्यते । तस्मादपूर्वः ॥२७॥

संनिपाते विरोधिनामप्रवृत्तिः प्रतीयेत विध्युत्पत्ति-
व्यवस्थानादर्थस्यापरिणेयत्वाद्वचनादतिदेशः
स्यात् ॥ २८ ॥

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

* सामान्यतश्चेति—तादृश्येन चेत्यर्थः ।

अथ कस्मादुभयपक्षसाधनानामपि लिङ्गानां भावेऽप्रवृत्तिरेव प्रतीयते, न पुनः प्रवृत्तिरिति । उच्यते । संनिपाते विरोधिनामेतेषां लिङ्गानां,+ प्रवृत्तिः प्रत्येतुं न न्याय्या । कुतः । विध्युत्पत्तिव्यवस्थानात् । विधीनामुत्पत्तिः पाठः । स च व्यवस्थितः केचिद्दर्शपूर्णमासयोः पठ्यन्ते, केचित्सोमे । तेषामर्थस्यापरिणेयत्वम् । यत्र पठितास्ततोऽन्यत्र परिणीयमानेषु प्रकरणं बाध्यते । तस्मादप्रवृत्तिः प्रतीयेत ।

तत्राऽऽह । किमेष एवोत्सर्गः सर्वत्राप्राप्तिरिति । एवं खलु प्राप्ते, उच्यते । वचनादतिदेशः स्यात् । यथा, राष्ट्रभृतामुद्वाहकर्मसु । असत्येवंविधे वचनेऽपूर्वा इति । अथ ये लिङ्गे अपदिष्टे, यदि कीटोऽवपद्येत, अन्तःपरिधि निनयेत्, अन्तर्वेदि तिष्ठन् सावित्राणि जुहोतीति । तयोः कः समाधिः । उच्यते । अन्यायपूर्वत्वाल्लक्षणया वादः स विज्ञायते । अन्तःपरिधिदेशे, अन्तर्वेदिदेशे, इति । परिधानां वेदेश्च तत्राभावात् । यथा, रजनी मे कण्डूयति, तिलको मे स्पन्दत इति । रागाभावे तिलकाभावे च तद्देशलक्षणया भवन्ति वक्तार इति ॥ २८ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्येऽष्टमस्याध्यायस्य चतुर्थः पादः ॥

---

समाप्तश्चाष्टमोऽध्यायः ॥

---

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायामष्टमाध्यायः संपूर्णः ॥

---

+ लिङ्गानामप्रवृत्तिः प्रत्येतुं न न्याय्येति पाठान्तरं दृश्यते । तत्र च—लिङ्गानामप्रवृत्तिः प्रत्येतुं न्याय्या, इति पाठः साधीयान् ।

## अथ नवमस्याध्यायस्य प्रथमः पादः ॥

( धर्माणामपूर्वंप्रयुक्तत्वाधिकरणम् ॥ १ ॥ )

[ १ ] यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥ सि०

अष्टमेऽध्याये विशेषातिदेशलक्षणं वृत्तम् । इदानीमूहलक्षणं वर्तयिष्यामः । त्रिविधश्चोहः । मन्त्रसामसंस्कारविषयः । स इह प्राधान्येन वक्ष्यते । अन्यदपि किंचिदुपोद्घातेन प्रसङ्गेन च । आदितस्त्वयमर्थश्चिन्त्यते लक्षणसिध्यर्थम् । अग्निहोत्रं दर्शपूर्णमासौ ज्योति-

---

ननु दशमान्तरमूहश्चिन्तयितुं युक्तः । कुतः । उपकारातिदेशे सत्यूहोऽवकल्पते । शास्त्रातिदेशे सत्यूहाभावः । यथा, प्रकृतावग्न्यन्वाधानादीनि ब्राह्मणतर्पणान्तानि गृहीत्वा कथमेतान्युपकरिष्यन्तीति,* तत्र कानिचिदारादुपकारकाणि कानिचित्संनिपत्योपकारकाणि । एवं शास्त्रातिदेशे सौर्ये पेषणं प्राप्तम् । तद्यद्यपि प्रकृतौ दृष्टार्थं, तथाऽपि शास्त्रस्यातिदिष्टत्वाददृष्ट उपकारः कल्पनीयः पेषणस्य, प्रयाजादीनामिव । एवमेव÷ 'अग्नये जुष्टं निर्वपामि' इति । तस्माद्ष्टमानन्तरं दशमश्चिन्तनीयः । बाधे कार्यापत्त्यर्थलोपादिभिः स्थिते ततो नवमव्यापारो युक्तः ।

सत्यम् । किंतु सप्तमेऽतिदेशसद्भाव उक्तः । आग्नेयात्सौर्य इतिकर्तव्यता भवतीति, अष्टमे विशेषातिदेशः । नवमे सौर्ये, इतिकर्तव्यतायां प्राप्तायां किमविकृतः प्रयोक्तव्य उत विकारोऽपीत्यनेन प्रसङ्गेन नवमो दशमव्यापारमनुमन्यमान एवोत्तिष्ठति । 'विधेः= प्रकरणान्तरम्' इति सूत्रं नवमाक्षेपेणैवाऽऽरभ्यते । तस्मान्नवमदशमयोः, 'अपि+ वाऽभिधानसंस्कारद्रव्यम्' इत्यनेन सद्भावः । तेनाष्टमानन्तरं नवम आरभ्यते ।

---

* उपकरिष्यन्तीति—अपेक्षायां सत्यामिति शेषः । ÷ एवमेवेति—यथा शास्त्रातिदेशपक्षे सौर्ये चरौ, अतिदिष्टशास्त्रप्राप्तस्य पेषणस्योपकारान्तरकल्पनया बाधो न स्यादेवमेव 'अग्नये जुष्टम्' इतीदृशस्यैव मन्त्रस्य शास्त्रप्राप्तस्य सौर्येऽदृष्टरूपोपकारान्तरकल्पनादूहोऽपि न स्यादित्यर्थः । = ( अ० १० पा० १ अ० १ सू० १ ) : + ( अ० १० पा० १ अ० १ सू० २ ) ।

ष्टोमश्चोदाहरणम् । तत्र पृथग्धर्माः समाम्नाताः । तेषु संशयः । किं तदपूर्वप्रयुक्ता उत यजिप्रयुक्ता इति । अपूर्वप्रयुक्तेषु सत्यूहः सिध्यति । यजिप्रयुक्तेषु तु संकरो धर्माणाम् । कथमिव । सर्वे हि ते यजतयः । यजतिसामान्ये यजातिशब्दवाक्ये धर्मा विधीयमानाः सर्वत्र भवितुमर्हन्ति । अपूर्वप्रयुक्तत्वे तु तदीयविशेषे विधीयमाना अन्यस्मिन्नपि तदीयविशेषापन्ने भविष्यन्ति । तस्मात्तत्रोहः सिद्धो भवति ।

---

त्रिविधश्चोह इत्येतदयुक्तम् । कथम् । ऊहो नाम वितर्कणा । सा चैकरूपा मन्त्रसामसंस्कारेषु क्रियमाणा सैव सा, न तस्याः कश्चिद्विशेषः । सामग्रहणानर्थक्यं च । मन्त्रग्रहणेन चोपात्तत्वात् ।

अत्र वर्णयन्ति । नैव वयमूहभेदं* प्रतिजानीमः । किंतु विषयमस्य निरूपयामः । एषु त्रिषु वक्ष्यमाणेषु स भवतीति । तस्माद्विषयभेदः प्रदर्श्यते, न तूहभेदः । यजिसामान्ये यजतिशब्दवाच्ये विधीयमानाः सर्वत्र भवितुमर्हन्तीति—कोऽभिप्रायः=। करणानुग्राहिणीतिकर्तव्यता× तेन चापेक्षिता । तस्मात्करणमुद्दिश्य तत्रेतिकर्तव्यता विधीयते । उद्दिश्यमानस्य च विशेषणमविवक्षितम् । तस्माद्यागमात्रे विधानं वाक्येन ।

अत्र चोद्यते । यागः फले विधीयमानत्वादुपादेय इतिकर्तव्यतां प्रति चोद्दिश्यमानः । सकृदुच्चारिते चोपादीयमानोद्दिश्यमानत्वे न संभवतः, विवक्षाभेदात् । तस्माद्वाक्येनेतिकर्तव्यतासंबन्धो न घटते ।

उच्यते । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इतीदं यागोत्पत्तिं न विदधाति । 'यदाग्नेयोऽष्टाकपालो भवति' इत्येवमादिभिर्यागोत्पत्तेर्विधीयमानत्वात् । फलसंबन्धमपि न करोति । उत्पत्तिवाक्येन कृतत्वाद्विश्वजिन्न्यायेन +। परिशेषादितिकर्तव्यतासंबन्धार्थम् । यथा 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इति न दीक्षा विधीयते । नासौ यजमानस्य । न वाऽध्वर्युः कर्ता÷।

---

* ऊहभेदमिति—ऊहस्वरूपस्य भेदमित्यर्थः । = कोऽभिप्राय इति—कथं धर्माणां यजतिप्रयुक्तता, कथं वा तेषां सांकर्यमिति शङ्काभिप्रायः । × शङ्कां समादधाति—करणेत्यादिना । + विश्वजिन्न्यायेनेति—( अ० ४ पा० ३ अ० ५ ) अन्यत्येनेति शेषः । ÷ कर्तेति—विधीयत इति शेषः ।

नन्वेतत्सर्वं सप्तमे× विचारितं, निर्णीतं च। उच्यते। पुनस्तदेव स्मार्यते, उत्तरचिन्ताविवक्षया। अथवा, तत्र योऽर्थो नोक्तः, तद्विवक्षयेदमुच्यते। कश्चासौ। तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वादिति। एतेन चेह प्रयोजनमूहो* विवक्षितः। एवं हि स सिध्यति। तत्रैतन्नोक्तम्। नैतेन तत्र प्रयोजनमिति। तत्रत्यैतावती चिन्ता। किं प्रतिप्रकरणं नियता धर्मा उत सर्वे सर्वत्रेति। तदपूर्वप्रयुक्तत्वे यजिप्रयुक्तत्वे च सिध्यन्ति, न द्रव्यसंस्कारस्यापूर्वार्थत्वं। तत्त्विह

---

सर्वस्य चोदकेन प्राप्तत्वात्। किं तर्हि। दीक्षाक्रमोऽनियमेन प्राप्तः सन्नियम्यते। एवमत्रापि= यागमनूद्य धर्मा विधीयन्ते। उद्दिश्यमानस्य विशेषणमविवक्षितम्। तस्माद्यागमात्रे धर्मप्राप्तिरित्यभिप्रायः।

अपूर्वप्रयुक्तत्वे तु तदीयविशेषे विधीयमाना अन्यस्मिन्नपि तदीयविशेषापन्ने भविष्यन्ति। तस्मात्तत्रोहः सिद्धो भवतीति। कोऽभिप्रायः। भाव्यमानेन करणेतिकर्तव्यते आकाङ्क्षिते। न च याग इतिकर्तव्यतया विना न सिध्यति*, निर्ज्ञातोपायत्वाद्यागस्य लोके। तेन विशिष्टो भाव्यो विशिष्टेन× करणेन भाव्यत इति न धर्माणां करणेन संबन्धः। अरुणाधिकरणन्यायेन ÷ तु करणेतिकर्तव्यतयोः संबन्धः। तस्माद्ये दर्शपूर्णमासप्रकरणे= परिगृहीता× धर्मा न तेऽन्यत्र सन्ति, प्रमाणाभावात्। तत्र विकृतौ भाव्यं+ ब्रह्मवर्चसम्। तस्य प्रत्यक्षं* वाक्यविहितं करणम्। भाव्यमानं धर्मानाकाङ्क्षति, करणानुग्रहद्वारेण। न च संनिधाने धर्माः सन्ति। तस्माच्चोदनासामान्यादाग्नेयधर्माः सौर्येऽतिदिश्यन्ते। साकाङ्क्षत्वाद्वाक्यस्य।

तत्र चैषा वचनव्यक्तिः। यथाऽऽग्नेय उपकृतं तथा सौर्येऽप्युपकर्तव्यम्। आग्नेये च मन्त्रेण भाव्यमानस्य= देवता प्रकाशिता। इहापि तथैव प्रकाश-

---

× सप्तम एव—पा०। * प्रयोजनमूहं विवक्षित.—पा०। = एवमन्यत्रापि—पा०। * सिध्यतीति—पा०। × विशिष्टो भाव्य इति—अपूर्वाख्यो भाव्य इत्यर्थः। ÷ (अ० ३ पा० १ अ० ६)। = प्रकरणपरिगृहीताः—पा०। × परिगृहीता इति—दर्शपूर्णमासापूर्वपरिगृहीता इत्यर्थः। + भाव्यमिति—प्रत्यक्षमिति पूर्वं शेषः। × तत्प्रत्यक्षम्—पा०। = भाव्यमानस्य देवतेति—अपूर्वसंबन्धिनी देवतेत्यर्थः।

सिद्धम्। तत्रापूर्वप्रयुक्तत्वसिद्धौ व्यवहारार्थमसूत्रितमुपादीयते। तस्मादपुनरुक्तम्।

अथवा, अन्यामेव चिन्तामिह वक्ष्यामः। किं यजिनिमित्ता धर्मा अपूर्वप्रयुक्ता उतापूर्वनिमित्ता अपूर्वप्रयुक्ताश्चेति ॥ १ ॥

इदानीं× तु, यजिप्रयुक्ता अपूर्वप्रयुक्ता वा इति चिन्त्यते। किं तावत्प्राप्तम्। यजिप्रयुक्ता इति। कुतः। यजिशब्देनेतिकर्तव्यताया अभिसंबन्धात्। एवं यागं कुर्यादिति। एवं* यागेन कुर्यादिति।

---

यितव्या। न चोहादृते शक्यते प्रकाशयितुम्। तस्मादूहः कर्तव्य इत्ययमभिप्रायः। नन्वेतत्सप्तमे गतम्। उच्यते। 'यज्ञकर्म प्रधानम्' इत्यनेनावयवेनापूर्वार्थान्प्रयुङ्क्ते× धर्मान्, अथवा परार्थान् 'भिन्ने जुहोति' इतिवत्। यथा भेदनस्य प्रयोजकत्वे सत्यपि न भेदनार्थो होमः। किंतु क्रत्वर्थ, एवमिहाप्यपूर्वं तु प्रयोजकं, यागार्थाश्च धर्माः। एतेनापि प्रकारेण सप्तमे प्रतिप्रकरणं नियता धर्मा इत्यूहस्त्वपूर्वार्थतामन्तरेण न सिध्यति।

अत्र चोद्यते। ये दर्शपूर्णमासार्था धर्मास्ते सौर्ये न सन्ति। तस्मात्तत्राप्रवृत्तिरेव धर्माणां प्राप्नोति।

उच्यते। वैकृतस्य वाक्यस्य साकाङ्क्षत्वादतिदेशेन वाऽनुषङ्गेण वा प्राकृतैरङ्गैः संबन्ध इति। तस्मादपूर्वार्थता प्रतिपाद्योहसिद्धये=। अथवा—सप्तमेऽपूर्वार्था धर्मा इति स्थितम्। तेषामपूर्वार्थता प्रकरणेन। तच्च प्रकरणमसंयुक्तानां ग्राहकम्। ये श्रुतिलिङ्गवाक्यैः संयुक्तास्तान्* गृह्णाति, संयुक्तत्वादेव। तस्मात्तेपूर्वार्था न संभवन्ति। दर्शपूर्णमासाविकारे च पाठात्संयुक्तानामपि+ प्रकरण एव निवेशः। अनेनापि प्रकारेण सप्तमाष्टमयोर्न किंचिदनुपपन्नम्। ऊहे तु यद्यपूर्वार्थं प्रोक्षणं भवति, तथा सति नीवारेषु तन्न प्राप्नोति। तस्मात्संनिपत्योपकारका ये धर्मास्तेऽप्यपूर्वार्था इति नवमे= प्रतिपाद्यते, ऊहसिद्धये।

---

× इदानीं त्वित्यादिना वर्णकद्वयमारचयति भाष्यकारः। * 'एवं यागेन कुर्यादिति' इति पाठो लिखितपुस्तकेषु नोपलभ्यते। × 'अपूर्वार्थान् प्रयुङ्क्ते' इत्यनयोः पदयोर्मध्ये बहुग्रन्थो लुप्त इति, व्याख्यानानुसारेणानुमीयते। लिखितपुस्तके परं नोपलभ्यते। क्वचिच्च पुस्तके 'परार्थाः प्रयुङ्क्ते' एवं चिह्नितः पाठ उपलभ्यते। अतो यथावद्वार्तिकग्रन्थोपलभ्ये सुधीभिर्यत्न आस्थेयः। = प्रतिपाद्येति–इहैवेति शेषः। * संयुक्ता इति—संनिपातिन इति शेषः। + संयुक्तानामपीति—उद्देश्यविशेषसंयुक्तानां संनिपत्योपकारकाणामपीत्यर्थः। = नवमेआद्याधिकरण इति शेषः।

अथवाऽन्यामेव चिन्तां वर्तयिष्यामः। अपूर्वार्था धर्मा इति स्थिते सप्तमे, नवमे निमित्तं परीक्ष्यते, किमपूर्वं निमित्तमुत याग इति। न चानिमित्ता प्रवृत्तिः, ये न विचार एव न स्यात्। तत्र भाव्यमानत्वाद्दर्शपूर्णमासापूर्वं निमित्तं न भवति। अनेनैव कारणेन फलमपि न निमित्तम्। परिशेषाद्यागो निमित्तं, निष्पन्नरूपत्वात्।

ननु यागस्य फल उपादीयमानत्वान्निमित्तवेलायां* चोद्दिश्यमानत्वाद्विवक्षाभेदः स्यात्।

उच्यते। दर्शपूर्णमासपदं निमित्तम् +। अकिंचित्कारत्वात्=। प्रकृतयागाद्दर्शपूर्णमासपदाभावेऽपि विधीयन्त एव तेन÷। यद्येतन्निमित्ततां न प्रतिपद्येतानर्थकमेव स्यात्।

ननु सप्तम्यन्तं निमित्तं भवति, 'भिन्ने जुहोति' इति। तृतीयान्तं चेदम्।

उच्यते। निमित्तफलहेतुषु सर्वासां प्रायदर्शनमिति द्रष्टव्यम्। अपि चोद्दिश्यमानत्वात्करणविभक्तेरविवक्षैव। तस्माद्विकृतावपूर्वमस्ति,= दर्शपूर्णमासयोगो नास्ति। तदभावे धर्माणामप्यभावः। यथा भेदनाभावे होमाभावः। सौर्ये च साकाङ्क्षत्वादपूर्वस्यातिदेशेनानुषङ्गेण× वा प्राकृतैरङ्गैरङ्गवान् सौर्ययागः सिध्यति। ऊहाभावस्तु *।

---

* उपादीयमानत्वादिति–करणत्वेनोपादीयमानत्वादित्यर्थः। + निमित्तमिति—प्रतिपादयतीति शेषः। = अकिंचित्करत्वात्–दर्शपूर्णमासपदस्य प्रयोजनान्तराभावादित्यर्थः। ÷ तेनेति–यजिनेत्यर्थः। = तस्मादिति–यस्मादेव दर्शपूर्णमासपदवाच्यो यजिर्निमित्तं, तस्माद्यद्यपि विकृतावपूर्वमस्ति, तथाऽपि निमित्तभूतो दर्शपूर्णमासयोगो नास्तीत्यर्थः। × अतिदेशेन वाऽनुषङ्गबलात्प्रकृ–पा०। * ऊहाभावस्त्विति–अयमभिप्रायः। यथा सिद्धान्तेऽपूर्वविशेषनिमित्ता धर्मा अपूर्वान्तरेऽतिदेशेन भवन्ति, तथा यागविशेषनिमित्तानां धर्माणां यागान्तरे प्रवृत्तिरतिदेशात्सिध्यत्येव। ऊहस्तु न सिध्यति। कुतः। यथा यागानुग्राहकाणां यागो निमित्तं भवति, एवं मन्त्राणामवघातादीनां चाग्न्यादयो व्रीह्यादयश्च निमित्तं भवेयुः। ततश्च सौर्यादौ नीवारादौ च निमित्ताभावाद्धर्माणामप्राप्तेरूहो न सिध्यति। अत ऊहोपोद्घाततयाऽत्रैवेयं चिन्ता करणीयेति।

एवं प्राप्ते, ब्रूमः । यजत्यर्थस्य यत्कार्यं तत्प्रधानम् । तद्धि कर्तव्यतया चोद्यते । यत्र कर्तव्यता, तत्रैवेतिकर्तव्यता । अथ यदुक्तं, यजतिशब्देनाभिसंयोगो धर्माणामिति । तदुच्यते । तस्य द्रव्येषु यजतौ च यः संस्कारः, स तत्प्रयुक्तः—अपूर्वप्रयुक्तः । तदर्थत्वात् । यजतेर्द्रव्याणां च तदीयत्वेन धर्मैरभिसंबन्धो, न स्वेनाऽऽत्मना । न हि धात्वर्थस्य च धर्माणां च परस्परेणाऽऽकाङ्क्षा विद्यते । प्रत्ययार्थेन हीतिकर्तव्यताऽऽकाङ्क्ष्यते, कर्तव्यं कथमिति, न यजिः कीदृश इति' तस्माद्यत्कर्तव्यं, तस्यैवेतिकर्तव्यतया संबन्धः । अपूर्वं च तत् । तस्मादपूर्वयुक्ता इति ॥ १ ॥

---

अत्रोच्यते—* अयं दोषोऽस्मिन्व्याख्याने । आज्यभागादीनामपि फलसंबन्धः स्यात्, प्रकृतत्वादविशेषणात् = × । अपि च दर्शपूर्णमासशब्दो लोके कालवाचकः+ प्रसिद्धो न यागस्य÷ वाचकः । सामानाधिकरण्याद्यागवचनो भवेत् । न च निमित्तमिच्छतः सामाधिकरण्यमुपपद्यते । यदि प्रकृतान्यागान्विशेषयेदेवं सामानाधिकरण्याद्यागवचनो भवेत् । न चैकस्मिन्नुच्चारणे निमित्तं भविष्यति, सामानाधिकरण्यं च प्रतिपत्स्यते । तस्मान्निमित्तमिच्छतः कालवचनः संपद्यत इत्ययं दोषः ।

अथोच्येत, यागपदं निमित्तम् । तत्रोद्दिश्यमानत्वाद्यागमात्रस्यैवोद्देशः प्राप्नोति । तत्र प्रकृतौ विकृतौ च निमित्तमेकं यागसामान्यम् । अपूर्वं* च सौर्ये विद्यते । तस्मादनेन व्याख्यानेन प्रकृतिविकृत्योः साधारणा धर्माः प्राप्नुवन्ति तत्रातिदेशाभावः । तस्माद्यमपि पक्षो दुःश्लिष्टः ।

अथवाऽपूर्वार्था धर्मा इति स्थितं संनिपत्योपकारका आरादुपकारकाश्च प्रकरणेन प्रमाणेन । तत्र प्रकरणे 'अग्नये जुष्टं निर्वपामि' इति मन्त्र आम्ना-

---

* दर्शपूर्णमासपदस्य निमित्तप्रतिपादकत्वेन कृतं व्याख्यानं दूषयति—अत्रोच्यत इत्यादिना । = प्रकृतत्वादिति—आज्यभागादीनामपि प्रकृतत्वेन याजनानुवादसंभवादित्यर्थः । × अविशेषणादिति—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्ये दर्शपूर्णमासपदस्य निमित्तपरत्वे यजिविशेषकत्वाभावादित्यर्थः । + कालवचन'—पा० । ÷ यागवाचकः—पा० । * अपूर्वं चेति—अनेन च, विकृतौ निमित्ते सत्यपि प्रयोजनाभावाद्धर्माणामप्रवृत्तिरिति शङ्का निरस्ता वेदितव्या ।

एवं वा ॥

एतेष्वेवोदाहरणेष्विति चिन्त्यते । किं यजिनिमित्ता धर्मा अपूर्वप्रयुक्ता उतापूर्वं प्रयोजकं निमित्तं चेति । किं प्राप्तम् । यजिनिमित्तम्, अपूर्वं प्रयोजकमिति । कुतः । नैकस्य प्रयोजकत्वं निमित्तभावश्चोपपद्यते । यदर्थं हि क्रियन्ते धर्मास्तत्प्रयोजकम् । यस्मिन् सति क्रियन्ते, तन्निमित्तम् । न चैकस्मिन् शब्द अपूर्वार्था* एते, अपूर्वे× च सति भवन्तीति शक्यं वदितुम् । अन्या हि वचनव्यक्तिरपूर्वार्थेषु, अन्या चापूर्वे सतीति । यजिनिमित्तत्वे तु शब्दोऽवकल्पते । एवं यागेन कुर्यादिति । यागे सति, अपूर्वस्योपकारकाणि,= असत्यनुपकारकाण्यङ्गानीति । तस्माद्यजिर्निमित्तम्, अपूर्वं तु प्रयोजकमिति ।

एवं प्राप्ते, ब्रूमः । यज्ञकर्म प्रधानं, यजतेः कार्यम् । तद्धि फलवच्चोद्यते । तदीयेषु द्रव्येषु यजतौ च यः संस्कारः, सोऽपूर्वप्रयुक्तः । तदर्थास्त इति कृत्वा क्रियन्ते, न यज्यर्थेन तेषामभिसंबन्धः । प्रयोगवचनेनैते प्रत्ययार्थेन संबध्यते । स हि साकाङ्क्षो न धात्वर्थः । तस्मादपूर्वप्रयुक्ता अपूर्वनिमित्ताश्च । यदुक्तम्, अपूर्वस्य प्रयोजकत्वं निमित्तभावश्च नोपपद्यते, वचनव्यक्तिभेदादिति । तत्रोच्यते । प्रयोजकत्वं वाचनिकम् । निमित्तभावश्च नैव वचनाद्भविष्यतीति । यद्धि येन प्रयुज्यते, भवति तत्तस्य निमित्तम् । यथा, आरामपोषकस्याऽऽरामो वेतनदाने प्रयोजको निमित्तं च । आरामे सति तस्मै

---

यते । आम्नानसामर्थ्याच्च तेनोपकर्तव्यं प्रकरणिनः । तत्र कथं खलूपकरिष्यतीति विशेषाकाङ्क्षा जायते । किमुच्चारणमात्रेणोत प्रकाशनद्वारेणेति । अपूर्वंदेवताप्रकाशनमाकाङ्क्षितम् *। शक्नोति चायं तत्कर्तुम् । तस्मात्प्रकाशनद्वारेणैवोपकरोतीति । तेनाग्निं प्रकाशयन्नुपकरिष्यतीति । निमित्तेन चास्य भवि-

---

* अपूर्वार्थैते–पा० । × अपूर्वे च भवन्तीति–पा० । = उपकारकाण्यङ्गानि-पा० ।

* अपूर्वेण देव-पा० ।

वेतनं दीयते। वेतनेन= समर्थो भवत्यारामं रक्षितुम्। तस्माद्धर्माणामपूर्वमेव प्रयोजकं निमित्तं चेति ॥ १ ॥

[ २ ] संस्कारे युज्यमानानां तादर्थ्यात्तत्प्रयुक्तं स्यात् ॥ २ ॥ पू०

दर्शपूर्णमासौ प्रति समामनन्ति प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति। प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टीति। तत्रायमर्थः सांशयिकः। किं प्रोक्षणं हन्तिपिषिप्रयुक्तमुतापूर्वप्रयुक्तमिति। किं प्राप्तम्। संस्कारे—हन्तिपिष्याख्ये, प्रयुज्यमानस्य प्रोक्षणस्य तत्प्रयुक्तता स्यात्। संस्कारप्रयुक्तता। संस्कारौ हि हन्तिपिषी। कुत एतत्प्रयुक्ततेति। तादर्थ्यात्। यद्धि येन कर्तव्यं भवति, तत्तस्य प्रयोजकम्। यद्यपूर्वमनेन क्रियते, ततोऽस्यापूर्वं प्रयोजकम्। यदि हन्तिपिषी, ततस्तौ प्रयोजकौ। प्रकरणाच्चापूर्वं कर्तव्यं गम्यते। वाक्याद्धन्तिपिषी। वाक्यं च प्रकरणाद्बलीय इति।

---

तव्यम्। तत्राग्निर्निमित्तमस्य। सौर्ये चाग्निर्नास्ति। तत्र निमित्ताभावान्मन्त्रस्य निवृत्तिः। यथा भेदनाभावाद्धोमस्य निवृत्तिर्दर्शपूर्णमासयोः* ॥ १ ॥

---

नन्वधस्तादपूर्वार्था धर्मा इति स्थिते हन्तिपिषिप्रयुक्तं प्रोक्षणमिति पक्षस्यानुत्थानमेव। सत्यम्। किंतु श्रुतिलिङ्गवाक्यैर्ये संयुक्तास्तेऽपूर्वार्था न संभवन्तीति मन्यमानः पूर्वपक्षं करोति त्रिभिरधिकरणैः।

अत्र चोद्यते। किमुलूखलमुसलप्रयुक्तं प्रोक्षणमुतापूर्वप्रयुक्तमिति संशयो युक्तः। न तु हन्तिपिषिप्रयुक्तमिति। कथम्। 'प्रोक्षिताभ्याम्' इति प्रपूर्वादुक्षतेर्निष्ठाश्रवणात्। निष्ठा च कर्मण्युत्पद्यते। ईप्सितं+ च कर्म। 'तस्माद्यथा व्रीहीन्प्रोक्षति' इति व्रीह्यर्थमेवमिहापि निष्ठाश्रवणादुलूखलमुसलार्थमेव प्रोक्षणम्।

उच्यते। 'व्रीहीन्प्रोक्षति' इत्यत्र व्रीह्यर्थं प्रोक्षणं भवति। प्रोक्षतीति भावना विद्यते। तस्याश्च भाव्येन भवितव्यम्। तत्र कश्चिद्विक्रियमाणतया

---

= वेतनसंबन्धो भवति-पा०। * दर्शपूर्णमासयोरिति इति पूर्वः पक्ष। सिद्धान्तस्तु अपूर्वमेव निमित्तं नाग्न्यादिस्वरूपमिति शेष.। + ईप्सितमिति ईप्सिततममित्यर्थ...

ननु हन्तिपिष्योः क्रियमाणमपूर्वार्थं भविष्यति । तत्र प्रकरणं च वाक्यं चोभयमप्यनुग्रहीष्यते । उच्यते । न शक्यमुभयमनुग्रहीतुम् । न प्रकरणसमाम्नायमात्रेण = प्रकरणवतोऽर्थेन समान्नातमिति गम्यते । प्रकरणसमाम्नानात्प्रकृतेनैकवाक्यता× भवति । ततस्तादर्थ्यमवगम्यते । इह तु प्रत्यक्षाभ्यां हन्तिपिषिभ्यां प्रोक्षणस्यैकवाक्यता । सा प्रकृतेनैकवाक्यतां परोक्षां बाधेत । न च द्वाभ्यामपि सहैकवाक्यता स्यात् । यदैकेनैकवाक्यता, तदा तेन निराकाङ्क्षस्य नान्येनाप्येकवाक्यता कल्प्यते । तस्मात्प्रकृतेनैकवाक्यत्वाभावान्नापूर्वार्थं प्रोक्षणम् ।

आह । ननु हन्तिपिषी अपूर्वार्थौ । तदर्थं प्रोक्षणम् । तस्मादपूर्वस्योपकारकमिति । उच्यते । भवति प्रणाड्योपकारकम् । न त्वपूर्वप्रयुक्तम् । द्विविधं ह्यङ्गमङ्गस्योपकारकं भवति । किंचिदपूर्वस्यैतदङ्गं विशिष्टमित्यनेन कारणेनाङ्गेन संबध्यते । किंचिदनपेक्ष्यैवापूर्वसंबन्धं स्वरूपेणैव कारणेन संबध्यते । यदपूर्वसंबन्धं कारणत्वेनोपादाय धर्मजातमङ्गविशेषेण संबध्यते, तदपूर्वप्रयुक्तं भवति । तादृशं च विकृतावर्थान्तरे तत्कार्यापन्ने, ऊहितव्यं भवति ।

---

भाव्यः,÷ कश्चित्संस्कार्यत्वेन,* कश्चिदुत्पाद्यत्वेन,+ कश्चित्प्राप्यत्वेन =। 'व्रीहीन्प्रोक्षति' इति द्वितीयासंयोगाद्व्रीहयो भाव्याः । केन । प्रोक्षणेन । निष्ठान्ते पुनर्नास्ति भावना । तदभावाद्भाव्यमानस्याप्यभावः । सत्यपि कर्मत्वे प्रोक्षणमुलूखलमुसलार्थमिति केनोक्तम् । द्वितीयाचतुर्थ्यौ सत्यां भावनायामात्मार्थां क्रियां कुरुतः । तृतीयाद्याश्च भावनायामेव सत्यामात्मानं क्रियार्थमेव कुर्वन्ति । अथवा—द्वितीयोद्भूतं शक्तिकर्म प्रतिपादयति । निष्ठा न्यग्भूतम् । कथं ज्ञायते । आह—उलूखलमुसले अत्र कर्मभूते । ते च कारके कारकान्तरेणात्र संयुज्यमाने दृश्येते 'उलूखलमुसलाभ्याम्' इति । न च द्वितीयान्तं

---

समाम्नातमात्रेण—पा० । × समाम्नातात्तु प्र—पा० । ÷ यथा 'व्रीहीनवहन्ति' इत्यत्रावघातभावनाया व्रीहय इति शेषः । * यथा व्रीहय एव प्रोक्षणभावनाया इत्यर्थः । + यथा 'प्रणीताभिरद्भिर्हवींषि संयौति' इत्यत्र संयवनभावनायाः पुरोडाश इति पूरणम् । = यथा 'गां पयो दोग्धि' इत्यत्र गोदोहनभावनायाः पय इति शेषः ।

यत्र पुनः स्वरूपमङ्गस्य धर्मसंबन्धे कारणं भवति, तत्स्वरूपप्रयुक्तम् । तत्र यद्यपि तेन धर्मवताऽपूर्वं साध्यते । तत्र साध्यमानमपूर्वं न धर्मस्य प्रयोगहेतुभूतं भवति, न तत्प्रयोजकं, तस्य स्वरूपं विद्यत इति न धर्मः प्रयुज्यते । तत्र विकृतावर्थान्तरे तद्रूपाभावादूहो नावकल्पते । एवं सति वाक्यान्निर्णयः । यदि वाक्यमपूर्वस्य कारणतां वदति, ततोऽपूर्वप्रयुक्तम् । अथाङ्गस्य, ततोऽङ्गप्रयुक्तम् । तच्चोक्तप्रकरणादपूर्वप्रयुक्तं स्यात् । वाक्यात्त्वङ्गप्रयुक्ततेति । तस्माद्धन्तिपिषिप्रयुक्तं प्रोक्षणमिति । यत्र यत्र हन्तिपिषी प्रयुज्येते, तत्र तत्रैवंधर्मकौ भवत इति ॥ २ ॥

तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसंबन्धस्तस्माद्यज्ञप्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात् ॥ ३ ॥ सि०

तुशब्दः पक्षं व्यावर्तयति । न त्वेतदस्ति, हन्तिपिषिप्रयुक्तं प्रोक्षणमिति । तेन त्वर्थेन हन्तिना पिषिणा वा यस्मादपूर्वस्य संयोगः,

---

कारकं कारकान्तरेण संयुज्यते । उद्भूतशक्तित्वात् । तस्माद्यदुद्भूतशक्तिकारकं तत्क्रियां वशी करोति, न त्वनुद्भूतशक्ति । अनुद्भूतशक्तित्वात् । अपि च, एवमुलूखलमुसलयोः प्रोक्षणस्य च संबन्धार्थं हन्तिरुच्चार्येत, तत्रात्यन्तं वाक्यं स्यात् । तस्माद्धन्त्यर्थम् × । अथवा—वाक्यान्तरेण करणतया प्राप्ते उलूखलमुसले, अर्थप्राप्ते वा ते अनूद्योपसर्जनार्थो विधीयते ।

अत्र पूर्वः पक्षः । वाक्याद्धन्तिपिष्यर्थं प्रोक्षणं, प्रकरणादपूर्वार्थम् । वाक्यं च प्रकरणाद्बलीयः ॥ २ ॥

— —

अत्र केचिद्वर्णयन्ति = । वाक्ये परिगृह्यमाण आनर्थक्यं प्रोक्षणस्याऽऽपद्येत । तस्माद्वाक्यार्थो बाध्यते । तत्रासंयुक्तं पदान्तरेण प्रोक्षणमपूर्वेण संभन्त्स्यते । अपूर्वं चामूर्तमशक्यं प्रोक्षितुम् । अतो व्रीहिद्वारेणापूर्वं* प्रोक्षत इति ।

---

× हन्त्यर्थमिति—प्रोक्षणं, नोलूखलमुसलार्थमिति शेषः । = वर्णयन्ति—सिद्धान्तमिति शेषः । * व्रीहिपदं च 'व्रीहीन् प्रोक्षति' इत्येतदपि, उलूखलमुसलवाक्यतुल्यन्यायमित्यभिप्रेत्य प्रयुक्तमिति ज्ञेयम् ।

तस्मात्तस्य प्रोक्षणसंबन्धः । अपूर्वसाधनविशेषकारितः प्रोक्षणसंस्कारेण संबन्धो न हन्तिपिषिकारितः । कथम् । निष्प्रयोजनौ हन्तिपिषी । यदि तत्प्रयुक्तं प्रोक्षणं, तदपि निष्प्रयोजनम् । अतो न तत्प्रयुक्तम् । आह । अपूर्वस्योपकारकौ हन्तिपिषी, न निष्प्रयोजनाविति । उच्यते । न प्रोक्षणस्यापूर्वस्य कश्चिदस्ति संबन्धः । यदि प्रोक्षणं न क्रियते, न हन्तिपिषी अपूर्वस्य साधनभावं न गच्छतः । तस्माद्यद्यपि हन्तिपिषी अपूर्वस्योपकारकौ, तथाऽपि ताभ्यां संबध्यमानं प्रोक्षणमनर्थकमेव ।

अथोच्यते, यदर्थं हन्तिपिषी उपादीयेते तत्प्रोक्षणसंबद्धौ शक्नुतः कर्तुं, नान्यथेति । उच्यते । नैवंजातीयकः शब्दोऽस्तीति । तत्राऽऽह । अयमेव शब्द एतमर्थमभिवदतीति। कथम् । प्रोक्षिताभ्यामवहन्ति, प्रोक्षिताभ्यां पिनष्टीति यद्धन्तिपिषिभ्यां क्रियते, तत्प्रोक्षणसंबद्धाभ्यामिति हन्तिपिषिकार्येण प्रोक्षणं संबध्यते, न ताभ्यामिति । उच्यते । नैतदेवम् । यदि यद्धन्तिपिषिभ्यां क्रियते, तत्प्रोक्षणेनाभिसंबध्यते, संबन्ध एव प्रोक्षणस्य न स्यात् । ताद्धि ताभ्यामभिनिर्वर्त्यते। किमपरं तत्प्रोक्षणमभिनिर्वर्तयेत् । अथ प्रोक्षिताभ्यामपूर्वं क्रियत इति संबन्धः । न तर्हि हन्तिना पिषिणा वा । अथ तत्संबन्धोऽप्युच्यत

---

एतदयुक्तम् । कथं प्रोक्षणमपूर्वेण गृह्यते । तच्च प्रयाजवदारादुपकारकं प्राप्नोति । तत्र कथं ज्ञेयमिदं संस्कारकमिति । अथोच्येत, लोके संस्कारकं दृष्टमिति । तन्न । इह शब्दलक्षणः संस्कारो गृह्यते । न कश्चिच्छब्दसंस्कारकं प्रोक्षणमाह । प्रकरणाम्नानादारादुपकारकं गम्यते । अपि च, लोके नैकान्ततः संस्कारकमेवेदं, कदाचिदसंस्कारकमपि स्यात् । अभ्युपेत्य ब्रूमः । संस्कारकं प्रोक्षणम् । न चापूर्वं शक्यं प्रोक्षितुम् । एवमपि* तदवस्थमेवाऽऽनर्थक्यम् । अथोच्येत—आनर्थक्यात्तदङ्गेष्विति× । अङ्गत्वाविशेषात्सर्वाङ्गेषु स्यात् । अपूर्वस्य संनिकर्षाद्वा द्व्यवदाने ।

---

* एवमपीति—प्रोक्षणस्य प्रकरणाविनियोगाङ्गीकारेऽपि वाक्यविनियोगाङ्गीकारपक्ष इवाऽऽनर्थक्यं तदवस्थमेवेत्यर्थः × ( अ० ३ पा० १ अ० ९ सू० १८ )।

इति । अनेकसंबन्धे वाक्यं भिद्येत । तस्माद्धन्तिपिषिभ्यां प्रोक्षणं संबध्यमानमप्रयोजनमिति प्रकरणादपूर्वेण संबध्यते ।

नन्वेवं हन्तिपिषिसंबन्धो नावकल्प्येत । अवकल्पिष्यत इति ब्रूमः । कथम् । इहावघातं प्रति यतमानस्य द्वयं निष्पद्यते । अवहन्तिरूपं, तण्डुलनिर्वृत्तिश्च । प्रणाड्या चापूर्वभावनाविशेषः । तण्डुलनिर्वृत्तिर्ह्य-पूर्वोपकारः सोऽवहन्तिक्रियया चिकीर्षितः । तेन प्रोक्षणस्य संबन्धः। यद्यप्यवहन्तिरूपेण संबध्यमाने प्रोक्षणे श्रुत्या संबन्धो भवति, तथाऽपि तत्र निष्प्रयोजनत्वाल्लक्षणैवाऽऽश्रीयते । लक्षणा हि प्रत्यक्षा । साऽदृ-ष्टकल्पनाया ज्यायसी* । न चावहन्तिरारादुपकारकोऽपूर्वं निष्पा-दयति । दृष्टमुपकारं कुर्वन्नदृष्टेन सामर्थ्येन समीचीनं करोतीति ग-म्यते । यद्यपि च निष्पादयेत्, तथाऽप्युपकारेणासंबध्यमानं प्रोक्षणं केवलावहन्तिसंबन्धेनानर्थकमेव स्यात् । अतोऽवहन्तिलक्षितेनोपका-रविशेषेणास्य संबन्धः । तस्मादनवहन्तिरपि यस्तत्कार्यापन्नस्तत्र प्रोक्षणं भवत्येव । यथा नखनिर्भिन्ने चरौ, नखेषु । तस्मादपूर्वप्रयुक्त एवंजातीयको धर्म इति ॥ ३ ॥

( अथवा--दीक्षणीयावाङ्नियमाधिकरणम् ॥ )

एवं वा—

अस्ति ज्योतिष्टोमः तत्रेदं समाम्नायते । यावत्या वाचा कामयेत,

---

अथोच्येत—व्रीहीणां श्रवणात्तेषां भविष्यति । स वाक्यसंबन्धो भवतैव निराकृतः । एवमवहन्त्यादिष्वप्येते दोषाः प्राप्नुवन्त्यनेन व्याख्यानेन । तस्मा-द्वाक्यंबाधित्वा योऽर्थः स ग्रहीतव्यः । वाक्ये चोच्चारिते द्वैविध्यं भवति । प्रकरणपाठात्तण्डुलनिर्वृत्तिप्रणाड्या शक्यमपूर्वं लक्षयितुम् । शक्यते च व्रीह्यर्थं प्रोक्षणं प्रतिपत्तुम् । तत्र लक्षितलक्षणायां गृह्यमाणायां फलकल्पना न भवति । श्रुतिवृत्ते फलकल्पना स्यात् । तस्मात्फलकल्पनाभयाल्लक्षितलक्षणयाऽपूर्वार्थं प्रोक्षणमिति सिद्धम् ॥ ३ ॥

—

एवं वा । संस्कारे—दीक्षणीयाख्ये यो धर्मो विहितः स परमापूर्व-

---

* बलीयसी—पा० ।

तावत्या दीक्षणीयायामनुब्रूयात् । मन्द्रं प्रायणीयायां, मन्द्रतरमातिथ्यायाम्, उपांशूपसत्सु, इति । तत्रायमर्थः सांशयिकः । किं परमापूर्वप्रयुक्ता एते धर्मा उत दीक्षणीयाद्यपूर्वप्रयुक्ता इति । किं प्राप्तम् । परमापूर्वसंस्कारे दीक्षणीयाद्यपूर्वे युज्यमानस्यास्य धर्मस्य परमापूर्वार्थत्वाद्दीक्षणीयादीनां परमापूर्वार्थतैव स्यात् । परमापूर्वं हि फलवत् । यत्कर्तव्यतयाऽभिसंबध्यते, तदेव धर्मैरभिसंबध्यते, नाङ्गापूर्वम् । निष्प्रयोजनं हि तदिति ॥ २ ॥

---

तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसंबन्धस्तस्माद्यज्ञप्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात् ॥ ३ ॥ सि०

तेन त्वर्थेन दीक्षणीयादिना, यस्मात्परमापूर्वस्य संबन्धः, तस्मात्परमापूर्वमेवंजातीयकेन धर्मेण धर्मवत् । तस्मादङ्गयज्ञप्रयुक्तमेवंजातीयकं धर्मजातम् । तथा श्रुतिः शब्दो भवति । इतरस्मिन् पक्षे लक्षणा स्यात् । न च प्रायणीयाद्यपूर्वं निष्प्रयोजनम् । ज्योतिष्टोमस्य हि तदुपकारकम् । न च तद्विनैवंजातीयकेन धर्मेण प्रायणीयाद्यपूर्वं सिद्धम् । अवहन्तिपिषिवत् ।

यदुच्यते, विनैव धर्मेण तदपूर्वं भविष्यतीति । तन्न । कुतः। तदपि ह्यपूर्वं शब्दादेवावगम्यते । अस्तीति न प्राक् शब्दादन्येन प्रमाणेनोपसंख्यायते । एवंजातीयके च शब्दप्रमाणके यच्छब्द आह, तदस्माकं प्रमाणम् । शब्दश्च प्रायणीयाद्यपूर्वस्योपकारकमिमं धर्ममाह, न परमापूर्वस्य। वचनप्रामाण्यात् । एवं चाऽऽपरमापूर्वनिष्पत्तेरजरमविनाशि चात्र धर्मः प्रतिष्ठितो न परमापूर्वं संक्रमिष्यति । एवमपि प्रयोजनसमर्थम् * । तस्मादेवंजातीयकं धर्मजातमङ्गापूर्वप्रयुक्तमेवेति ।

---

प्रयुक्तः । कुतः । परमापूर्वप्रयुक्तत्वाद्दीक्षणीयायाः । तस्माद्यस्तत्र धर्मो विहितः स प्रोक्षणवत्परमापूर्वप्रयुक्तो न स्वरूपप्रयुक्तः ॥ २ ॥

---

दीक्षणीयाद्यर्थेन यो धर्मः संयुक्तः स न परमापूर्वार्थः । कुतः । दीक्षणी-

---

* प्रयोचनसमर्थः—पा० ।

।किं भवति प्रयोजनमितरस्मिन्नितरस्मिन् वा पक्ष इति । उच्यते । अश्वमेधे समाम्नायते, त्रैधातवीया* भवतीति । यदि परमापूर्वप्रयुक्त एवंजातीयको धर्मः, ततस्तस्योपकारविशेषे निबद्ध इति तत्कार्यापन्नायां त्रैधातवीयायां+ भविष्यति । अथ, आग्नावैष्णवापूर्व-

---

याऽऽत्मीयमपूर्वं लक्षयति । तेन धर्माणां संबन्धः । अस्मिन्पक्षे लक्षणा *। यदा तु दीक्षणीयापूर्वं परमापूर्वं लक्षयति तदा लक्षितलक्षणया धर्माणां संबन्धः । तस्माल्लक्षणां = श्रुतिर्ब्रवीति लक्षितलक्षणापेक्षया ।

अथवाऽङ्गं× संबन्धादङ्गिनं+ शक्नोति लक्षयितुम् । तेनाङ्गिसंबन्धे÷ लक्षणा । अङ्गसंबन्धे* तु श्रुतिः पूर्वपक्षे, 'त्रैधातवीया दीक्षणीया' भवति इत्याग्नावैष्णवकार्यापत्त्या तद्धर्मैर्युज्यते । यथा नीवराः प्रोक्षणेन । सिद्धान्ते त्वाग्नावैष्णवापूर्वप्रयुक्ता धर्मास्त्रैतवीयायां न भवन्ति । अपूर्वान्तरं हि तत् । न चापूर्वान्तरमपूर्वान्तरधर्मान्गृह्णाति ।

अनुपपन्नमिदं प्रयोजनम् । कथम् । 'त्रैधातवीया दीक्षणीया भवति' इति सामानाधिकरणम् । तत्र यदि मुख्यवृत्ते द्वे अपि पदे गृह्येयातां सामानाधिकरण्यं नोपपद्यते । तस्मादेकमत्र गौणं पदमन्यन्मुख्यम् । तत्र प्राथम्यादविरोधाच्च त्रैधातवीयापदं मुख्यम् । दीक्षणीयाशब्दस्त्वात्मीयं क्रतूपकारं लक्षयति । तस्मिँल्लक्षिते त्रैधातवीया विधीयते । सा विधीयमाना तत्कार्यापन्नत्वात्तधर्मांल्लँभते । सिद्धान्तेऽपि, यथा खलेवाली यूपकार्ये विधीयमाना तद्धर्माल्लभते । तस्मादुभयोः पक्षयोस्तुल्या धर्मप्राप्तिरिति ।

---

* त्रैधातव्या—पा० । + त्रैधातव्यायां—पा० । लक्षणेति लक्षणैव केवलेत्यर्थः । = यदि सिद्धान्तेऽपि लक्षणा, कथं तर्हि 'तथा श्रुतिः शब्दो भवति' इति भाष्यमिति चेत्, लक्षितलक्षणापेक्षया सांनिकर्षाल्लक्षणामेव श्रुतिशब्देन भाष्यकारो ब्रवीतीत्याह—तस्मादित्यादिना । × अङ्गं—दीक्षणीयाख्यमङ्गम् । + अङ्गिनं—ज्योतिष्टोमम् । ÷ अङ्गिसंबन्ध इति—अङ्गिसंबन्धे विवक्षिते लक्षितेनाङ्गिना तदपूर्वं लक्षयितव्यं भवतीत्यर्थः । * अङ्गापूर्वसंबन्धे तु श्रुतयैव दीक्षाणीयया स्वापूर्वलक्षणेत्याह—अङ्गसंबन्धे त्विति ।

**प्रयुक्तस्ततो नेदमाग्नावैष्णवापूर्वमिति तत्र त्रैधातवीयापूर्वं न तेन धर्मेण संभन्त्स्यत इति ॥ ३ ॥**

( फलदेवताप्रकाशकयोर्मन्त्रयोरपूर्वप्रयुक्तत्वाधिकरणम् ॥ ३ ॥ )

**[ ३ ] फलदेवतयोश्च ॥ ४ ॥ पू०**

**दर्शपूर्णमासौ स्तः, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । तत्र**

---

अथोच्येत 'त्रैधातवीया दीक्षणीया भवति' इत्यनेन त्रैधातवीयाया यत्कार्यं तन्निवार्य दीक्षणीयाकार्यं प्रति विधीयते । तच्च दीक्षणीयाकार्यमात्मीयैरेव धर्मैरात्मीयेन चापूर्वेण त्रैधातवीयायां भावयिष्यति, न दीक्षणीयाधर्मान्ग्रहीष्यति सिद्धान्तवादिनः ।

तन्न । पूर्वपक्षेऽपि यदि दीक्षणीयकार्ये त्रैधातवीया वर्तते तथा सत्यात्मीयैरेव धर्मैस्तत्कार्यं साधयिष्यति । अथ न वर्तते सुतरामात्मीया धर्मास्तस्याः । अपि च परमापूर्वप्रयुक्ततायामपि वाङ्नियमस्य, प्रकृतावाग्नावैष्णवो× विशिष्टं द्वारमभूत् । तच्चेह द्वारं नास्ति । तस्मान्नास्ति वाङ्नियमः ।

नन्वनेन न्यायेन नीवारेषु प्रोक्षणं न प्राप्नोति । उच्यते । सत्यं, विशिष्टं द्वारं प्रोक्षणस्य व्रीहय इति । इयांस्तु विशेषः—व्रीहयो दृष्टेनोपकुर्वन्ति । नीवाराश्च तत्कार्यं प्रत्यक्षं साधयन्तो दृश्यन्ते । तत्र कार्यापत्त्या धर्मप्राप्तिर्युक्ता । इह त्वदृष्टं द्वारं, तस्य कार्ये वर्तत इति नास्ति प्रमाणम् । अथवा—दूरादेवेदं भ्रष्टं प्रयोजनमिति । कथम् । त्रैधातवीया यादृश्येवोत्पन्ना तादृश्येव चोद्यते । त्रैधातवीयाशब्देन सैव परिवर्तते । आख्याताभावात् । कर्मान्तरमपि न भवति । तस्माद्यादृशी तत्र विज्ञाता तादृश्येवात्र कर्तव्या । यद्यपि च कर्मान्तरं स्यात्तथाऽपि नाम्ना धर्मान्गृह्णीयान्न चोदकेनेति* ॥ ३ ॥

—

दीक्षणीयापूर्वप्रयुक्तो वाङ्नियमो न परमापूर्वप्रयुक्त इति पूर्वाधिकरणापवादोऽयम् । दीक्षणीयासिद्धान्तेनैव 'फलदेवतयोश्च' इत्यत्र पूर्वपक्षः । अग्नि-

---

× आग्नावैष्णवो विशिष्टमिति—आग्नावैष्णवापूर्वमित्यर्थः । * चोदकेनेति—दीक्षणीयाया उत्पत्त्यपूर्वप्रयुक्तत्वे परमापूर्वप्रयुक्तत्वे वा भाष्योक्तप्रयोजनासंभवात्प्रयोजनान्तरं मृग्यमित्याशयः ।

फलसंबद्धो धर्मो देवतासंबद्धश्च श्रूयते। फलसंबद्धस्तावत्, अगन्म स्वः सं ज्योतिषा भूम, इति। देवतासंबद्धोऽपि, अग्नेरहमुज्जितिमनूज्जेषं, सोमस्याहमुज्जितिमनूज्जेषमित्यादिः। तत्र संशयः। किं स्वर्गसंबद्धस्य कर्मणः स्वर्ग एव प्रयोजकः, अग्न्यादिसंबद्धस्याग्न्यादय एवोतोभयत्राप्यपूर्वं प्रयोजकमिति। यद्येवमभिसंबन्धः क्रियते, गताः स्मः स्वर्गम्, अग्न्यादीनां चोज्जितिमनूज्जेषमिति, ततः स्वर्गाग्न्यादिप्रयुक्तः। अथैवं क्रियते, आगता दर्शपूर्णमासफलं, दर्शपूर्णमासदेवतायाश्चोज्जितिमनूज्जेषामिति ततोऽपूर्वप्रयुक्तः। किं प्राप्तम्। स्वर्गाग्न्यादिप्रयुक्त इति। कुतः। मन्त्राम्नानसामर्थ्यात्। यस्य मन्त्रो वाचकः, स इह वदितव्य इति गम्यते। श्रुत्या च स्वर्गाग्न्यादीनां वाचको मन्त्रः। लक्षणया दर्शपूर्णमासफलदेवतयोः। तस्माद्यत्फलदेवतमिति समधिगतं* स्वर्गाग्न्यादि, तत्प्रयुक्तो धर्मः स्यादिति ॥ ४ ॥

न चोदनातो हि ताद्गुण्यम् ॥ ५ ॥ सि०

नैतदस्ति, स्वर्गाग्न्यादिप्रयुक्त इति। चोदनातस्ताद्गुण्यं स्यात्। यत्फलवच्चोद्यते, तादितिकर्तव्यतयाऽनुबध्यते। अपूर्वं च फलवत्, न स्वर्गाग्न्यादि। तदर्थं वचनं सदृष्टार्थं कल्प्येत। लक्षणया चापूर्वफलदेवतावचने दृष्टोऽर्थः स्यात्। प्रोत्साहनात्। एतस्मिन्न पक्षान्तरे दृष्टे सति न स्वर्गाग्न्यादिवचनस्यापूर्वकल्पना×न्याय्या। शब्दार्थस्य च फलदेवतत्वेन= संप्रतिपन्नत्वाल्लक्षणाऽदुष्टा। तस्मादपूर्वप्र-

---

स्वरूपप्रयुक्तोऽयं मन्त्रः। स्वर्गप्रयुक्तश्च, लिङ्गेन ह्यत्र विनियोगः। सामर्थ्यं च लिङ्गम्। स्वरूपे च मन्त्राणां सामर्थ्यं, नापूर्वीयस्वरूपे। लक्षणा हि तथा स्यात्। न च प्रकरणवशेन लिङ्गबाधा युक्तः। तेन कामं वाक्यं प्रकरणेन बाध्यताम्। लिङ्गं ततो बलवत्तरं, न ततो बाधितुं युक्तम्। तेन यथा वाङ्नियमो ज्योतिष्टोमार्थदीक्षणीयार्थस्तथा मन्त्रोऽपि +।

---

* समधिगतं सिद्धान्ते–पा०। × अपूर्वस्य कल्पना–पा०। = फलदेवतात्वेन–पा०। + मन्त्रोऽपीति–दर्शपुर्णमाससंबन्धी यः स्वर्गः, यश्चाग्निः, तत्स्वरूपप्रयुक्त एव स्वर्गप्रकाशकोऽग्निप्रकाशकश्च मन्त्र इत्यर्थः।

युक्त एवंजातीयको धर्म इति । किं भवति विचारस्य प्रयोजनम् । यथा पूर्वः पक्षः, सौर्ये कर्मण्यविकारेण मन्त्रः प्रयोक्तव्यः । यथा तर्हि सिद्धान्तः, ऊहेन, आगन्म ब्रह्मवर्चसं, सूर्यस्योज्जितिमनूज्जेषमिति । फले पर्यवसितम् । देवतायामुत्तरा चिन्ता वर्तिष्यते ॥ ५ ॥

( धर्माणां देवताप्रयुक्तत्वाभावाधिकरणम् ॥ ४ ॥ )

[ ४ ] देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥ ६ ॥ पू०

नैतदस्ति, अग्न्यादयोऽप्रयोजका इति । सर्वा देवताः सर्वेषां धर्माणां प्रयोजिका भवितुमर्हन्ति । कुतः । भोजनस्य तदर्थत्वात् । भोजनं हीदं देवतायाः, यागो नाम । भोज्यं द्रव्यं देवतायै प्रदीयते, सा भोक्ष्यत इति । देवतासंप्रदानको ह्ययं यागः श्रूयते । संप्रदानं च नाम कर्मणोऽपीप्सिततमादभिप्रेततरम् । तस्माद्ध गुणभूता देवता, देवतां प्रति गुणभूते द्रव्यकर्मणी । अपि च, यागो नाम देवतापूजा । पूजा च पूजनीयं प्रति गुणभूता लोके दृश्यते । तदेतदातिथिवद्द्रष्टव्यम् । यथा, यावत्किंचिदतिथेः परिचरणं सर्वं तदातिथिप्रयुक्तम् ।

---

अथवाऽयं मन्त्रः स्वसामर्थ्येनाग्निप्रकाशकः । तत्र यो योग्निः स सामर्थ्याविशेषात्प्रकाशनीयः । एवं प्रकरणबाधं सामर्थ्येन मन्यमानः पूर्वपक्षमारभते । प्रोक्षणवत्तूतरम् ॥ ४ ॥ [ ५ ] ॥

— —

अत्र यागो देवताराधनार्थं इति मन्यमानः पक्षं× परिगृह्णाति । न भाव्यमानार्थो यागः । किं तर्हि देवताराधनार्थः । कुतः । तद्धितशब्दादग्निर्देवताऽस्येति । तत्राग्निदेवताशब्दावस्यशब्दस्य विशेषणम् । अस्यशब्दश्च द्रव्याभिधायी, इतरौ तद्विशेषणम् । तद्द्रव्यं यद्यग्न्युद्देशेन दीयते, एवमग्निशब्दोऽस्य विशेषणं भवति, नान्यथा यदा च द्रव्यं प्रदीयते, तदाऽग्निः संप्रदानं भवति । संप्रदानं च कर्मणोऽपि प्रधानतरम् । यजतिक्रियया द्रव्यं व्याप्यते, द्रव्येण च संप्रदानम् । तस्मादग्न्यर्थो यागः । यथोपाध्यायाय गां ददातीति । अपि च देवपूजायां यजि_

---

× पक्षम्—पूर्वपक्षमित्यर्थः ।

एवमिदमपीति ।

आह । नन्वेवं ब्रुवता, विग्रहवती देवता, भुङ्क्ते चेत्यभ्युपगतं भवति । उच्यते । बाढम् । विग्रहवती देवता भुङ्क्ते च । कुतः । स्मृतेः, उपचारात्, अन्यार्थदर्शनाच्च । एवं हि स्मरन्ति, विग्रहवती देवतेति । स्मृतिश्च नः प्रमाणम् । तथा, विग्रहवतीं देवतामुपचरन्ति । यमं दण्डहस्तमालिखन्ति, कथयन्ति च । तथा, वरुणं पाशहस्तम्, इन्द्रं वज्रहस्तम् । उपचारादपि स्मृतेर्दृढिमानं कल्पयामः । तथाऽन्यार्थवचनं, विग्रहवतीं देवतां दर्शयति । जगृभ्मा× ते दक्षिणमिन्द्र हस्तमिति । पुरुषविग्रहस्य हि दक्षिणः सव्यश्च हस्तो भवति । तथा, इमे* चिदिन्द्र रोदसी अपारे यत्संगृभ्णा मघवन् काशिरित्ते, इति । काशिर्मुष्टिः । सोऽपि पुरुषविग्रहस्यैवोपपद्यते । तथा तुविग्रीवो+ वपोदरः सुबाहुरन्धसो मदे । इन्द्रो वृत्राणि जिघ्नते, इति । ग्रीवा, उदरं, बाहू इति पुरुषविग्रहदर्शनं भवति । तस्माद्विग्रहवती देवतेति ।

भुङ्क्ते च । कथमवगम्यते । स्मृतेः उपचारात्, अन्यार्थदर्शनाच्च । एवं स्मरन्ति, भुङ्क्ते देवतेति । तथा चैनां भुञ्जानामिवोपचरन्ति यदस्यै× विविधानुपचारानुपहरन्ति । तथा चान्यार्थवचनं भुञ्जानां देवतां गमयति । अद्धीन्द्र* पिब च प्रस्थितस्येति । तथा च, विश्वासनानि= जठरेषु धत्त इति । एकया÷ प्रतिधापिबत्साकं सरांसि त्रिंशतमिति । आह । न देवता भुङ्क्ते । यदि च भुञ्जीत, देवतायै हविः प्रत्तं क्षीयेत । उच्यते । अन्नरसभोजिनी देवता मधुकरीवदवगम्यते । कथम् । देवतायै हविः प्रत्तं नीरसं भवति । तस्मादन्नरसं भुङ्क्ते देवतेति गम्यते ॥ ६ ॥

---

र्वर्तत इति स्मरन्ति* । तस्मात् 'यजेत स्वर्गकामः' इति यागेन देवतामाराधयेत्ततः स्वर्गो भविष्यतीति ॥ ६ ॥

---

× ऋ० सं० ( अष्ट० ८ अ० १ व० ३ ) । * ऋ० सं० ( अष्ट० ३ अ० अ० २ व० १ ) । + ऋ० सं० ( अष्ट० ६ अ० १ व० २३ ) । × यद्वाऽस्यै–पा० । * ऋ० शं० ( अष्ट० ८ अ० ४ व० २१ ) । = ऋ० सं० ( अष्ट० १ अ० ७ व० २ ) । ÷ ऋ० सं० ( अष्ट० ६ अ० अ० ५ व० २९ ) । * स्मरन्तीति–' यजदेवपूजासंगतिकरणदानेषु ' इत्यनया स्मृत्येति शेषः ।

आर्थपत्याच्च ॥ ७ ॥

यदि कस्यचिदर्थस्येशाना देवता, उपचर्यमाणा च प्रसीदेत्, ततस्तदाराधनार्थामियं देवतापूजाऽभिनिर्वर्त्येत ×। न चैतदुभयमप्यस्तीति। तदुच्यते। अर्थपतिर्देवतेति। कथमवगम्यते। स्मृतेः। उपचारात्। अन्यार्थदर्शनाच्च। एवं हि स्मरन्ति। अर्थानामीष्टे देवतेति। तथा, देवग्रामो देवक्षेत्रमित्युपचारस्तामेव स्मृतिं द्रढयति। तथा, अन्यार्थवचनमीशानां देवतां दर्शयति। इन्द्रो+ दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत्पर्वतानाम्। इन्द्रो वृधामिन्द्र इन्मेधिराणामिन्द्रः क्षेमे योगे हव्य इन्द्र इति। तथा, ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुष इति।

तथा, स्मृत्युपचाराभ्यां प्रसीदतीत्यवगच्छामः=। एवं हि स्मरन्ति, प्रसीदति देवतेति। तथोपचरन्ति-प्रसन्नोऽस्य पशुपतिः, पुत्रोऽस्य जातः। प्रसन्नोऽस्य वैश्रवणः, धनमनेन लब्धमिति। तथाऽन्यार्थदर्शनं भवति। आहुतिभिरिव* हुतादो देवान् प्रीणातीति। तस्मै प्रीता इषमूर्जं नियच्छन्तीति ॥ ७ ॥

ततश्च तेन संबन्धः ॥ ८ ॥

ततो देवतायास्तेन फलेन संबन्धः परिचरितुर्भवति। यो देवतामिज्यया परिचरति, तं सा फलेन संबध्नाति। कथमेतदवगम्यते। स्मृत्युपचाराभ्याम्। स्मरन्ति हि, देवता यष्टुः फलं ददातीति। तामेवोपचारेण स्मृतिं द्रढयति। पशुपतिरनेनोपचरितः, पुत्रोऽनेन लब्ध इति। तथा, अन्यार्थदर्शनमिममेवार्थं दर्शयति। स इज्जनेन+ स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः। देवानां यः पितरमाविवासति। श्रद्धामना हविषा ब्रह्मणस्पतिमिति। तथा, तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयतीति। तस्माद्धविर्दानेन गुणवचनैश्च देवताऽऽराध्यते, सा प्रीता सती फलं प्रयच्छति। येन कर्मणाऽभि-

॥ ७ ॥

× निर्वर्त्येत-पा०। + ऋ० सं० ( अष्ट० ८ अ० ४ व० १६ )। = प्रसीदतीत्युपग-पा०। * आहुतिभिरेव-पा०। + तै० सं० ( २-२-१४ )।

राराधितो यस्य= फलस्येष्टे, तत्कर्त्रे प्रयच्छति, न तत्सूर्यः प्रदातुमर्हति। वचनादेतदवगम्यते,+ कः किं प्रयच्छतीति। यथा, अग्नौ वचनं, न तत्सूर्ये ॥ ८ ॥

अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद्गुणत्वे देवताश्रुतिः ॥ ९ ॥ सि०

अपि वेति पक्षो व्यावर्त्यते। न चैतदस्ति, यदुक्तं देवता प्रयोजिकेति। यज्ञकर्म प्रधानं स्यात्। यजतेर्जातमपूर्वम्। कुतः। शब्दपूर्वत्वात्। यद्धि फलं ददाति, तत्प्रयोजकम्। इदं फलं ददातीत्येतज्ज्ञानं शब्दपूर्वकं, न प्रत्यक्षादिभिरवगम्यते। शब्दश्च यजतिवाच्यात्फलमाह, न देवतायाः। कथमवगम्यते। दर्शपूर्णमासयोः करणत्वेन निर्देशः, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति। तथा, ज्योतिष्टोमेन स्वर्गकामो यजेतेति। यजत्यर्थस्य हि स्वर्गकामेन समभिव्याहारो न देवतायाः। ननु द्रव्यदेवताक्रियं यजत्यर्थः। सत्यमेवम्। किं तु गुणत्वे देवताश्रुतिः। द्रव्यदेवतं हि भूतं, भावयितव्यो यजत्यर्थः। भूतभव्यसमुच्चारणे च भूतं भव्यायोपदिश्यते। तस्मान्न देवता प्रयोजिका।

अथ यदुक्तं, कर्मण ईप्सितादभिप्रेततरामिति। नास्याभिप्रेततामपह्नुमहे। तद्धितशब्देन चतुर्थ्या वा संयुक्तस्य देवतार्थस्य वाक्यादभिप्रेतताऽवगम्यते। फलसंयोगस्तु वाक्यादेव यजत्यर्थस्य। तस्य

'यजेत स्वर्गकामः' इति यजेतेत्यस्योत्तरार्धात्तिस्र* आकाङ्क्षा जायन्ते। तत्र प्रथमं तावद्भाव्यमानमाकाङ्क्षति, भावयेत्किमिति। तत्फलपदेन निराकाङ्क्षी क्रियते। तद्भाव्यमानं केन भाव्यत इति द्वितीयामाकाङ्क्षां पूर्वार्धो× निराकाङ्क्षी करोति। कथमिति तृतीयामाकाङ्क्षामग्न्यन्वाधानादीनि निराकाङ्क्षी कुर्वन्ति। संनिधानात्। तदेवमस्माद्वाक्याद्यागात्फलं श्रूयते, न देवतातः।

ननु देवता संप्रदानमित्युक्तम्। उच्यते। यागः फले चोदितो निर्वृत्तिमपेक्षते। सा च द्रव्यदेवतमन्तरेण न संभवतीति ÷. अपेक्ष्यमाणं च द्रव्यदेवतं

= तस्य—पा०। + वचनादेवावगम्यते—पा०। *उत्तरार्धादिति—आख्यातादित्यर्थः। × पूर्वार्ध इति—यजतिरित्यर्थः। ÷ न संभवतीति—द्रव्यदेवतमपेक्षत इति पूरणम्।

च श्रुत्या करणताऽवगम्यते, न देवतायाः । तत्र यद्यपि देवतार्थता यागस्य गम्यते, फलार्थताऽपि तेन न प्रतिषिध्यते। फलं च पुरुषार्थः। पुरुषार्था च नः प्रवृत्तिः । न चासौ देवतायाः । तस्मान्न देवताप्रयुक्ताः प्रवर्तिष्यामहे । या तु संप्रदानस्याभिप्रेतता, सा फलवतो यजेः साधनत्वे सत्युपपद्यते ।

यच्च, यजिर्देवतापूजा, सा पूज्यमानप्रधाना लोके लक्ष्यत इति । न लोकवदिह भवितव्यम् । इह पूज्यमानं पूजाप्रधानम्। यद्धि फलवत्, तत्प्रयोजकम् । तस्माद्यज्ञकर्म प्रयोजकम् । अपि चैतस्मिन् पक्षे विग्रहवती देवता, भुङ्क्ते चेत्यध्यवसनीयं भवति । न ह्यविग्रहायै, अभुञ्जानायै च दानं भोजनं वा संभवतीति ।

यच्चोक्तं, स्मृत्युपचारान्यार्थदर्शनैर्विग्रहवती, भुङ्क्ते चेति । तन्न । स्मृतेर्मन्त्रार्थवादमूलत्वात् । मन्त्रेभ्यश्चार्थवादेभ्यश्च स्मृतिमूलं विज्ञानमुत्पद्यत इति प्रत्यक्षमवगम्यते । ते च मन्त्रार्थवादा नैवंपरा इत्येतद्वक्ष्यामः । आह । यदि नैवंपरा न तर्हि मन्त्रार्थवादमूलं तद्विज्ञानमिति । उच्यते । य आलोचनमात्रेण मन्त्रार्थवादान् पश्यन्ति, तेषां× तत्स्मृतिमूलम् । ये पुनर्निपुणतः पश्यन्ति, तेषां तद्बाधितमपि च कस्यचित्स्मृतिमूलं भवति । तस्मात्तन एव स्मृतिः । उपचारोऽपि स्मृतिमूल एव ।

---

कारकांशेनैवापेक्ष्यते, न साध्यत्वेन । तत्र द्रव्यं तृतीयया कारकं भवति । देवता तद्धितेन चतुर्थ्या वा । तच्च देवताकारकं यागं प्रति प्राधान्यं यदि न प्रतिपद्येत, तथा सति यागो नैव निवर्तेत । यागनिर्वृत्त्यभावाच्च कारकमेव न स्यात् । यदि च यागस्तस्य गुणतां न प्रतिपद्येताऽऽत्मानमेव न लभेत । तस्माद्यागेन नान्तरीयको गुणभावः प्रतिपत्तव्यः । देवताकारकेणापि नान्तरीयकः प्रधानभावः । न च नान्तरीयको व्यापारो गुणभावे प्रधानभावे वा कारणम् । अचोदितत्वात् यागेन हि फले चोदितः सन्नहं नान्यथा फलं साधयामीत्येवं नान्तरीयकव्यापारेण देवतां प्रति गुणभूतेन भवितव्यम्।

---

× तेषामेतत्—पा० ।

यत्तु, अन्यार्थदर्शनमुक्तं-जगृभ्मा ते दक्षिणमिन्द्र हस्तमिति। नैतदेवंपरम्, इन्द्रस्य हस्तो विद्यत इति। यस्तस्य दक्षिणो हस्तस्तं वयं गृहीतवन्त इति। तस्माद्वाक्यादिन्द्रस्य हस्तसत्ता न प्रतीयते। आह। यदि त्वसौ नास्ति, वयं ते हस्तं गृहीतवन्त इत्येवं नावकल्पत इति हस्तसत्ताऽध्यवसीयते, अस्त्यसौ हस्तो वयं यं गृहीतवन्त इति। तन्नोपपद्यते। यद्यप्यस्य हस्तो भवेत्, तथाऽपि न तमुपगृहीतवन्त इति प्रत्यक्षमेतत्। तथाऽप्येतन्नावकल्पत एव। तत्रैतदसंबद्धं वा कल्पयितव्यं, स्तुतिर्वा। तच्च मत्पक्षेऽपि तुल्यम्।

अथैवमुच्यते, तस्यैतद्वचनं यो गृहीतवांस्तस्य हस्तमिति। उच्यते। नैतदध्यवसेयम्। आदिमत्तादोषो वेदस्य प्रसज्येत। न च गृहीतवानासीदित्युच्यते। प्रमाणाभावात्। एतस्मादेव वचनादर्थात्कल्प्यते हस्तग्रहीतेति चेत्। तन्न। अयथार्थस्याप्युच्चारणं संभवत्येव यतः। यथा, दश दाडिमानि षडपूपा इति। यस्यापि चैष पक्षोविग्रहवानिन्द्र इति, तस्यापीन्द्रशब्देनाऽऽमन्त्रणं संबोधनार्थं, संबोधनमनुवचनाय। तत्र संबुद्धः× इत्यवगतेऽनुवचनं न्याय्यम्। न चासौ केनचित्प्रकारेण संबुद्धः= इत्यवगम्यते। अनवगते संबोधनं व्यर्थम्।

वचनप्रामाण्यात्संबुध्यत* इत्येवं गम्यत इति चेत्। उक्तम्÷। अदृष्टकल्पनायां हस्तादिकल्पनानुपपत्तिरिति। न चासौ संबद्धः× इत्यवधार्यते। प्रमाणाभावात्। तस्मात्संबोधनवचनं न संबोधनाय। निर्देशार्थमेव। अविग्रहपक्षेऽपि तन्निर्देशार्थमेव भविष्यति। तत्राऽऽमन्त्रितविभक्तिवचनं स्तुतये। एवमिदं देवतारूपं साधनं साधयितृतमं,* यच्चेतनादिवत्संबुद्धा= साधयतीति चेतनवदिवोपचर्यमाणः संबुद्धिशब्देनाऽऽमन्त्र्यते। तथा, संबोधनशब्देन निर्देश× उच्यते, गृहीत-

---

तस्मात्सर्वत्रांशद्वयमस्ति। तत्र किं विवक्षितं किमविवक्षितमिति विज्ञेयम्। तत्र लोकेऽर्थकृता विवक्षा भवति। वेदे तु शब्दकृता। शब्देन च प्रत्यासन्नस्य यागस्य फलसाधनत्वात्प्राधान्यं, देवतायाश्च गुणत्वं विज्ञायते। न चोपकारलक्षणं

---

× संबद्ध–पा०। = संबद्ध–पा०। * संबध्यते–पा०। ÷ व्यक्तं––पा०। × संबद्ध–पा०। * साधकतमं–पा०। संबुध्य–पा०। × निर्दिश्य––

वन्तो वयं तव हस्तम् । त्वदाश्रया वयमित्यर्थः । अस्माभिरिन्द्रकर्म कर्तव्यमित्येतदनेन स्मार्यते ।

तथा, इमे—द्यावापृथिव्यौ, दूरे अपारे यत्संगृह्णासि मघवन्नहो ते पूजितो मुष्टिरिति सन्तामिव मुष्टिं स्तुत्यर्थेन वदति । तस्यापि भावे न प्रमाणमस्ति । नेदं वचनम्, इत्—महान् काशिरस्तीति । किं तर्हि, यस्तव काशिः, स महानिति । अन्यार्थस्तव काशिरस्तीति, अन्यस्तव काशिर्महानिति । सता हि स्तुतिरुपपद्यत इति चेत् । नैतत् । नियोगतो यस्यापि पौरुषविधिकैरङ्गैर्नास्ति संयोगः, पौरुषविधिकैरङ्गैस्तस्यापि* स्तुतिर्भवति । यथा, एते वदन्ति शतवत्सहस्रवदभिक्रन्दन्ति हरितेभिरासभिः । विद्वी ग्रावाणः सुकृतः सुकृत्यया होतुश्चित्पूर्वे हविरद्यमाशत, इति । तथा, सुखं= रथं युयुजे सिन्धुरश्विनामिति । तस्मान्न स्तुतिवचनादर्थापत्तिर्भवति पुरुषविधत्वे देवतायाः । तथा, तुविग्रीव* इन्द्र इति, नैतदुक्तं भवति, ग्रीवावानिन्द्र इति । किं तर्हि, याऽस्य ग्रीवा, सा महती । ग्रीवासत्त्वे नास्ति प्रमाणम् । न च ग्रीवास्तुतिरर्थापत्तिः । अपुरुषविधेऽपि स्तुत्युपपत्तेः ।

अपि च, इन्द्रो वृत्राणि जिघ्नते, इत्येताभ्यां पदाभ्यामिन्द्रशब्दः

---

शेषत्वम् । किं तर्हि । चोदनालक्षणं तदिति स्थितम् । किं भवति प्रयोजनं चिन्तायाः । यदि देवताराधनार्थो यागस्ततः पूज्यमाना देवता । यागश्च पूजा । पूजा च लौकिकः पदार्थः । तत्र येन प्रकारेणाग्निः पूज्यते तेनैव सूर्यः पूज्यत इति क आश्वासः । विपरीतमपि कदाचित्स्यात् ।

अपि च सूर्य एकाकी सन्नग्निपूजया तृप्यति । देवतान्तरसहितस्त्वग्निरग्नीषोमपूजयेति नैतत्संभाव्यते । न हि देवदत्तोऽत्यन्तमधुरमधुपयःप्रभृतिभिः प्रीय-

---

+ 'इमोचिदिन्द्र रोदसि अपारे यत्संगृभ्णा मघवन् काशिरित्ते' ( ऋ० सं०—अष्ट० ३ अ० २ व० १ ) इत्यस्या ऋचोऽर्थमनुवदति-तथेत्यादिना । * पौरुषविधिकैस्तैस्तस्यापि—पा० । + ऋ० सं० ( अष्ट० ८ अ० ४ व० ३० ) । = ऋ० सं० ( अष्ट० ८ अ० ३ व० ८ ) * ऋ० सं० ( अष्ट० ६ अ० १ व० २३ ) ।

संबद्धो न शक्नोति तुविग्रीवादिभिः संबन्धं यातुम् । द्विरुच्चारणमस्य प्रसज्यते । तुविग्रीवावान् इन्द्रो वेदितव्यः, वृत्राणि चेन्द्रो हन्तीति । तथा हि सति भिद्येत । अभिन्नं च वाक्यमुपलभ्यते । तदेवमवकल्पते । यदि तुविग्रीवादयोऽस्य नोपदिश्यन्त इति । स्तुत्यर्थं संकीर्त्यंते तुविग्रीवादिः । अन्धसो मदे, ईदृशो वृत्राणि हन्तीति । एषा तु वचनव्यक्तिः । वृत्रवधोपदेशपरमिदं वचनमिति । यदपि वचनं-बाहू ते इन्द्र रोमशौ, अक्षी ते इन्द्र पिङ्गले, इति । तदपि बाह्वो रोमशत्वमक्षणोश्च पैङ्गल्यमाह, न बाहुसत्तामक्षिसत्तां च । यदपि, अक्षिसत्तां वदतीति गम्यते । चक्षुष्मते शृण्वते ते ब्रवीमिति । तदपि न चक्षुःसंबन्धार्थं, चक्षुष्मते ब्रवीमीति वचनसंबन्धार्थम् । तत्सतीमिव चक्षुष्मत्तां स्तुत्यर्थमुच्चारयति । कुत एतदवगम्यते । चतुर्थीनिर्देशात् । यदि प्रातिपदिकार्थोऽध्यवसीयते, तथा वाक्यं भिद्येत । चक्षुष्मानित्येवं चोद्दिश्येत । चक्षुष्मते ते ब्रवीमीति च । तस्मान्न किंचिदन्यार्थदर्शनं पुरुषविधतां देवतायामिदं ख्यापयतीति । न चेदं भोजनम् । न हि देवता भुङ्क्ते । तस्माद्भोजनस्य तदर्थत्वादिति तदसद्वचनम् ।

यदपि स्मृत्युपचारान्यार्थदर्शनैर्भुङ्क्त इति । तदविग्रहत्वेन= प्रत्युक्तम् । अपि च, भुञ्जानायै देवतायै प्रत्तं हविः क्षीयेत । न च मधुकरीवदन्नरसभोजिन्यो देवता इति प्रमाणमस्ति । मधुकरीषु प्रत्यक्षम् । न च तद्वद्देवतायाम् । तस्मान्न भुङ्क्ते देवतेति । यदुक्तं, देवतायै हविः प्रत्तं नीरसं भवतीति । नैष दोषः । वातोपहतं नीरसं भवतीति । शीतिभूतं च । न चासौ कस्यचिदर्थस्येष्टे । अनीशा कथं दारयतीति ।

यदुक्तं, स्मृत्युपचारान्यार्थदर्शनैरीशाना देवतेत्यवगम्यत इति । तन्न । स्मृतेर्मन्त्रार्थवादमूलत्वादित्युक्तम् । उपचारोऽपि देवग्रामो देवक्षेत्रमिति । उपचारमात्रम् । यो यदभिप्रेतं विनियोक्तुमर्हति, तत्तस्य स्वम् । न च ग्रामं क्षेत्रं वा यथाभिप्रायं विनियुङ्क्ते देवता ।

---

= अविग्रहवत्त्वेन-पा० ।

तस्मान्न संप्रयच्छतीति । देवपरिचारकाणां* तु ततो भृतिर्भवति, देवतामुद्दिश्य यत्त्यक्तम् ।

यदुक्तम्, अन्यार्थदर्शनमीशानां देवतां ख्यापयति, इन्द्रो= दिव इन्द्र ईशे इत्येवमादीति । तत्प्रत्यक्षामनीशानां देवतामुपलभ्याध्यवस्यामो भाक्त एष शब्द इति । तत्राऽऽह । वचनप्रामाण्याद्देवास्येशानताऽवगम्यते, यद्देव × लोका अर्थान् विनियुञ्जते, तद्देवताभिप्रायादेवेत्यध्यवस्याम इति । तन्न । प्रत्यक्षात्प्रमाणाद्देवतापरिचारकाणामभिप्राय+ इत्यवगम्यते । स न शक्यो बाधितुम् । येऽपि देवतामीशानां वर्णयन्ति, तेऽपि नापह्नुवते परिचारकाणामभिप्रायम् । किंचाऽऽहुः । तथा देवता करोति, यथा परिचारकाणामभिप्रायो भवतीति । न च स ईशानो भवति यः पराभिप्रायमनुरुध्यते, यस्य न स्वाभिप्रायाद्विनियोगो भवति ।

अपि च, न चैतद्वचनम् । वर्तमानकालोपदेशत्वात् । प्रत्यक्षविरोधात्स्तुतिवादोऽवधार्यते । स्तुतिवादे च संभवति न वचनप्रामाण्योदीशिष्यत इति गम्यते । न च देवता फलेन संबध्नाति,÷ या तदर्थं परिचर्येत । तदुक्तं, स्मृत्युपचारान्यार्थदर्शनैर्ददाति प्रसीदति चेति । तत्र* स्मृत्युपचारयोरुक्तम् । यदन्यार्थदर्शनं, तस्मैप्रीता इषमूर्जं प्रयच्छन्तीति । तन्न । अन्यस्य विधेराम्नानात् । दक्षिणतः संपरिहर्तव्या इत्याहेति । तथा, तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयतीति । अत्रैन्द्रस्य हविषो विधानम् । तस्माद्देवता न प्रयोजिकेति ॥ ९ ॥

---

माणो यज्ञदत्तसाहचर्यात्सौवीरप्रियो भवति । सिद्धान्ते, भाव्यमानेन= धर्माः संबन्यन्ते । तत्र सौर्ये भाव्यमानेनैव धर्मा आकाङ्क्ष्यन्ते तत्र सादृश्याद्धर्मप्राप्तिर्भवति । अलौकिकत्वाद्धर्माणाम् । अथवा यदा देवताराधनार्थो यागस्तदा यदुक्तं,+

---

* देवक्षेत्रमित्युपचारमात्रम । देवपरि-पा० । = ऋ० सं० ( अष्ट० ८ अ० ४ व० १६ )। × यद्देवलोका--पा० । + अभिप्रायेत्यव-पा० । ÷ संबध्यते-पा० । * तन्न-पा० । = भाव्यमानेनेति-अपूर्वेणेत्यर्थः । + यदुक्तमिति-'विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात्' ( अ० ८ पा० १ सू० ३२ ) इत्यत्रेति शेषः ।

अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्तस्य प्रीतिप्रधानत्वात् ॥ १० ॥

यदुक्तम्, अतिथिवदिति। तत्परिहर्तव्यम्। आतिथ्यमातिथिप्रयुक्तं स्यात्। आतिथ्ये हि तत्प्रीतिर्विधीयते। अतिथिः परिचरितव्यः। यथा प्रीयते तथा कर्तव्यमिति। दानं भोजनं वा कार्यमिति। यद्यदतिथये रोचते, तत्कर्तव्यम्। यत्तस्मै न रोचते, न तद्बलात्कारयितव्यमिति। इह तु कर्मणि, अभावः प्रीतिविधानस्य। तस्माद्विषममातिथिनेति ॥ १० ॥

( श्रुतिविनियुक्तप्रोक्षणादिधर्माणामपूर्वप्रयुक्तत्वाधिकरणम् ॥ ५ ॥ )

[ ५ ] द्रव्यसंख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥ ११ ॥ पू०

दर्शपूर्णमासयोरामनन्ति, व्रीहीन् प्रोक्षतीति। तत्रैव, त्रीन् परिधीन्, तिस्रः समिध इति मन्त्रम्। चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्राऽमावास्यामिति। चातुर्मास्यानां द्वितीये पर्वणि वरुणप्रघासेष्वाम्नायते, शूर्पेण जुहोति, तेन ह्यन्नं क्रियत इति। तत्र संशयः। किं द्रव्यसंख्या हेतुसमुदायप्रयुक्ताः प्रोक्षणादयो धर्मा उतापूर्वप्रयुक्ता इति। किं तावत्प्राप्तम्। द्रव्यादिप्रयुक्ता इति। इह, व्रीहीन् प्रोक्षती-

---

द्रव्यदेवताविरोधे द्रव्यसामान्याद्विध्यन्त इति। तन्नोपपद्यते। देवताराधनार्थत्वाद्यागस्य देवतासामान्यमेव बलीयः*। विप्रकृष्टत्वाद्द्रव्यसामान्यस्येति ॥ ९ ॥ [ १० ॥ ]

—–

प्रोक्षिताभ्यामिति वाक्याद्धन्त्यर्थं प्रोक्षणम्। स च वाक्यसंयोगः श्रौतांशेन निराकृतः। तथा, लिङ्गसंयोगश्च श्रौतांशेन निराकृतः। अस्मिंश्चाधिकरणे= लिङ्गवाक्यसंयुक्ता नैवोदाहरणं, निराकृतत्वात्। श्रुत्या तु येषां तादर्थ्यं त इहोदाहरणम्। तान्श्रुत्या तदर्थान्मन्यमानः पूर्वपक्षं करोति। 'व्रीहीन्प्रोक्षति' इति द्वितीया श्रुत्या÷ व्रीह्यर्थतां प्रोक्षणस्य प्रतिपादयति। अपूर्वसंबन्धं

---

* बलीय इति—प्रधानगतत्वादिति भावः = 'पूर्वस्मिंश्चाधिकरणे' इति सर्वत्र पाठ उपलभ्यते। स च प्रामादिकः। ÷ अत्येति—विभक्तिश्रुत्येत्यर्थः।

ति प्रकरणेनापूर्वप्रयुक्तता स्यात्, वाक्येन द्रव्यप्रयुक्तता। द्रव्येण हि प्रोक्षणस्य समभिव्याहारः। तस्मिन्नपि समभिव्याहारे द्रव्यगता द्वितीयाविभक्तिः प्रोक्षणस्य द्रव्यप्रयुक्ततां वदति।

तथा, त्रीन् परिधीनिति यत्त्रिशब्दस्याभिधेयं, तदिह मन्त्राम्नानसामर्थ्याद्वदितव्यमिति गम्यते। संख्या च त्रिशब्दस्यार्थः। तस्याः श्रुतिर्वाचिका। तत्संबद्धेऽपूर्वे लक्षणा स्यात्। यावन्तः परिधयस्तावन्तो वक्तव्या इति। तथा, हेतुना धर्मः संयुज्यते वाक्येन, शूर्पेण जुहोतीति। किं कारणम्। यतः, तेनान्नं क्रियते तद्धोमेन संबद्धव्यमन्नकरणद्रव्यं होमे विधीयते। प्रकरणादपूर्वप्रयुक्तता स्यात्। यस्मादनेन होमेनापूर्वं क्रियते, तस्मादेतत् शूर्पेण निर्वर्तयितव्यमिति। प्रकरणाद्वाक्यं बलीयः। अतः प्रकरणं बाध्येत। येन येन द्रव्येण दार्वीपिठरादिनाऽप्यन्नं क्रियते, तेन तेन होमः कर्तव्य इत्येवमन्नकरणं सगुणं भवतीति।

---

प्रकरणात्स्यात्। श्रुतिश्च प्रकरणाद्बलीयसि। 'पौर्णमासीम्' इत्यत्रापि समुदायार्थमभिमर्शनं श्रुत्यैव द्वितीया प्रतिपादयति। 'त्रीन्परिधीन्' इति द्वितीया, अत्रापि श्रुत्यैव मन्त्रस्य संख्यार्थतामाह *। तस्मात्त्रिसंख्याप्रयुक्तो मन्त्रो नापूर्वप्रयुक्तः। 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते' इत्यत्र शूर्पं तावदनुदाहरणं, करणविभक्तिनिर्देशात्। यथा 'व्रीहिभिर्यजेत' इति। 'अन्नकरणेन जुहोति' इत्येतदपि, करणविभक्तिनिर्देशादेवानुदाहरणम्।

---

* आहेत्यस्यानन्तरं—नापूर्वप्रयुक्त इत्यस्य प्राक्, (ननु 'त्रीन् परिधीन्' इत्यत्र मन्त्रगतेयं द्वितीया कथं मन्त्रस्य संख्यार्थतामाह। अतः, 'अनेन मन्त्रेण त्रीन् परिधीन् प्रकाशयेत्' इति लिङ्गकल्पितश्रुतिरुदाहर्तव्या। तथा च लिङ्गविनियोगः स्यात्। न तु श्रुतिविनियोगः। अतो यत्रैव प्रत्यक्षेणैवेदृशी श्रुतिः, तस्मिन् त्रिसंख्याप्रयुक्तो मन्त्रः) इत्येवमर्थको वार्तिकग्रन्थो लुप्त इति भाति। यतो भाट्टदीपिकायामस्मिन्नधिकरणे खण्डदेवेन 'संख्योदाहरणस्य, त्रीन् परिधीन् इति मन्त्रस्य, अगन्म सुवः, इति मन्त्रवत्, अपूर्वसाधनीभूतपरिधियित्ताप्रकाशनार्थत्वस्य सिद्धत्वादनुदाहरणत्वमिति वार्तिककारेणैवोक्तम्' इत्यभिहितम्'। अतो लुप्तो ग्रन्थोऽन्वेष्टव्यः।

ननु प्रथमेऽध्याये प्रतिषिद्धा हेत्वर्थता । शूर्पस्यार्थवादोऽयमित्युक्तम् । सत्यमुक्तम् । अपूर्वप्रयुक्ततायां हि सिद्धायां नैकस्मिन् वाक्ये होमे शूर्पविधानं, हेतुविधानं चावकल्पत इत्यर्थवादः प्रकल्पते, नान्यथा । चतुर्होत्रा पौर्णमासीमभिमृशेत् , पञ्चहोत्राऽमावास्यामिति, समुदायसमभिव्याहाराद्वाक्येन तत्प्रयुक्तता, प्रकरणसामर्थ्याल्लक्षणयाऽपूर्वसमभिव्याहारादवगतामपूर्वप्रयुक्ततां बाधते । तस्माद्द्रव्यादिप्रयुक्ताः प्रोक्षणादयो धर्माः ॥ ११ ॥

अर्थकारिते च द्रव्येण न व्यवस्था स्यात् ॥ १२ ॥

अपूर्वप्रयुक्त एवंजातीयके धर्मे सति द्रव्येण च धर्मव्यवस्था न स्यात् । पयसा मैत्रावरुणं श्रीणाति, सक्तुभिर्मन्थिनं, धानाभिर्हारियोजनं, हिरण्येन शुक्रम्, आज्येन पात्नीवतमिति । यस्मान्मैत्रावरुणोऽपूर्वस्य, तस्मात्पयसा श्रयितव्य इति । ऐन्द्रवायवोऽप्यपूर्वस्य । सोऽपि पयसा श्रयितव्यः प्राप्नोति । एवं सर्वाणि श्रयणादीनि सर्वेषां ग्रहाणाम् । तत्र मैत्रावरुणादिग्रहणमविवक्षितं स्यात् । तस्मादपि

---

अथोच्येत, हिशब्दयोगादन्नकरणमुदाहरणं स्यात् । तत्र शूर्पस्य विधीयमानस्या ( न्नकरणत्वस्या ) र्थवादोऽयमित्युक्तम् । उच्यते । हिशब्दश्रुत्या हेतुत्वेनेहान्नकरणं, यस्मादनेनान्नं क्रियते तस्मादनेन होमः कर्तव्य इति, न स्तुतिर्लक्षणाप्रसङ्गात् । ननु प्रसिद्धसंबन्धो हेतुर्भवति । न च होमान्नकरणयोः संबन्धोऽवगतः प्रमाणान्तरेण, यथा कृतकत्वानित्यत्वयोः ।

उच्यते । सत्यमेवं लोके हेतुः । वेदे तु हिशब्दश्रवणाद्वाक्यमनुमीयते,= होमान्नकरणयोः संबन्धकर्तृ । तेनानुमितेन वाक्येन हेतुश्रवणमुपपत्स्यते । सति च हेतुश्रवणेऽन्नकरणं संस्कार्यं, होमः संस्कारकः । यद्यदन्नकरणं तत्तद्धोमेन व्याप्यते । यथा यद्यत्कृतकं तत्तदनित्यत्वेन व्याप्यते । यथा च यत्र यत्र धूमस्तत्राग्निना व्याप्यते । तस्माद्धिशब्दश्रुत्याऽन्नकरणार्थो होम इति मन्यमानः पूर्वपक्षं करोति । इहापूर्वार्थे होमे स्थिते प्रथमेऽध्याये किमन्नकरणं विधीयत

---

= अनुमीयत इति--यद्यदन्नकरणं तत्तद्धोमेन संबन्धयितव्यमित्येवंरूपं वाक्यं कल्प्यत इत्यर्थः ।

द्रव्यादि प्रयुक्ताः प्रोक्षणादय इति ॥ १२ ॥

अर्थो वा स्यात्प्रयोजनमितरेषामचोदनात्तस्य च गुणभूतत्वात् ॥ १३ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । न द्रव्यादिप्रयुक्ता भवेयुः । किं तर्हि । अर्थ एषां प्रयोजनम् । अर्थ इत्यपूर्वं ब्रूमः । तदर्थास्ते । तद्धि कर्तव्यतया श्रूयते । तदितिकर्तव्यतयाऽनुबध्यते । इतरेषां द्रव्यादीनां कर्तव्यतया न चोदना । किं तर्हि । अर्थस्य गुणभूतत्वेन । अर्थं प्रति, अपूर्वं प्रति गुणभूतानामेषां श्रवणम् । किमतो यद्येवम् । अकर्तव्यानामितिकर्तव्यतया नास्ति संबन्ध इति ।

ननु व्रीह्यादिसमभिव्याहाराद्व्रीहि संबन्धः । तत्र द्वितीयया व्रीहिसमुदायप्रयुक्तता गम्यते । लिङ्गवाक्याभ्यां संख्याहेतुप्रयुक्तता । नेत्याह । एवं सति फलं कल्पनीयं स्यात् । तस्मादपूर्वप्रयुक्तता ।

नन्वेवमपि सत्यपूर्वोपकारः कल्पयितव्यः । सत्यं कल्पयितव्यः । प्रकृतेन त्वेकवाक्यतां नीत्वा । त्वत्पक्षे त्वप्रकृतेन फलवचनेनैकवाक्यता स्यात् ।

ननु प्रकरणं वाक्यस्य श्रुतेर्वा न बाधकम् । सत्यमबाधकम् । फलाभावात्तु भवदीयः पक्षो मुच्यते । तस्मिन्नानर्थक्येनाविवक्षिते प्रकरणवता प्रयोगवचनेनापरिपन्थि प्रोक्षणादि विधायिष्यते । आह । अपूर्वसंबन्धेऽपि तदीयैर्व्रीह्यादिभिरेव धर्मः प्रयुज्यते । किमेवं भवि-

उतान्नकरणं स्तुतिरित्ययं विचारः+ ॥ ११ ॥ [॥ १२ ॥]

---

यदि व्रीहिस्वरूपप्रयुक्तं प्रोक्षणं स्यात्तथा सति फलकल्पना स्यात् । न हि स्वरूपार्थत्वे परम्परयाऽपि प्रकृतापूर्वप्रयोजनत्वमाग्निद्वारेणेवाऽऽधानस्य क्रतुप्रयोजनता, संभवति । न च वाक्यस्य द्वावर्थौ । यदि वा तण्डुलनिर्वृत्तिभणाड्या यदपूर्वं लक्ष्यते तस्यायं धर्मः । अथवा व्रीहिजातिलक्षितस्य द्रव्यस्य । अत्र

+ विचार इति—अतो नास्य विचारस्य हेत्वधिकरणेन पौनरुक्त्यं, विषयभेदादिति भावः ।

ष्यति । द्रव्यादिसंबन्धश्चैवं हि नावज्ञातो भविष्यति । फलं च न कल्पयितव्यम् । उच्यते । नैवं शक्यम् । व्रीहीन् प्रोक्षतीति हि व्रीहिजातिर्निर्दिश्यते, व्रीहिद्रव्यलक्षणार्था वा, अपूर्वसाधनविशेषलक्षणार्था वा । अन्यतरलक्षणया कृतार्थेति, नोभयलक्षार्था स्यात् । द्रव्यलक्षणे* वा, तत्र च लक्षणैव दोषः । फलकल्पनेति कृत्वा साधनविशेषलक्षणार्था जातिरवसीयते । व्रीहिजातिलक्षितं यत्साधनं, किं तत । यतस्तण्डुला भवन्ति, तत्प्रोक्षितव्यमिति । तण्डुलनिर्वृत्तिकरता हि तत्र साधनत्वं, न द्रव्यता । एवं संख्यादिष्वपि योजयितव्यम् । तस्मादपूर्वप्रयुक्तता प्रोक्षणादीनामिति ॥ १३ ॥

अपूर्वत्वाद्व्यवस्था= स्यात् ॥ १४ ॥

अथ यदुक्तम्, अर्थकारिते च द्रव्येण न व्यवस्था स्यादिति । साधनविशेषलक्षणार्था जातिरित्येवं सति व्यवस्था भविष्यति । मैत्रावरुणेन यत्क्रियते, तत्र पयःश्रयणं, न तत्, ऐन्द्रवायवेन । अतो न मैत्रावरुणापूर्वादैन्द्रवायवस्य धर्माः अपूर्वो ह्यैन्द्रवायवः । तस्मात्, अपूर्वत्वाद्व्यवस्था स्यादिति ॥ १४ ॥

तत्प्रयुक्तत्वे च धर्मस्य सर्वविषयत्वम् ॥ १५ ॥

यश्च मन्यते, द्रव्यादिप्रयुक्ताः प्रोक्षणादयो धर्मा इति । तस्य सर्वविषयता धर्मस्य प्राप्नोति । येऽपि भक्तार्था व्रीहयस्तेऽप्येवं प्रोक्षितव्याः प्राप्नुवन्ति । न चैतत्त्वयाऽपीष्यते । तस्मादयमस्मिन् पक्षे दोष इति ॥ १५ ॥

---

ग्रन्थः । व्रीहिजातिलक्षितं यत्साधनं, किं तद्यतस्तण्डुला भवन्ति । तत्प्रोक्षितव्यमिति । तण्डुलनिर्वृत्तिकरता हि तत्र साधनत्वं न द्रव्यता । कोऽभिप्रायः । तण्डुलनिर्वृत्तिप्रणाड्या यत्साधनत्वं लक्षयति तदर्थं प्रोक्षणम् । येष्वपि तण्डुलनिर्वृत्तिरविशिष्टा । न चान्यद्द्रव्यं तण्डुलनिर्वृत्तिकरणांशेन शक्यते लक्षयितुम् । तस्मादन्येषु द्रव्येषु प्रोक्षणाभावः ॥ १३ ॥ १४ ॥ १५ ॥

---

* द्रव्यलक्षणा वा–पा० । =' अपूर्वपृथक्त्वाद्व्यवस्था स्यात् ' इति सूत्रपाठो लिखितपुस्तक उपलभ्यमानोऽपि भाष्यकारैः सोऽनादृत इति यथाश्रुत एव पाठः प्रकाशितः ।

तद्युक्तस्येति चेत् ॥ १६ ॥

इति चेत्पश्यासि, सर्वविषयता धर्मस्य भविष्यतीति । तद्युक्तस्य प्रकरणयुक्तस्य भविष्यति । एवं प्रकरणमनुगृह्यते । न च सर्वविषयता धर्मस्येति ॥ १६ ॥

नाश्रुतित्वात् ॥ १७ ॥

नैतदेवम् । न हि श्रूयते, प्रकरणयुक्ता व्रीहयो निर्वप्तव्याः, प्रोक्षितव्याश्चेति । ननु प्रकरणानुग्रहार्थैतदध्यवसानम् । नेत्याह । न हि वाक्येन बाधितं प्रकरणमुत्सहते धर्मान्नियन्तुम् । अथापि न बाध्यते, तथाऽपि न प्रकरणस्य विशेष्टुं सामर्थ्यमस्ति । कर्तव्यतया हि तत्क्रियमाणं चोद्यते,× न प्रसिद्धसंबन्धमिव विशेषणत्वेन । तस्मान्न प्रकृतयागविशेषितानां व्रीहीणां निर्वापः प्रोक्षणं वा चोद्यत इति ॥ १७ ॥

अधिकारादिति चेत् ॥ १८ ॥

इति चेत्पश्यासि, न प्रकरणं विशेषकं व्रीहीणामिति । बाढम् । अधिकाराज्ज्ञास्यत्यध्वर्युः । इमे भक्तार्थाः, इमे कार्यार्थाः । तत्र कार्यार्थान् प्रोक्षिष्यतीति ॥ १८ ॥

---

न प्रकरणस्य विशेष्टुं सामर्थ्यमस्ति । कर्तव्यतया हि तत्क्रियमाणं चोद्यते, न प्रसिद्धसंबन्धमिव परविशेषणत्वेनेति । कोऽभिप्रायः । भावयेत्स्वर्गं, केन यागेन, कथमिति प्रकाराकाङ्क्षा भवति । स च प्रकारोऽनिर्ज्ञातरूपत्वात्कर्तव्यः । यश्च निर्ज्ञातस्वरूप उच्चार्यते, स परविशेषणं, यथा शुक्लः पट इति । इह यत्कथंभावाकाङ्क्षायामन्यन्वाधानाद्युपनिपतति, तदस्य संबन्धित्वे कारणं, नान्यस्य= भवति, न चान्यस्य* भवति ॥ १६॥१७॥[१८॥

---

× चोद्यत इति न—पा० । = नान्यस्य भवतीति—प्रकरणमन्यस्य संबन्धित्वे कारणं न भवतीत्यर्थः । * यदि प्रकरणं विशेषकं न भवेत्कथं तर्हि प्रकृतापूर्वसाधनभूतेषु व्रीहिषु प्रोक्षणं सिध्येदिति शङ्कां निरासितुमाह—न चान्यस्येति । अयं भावः । सत्यं, प्रकरणं साक्षाद्विशेषकं न भवति, प्रकृतान् व्रीहीनिति । परं तु प्रोक्षणस्य फलापेक्षायां फलान्तरकल्पनमन्याय्यमिति प्रकरणेन प्रकृतेनैकवाक्यता कल्प्यते—प्रोक्षणेन व्रीहिद्वारा प्रकृतापूर्वमुपकुर्यादिति । तथा च प्रकृतेनैकवाक्यताकल्पनापादनमुखेन भवत्येव परम्परया प्रकरणं विशेषकमिति नाप्रकृतस्य प्रोक्षणं कर्तव्यं भवतीति ।

तुल्येषु नाधिकारः स्यादचोदितश्च संबन्धः, पृथक्सतां यज्ञार्थेनाभिसंबन्धस्तस्माद्यज्ञप्रयोजनम् ॥ १९ ॥

तुल्या एते व्रीहियः। य एव भक्तार्थास्त एव कर्मार्थाः न पृथक् केचित्कर्मार्था नाम। ननु ये निरुप्तास्ते कर्मार्थाः। सत्यं भवेदेतत्। प्रोक्षणादिषु दोषो न स्यात्। निर्वापे तु दोषः। न तत्र केचन प्रकृता विद्यन्ते, पृथक्सतां यज्ञार्थेन निर्वापः श्रूयते। कथम्। अपरेण गार्हपत्यं प्रागीषमनोऽवस्थितं भवति। तस्य दक्षिणं चक्रमारुह्यानसोऽधिनिर्वपतीति। तस्माद्धर्मस्य सर्वविषयत्वं प्राप्नोत्येव। पूर्वेण हेतुनाऽपूर्वप्रयुक्तत्वं प्रोक्षणादीनामिति ॥ १९ ॥

( अग्नीषोमीयप्रागभाववर्तिपदार्थधर्मस्योपांशुत्वस्य तत्तत्पदार्थजन्यावान्तरापूर्वप्रयुक्तत्वाधिकरणम् ॥ ६ ॥ )

[ ६ ] देशबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्तस्य च तत्र भावात् ॥ २० ॥ सि०

ज्योतिष्टोमे समाम्नायते—तसरा वा एषा यज्ञस्य, तस्माद्यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीति। तदत्रैषोऽर्थः सांशयिकः। किं प्रागग्नीषोमीयाद्यानि कर्माणि, तत्प्रयुक्तमुपांशुत्वमुत परमापूर्वप्रयुक्तमिति। किं प्राप्तम्। प्रागग्नीषोमीयात्, यान्यङ्गापूर्वाण्याराद्दुपकारकाणि, यच्च प्रधानद्रव्यसंस्कारकं, तत्प्रयुक्तोऽयं धर्मः। योऽयं

॥ १९ ॥

---

आधस्त्येऽधिकरणे समुदायप्रयुक्तमभिदर्शनमित्युक्तम् *। समुदायप्रसङ्गेनान्यो यः समुदाय इव लक्ष्यते ग्रहयज्याभ्याससमुदाय इति, तत्र विचार्यते। किं तत्प्रयुक्तमुपांशुत्वमुत× तत्पदार्थप्रयुक्तमिति+। अथवा—संस्कारोहो विचार्यते, प्रकृतौ विकृतौ निर्णयाय÷। अग्नीषोमीयात्प्रागभाविनां पदार्थानामुपांशुत्वं श्रुत्यां भवति। ननु वाक्येनैष धर्मो विनियुक्तः। न च तृतीयाद्या विभक्तिरस्ति।

* समुदायप्रयुक्तमिति—समुदायापूर्वप्रयुक्तमित्यर्थः। × तत्प्रयुक्तमिति—ज्योतिष्टोमापूर्वप्रयुक्तमित्यर्थः। + तत्पदार्थप्रयुक्तमिति—अग्नीषोमीयप्रागभाविपदार्थजन्योत्पत्त्यपूर्वप्रयुक्तमित्यर्थः। ÷ निर्णयायेति—ऊहानूहनिर्णयायेत्यर्थः।

देशसंबद्धः। कुत एतत्। श्रुतिनिर्देशात्। मर्यादया देशलक्षिता ये पदार्थास्ते श्रुत्या, एतेन धर्मेण संबद्धाः। य एतस्मिन् देशे पदार्थास्तैरुपांशु चरन्तीति।

ननु वाक्येनैष धर्मो विनियुक्तो न श्रुत्या। न ब्रूमो न वाक्येनेति। किं तर्हि। श्रुतेनास्यैकवाक्यता, न प्रकृतेन लक्षितेन, कल्पितेन वेति। उच्यते। गृह्णीम एतदङ्गापूर्वाणामयं धर्म इति, न तु प्रधानद्रव्यस्य संस्कारकं यदपूर्वं तस्यापीति। कतमं तत्। यत्प्रधानद्रव्यसंस्कारकं पूर्वस्मिन् देशेऽस्तीति। उच्यते। तस्य च तत्र भावात्। तस्यैवंजातीयकस्य पूर्वस्मिन् देशे भावात्। अस्ति हि सोमप्रवहणीयं नाम सूक्तम्। तस्माद्देशधर्मो भविष्यतीति। यथा प्रणीताः प्रणेष्यन् वाचं यच्छति, तां सहविष्कृता विसृजतीति। अस्मिन् देशे ये पदार्थास्तेषां धर्मो वाग्यमो न प्रधानापूर्वस्य। एवमिदमप्युपांशुत्वमिति ॥ २० ॥

---

उच्यते। सत्यं, किंतु प्राक्शब्दोऽवश्यं निराकाङ्क्षीकर्तव्यः। तत्र यदि सोमयागेन संबन्धः क्रियते, प्रकरणाम्नानानुमितेन संबन्धः स्यात्। यद्यग्नीषोमीयेण संबध्यते, श्रुतेन संबध्यमानोऽग्नीषोमीयाद्ये प्राग्भाविनः पदार्थास्तैः सर्वैरगृह्यमाणविशेषत्वात्संबध्यते। तस्य च तत्र भावादिति सूत्रावयवेनापूर्ववन्तो ये पदार्था इति* ब्रवीति। तेषु यो धर्मो विधीयते नासावनर्थकः। यथा दीक्षणीयावाङ्नियमः पदार्थप्रयुक्त इत्युक्तमेवमिहापि+।

श्रुतिनिर्देशादिति—श्रुतेन वाक्येन संबन्धमभिप्रेत्य श्रुतिमाह। अथवा–पदार्थापूर्वेण संबध्यमानो लक्षणया। परमापूर्वेण तु लक्षितलक्षणया संबध्यते। प्रथमं पदार्थैस्तैरपूर्वाणि,× तैः= परमापूर्वमिति। एवं च लक्षितलक्षणामभिप्रेत्य लक्षणां श्रुतिमाह। अथवाऽग्नीषोमीयः पदार्थः। स चोच्चरितः प्राग्भाविनः पदार्थान्बुद्धावुपस्थापयति, न यज्ञभागम्। तमभिप्रेत्य श्रुतिमाह॥२०॥

---

* इति ब्रवीतीति—न तु भाष्यकृदुक्तरीत्याऽनेन सूत्रावयवेन संनिपत्योपकारकाङ्गापूर्वप्रयुक्तत्वं प्रसाधनीयम् पौनरुक्त्यापत्तेरिति शेषः। + एवमिहापीति–अपूर्ववत्त्वात्पदार्थानां पदार्थप्रयुक्तोऽयं धर्म इत्यर्थः। × अपूर्वाणीति–स्वापूर्वाणि लक्षणीयानीत्यर्थः। = तैरिति–लक्षितैः स्वापूर्वैरित्यर्थः।

यज्ञस्य वा तत्संयोगात् ॥ २१ ॥ पू०

वाशब्दात्पक्षो विपरिवर्तते। नैतदस्ति। तद्देशानां धर्म इति। कस्य तर्हि। परम पूर्वस्येति। कुतः। तत्संयोगात्। तत्संयोगो भवति। यज्ञस्य संयोगः। त्सरा वा एषा यज्ञस्य यत्प्राचीनमग्नीषोमीयादिति। यज्ञस्य यत्प्राचीनमिति संबन्धः, न त्सरा वा यज्ञस्येति। कुतः। प्राचीनं विशिंषन् यज्ञस्येति शब्दो विधिपदशेषो भवति। ततः प्रवृत्तिविशेषकरो भविष्यति। इतरथा, अर्थवादशेषः सन्ननर्थकः स्यात्। वादमात्रं+ ह्यनर्थकमिति।

प्राचीनमिति च यज्ञभागं श्रुत्या वदति। लक्षयति च तद्गतान् पदार्थान्। श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या स्यात्। तस्मात्प्राग्देशस्यैष धर्मः। तेनास्य श्रुत्या संयोगः। न प्राग्देशगतानां पदार्थानां, तैरस्य लक्षणया संबन्धः स्यात्। अथाप्यर्थवादपदशेषो यज्ञस्येति स्यात्, तथाऽपि प्राग्देशः श्रुत्या धर्मेण संबध्यते। प्राग्देशगताः पदार्था लक्षणयेति यज्ञप्रयुक्तैव न्याय्या। अपि च प्रत्यक्ष उपकारः परमापूर्वस्य लक्ष्यते। यत्प्राचीनमग्नीषोमीयात्तदुपांशुत्वे न शिथिलप्रयत्नः प्रचरन्नखिन्नः सुखं बृहद्वृत्तान्तं सौत्यमहर्निर्वर्त्स्यति*। तस्मा-

---

न यज्ञशब्दः त्सराशब्देन संबध्यते। अप्रवृत्तिविशेषकरत्वात्। यस्मात्प्राचीनशब्देन संबध्यमानः प्रवृत्तिविशेषकरो भवति, तेन यज्ञस्य यः प्राग्भागस्तस्यायं धर्म उपांशुत्वं विधीयते। न च प्राचीनशब्दः पदार्थान् शक्नोति वदितुम्। श्रुत्या भागवचन एष प्रतीयते। अक्षरोच्चारणमात्रेणैव प्राग्भागमाह। इतरत्र लक्षणया, पदार्थान्यदि लक्षयेत्। अत्र ग्रन्थः—अथाप्यर्थवादपदशेषोऽयं यज्ञस्येति स्यात्तथाऽपि प्राग्देशमात्रं श्रुत्या धर्मेण संबध्यत इति। कोऽर्थः। प्राचीनशब्दमुद्दिश्योपांशुत्वं विधीयते। तत्र यद्यग्नीषोमीयशब्देन विशेष्येत प्राचीनशब्दः, ततो वाक्यं विद्येत। तस्मान्न विशेष्यते। कस्य तर्हि

---

+ (अ० १ पा० २ अ० २ सू० १९)। * निर्वक्ष्यति–पा०।

त्परमापूर्वप्रयुक्तमुपांशुत्वमिति ॥ २१ ॥

अनुवादश्च* तदर्थवत् ॥ २२ ॥

अनुवादश्च तद्देशपदार्थस्यैव भवति । त्सरा वा एषा यज्ञस्य यत्प्राचीनमग्नीषोमीयादिति । त्सरा नाम छद्मगतिः । यथा शकुनिग्राहकस्य शकुनिं जिघृक्षतश्छद्मना गतिर्भवति । शनैः पदन्यासो, दृष्टिप्रणिधानम् , अशब्दकरणं च । कथमनवबुद्धः शकुनिर्गृह्येतेति । एवमिहाप्यनवबुद्धमिव ग्रहीतुं यज्ञं प्रच्छन्नगतिरुपांशुत्वं नाम । यथा शकुनिग्राहकस्य यस्मिन् देशे शनैः पदन्यासो न स तद्देशार्थः । अपि तु तद्देशाभिगतस्य शकुनेरर्थेन क्रियते । एवमिहाप्युपांशुत्वं न तद्देशानां पदार्थानामर्थेन क्रियते, तद्देशाभिगतस्य यज्ञस्यार्थेन गम्यते । यस्तु त्सराशब्दं यज्ञविशेष्यं मन्यते, तस्य सुतरामर्थवादः परमापूर्वप्रयुक्ततां दर्शयति । यज्ञस्यैषा त्सरेति । यथा शकुनेः त्सरा, एवं यज्ञस्येति ॥ २२ ॥

प्रणीतादि तथेति चेत् ॥ २३ ॥

इति यदुक्तं तत्परिहर्तव्यम् ॥ २३ ॥

न यज्ञस्याश्रुतित्वात् ॥ २४ ॥

नैतदेवम् । तद्देशपदार्थप्रयुक्तैव स्यात् , न परमापूर्वप्रयुक्ततेति । नात्र पदार्थानां यज्ञभागविशेष्यता वाग्यमसंबन्धे= तावद्गम्यते । यज्ञस्याश्रुतित्वात् । नात्र संबन्धी यज्ञशब्दः श्रूयते । नन्विदानीमेवोक्तं,

---

प्राग्भागः । विपरिवृत्तेज्योतिष्टोमस्येति ॥ २१ ॥ [ २२ ] ॥

---

प्रणीतादि तथेति चेत् । इति प्रत्यनुभाषणसूत्रम् ॥ २३ ॥

---

न यज्ञस्याश्रुतित्वात् । इति परिहारसूत्रम् ॥ २४ ॥

अथवा नासिद्धो दृष्टान्तो भवतीति दृष्टान्तसिद्धयेऽधिकरणं प्रक्रियते । ‘ प्रणीतादि तथेति चेत् ’ इति । यथा ‘ यज्ञेन संयोगात् ’ इत्युपांशुत्वं

---

* ‘ अर्थवादश्च तदर्थवत् ’ इति लिखिते केवलसूत्रपाठे, दृश्यते । = वाग्यमसंबन्धेनावगम्यते—पा० ।

यज्ञं तनिष्यन्तावध्वर्युयजमानौ वाचं यच्छत इति । उच्यते । तद्देश-पदार्थप्रयुक्ततायामप्येतदवकल्पते । कथम् । यज्ञं विस्तारयितुं वाचं यच्छतः । तौ वाचंयमौ सन्तावविक्षिप्यमाणचेतस्कौ, पदार्थेषु क्रियमाणेष्वप्रमाद्यन्तौ तथा करिष्येते, यथा न कश्चित्पदार्थः पदार्थावयवो वा ह्रियते । अध्वर्युर्वाग्यमेनानन्यचेतस्को न पदार्थान् प्रमादयिष्यति । यजमानश्चैवं वाग्यमेनानन्यचेतस्कः प्रमादयिष्यन्तं तं बोधयिष्यति । अङ्गैरप्यनन्तरीयमाणैर्यज्ञो विस्तार्यते, न केवलैः स्वैरवयवैरङ्गैश्च विस्तारयितुं वाग्यमः शक्नोति । अस्मिन् काले क्रियमाणो न स्वेनाऽऽत्मना । यज्ञसंयोगश्चात्र विस्तारसंबद्धः । तस्मादङ्गप्रयुक्ततायामप्युपपद्यते, यदध्वर्युयजमानौ वाचं यच्छतस्तत्प्रजापतिभूयंगतौ यज्ञं तन्वाते, इति दृष्टेन कारणेन, नादृष्टेनेति वर्तमानकालापदेशादवगम्यते । यथा वयं वाग्यमेन तायमानं= यज्ञं विभ्रस्तथेति ॥ २४ ॥

तद्देशानां वा संघातस्याचोदितत्वात् ॥ २५ ॥ सि०

स्थितादुत्तरम् । वाशब्दात्पक्षो* विपरिवर्तते । नैतदस्ति, पर-

---

परमापूर्वप्रयुक्तमेवमिहापि न पदार्थप्रयुक्तो वाङ्नियम इति । ' नन्विदानीमेवोक्तं ' ' स्थितादुत्तरम् ' इति चैतस्माद्ग्रन्थादनुमीयतेऽधिकरणान्तरम् × ॥ २३ ॥

---

' न यज्ञस्य ' इत्युत्तरपक्षे सूत्रं वर्णनीयम् ॥ २४ ॥

---

अत्र ग्रन्थः । नैवमभिसंबन्धः क्रियते, यज्ञस्य यत्प्राचीनामिति । कथं तर्हि । त्सरा वा एषा यज्ञस्येति । कोऽर्थः । पदार्थप्रयुक्तोऽपि वाङ्नियमवदर्थवान्भवति+ ÷ । परमापूर्वप्रयुक्तोऽपि । तत्र यदि पदार्थापूर्वप्रयुक्तोऽनर्थको भवति, तत्र व्यवहितकल्पनाऽध्याहारो वाऽश्रुतोऽपि कल्प्येत । इह तु यथाश्रुत एव वाक्ये घटमाने किमर्थं व्यवहितकल्पनाऽध्याहारो वा कल्प्यते ।

---

= तायमानं—पाल्यमानमित्यर्थः । * पक्षं विपरिवर्तयेत्-पा० । × एतस्माद्ग्रन्थादिति—' न यज्ञस्याश्रुतित्वात् ' ' तद्देशानां वा संघातस्याचोदितत्वात् ' इति सूत्रद्वयस्थभाष्यग्रन्थादित्यर्थः । + वाङ्नियमोऽर्थवान्—पा० । ÷ अर्थवान् भवतीति—उपांशुत्वाख्यो धर्म इति शेषः ।

मापूर्वप्रयुक्तमुपांशुत्वमिति । कथं तर्हि । प्राचीनमग्नीषोमीयात्, ये पदार्थास्तत्प्रयुक्तम् । कुतः । संघातस्याचोदितत्वात् । संघात इति ग्रहयज्यभ्याससंघातं ब्रूमः । न तस्यायं भाग उपांशुत्वेन संबद्ध इति चोदना । नैवं संबन्धः क्रियते, यज्ञस्य यत्प्राचीनमिति । कथं तर्हि । तत्परा वा एषा यज्ञस्येति । कुतः । तस्मादिति पदेन व्यवधानात् । अथापि प्राचीनेन संबन्धः । एवमपि न परमापूर्वप्रयुक्तम् । न हि यदित्थनेन देशोऽभिसंबध्यते । किं तर्हि । देशगताः पदार्थाः ।

यदि देशोऽभिसंबध्येत, यत्प्राचीनमग्नीषोमीयादिति भवेत्, न यत्किंचिदिति । वीप्सायां ह्येतद्भवति । वीप्सा च बहुषु भवति, नैकस्मिन् । एकश्च देशो बहवस्तत्र पदार्थाः । तस्मात्पदार्थानामुपांशुत्वेन संबन्धो न तद्देशस्येति । कथं पुनर्वीप्साऽवगम्यत इति । यदित्यनेन लक्ष्यते । किमित्यज्ञानवचनम् । विशेषाश्चाज्ञाता ज्ञातुमिष्टाः प्रती-

---

अपि च, प्राचीनशब्दे यज्ञशब्देन विशेष्यमाणेऽपि यद्यग्नीषोमीयपदमविवक्षितं, तथा सति साकाङ्क्षत्वाद्वाक्यमेव न घटते, कतरस्मात्पदार्थात्प्रागिति । तस्मादग्नीषोमीयशब्दोऽवश्यं विवक्षणीयः । तस्माद्द्वयोरपि शब्दयोरग्नीषोमीयशब्दस्तन्त्रम् * । तेन सुदूरमपि गत्वा प्राचीनशब्दस्याग्नीषोमीयसंबन्धः× । तेन संबन्धे कृते= पदार्थधर्मो भवतीत्युक्तम् ।

यदि हि देशोऽभिसंबध्येत, यत्प्राचीनमग्नीषोमीयादिति भवेन्न यत्किंचिदिति । कोऽर्थः । यस्यायं धर्मः परमापूर्वप्रयुक्तस्तस्य प्राग्देशो नामैकं वस्तु । भवता किंचिच्छब्दोऽनुवादो वर्णनीयः, उत्स्रष्टव्यो वा । तत्रानुवादस्तावन्न घटते । वीप्सार्थे किंचिदिति वर्तते । न चैकस्मिन्वस्तुनि वीप्सा संभवति । उत्सर्गोऽपि नैव । गम्यमानत्वादस्मिन्नर्थस्य । वाक्ये च शक्यतेऽयमर्थो विवक्षितुम् तस्माद्वीप्सावाची सन्विवक्षितव्यः । पदार्थधर्मेऽभ्युपगम्यमाने बहुत्वात्पदार्थानां किंचिच्छब्दस्यार्थोऽनुगृहीतो भवति ।

---

* तन्त्रमिति—विवक्षितमित्यर्थः । × अग्नीषोमीयसंबन्ध इति—अग्नीषोमीयशब्देन संबन्ध एषितव्य इत्यर्थः । = तेन संबन्धे कृते इति—आदावेवाग्नीषोमीयशब्देन प्राचीनशब्दस्य संबन्धे कृत इत्यर्थः ।

यन्ते। बहुषु च सामान्यं विशेषाश्च भवन्ति । तस्मात्तद्देशाः पदार्था वीप्सया लक्ष्यन्ते, ते चोपांशुत्वेन संबध्यन्त इति ।

ननु दीक्षणीयादिष्वन्यो धर्म उक्तः, यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात् , मन्द्रं प्रायणीयायां, मन्द्रतरमातिथ्यायामुपांशूपसत्स्विति । कथं तत्रोपांशुत्वं कर्तुं शक्यमिति । उच्यते । स धर्मः प्रधानेषु भविष्यति । दीक्षणीयादिषु प्रधानशब्दोपबन्धत्वात् । उपांशुत्वं प्रधानवर्जितेष्वङ्गेषु निवेक्ष्यते । सामान्योपदेशात् ।

---

नन्वयं न वीप्सावाची । उच्यते । किंशब्दोऽयमज्ञाते ज्ञातुमिष्टे वर्तते । देशश्च ज्ञातः । प्राचीनशब्दश्रवणात् । तत्र किंशब्दोऽनुपपन्नः । विशेषास्त्वज्ञाताः, तेषूपपद्यते = । तस्माद्वीप्साफलोऽस्मिन्वाक्ये वर्तते । दीक्षणीयाया याजुर्वेदिकत्वात्साङ्गायामुपांशुत्वं प्राप्नोति × । तच्चोदकेन बाध्यते । 'प्राक् स्विष्टकृतः प्रथमस्थानेन' 'मध्यमेनेडायाः' 'शेषं तृतीयस्थानेन' इत्येतत्स्वरवैचित्र्यं चोदकप्राप्तम् । तत् 'अग्नीषोमीयात्' इत्युपांशुत्वेन बाध्यते । 'यावत्या वाचा कामयेत' इत्यनेन दीक्षणीयाशब्दवाच्ये वाङ्नियमो विधीयते । स दीक्षणीयाशब्दः प्रधानमात्रे वर्तते, नाङ्गेषु । तस्मादुपांशुत्वमङ्गेषु । प्रधानेषु 'यावत्या वाचा' इति ।

ननु यत्किंचिच्छब्देन विशेषा उच्यन्ते । दीक्षणीयादिभिरपि+ विशेषा एव । तत्र द्वयोर्विशेषवाचिनोर्नास्ति बाध्यबाधकभावः । तस्माद्दीक्षणीयादिषु प्रधानेषु विकल्पः प्राप्नोति । उच्यते । दीक्षणीयादिभिर्वर्णोपात्तमेव प्रधानम् । यत्किंचिच्छब्दे न कश्चिद्वर्णोपात्तः । बाधे च वर्णोपात्तेनावर्णोपात्तो बाध्यते । 'उच्चैः प्रवर्ग्येण' इति करणविभक्तिनिर्देशात्साङ्गस्योच्चैष्ट्वम् । 'उपांशूपसत्सु' इत्यौचित्येन नित्यानुवादोऽयम् ।

---

= तेषूपपद्यत इति–प्राचीनशब्दात्सामान्यतो ज्ञातेष्वपि पदार्थविशेषरूपेणाज्ञातेषूपपद्यते किंचिच्छब्द इत्यर्थः । × प्राप्नोतीति–'उपांशु यजुषा' इति सामान्यवाक्येनेत्यर्थः । * अग्नीषोमीयादिति–'यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ति' इति वचनविहितेनोपांशुत्वेनेत्यर्थः । + दीक्षणीयादिभिरपीति–'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्' 'मन्द्रं प्रायणीयाम्' 'मन्द्रतरमातिथ्यायाम्' 'उपांशूपसत्सु' इत्यादिवाक्यश्रुतदीक्षणीयादिशब्दैरित्यर्थः ।

प्रयोजनं, कुण्डपायिनामयने, मासमग्निहोत्रं जुह्वतीत्येवमादीनि प्रागग्नीषोमीयात् । एषूपांशुत्वसंबन्धो भवति, यथा पूर्वः पक्षः । यथा तर्हि सिद्धान्तः, न संबन्धः ॥ २५ ॥

( अग्नौ प्रोक्षणादेः सकृदनुष्ठानाधिकरणम् ॥ ७ ॥ )

[ ७ ] अग्निधर्मः प्रतीष्टकं संघातात्पौर्णमासीवत् ॥ २६ ॥ पू०

अस्त्यग्निः, य एवं विद्वानग्निं चिनुत इति । तत्रैवं समाम्नायते । हिरण्यशकलसहस्रेणाग्निं प्रोक्षति, दध्ना मधुमिश्रेणाग्निं प्रोक्षति, वेतसशाखयाऽवकाभिश्चाग्निं विकर्षति, मण्डूकेनाग्निं विकर्षति । तत्रायमर्थः सांशयिकः । प्रतीष्टकं किं विकर्षणं प्रोक्षणं च कर्तव्यम् , अथ सकृदेव कर्तव्यमिति । तत्रैवं तावद्विचार्यते । किमिष्टकासमुदायेऽग्निशब्द उत तद्व्यतिरिक्ते द्रव्यान्तर इति । यदि समुदाये, ततस्तल्लक्षितानामिष्टकानामगम्यमाने विशेषे सर्वासां प्रोक्षणं विकर्षणं च । यदा च द्रव्यान्तरे, ततः सकृदेवेति । किं प्राप्तम् । प्रतीष्टकमिति । कुतः । समुदाये ह्यग्निशब्दो वर्तते । कथमवगम्यते । द्रव्यान्तरस्याभावात् । द्रव्यान्तरमेवान्यन्नास्ति, कोऽग्निशब्देनाभिधीयेत, कस्मिन्नग्निर्निधीयेतेति । कथं पुनर्नास्तीति गम्यते । द्रव्यान्तरवैलक्षण्यात् ।

तत्र हि द्रव्यान्तरमस्तीति गम्यते । यत्रैकस्मिन्नवयवे गृहीत्वा कृष्यमाणे कृत्स्नः कृष्यते । कोऽभिप्रायः । यद्येकोऽवयवो हस्तेन संयुक्तः कृष्यते, न द्रव्यान्तरं, कः प्रसङ्गो यत्तत्र द्वितीयोऽप्यवयवः कृष्येतेति । अथ द्रव्यान्तरमपि तत्र कृष्यते, तत्र द्रव्यान्तरस्य समवायिनामवयवानामपि निर्भागात्कर्षणमुपपन्नम् । न च संयुक्तसंयो-

---

यदेतत्प्रयोजनं वर्णितं देशमयुक्तत्वेऽस्योपांशुत्वस्य मासाग्निहोत्रादिषु प्राप्तिरिति । तन्न । तेषां नाम्नाऽन्यस्वरः प्राप्नोति, चोदकेनोपांशुत्वम् । चोदकाच्च नामधेयं बलवत् । तस्मादन्यत्प्रयोजनम् । अनाम्नयुक्तं ' पुरस्तादुपसदां सौम्येन प्रचरन्ति ' ' अन्तरा त्वाष्ट्रेण ' ' उपरिष्टाद्वैष्णवेन ' इति ॥ २५ ॥

---

प्रतीष्टकं प्रोक्षणादि कर्तव्यम् । कुतः । व्यतिरिक्तस्यावयविनोऽभावात् । यत्र

गस्य द्रव्यान्तराद्दते धर्म एषोऽवकल्पते । न ह्यवद्धे काष्ठपूलके, काष्ठ एकस्मिन्नाकृष्यमाणे काष्ठान्तराणि कृष्यन्ते । यत्र हि परस्परव्यतिषङ्गजनिता एका बुद्धिर्भवति, नावयवबुद्धिर्दृश्यते, नापि केनचिदनुमानेनानुमीयते, तत्र द्रव्यान्तरं जातमित्युच्यते ।

इह तु यैवेष्टका गृहीत्वा कृष्यते, सैवाऽऽगच्छति, नेष्टकान्तराणि । संधिश्च लक्ष्यते । तेन नावयवसंस्यूतिरस्तीति गम्यते । तस्मान्नास्ति द्रव्यान्तरम् । तत्र, इष्टकाभिरग्निं चिनुत इति चयनमात्रमिष्टकाभिः कर्तव्यम् । न चयनमात्रेण कृतेन किंचिद्दृष्टमास्ति । तस्मादाग्निनिधानार्थानामिष्टकानां चयनसमुदायोपलक्षितानामगम्यमाने विशेषे सर्वासामेव प्रोक्षणं विकर्षणं च कर्तव्यम् । पौर्णमासीवत् । यथा, य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजत इति, आग्नेयादय एव क्रियन्ते, नार्थान्तरं किंचित् । एवमिहापीति ॥ २६ ॥

---

व्यतिरिक्तोऽवयव्यस्ति तत्रैकावयवाकर्षणेन कृत्स्नोऽवयव्याकृष्यते* ॥ २६ ॥

---

---

* इत उत्तरं पूर्वपक्षग्रन्थः सिद्धान्तग्रन्थश्च कियांश्चित् लुप्त इति व्याख्यानानुरोधेनानुमीयते । परं तु लिखितेष्वप्यादर्शपुस्तकेषु नोपलभ्यते । अत आनुपूर्व्या तद्ग्रन्थान्वेषणे यत्नो विधेयः । अत्र चैवं तन्त्ररत्नग्रन्थः । " इह त्वेकेष्टकाकर्षणेऽपि न द्वितीया कृष्यते । आकर्षणमेव ह्यवयविसद्भावे प्रमाणम् । तच्च दार्शितं भाष्ये । कथं तदभावे तत्सिद्धिः । तस्मादवयव्यभावादग्निशब्द इष्टकासमुदायवचनः । समुदायश्चामूर्तो न शक्यते प्रोक्षितुमिति तल्लक्षितानां प्रोक्षणं विधीयत इति प्रतीष्टकं कर्तव्यमिति ॥ २६ ॥ अग्नेर्वा स्यात् ॥ ' इष्टकाभिरग्निं चिनुते ' इति शब्दतस्तावदिष्टकानां तृतीयान्तानां पारार्थ्येनावगतत्वात्तदर्थं प्रोक्षणं न भवति । गुणानां च परार्थत्वादिति न्यायात । किंतु द्वितीयासंयोगादग्न्यर्थं प्रोक्षणम् । अग्निशब्दश्च ज्वलनवचनोऽपि प्रोक्षणादिवाक्येषु तदाधारभूते स्थले लक्षणया वर्तत इति वेदितव्यम् । नन्वग्निशब्देन समुदायोऽभिधीयते, अवयव्यभावादित्युक्तम् । उच्यते । प्रत्यक्षेणेष्टकाव्यतिरिक्तोऽवयव्युपलभ्यते । न च कालान्तरे पुरुषान्तरेऽवस्थान्तरे वाऽविपर्यासादभ्रान्त इति शक्यते कल्पयितुम् । अथेष्टकाः पृथक्कृत्यानुपलम्भान्न तावद्व्यतिरिक्तोऽवयव्यस्ति । अव्यतिरेके तु तन्मा-

अग्नेर्वा स्याद्द्रव्यैकत्वादितरासां तदर्थत्वात् ॥ २७ ॥ सि०

वाशब्दात्पक्षो विपरिवर्तते। नैतदस्ति। प्रतीष्टकं कर्तव्यमिति। कथं तर्हि। सकृदेवेति। तत एतद्वर्ण्यते, द्रव्यान्तरमिष्टकाभिः क्रियते। तत्राग्निर्निधातव्यः। तत्र चाग्निशब्दो वर्तत इति। कथम्। परार्थेनेष्टकानां निर्देशात्। इष्टकाभिरग्निं चिनुते, इति तृतीयया विभक्त्या पारार्थ्यमिष्टकानामवगम्यते। यदि चयनमात्रमत्रोच्यते, तदिष्टकासंस्कारार्थमवगम्यते। तत्र द्वितीयया विभक्त्या संयोगः स्यात्। तृतीयया संयोगो बाध्येत। तस्मादिष्टकाभिरन्यत्क्रियते। तत्राग्निर्निधातव्यः। तदर्था इष्टकाश्चयनं चेति।

आह। नन्वेतदुक्तं, तस्याभावादयमन्यः पक्षः परिगृह्यत इति। अत्रोच्यते। नाभावः। प्रत्यक्षा तत्रैकबुद्धिः। सा बह्वीष्विष्टकासु

---

पूर्वपक्षवादिनः प्रोक्षणमेवानर्थकम्। अथावयवव्यतिरिक्तेष्टकाऽस्ति, ततोऽग्निरपीष्यताम्। यदुक्तमेकेष्टकाकर्षणे न कृत्स्नः कृष्यत इति। तदुच्यते। यत्र यत्र द्रव्यान्तरबुद्धिर्भवति तत्र तत्र द्रव्यान्तरम्। यत्रैकस्मिन् कृष्यमाणे कृत्स्नोऽवयवी कृष्यते, तत्र तथा दृष्टम्। यत्रैकस्मिन् कृष्यमाणे एकः कृष्यते, तत्रापि तथा दृष्टम्। न चैकस्मिन् कृष्यमाणे यस्मात्कृत्स्नः कृष्यते, तस्माद्द्रव्यान्तरम्। न च द्वितीये कृष्यमाणे द्रव्यान्तरं द्रव्यान्तरस्य कारणं, यत्र द-

---

नापातः। व्यतिरेकाव्यतिरेकं तु विप्रतिषेधान्न संभवति। तस्मान्नावयवी विद्यत इत्युच्यते। तथा सति, इष्टाकानामपह्नवः स्यादित्याह। अपि चाऽऽत्मीयानवयवानपेक्ष्येष्टकाऽप्यवयविनी भवत्येव। तेन तद्वदग्निरप्यभ्युपगम्यतामित्याशङ्कां विवृणोति। अथोच्येत—इष्टका अपनीय स निदर्श्यतां यदि व्यतिरिक्तोऽस्ति। न तु स निदर्श्यते। तस्मादिष्टका एव परमार्थतः सन्तीति। परिहरति। एवं वर्ण्यमाने भवताऽऽत्मीयावयवव्यतिरिक्तेष्टका निदर्शयितव्या। न च भवताऽपि साशक्यते निदर्शयितुम्। अपि चेष्टकानामवयवान्तरमेवं तेषामप्यवयवान्तराणामन्येऽवयवास्तेषामप्यन्ये। तेन तेन क्रमेणाऽऽपरमाणुभ्यो गमनात्परमाणुषु प्रोक्षणमवतिष्ठते। न च ते शक्याः प्रोक्षितुम्। तस्मात्पूर्वपक्षवादिनः प्रोक्षणमेवानर्थकं स्यात्" इति। अत्र च लुप्तवार्तिकग्रन्थस्थान एवार्थप्रतिपत्तय उपयुक्तस्तन्त्ररत्नग्रन्थः प्रकाशित इति वेदितव्यम्।

नावकल्पते । न चावयवसंधिर्दृश्यते पुरीषच्छन्नानाम्। तस्मात्पक्काम-संयोगेऽप्येकबुद्धेरुत्पादादेकमिष्टकाभ्यो× व्यतिरिक्तं द्रव्यमग्निनि-धानार्थमस्ति । यदि वा, इष्टकासंस्यूतिरप्येकबुद्धेरेवावगम्यते । यत्तु, एकाकर्षणे न कृत्स्नाकर्षणमिति । सत्यं, संस्यूतौ तत्र विच्छेदः क्रियते । द्विविधानि हि द्रव्याणि, स्थावराणि जंगमानि च । तत्र स्थावरेषु विच्छेदो भवति । यथा वनस्पतौ पर्णं गृहीत्वा कृष्यमाणे न कृत्स्नः कृष्यते, स्थावरत्वात् । एवमिदमपि । स्थावरं हीदमग्निद्रव्यम् । तस्मात्सकृदेव प्रोक्षणं विकर्षणं च कर्तव्यमिति ॥ २७ ॥

चोदनासमुदायात्तु पौर्णमास्यां तथा स्यात् ॥ २८ ॥

अथ यदुक्तं, य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजत इति । नात्राऽऽग्नेयादिभ्यः किंचिदर्थान्तरम् । तथेहापीति । उच्यते । युक्तं पौर्णमास्यां तथाभावः । चोदनासमुदायो हि तत्र कर्म । न च कर्मसाध्यं विद्यते । इह तु द्रव्यान्तरमस्तीति युक्तम् । तस्माद्वैषम्यं पौर्णमास्येति ॥ २८ ॥

( द्वादशाहे, उत्तमाहवर्जं पत्नीसंयाजान्तत्वाधिकरणम् ॥ ८ ॥ )

[ ८ ] पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ॥ २९ ॥ पू०

अस्त्यहर्गणः, द्वादशाहेन प्रजाकामं याजयेदिति । तत्र श्रूयते । पत्नीसंयाजान्तान्यहानि संतिष्ठन्त इति । तत्रायमर्थः सांशयिकः । किं सर्वेषामह्नां पत्नीसंयाजान्तत्वमुत प्रागुत्तमादिति । दशमं वर्जयित्वा संदेहः क्रियते । तस्य हि मानसान्तता वचनेनोक्ता । किं

---

व्यान्तरबुद्धिर्न विपर्येति ॥ २७ ॥ २८ ॥

---

'पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते' इत्यविशेषश्रवणात्सर्वेषां पत्नीसंयाजान्तता । न तु गम्यते विशेषः । 'असंस्थितो हि तर्हि यज्ञः' इति यत्रासंस्था तत्र पत्नीसंयाजान्तता । अन्त्ये चाहनि संतिष्ठते, तत्र पत्नीसंयाजान्तता न भवति । हेतुसामर्थ्यात् ।

---

× पक्कामसंयोगेऽपीति—अपिना 'पक्वामसंयोगे न द्रव्यान्तरम्' इति गौतमीयवचनं निर्मूलत्वादप्रमाणमिति सूचितं ज्ञेयम् ।

तावत्प्राप्तम् । सर्वेषामह्नामिति । कुतः । अविशेषात् । अविशेषेणोच्यते, पत्नीसंयाजान्तान्यहानि संतिष्ठन्त इति । न च कश्चिद्विशेष आश्रीयते । तस्मात्सर्वेषामिति ॥ २९ ॥

लिङ्गाद्वा प्रागुत्तमात् ॥ ३० ॥ सि०

वाशब्दः पक्षव्यावृत्तौ । प्रागुत्तमादह्नः पत्नीसंयाजान्तता स्यात् । कुतः । लिङ्गात् । लिङ्गं भवति । पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते, न बर्हिरनुप्रहरति, असंस्थितो हि तर्हि यज्ञ इति । यस्मिन्नहन्यसंस्थितो यज्ञस्तस्मिन् पत्नीसंयाजान्ततां दर्शयति । कथम् । हेत्वर्थेनासंस्था निर्दिश्यते । यस्मादिमान्यसंस्थितान्यहानि, तस्मादेषु पत्नीसंयाजान्ततेति । संस्थितिश्चान्त्येऽहनि । अपि च, येष्वहःसु पत्नीसंयाजान्तता, तेष्वसंस्था दृश्यते कीर्त्यमाना । तस्मादसंस्थायाः पत्नीसंयाजान्ततायाश्च सामानाधिकरण्यम् । असंस्थां च प्रागुत्तमाद्दृष्ट्वा प्रागुत्तमादेव पत्नीसंयाजान्ततामध्यवस्यामः ॥ ३० ॥

अनुवादो वा दीक्षा यथा नक्तं संस्थापनस्य ॥ ३१ ॥

वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति । प्रागुत्तमात्पत्नीसंयाजान्तता स्यादिति । किं तर्हि । सर्वेषामविशेषात् । यदुक्तं, येषु पत्नीसंयाजान्तता, तेष्वसंस्था दृश्यते । तस्मादसंस्थायाः प्रागुत्तमादह्नां पत्नीसंयाजान्ततां नियच्छाम इति । नैतदेवम् । न हीदं विधिमूलं दर्शनम् । नान्यप्रमाणमूलम् । अतो मृगतृष्णारूपमेतद्दर्शनम् । यदप्यसंस्था हेतुरिति, तदपि न स्यात् । उक्तं हि—स्तुतिस्तु* शब्दपूर्वत्वादिति । न च सामानाधिकरण्यमसंस्थापत्नीसंयाजान्ततयोः । पत्नीसंयाजान्तता सर्वेषामह्नां शब्देन गम्यते । असंस्था पुनर्न्यायेन

---

नैतदेवम् । वचनात्सर्वेषां पत्नीसंयाजान्तता प्राप्यमाणा वचनान्तरेण विना कथं शक्या विशेषेऽवस्थापयितुम् । यदुक्तं हेतुसामर्थ्याद्यत्रासंस्था तत्र पत्नीसंयाजान्ततेति । उच्यते । हेतुवचनं पत्नीसंयाजान्तत्वस्तुत्यर्थं भविष्यति । चिरेण संस्थामालोच्य स्तुतिः ॥ २९ ॥ ३० ॥३१॥

---

(अ० १ पा० २ अ० ३ सू० २७) ।

प्रागुत्तमादह्नः। यदेतदसंस्थितो हि तर्हि यज्ञ इति। अर्थवाद एष पत्नीसंयाजान्ततास्तुत्यर्थः।

तथा हि। असंस्थितो यज्ञश्चिरेण संस्थास्यत इत्यालोच्यते। यस्माच्चिरेण संस्थास्यते तस्मादवलुप्यतां, पत्नीसंयाजान्तान्यहानि भवन्त्विति। संतिष्ठमानेष्वेवाहःसु, असंस्थावचनं पत्नीसंयाजान्तताप्रशंसार्थम्। संस्थावन्ति हि तान्यहानि। अवभृथादय एषां शेषाः पदार्थाः करिष्यन्ते। यथा, दीक्षोन्मोचनवचनं नक्तं संस्थापनस्यार्थवादः। एवमेतद्द्रष्टव्यम्। वरुणपाशाभ्यां वा एषोऽभिधीयते यो दीक्षितः। अहोरात्रे वै वरुणपाशौ। यद्दिवा संस्थापयेदनुन्मुक्तो वरुणपाशाभ्यां स्यात्। नक्तं संस्थाप्यो वरुणपाशाभ्यामेवोन्मुच्यते, आत्मनोऽहिंसाया इति। अनुन्मुक्तः स वरुणपाशाभ्यां, न तावद्दीक्षया मुच्यते। अवभृथो हि दीक्षोन्मोचनार्थः। अथवोच्यते। वरुणपाशाभ्यामिव निर्मुच्यत इति बहवो नियमास्तदानीं विसृज्यन्ते, यानालोच्य एष वादो भवति। एवमिहापि चिरेण संस्थामालोच्यासंस्थितवचनं भवतीति॥ ३१॥

स्याद्वाऽनारभ्यविधानादन्ते लिङ्गविरोधात्॥ ३२॥

वाशब्दात्पक्षो विपरिवर्तते। भवेद्वा प्रागुत्तमात्पत्नीसंयाजान्तता। न ह्यारभ्योत्तममहः, एष विधीयते। कथं तर्हि। सामान्येन, पत्नीसंयाजान्तान्यहानि भवन्तीति। तत्रान्ते लिङ्गविरोधो भवति। का पुनर्न्यायेन प्राप्तिरिति। पत्नीसंयाजान्तान्यहानि संतिष्ठन्त इति, नैतदुक्तं भवति, शिष्टमवलुप्यन्त इति। संतिष्ठन्ते नानुष्ठीयन्त इति। कर्तृव्यापार एषूपरमतीति। तेषु सह क्रियमाणेष्वहःसु, अवश्यं क-

---

भावयेत्प्रजाः। केन द्वादशाहसंज्ञकेन। तत्र, 'संख्या+ कर्मभेदः' इत्यनेन न्यायेन द्वादश यागा एते। अहःशब्दो यागसामानाधिकरण्यात्कर्मेह ब्रवीति। प्रकृतौ चानेनाहःशब्देनोपांश्वादिहारियोजनपर्यन्तो यागः परिच्छिन्नः। इहाप्येवं द्रष्टव्यम्। तत्र द्वादश यागाः सह फलेन चोदितत्वात्सह कर्तव्याः।

---

+ ( अ० २ पा० २ अ० ७ सू० २० )।

स्मिंश्चित्पदार्थेऽवस्थायावश्यमपरस्याह्नः पदार्था अनुष्ठातव्याः । तत्रानियमे प्राप्ते पत्नीसंयाजान्ते संस्थाप्यमिति× नियम्यते । तस्यावस्थानस्यैतत्प्रयोजनं, कथमहरन्तरस्य पदार्थानुष्ठानेन यौगपद्यमनुगृह्येतेति । एतद्धि दृष्टमवस्थानकार्यम् । यस्मिन्नेतद्दृष्टं, न शक्यं कल्पयितुं तत्रादृष्टम् । तत्र न पत्नीसंयाजान्तता । तच्चान्त्यस्य प्रयोजनं न विद्यते । तस्मात्प्रागन्त्यात्पत्नीसंयाजान्ततेति न्यायेन प्राप्ते लिङ्गदर्शनम्, असंस्थितो हि तर्हि यज्ञ इति ॥ ३२ ॥

( सामिधेन्यां त्रिरभ्यासस्य प्रथमोत्तमस्थानधर्मत्वाधिकरणम् ॥ ९ ॥ )

[ ९ ] अभ्यासः सामिधेनीनां प्राथम्यात्स्थानधर्मः स्यात् ॥ ३३ ॥ सि०

स्तो दर्शपूर्णमासौ । तत्र सामिधेनीः प्रकृत्योच्यते, त्रिः प्रथमामन्वाह, त्रिरुत्तमामन्वाहेति । तत्रैषोऽर्थः सांशयिकः । किम् ऋग्धर्म एषः, यत्र तत्रस्था, प्र वो वाजा त्रिरभ्यसितव्या, उत स्थानधर्मः, याऽन्याऽपि प्रथममुच्यते सा त्रिरभ्यसितव्येति । कुतः संशयः । उभयथोपपत्तेः । यद्येवमभिसंबन्धः क्रियते, याऽसावुच्चारितानां सामिधेनीनां प्रथममुच्चारिता, सा त्रिरभ्यसितव्येति । ततः, प्र वो वाजाया ऋचो धर्मः । अथैवं विज्ञायते, प्राथम्यसंयुक्तं त्रिर्ब्रूयादिति, ततो वचनस्य स्थानधर्मता ।

---

तेषामग्नीषोमीयाद्येतिकर्तव्यता साऽगृह्यमाणविशेषत्वात्तन्त्रेण कर्तव्या । अवभृथादीन्यपि तन्त्रेणैव । ये संनिपत्योपकारकास्त÷ आवर्तन्ते । सहप्रयोगात्कस्मिंश्चिदनियमेनावस्थाने प्राप्ते पत्नीसंयाजान्तता नियम्यते । तत्रान्त्य उत्तरस्य यागस्याभावादवस्थानं नास्त्यनियमेन । अनियमस्याभावान्नियमोऽपि नास्ति । न चैतद्वाक्यं क्वचिन्नियमपरं, क्वचिदपूर्वविधिपरम् । विवक्षाभेदात् । अपि च, यस्य नियमार्थं तस्य दृष्टोऽर्थः । यस्यावलोपस्तस्यानाकाङ्क्षितत्वाददृष्टोऽर्थः । तस्मात्प्रागुत्तमात्पत्नीसंयाजान्तता नियम्यते ॥ ३२ ॥

---

× संस्थातव्यमिति–पा० । * उच्चरितानां–पा० । ÷ संनिपत्योपकारका इति–इदं च तत्तदहर्मध्यगतानां सवनीयादीनामाराद्‌उपकारकाणामप्युपलक्षणं ज्ञेयम् ।

किं तावत्प्राप्तम् । ऋचो धर्म इति । कुतः। प्राथम्यस्य व्यक्त्या संबन्धात् । व्यक्तेरभ्यासेन । कथमवगम्यते । स्त्रीलिङ्गनिर्देशात् । व्यक्तिविशेषो हि स्त्री नाम । यदि तद्विशेषणं प्राथम्यं स्यात्ततो लिङ्गविशेषनिर्देशोऽवकल्पते । साऽपि स्त्री, अभ्यासेन संभन्त्स्यते । अथ प्रथममनुब्रुवता त्रिरभ्यसितव्यमिति, ततो व्यक्तिविशेषो न विवक्ष्येत । तत्र स्त्रीलिङ्गविशेषनिर्देशो नोपपद्यते । अपि च, वाक्यभेदः प्रसज्येत । प्रथममुक्तं त्रिरभ्यसितव्यं, प्रथममुक्ता ऋक् त्रिरभ्यसितव्येति । मत्पक्षे पुनः प्राथम्यलक्षिताया ऋचो धर्म उच्यते । तत्रैकार्थविधाने न भवेद्वाक्यभेदः । अपि च श्रुत्या प्राथम्येन स्त्री संबध्यते । वाक्येनाभ्यासः । तस्मादृग्धर्मो यत्र तत्रस्था, प्र वो वाजा त्रिरभ्यसितव्येति ।

एवं प्राप्ते, ब्रूमः । योऽयं सामिधेनीनां प्रथमायास्त्रिरभ्यास उच्यते स प्रथमस्थाननिमित्तो धर्मो, न ऋचः कस्याश्चिज्जातिनिमित्तः । कुतः । न हि कृत्स्नेऽपि ऋग्वेदे प्रथमा नाम काचिदृग् विद्यते, या त्रिरभ्यस्येत । तत्र प्राथम्यमृग्लक्षणार्थं स्यात् । इतरस्मिन् पक्षे श्रुतिर्न लक्षणा । श्रुतिश्च ज्यायसी लक्षणायाः । तस्मादस्मत्पक्षः । अथ यदुक्तं, स्त्रीलिङ्गसंबन्धादस्मत्पक्ष एव श्रुतिः । वाक्यं च न भिद्यते । स्त्रीलिङ्गोपपत्तिश्चेति ।

अत्रोच्यते । गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्तीत्यविशेष्यमाणायामपि व्यक्तौ यदवश्यं प्राप्तं लिङ्गं, तदाश्रयभूतं गुणस्य भवति । अविधित्सितेऽपि तस्मिँल्लिङ्गविशेषनिर्देशोऽनुवादभूतो भवत्येव । यथा, शुक्लः पुमान् , शुक्ला स्त्री, शुक्लं नपुंसकम् । शुक्ल एकः, शुक्लौ द्वौ, शुक्ला बहव इति । शुक्लां शाटीमानयेति । यद्यपि शाट्याद्यानयनं न विधीयते, शुक्लसंबन्धमात्रविधित्सा भवति, न तत्र लिङ्गेन विशेषणं क्रियते । तथाऽप्यनुवादभूतः स्त्रीलिङ्गनिर्देशो भवत्येव, शुक्लामानयेति । अनुवादभूतत्वाच्च न वाक्यभेदो भविष्यति । एवं च सति, यद्यपि प्राथम्यस्य स्त्रीलिङ्गसंबन्धः श्रौतस्तथाऽपि प्राथम्यस्यैवाभ्यासेन संबन्धो न लिङ्गस्य । यदि लिङ्गस्यैतेन संबन्धोऽ-

भिधीयते, प्राथम्यस्यानुवादता कल्प्येत। प्राथम्यसंबन्धेऽप्यभिधीयमाने वाक्यं भिद्येत।

अपि च, नैवात्र विवक्षितव्यम्। प्रातिपदिकविशेषणं हि स्त्रीशब्दः। स्त्रियां यत्प्रातिपदिकं वर्तते, ततष्टाबादय इति। न विशेषणस्य पदान्तरेण संबन्धो भवति। यथा राजपुरुषो गच्छतीति। यदा तु प्राथम्यस्याभ्यासेन संबन्धः, तत्र प्राप्तमनूद्यते स्त्रीत्वम्। यानि सामिधेनीषु वचनानि, ऋचस्ताः। स्त्रीलिङ्गश्च ऋक्शब्दः। तत्र यत्प्रथमं वचनं, तस्याऽऽश्रय ऋक्। गुणवचनानां च शब्दानामाश्रयतो लिङ्गवचनानि भवन्तीत्यविशेषितायामप्यृचि स्त्रीलिङ्गं भविष्यतीति। यत्प्रथमवचनं, तत्त्रिराहेति। स्त्री च सा ऋक् सामिधेनी। तस्मात्, त्रिः प्रथमामन्वाहेति प्राप्तस्य लिङ्गस्यानुवादः। त्रिः प्रथमामन्वाह, त्रिरुत्तमां, ताः पञ्चदश संपद्यन्ते, इति पञ्चदशानां सामिधेनीनां संपत्तये त्रिर्वचनमुच्यमानं परिपूर्णाया ऋचो भवति, न ऋगवयवस्य। परिपूर्णा च समिन्धनवती, न ऋगवयवः। तस्मात्प्राप्तानुवादो लिङ्गस्येति प्राथम्यस्य धर्मो न ऋचः॥ ३३॥

( दर्शपूर्णमासयोरन्वारम्भणीयायाः सकृदनुष्ठानाधिकरणम् ॥ १०॥ )

[ १० ] इष्ट्यावृत्तौ प्रयाजवदावर्तेताऽऽरम्भणीया ॥ ३४ ॥ पू०

स्तो दर्शपूर्णमासौ, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति। तत्राऽऽरम्भणीयेष्टिः समाम्नाता। आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वत्यै चरुं, सरस्वते द्वादशकपालम्, अग्नये भगिनेऽष्टाकपालं निर्वपेद्यः कामयेतान्नादः स्यामिति। नित्यवदेके भगिनमामनन्ति। आवृत्तिश्च दर्शपूर्णमासयोः श्रूयते, यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति। तत्रेष्ट्यावृत्तौ संदेहः। किमारम्भणीयाऽप्यावर्तते, नेति।

---

[॥ ३३ ॥]

---

'अपि वाऽप्येकदेशे= स्यात्' इति यावज्जीविके प्रयाजादीतिकर्तव्यता भवतीत्युक्तम्। प्रथमपदार्थद्वारेण श्रूयमाणा दर्शपूर्णमासाङ्गमारम्भणीया। सा

---

=( अ० ६ पा० ३ अ० १ सू० २ )।

किं प्राप्तम्। आवर्तेतेति। असकृदेव कर्तव्येति। कुतः। एवं प्रयोगवचनोऽनुगृहीतो भविष्यति। प्रयाजवत्। यथाऽङ्गभूताः प्रयाजा आवर्तन्त एवमङ्गभूताऽऽरम्भणीयाऽप्यावर्तेत॥ ३४॥

सकृद्वाऽऽरम्भसंयोगादेकः पुनरारम्भो याव-
ज्जीवप्रयोगात्॥ ३५॥ सि०

वाशब्दः पक्षं व्यावर्तयति। नैतदस्ति, यदुक्तमारम्भणीयाऽऽवर्तेतेति सकृदेव कर्तव्या। कुतः। आरम्भसंयोगात्। दर्शपूर्णमासयोरारम्भेण संयुज्यते। साधारणश्च सर्वेषां प्रयोगाणामारम्भः। कथम्। अग्नीनाधाय सर्वः संकल्पयति। पर्वणि पर्वणि मया दर्शपूर्णमासौ कर्तव्याविति। एवं चाध्यवसाय दर्शपूर्णमासौ कर्तव्यावित्यारम्भ-

किं प्रतिप्रयोगं कर्तव्येत सर्वप्रयोगे सकृदिति। किं प्राप्तम्। प्रतिप्रयोगं कर्तव्येति। कुतः। इतिकर्तव्यता हि प्रयोगाङ्गम्। प्रयोगस्य च भेदः×। तस्मादावर्तते॥ ३४॥

---

सकृद्वा कर्तव्या÷। कुतः। आधानं कृत्वा सर्वः संकल्पयति, मया यावज्जीवं दर्शपूर्णमासौ कर्तव्यावागत आगते काले। स च संकल्पः सर्वेषां प्रयोगाणामगृह्यमाणविशेषत्वात्साधारणः। संकल्पश्च पूर्वावस्थां= बाधमानोऽध्यवसानम्। अध्यवसानं च पदार्थः+। स च सर्वेषां साधारण इत्युक्तम्। तस्मात्सकृत्कर्तव्या। अत्र ग्रन्थः। अथापि प्रथमं प्रवर्तनमारम्भस्तथाऽप्यारम्भणीयाप्रवृत्तेन सर्वे प्रयोगाः कृता भवन्तीति।

नैतद्युक्तम्*। कथम्। कालो निमित्तम्। स कर्म प्रयोजयति। प्राक् पौर्णमासकालात्कर्म न प्रयुज्यते। निमित्ताभावात्। तच्च निमित्तमेकमेव प्रयोगं प्रयोजयति। पुरुषश्च पूर्वावस्थामौदासीन्यं चोज्झित्वा ततः× संकल्पमध्यवसानं

× भेद इति—आवृत्तिरित्यर्थः। ÷ कर्तव्यता—पा०। = पूर्वावस्थामिति—औदासीन्यरूपामवस्थामित्यर्थः। + पदार्थः—आरम्भपदार्थः। * भाष्यकारीयं वर्णकान्तरं पूर्ववर्णकेऽपरितोषादिति दर्शयितुं प्रथमवर्णकं तावद्दूषयति—नैतद्युक्तमित्यादिना। × तत इति—निमित्तवशादेवेत्यर्थः।

णीया क्रियते । एष एवास्याऽऽरम्भो यदध्यवसानं नाम । तच्च साधारणं सर्वेषां प्रयोगाणाम् । यावज्जीवप्रयोगात् । अथापि प्रथमं प्रवर्तनमारम्भस्तथाऽपि प्रथमप्रवृत्तेन सर्वे प्रयोगाः कृता भवन्ति । तस्मात्सकृदारम्भणीया कर्तव्येति ॥ ३५ ॥

एवं* वा—

इष्ट्यावृत्तौ प्रयाजवदावर्तेताऽऽरम्भणीया ॥ ३४ ॥

यस्तु प्रथमः पदार्थ आरम्भ इति, तत्रैष संशयः । किं दर्शपूर्णमासयोरारभ्यमाणयोरारम्भणीया प्रथमं पदार्थं सम्यञ्चं करोति, उत पुरुषस्याऽऽरभमाणस्य प्रथमं दर्शपूर्णमासयोः प्रवर्तमानस्याऽऽरम्भणीया कर्तारमारम्भणयोग्यं करोति । किं प्राप्तम् । दर्शपूर्णमासयोः प्रकरणान्तयोरारम्भे स्यात् । पुरुषसंबन्धे फलं कल्पयितव्यम् । तस्माद्दर्शपूर्णमासारम्भे । एवं चेदारम्भभेदादिष्ट्यावृत्तौ प्रत्यारम्भं स्यात् । यथा प्रयोगावृत्तौ प्रयाजाः ॥ ३४ ॥

सकृद्वाऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् ॥ ३५ ॥ सि०

---

करोति । अध्यवसानं संकल्पो वैकस्यैव प्रयोगस्य, न द्वितीयादेः । निमित्ताभावात् । अपि चेतिकर्तव्यता प्रयोगेण प्रयुज्यते, न कर्मणा । प्रयोगभेदाच्च भेदस्तस्याः । यदि च कर्मणा प्रयुज्येत, तथा सति प्रयाजादीनामपि कर्मैकत्वात्सकृदेव प्रयोगः स्यात् । न चैतदिष्टम् । यदुक्तमाधानं कृत्वा सर्वः संकल्पयति, पर्वणि पर्वणि मया दर्शपूर्णमासौ कर्तव्याविति । स च संकल्पः सर्वप्रयोगाणामगृह्यमाणविशेषत्वादिति* ।

तत्रोच्यते । सर्वप्रयोगाणां संकल्प एव न प्राप्नोति । निमित्ताभावादित्युक्तम् । नन्वाधानानन्तरं सर्वसाधारण एव संकल्पो भवति । विद्वांश्चाधिक्रियते× । स जानाति, नित्यानि कर्माणि मया कर्तव्यानि, काम्यानि फलार्थे-

---

* एवं तावद्वृत्तिकारमतेनाधिकरणमुपवर्ण्य स्वमतेनाधिकरणं प्रकारान्तरेणोपवर्णयति—एवं वेत्यादिना । * सर्वप्रयोगाणामिति—अङ्गमिति शेषः । कुतः । अगृह्यमाणविशेषत्वादित्यर्थः । × नन्विति शङ्कां समाधत्ते—विद्वांश्चाधिक्रियत इत्यादिना ।

सकृद्वा भवितुमर्हति । कुतः । पुरुषारम्भसंयोगात् । पुरुषे दर्शपूर्णमासावारभमाणे विधीयते । कुतः । निर्वपेदिति हि श्रुत्या कर्तृसंबन्धः क्रियते । तत्र पुरुषप्रयत्नवचनं विवक्षितस्वार्थं भवति । इतरथा पदार्थमात्रे विधित्सिते कर्तुः प्रयत्नवचनमविवक्षितं स्यात् ' प्रयोगवचनप्राप्तमेवानूद्यते । यत्तु, कर्तृसंबन्धे फलं कल्पयितव्यम् । तन्न कल्पयिष्यते । कृतारम्भणीयाकः पुरुषः प्रयोगवचनेन ग्रहीष्यते। एवं चेदेकस्मिन्नेवाऽऽरम्भे कृतारम्भणीयाके कृते पुरुषे तन्त्रप्रयोगात्, यावज्जीवं प्रयोगे कृतारम्भणीयाकः पुरुषो भवति । प्रथमं दर्शपूर्णमासावारभमाणः कृतारम्भणीयाको जातः । द्वितीयादिष्वपि प्रयोगेषु दर्शपूर्णमासावारप्स्यमानः कृतारम्भणीयाको जात इति योग्य एव भविष्यति ।

---

नेति । योऽस्याऽऽधानादुत्तरकालं, स संकल्प इव न प्रयोगाङ्गम् । तस्मादिदमशोभनम् । अतोऽन्यत्क्रियेत ॥ ३५ ॥

---

' दर्शपूर्णमासावारप्स्यमानः ' इति शानजारम्भकर्तारमभिधत्ते । तत्र संदेहः । किमारम्भो दर्शपूर्णमासाद्यं पदार्थमभिधत्ते, किं वाऽप्रवृत्तस्याऽऽद्यं प्रवर्तनम् । पूर्वपक्षवादी मन्यते, यद्ययं कर्तारमभिधत्ते, तथा सति फलकल्पना प्राप्नोति । यच्चाद्यादारम्भणीया न पुरुषार्था । किं तर्हि । क्रत्वर्था । तथा च प्रतिप्रयोगमावर्तेत ॥ ३४ ॥

---

सिद्धान्तस्तु । दर्शपूर्णमासारम्भयोग्यं पुरुषं कुर्वती क्रतुना गृह्यते । अपि च, यः शानचा पुरुष उपात्तस्तस्य विपरिवर्तमानस्य निर्वपेदित्यारम्भणीया तदर्था श्रुत्या प्रतिपाद्यते । इतरथा शानजनर्थकः स्यात् । निर्वपेदित्यनुच्चारितेऽप्यन्वारम्भणीया× क्रत्वर्था भवत्येव । महाप्रयोगवचने यो भावनावचनस्तेन

---

× निर्वपेदित्यनुच्चारितेऽपीति—' अन्वारम्भणीयामिष्टिं निर्वपेत ' इत्येतावतैव, अनुच्चरितेऽपि ' दर्शपूर्णमासावारप्स्यमानः ' इति शब्दे भवत्येवाऽऽरम्भणीया क्रत्वर्थेत्यर्थः ।

**अथोच्यते। समानेऽहनि, आरप्स्यमान इति भवति। न च द्वितीयादिषु प्रयोगेषु समानेऽहनि कृतारम्भणीयाकोऽसाविति। अत्रोच्यते। द्वितीयाष्वपि प्रयोगेषु समान एवाहनि दर्शपूर्णमासावार-**

---

विधानं भविष्यति। सा च बहिःप्रयोगात्क्रियमाणा पुरुषमारम्भयोग्यं करोति। तस्य× चैकत्वान्न ज्ञायतेऽस्यायं प्रयोगस्य योग्योऽस्य नेति। अगृह्यमाणविशेषत्वात्सर्वप्रयोगाणाम्। यदि तन्त्रमध्ये क्रियते, तथा सति यस्य तन्त्रं तस्यैव योग्यं करोति, नान्यस्येति। ननु लृटः समानेऽहन्युत्पद्यमानत्वाद्यस्यैव समानेऽहनिप्रयोगस्याऽऽरम्भणीया क्रियते, तस्यैव पुरुषं योग्यं करोतीति गृह्यते विशेषः।

उच्यते। द्वितीयादिष्वपि प्रयोगेषु समान एवाहनि दर्शपूर्णमासावारप्स्यमानोऽसौ कृतारम्भणीयाको जात इति योग्य एव भविष्यतीत्यनेन निराकरोति+। समानेऽहनि* लृडुत्पद्यत इत्येतन्न युज्यते। भविष्यत्कालसामान्ये लृडुत्पद्यते। ननु लुटाऽनद्यतनकालोत्पन्नेनायं बाध्यते। नैतद्युक्तम्। यदि लुडनद्यतने विधीयमानो लृटमबाधमान आत्मानं न प्रतिलभते ततो बाधेतापि। अयमबाधमानोऽप्यात्मानं लभते। तस्मान्न बाधते। तस्माल्लृडनद्यतनेऽद्यतने च भविष्यति काले भवति। लुट्प्रत्ययस्त्वनद्यतन एव।

न च 'सोमेन यक्ष्यमाणः' इत्यनेनैतत्तुल्यम्। यत्राऽऽधानं कृत्वा सोमेनान्यैश्च यक्ष्यते, तत्र 'सोमेन यक्ष्यमाणोऽग्निमादधीत' इति यद्येतदानन्तर्यं न कुर्यात्ततोऽनर्थकमेव स्यात्। तस्मादनेनाऽऽनन्तर्यं विधीयते। यद्यदि लृट् सामान्येनोत्पन्नस्तथाऽपि सोमाधानानन्तर्यसामर्थ्यादद्यतने कल्प्यते, प्रमाणान्तरवशात्। इह तु नास्ति प्रमाणं, येनाद्यतने कल्प्येत। तस्मात्सामान्येनोत्पद्यते अथवा, दर्शपूर्णमासौ निमित्तभूतौ श्रूयेते आरम्भसंयुक्तौ। तत्र समानेऽहनि दर्शपूर्णमासावारम्भणीयासंयुक्तौ कर्तव्यौ। एवमारम्भद्वारेणाऽऽरम्भणीयां प्रथमः प्रयोगोऽपेक्षते। द्वितीयादयश्चैवमेव। तत्र बहिःप्रयोगात्क्रियमाणायां योऽसौ दर्शपूर्णमासारम्भाद्यतनकालः स सर्वेषु विद्यते। किं दर्शपूर्णमासावारभमाणेनान्वारम्भणीया न कृता, येन पुनः क्रियेत। न च प्रयोगोऽद्यतनेनापेक्षितः, दर्श-

---

× तस्य चैकत्वादिति--आरम्भस्यैकत्वादित्यर्थः। + निराकरोति--भाष्यकार इत्यर्थः। * स्वयमन्यथा चोद्यपरिहारमाह-समनेऽहनीत्यादिना।

प्स्यमानोऽसौ कृतारम्भणीयाको जात इति योग्य एव भविष्यति ॥ ३५ ॥

( निर्वापमन्त्रे सवित्रादिपदानामसमवेतार्थानां विकृतावनूहा-
धिकरणम् ॥ ११ ॥ )

[ ११ ] अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्त-
त्राचोदितमप्राप्तं चोदिताभिधानात् ॥ ३६ ॥ सि०

स्तो दर्शपूर्णमासौ । तत्र निर्वापमन्त्रः । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति । तत्रैषोऽर्थः सांशयिकः । किं सवित्राश्विपूषशब्दानां विकृतावूह उतानूह इति । तत एतत्तावत्परीक्ष्यते । कर्माणि समवेतमर्थमेते शब्दा अभिदधाति, उतासमवेतमिति । यदि समवेतम् । ऊहिष्यन्ते । अथासमवेतम् । अविकृताः प्रयोक्ष्यन्ते । तदुभयमपि सह परीक्ष्यते ।

---

पूर्णमासशब्दश्रवणात् । तस्मात्सकृत्कर्तव्या । एवं च काम्ये* क्वचिन्नैव कर्तव्या, प्रयोगमात्रभेदात् , कर्मणो भेदाभावात् ॥ ३५ ॥

---

उपोद्घातप्रसक्तानुप्रसक्तादि वृत्तम् । इहेदानीमूहश्चिन्त्यते= । किं सवित्रादिशब्दा विकृतावूहितव्या उत नेति । ऊहितव्याः । कुतः । सवित्रादिशब्दा अर्थप्रकाशका× यदि श्रुतिवृत्तास्ततो दृष्टार्थाः स्युः । प्रकाशनद्वारेण मन्त्रस्यापेक्षितत्वात् + । यदि लक्षणयाऽग्निमभिवदन्ति ततो दृष्टार्था भवन्ति । अथवा÷ सवित्रादिभिर्मुख्य एवार्थः प्रत्याय्यते, तथाऽपि समवेतवचनाः । कथम् । भिन्नत्वान्मन्त्राणाम् । मान्त्रवर्णिको देवताविधिर्दर्शपूर्णमासयागेष्वग्न्यादिभिर्वैकल्पिको भविष्यति ।

---

* काम्ये—दर्शपूर्णमासप्रयोग इति शेषः = ऊहश्चिन्त्यत इति—साक्षादिति शेषः ।

* अर्थप्रकाशका इति —मन्त्राधिकरणन्यायादिति शेषः । × अपेक्षितत्वादिति—क्रतुनेति शेषः ÷ यदि लक्षणया सवित्रादिपदैरग्निः प्रकाश्यते, तर्हि सौर्यादिविकृतावपि लक्षणयैव सूर्यादिप्रकाशनोपपत्तेरूहपूर्वपक्षो न सिध्येदित्यपरितुष्य पक्षान्तरमाह—अथवेत्यादिना ।

किं तावन्नः प्रतिभाति । तत्र समवेतमभिवदन्तीति । कुतः । एतद्धि मन्त्रपदानां दृष्टं प्रयोजनं, यत्समवेतमर्थं प्रकाशयन्तीति । तत्रासमवेतार्थप्रकाशने न किंचिदपि दृष्टं प्रयोजनम् । समवेतानां तु प्रकाशने दृष्टमस्ति । तद्यदि समवेताभिधायिन एते शब्दास्ततः प्रयोजनवन्तः । कथं पुनः समवेताभिधायिनः । यदि नाम सवित्रादयः शब्दा अग्न्यादीनां वाचका भवेयुः । यदि वा सवित्रादयो देवताविशेषा दर्शपूर्णमासयोः स्युः । तन्मन्त्रपदानामदृष्टार्थता मा भूदित्यन्यतरदप्यवसीयते, मान्त्रवर्णिको वा देवताविधिः । सवित्रादयो वा शब्दा अग्न्यादीनां वाचका भवेयुः । तस्मादर्थवत्त्वादन्यतरदध्यवसेयम् ।

अत्राऽऽह । ननु, अग्नये जुष्टमित्यत्रावयवभूताः सवित्रादयोऽग्न्यादीनां वचना अपि सन्तोऽग्न्यादिभिः प्रकाशिताया देवताया न किंचिदप्यधिकं कुर्युः । नो खल्वपि सवित्रादिवचना एव मान्त्रवर्णिकाः शक्नुवन्त्युपकर्तुम् । अत्रोच्यते । पृथग्वाक्यान्येतानि भविष्यन्ति । तेषां जुष्टं निर्वपामीति साधारणोऽनुषङ्गः । तानि वाक्यानि दर्शपूर्णमासयोर्गुणभूतानि । यद्येतद्दैवत्यान्यत्र हवींषि विद्यन्ते, ततोऽवकल्पन्त इत्यर्थापत्त्या मान्त्रवर्णिकयो देवता विधीयन्ते । अग्न्यादिवचना वा सवित्रादीनाम् । पृथग्वाक्यानि वाऽग्निवाक्येन वैकल्पिकानीति ।

---

अत्र केचिदाहुः—मान्त्रवर्णिकेन देवताविधानेन न शक्यन्तेऽग्न्यादयो देवता बाधितुं, विषमशिष्टत्वात् । तस्मात्सवित्रादिमन्त्रवर्णैर्यागान्तराणि कल्प्यन्ते । तेषु मुख्याश्च समवेतवचनाश्चेति । नैतद्युक्तम् । एवं सति यागान्तरत्वात्प्रयाजतुल्याः । तत्र चोदकेनातिदिष्टानामप्यविकारः स्यात् । तथा प्रयाजानाम् । तत्र पूर्वपक्षोत्तरपक्षयोः सह न कश्चिद्विशेषः । तस्मात्स एव पक्षो यत्रोहः सिध्यति ।

एवं प्राप्ते—लोके सवित्रादयोऽग्न्यादिवचना न प्रसिद्धाः । न च गुणेनाग्न्यादीनभिधातुं* समर्थाः । यत्र परशब्दसामानाधिकरण्यं तत्र गुणेन× परशब्दः परत्र

---

* गुणेनेति—गुणवृत्त्याश्रयणेनेत्यर्थः । ×. गुणेचेति—निमित्तेनेत्यर्थः ।

एवं प्राप्ते, ब्रूमः। नैवमादीन्यूहितव्यानीति। अचोदित ऊहो न प्राप्नोति। चोदिताभिधानान्मन्त्रस्येति। तत एतद्वर्ण्यते। असमवेताभिधायिनः सवित्रादय इति। कथम्। न ह्यत्र सवित्रादिदेवत्यं कर्म चोद्यते। न चाग्न्यादीनामर्थेषु सवित्रादयः शब्दाः प्रसिद्धाः अत्राऽऽह। नन्वर्थापत्त्याऽन्यतरदध्यवसीयेतेत्युक्तम्। सति, एतद्देवत्ये कर्मणि सवित्रादिवाक्यान्युपपद्यन्ते। अग्निवचनत्वे वा सति। या हविषो देवता, सा मन्त्रवचनेन प्रकाशयितव्या। सवित्रादयश्च शब्दा निर्वापवाक्ये प्रकाशनार्थाः। ते हविर्देवता प्रकाशयन्त उपपद्यन्ते, नान्यथेति। अग्न्यादयश्च हविर्देवता इति तद्वचना इत्यध्यवसीयते।

अत्रोच्यते। यद्यकल्प्यमान आनर्थक्यमेषां स्यात्ततोऽन्यतरत्कल्प्येत। अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावो भवतीति। न त्वेवमकल्प्यमानेऽप्यानर्थक्यम्। तस्मान्नान्यतरस्यापि कल्पने किंचिदस्ति प्रमाणम्। न च चोद्यन्त एतच्छब्दिका देवताः। तत्राचोदितमप्राप्तमूहं, चोदिताभिधानात्॥ ३६॥

अथ यदुक्तं, प्रत्यायकेन शब्देन प्रकाश्यन्ते देवताः। तत्राप्यश्रुतानां प्रकाशने न किंचिदस्ति प्रयोजनमिति। तत्परिहर्तव्यम्। अत्रोच्यते—

ततश्चावचनं तेषामितरार्थं प्रयुज्यते॥ ३७॥

ततश्च—तेन कारणेन, अश्रुतानां वचनं न क्रियते सवित्रादिभिः शब्दैः। केन तर्हि कारणेन क्रियते। इतरार्थं प्रयुज्यते। निर्वापस्तुत्यर्थम्। देवस्य सवितुः प्रसवे—देवेन सवित्रा यजमानेन प्रसूते, उ-

---

वर्तते। न चेह सामानाधिकरण्यं, विविभक्तिनिर्देशात्। न च मान्त्रवर्णिको देवताविधिः शक्यः कल्पयितुम्। मन्त्रभेदे हि स भवति। एकश्चायं मन्त्र इत्युक्तम् 'अर्थैकत्वात्' इति। कल्पिते भेदे नैवाग्न्यादिना सह विकल्पः, विषमशासनात्। तस्मान्निर्वापस्तुत्यर्थमेषामुच्चारणमिति॥ ३६॥

---

* (अ० २ पा० १ अ० १४ सू० ४६)।

दिते वा सवितरि। अश्विनोर्बाहुभ्यां- परिक्रयमभिप्रेत्य× यजमानयोर्दंपत्योर्बाहुभ्याम्। अश्विनौ हि तौ अग्न्याधेयेऽश्वदानेन, अशितवन्तौ वा यद्यज्ञफलमश्नुवाते। तद्बाहू इति स्वौ बाहू व्यपदिशति। देवताध्वर्य्वोर्वाऽश्विनोरेतौ बाहू इति। पूषणं तु यजमानमेव मन्यते पुष्णातेः। एवं सर्वे निर्वापविशेषप्रकाशनार्थाः।

अत्राऽऽह। कस्मान्नोत्कृष्टाः सवित्रादयः शब्दाः प्रकरणान्तरे सवितारमाश्विनौ पूषणं चाभिवदन्ति। लिङ्गेन तत उत्कृष्यमाणाः प्रकरणं बाधितुमर्हन्ति। अत्रोच्यते। सवित्रादयः परविशेषणं विभक्तिश्रुत्या क्रियन्ते। प्रातिपदिकार्थस्त्वव्यतिरिक्त इति गम्यते। तत्र लिङ्गं श्रुत्या बाध्यते। लिङ्गं हि प्रातिपदिकार्थप्रकाशनं देवतार्थमिति कृत्वा, इह देवताभावाद्यत्र देवता तत्रोत्कर्षति। विभक्तिश्रुतिस्तु प्रातिपदिकार्थं पदार्थान्तरविशेषणं ज्ञापयति। तच्चेहास्ति पदान्तरम्। श्रुतिश्च लिङ्गाद्बलीयसी। तस्मान्नोत्कर्षः।

आह। यदा सवित्रादयो यजमानपराः, तदा सत्रे कथमनूह इति। उच्यते। जोषणार्थमिदं वाक्यं, नानुज्ञापनार्थम्। अजोषितस्य जोषणं कर्तव्यम्। तत्र दृष्टोऽर्थः। अनुज्ञापनं पूर्वं वृणानेन कृतं, तददृष्टार्थमापद्येत। अपि च। जुष्टं निर्वपामीति जोषणकरणं निर्वपामीति भावशब्देनोच्यते। सवितुः प्रसवे, इत्यनुज्ञानिर्वृत्ता परविशेषणार्थं कीर्त्यते। अननुज्ञातमपि निर्वपणशब्दार्थं= कुर्यादेव, न त्वजोषितेन यागः श्रूयते। तस्माज्जोषणार्थत्वात्परार्थाः सवित्रादयः शब्दा नोहिष्यन्त इति॥ ३७॥

(निर्वापमन्त्रे श्रुतस्याभिशब्दस्य समवेतार्थस्य विकृतावूहाधिकरणम्॥१२॥)

[१२] गुणशब्दस्तथेति चेत्॥ ३८॥ पू०

---

॥ ३७॥

---

× परिक्रयमभिप्रेत्येति-अध्वर्योः परिक्रीतत्वात्तदीयबाह्वोर्यजमानसंबन्धित्वं, परिक्रयमभिप्रेत्येत्यर्थः। = निर्वपणं शब्दार्थं-पा०।

तस्मिन्नेव वाक्ये दर्शपूर्णमासयोः, अग्नये जुष्टं निर्वपामीति समाम्नायते । तत्रायमर्थः सांशयिकः । किमग्निशब्दोऽपि विकृतौ नोह्यते, सोऽपि न समवेतवचनः, उतोहितव्यः, समवेतवचनो हि स इति । किं प्राप्तम् । एवं चेत्तत्र संशयः, सोऽपि गुणशब्दस्तथैवासमवेतवचनः । कुतः । सवित्रादयोऽस्मिन् वाक्येऽसमवेतवचनाः । यद्यग्निशब्दोऽप्यसमवेतवचनः, एवमवैलक्षण्यं भविष्यति । अवैलक्षण्यं च न्याय्यम् । यदि समानं कारणं, तेन न्यायेनावैलक्षण्यमुच्यते । समानं चेह कारणं, य एषां शब्दानामर्थः, स इह प्रयोगे नास्तीति । अग्नये जुष्टं निर्वपामि, इत्यस्यापि योऽर्थः, स इह नास्ति । अग्नये जुष्टं निर्वपामि, इत्यनेन जुष्टस्य निर्वाप उच्यते । न चेह जुष्टस्य निर्वापोऽस्ति । अजुष्टं चेह निर्वप्तव्यम् । निर्वापेणैव तज्जोष्यते । तस्मान्न समवेतवचनः । तस्याप्यश्रुतार्थस्य वचनमितरार्थं× प्रयुज्येत, निर्वापस्तुत्यर्थेनेति । तस्मादेतदपि विकृतौ नोहितव्यमिति ॥ ३८ ॥

न समवायात् ॥ ३९ ॥ सि०

नैतदेवम् । समवेतवचनो हि, अग्नये जुष्टं निर्वपामीति । नन्वेतदुक्तं, जुष्टस्यात्र निर्वाप उच्यते । न च जुष्टं निर्वप्तव्यमिति । अत्रोच्यते । नैव जुष्टस्य निर्वाप एतेन वाक्येनोच्यते । किं तर्हि । निर्वापेण जुष्टकरणम्, अग्नये× जुष्टं करोमीति । एवं हि दृष्टार्थं भवतीति । अतोऽतुल्यकारणत्वाद्वैलक्षण्यमेव न्याय्यम् । तस्मात्समवेतवचनोऽग्निशब्द ऊहितव्यश्च विकृताविति ॥ ३९ ॥

---

'अग्नये जुष्टं निर्वपामि' इति 'जुषी प्रीतिसेवनयोः' इत्यग्निना* यद्द्रव्यं सेवितं तन्निर्वप्तव्यम् । न चाग्निना सेवितं द्रव्यमस्ति । तस्मादविद्यमानत्वात्तादृशस्य द्रव्यस्यासमवेतवचन+ इति ॥ ३८ ॥

---

× वचनमुक्तार्थे—पा० । * इतीति—इति पाणिनीयधातुपाठेनेत्यर्थः । + असमवेतवचन इति—यद्यप्यस्मिन्कर्मण्यग्निः समवेतस्तथाऽपि निर्वापे यादृशः श्रुतस्तादृशस्याविद्यमानत्वान्निर्वापस्तुत्यर्थमेवाग्निः संकीर्त्यत इत्यसमवेतवचन इति तात्पर्यम् । × अग्नये त्वा जुष्टं—पा० ।

एवं वा—

गुणशब्दस्तथेति चेत् ॥ ३८ ॥ पू०

दर्शपूर्णमासयोरामनन्ति,= धान्यमसि धिनुहि देवानिति दृषदि तण्डुलानावपतीति । तत्र धान्यशब्दं प्रति संशयः । किं समवेतवचनो न वेति । किं प्राप्तम् * । योऽयं गुणशब्द+ एव लक्ष्यते धान्यशब्दः, नासौ समवेतवचनः स्यात् । धान्यशब्दो हि धान्यमभिवदति, न तु धान्यमेवोप्यते । सतुषे हि धान्यशब्दो वर्तते । तण्डुलेष्वेवोप्यमानेषु धान्यप्रकाशनं क्रियते । तदसमवेतस्य प्रकाशनेऽदृष्टं यथा स्यादिति । तस्माद्विकृतिषु नोहितव्यमिति ॥ ३८ ॥

न समवायात् ॥ ३९ ॥ सि०

नैतदेवम् । समवेतो हि धान्यशब्दार्थः । स हि तण्डुलेषु वर्तते तद्विकारत्वाल्लक्षणया । यथा, काशिकेषु शालयो भुज्यन्ते, गावः पीयन्त इति, श्रुत्युपादानेऽदृष्टं कल्पयितव्यमिति लक्षणाशब्दः परिकल्प्यते । तस्मात्समवेतवचनः । विकारे चोहितव्य इति । प्रयोजनम् । अस्ति शाक्त्यानामयनं षट्त्रिंशत्संवत्सरम् । तत्रेदं समाम्नायते, संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, स तत्र यान् मृगान् हन्ति, तेषां तरसाः सवनीयाः पुरोडाशा भवन्तीति । तत्राविकारेण

---

समवेतवचनोऽग्निशब्दः= निर्वापेण करणभूतेन जुष्टं भावयेत् । स भाव्यमान एवं भाव्यते, अग्निरिदं जोषिष्यते द्रव्यमिति । एवं सेव्यमानो दृष्टार्थो निर्वापो भविष्यतीति ।

---

= दर्शपूर्णमासयोरिदं समामनन्ति-पा० । * किं तावत्प्राप्तं-पा० । + गुणवचन शब्द-पा० । = समवेतवचन इति—अदृष्टाद्वारकसंबन्धेन प्रकृतापूर्वसाधनीभूतकर्मसंबन्धिशक्यार्थप्रतिपादकत्वं-समवेतवचनत्वम् । अस्ति चेदं 'देवस्य त्वा' इति मन्त्रे, अग्निनिर्वापपदयोः । निर्वापे देवतासंयोगस्य हविर्विवेकसंपत्त्यर्थत्वान्निर्वापस्य न पृथक्करणार्थत्वादग्निनिर्वापयोस्तत्तदृष्टद्वारकसंबन्धेन तादृशयागसंबन्धित्वात् । जपस्तोत्रशस्त्रमन्त्रपदानां चादृष्टद्वारकसंबन्धेन यागसंबन्धिशक्यार्थप्रतिपादकत्वाच्च न समवेतवचनत्वमिति ध्येयम् ।

धान्यमसि धिनुहि देवानिति प्रयोगः कर्तव्यः, यथा पूर्वः पक्षः। यथा सिद्धान्तः, ऊहः कर्तव्यः, मांसमसि धिनुहि देवानिति ॥३९॥

( इडानिगदे यज्ञपतिशब्दस्यासमवेतार्थकस्य विकृतावनूहाधिकरणम् ॥ १३ ॥ )

[ १३ ] चोदिते तु परार्थत्वाद्विधिवदविकारः स्यात् ॥ ४० ॥ सि०

स्तो दर्शपूर्णमासौ, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति। तत्र, इडानिगदः, इडोपहूता—इत्येवमादिः। तत्रेदमाम्नायते। दैव्या अध्वर्यव उपहूता उपहूता मनुष्या य इमं यज्ञमवान्, ये च यज्ञपतिं वर्धानिति। तत्रायमर्थः सांशयिकः। किं बहुयजमानके यज्ञपतिशब्द ऊहितव्य उताविकारेण प्रयोक्तव्य इति। तत्रेदं तावत्परीक्ष्यते। किं समवेत वचनो यज्ञपतिशब्द उतासमवेतवचन इति। कथं समवेतवचनः। यदि यज्ञपतिवृद्धिवचनं यज्ञपतेरुपकारकं, ततः समवेताभिधायी। अथैतत्स्तुत्यर्थं, ततो न समवेताभिधायी।

---

प्रयोजने× चोद्यते। प्रकृतिशब्देन संबन्धशब्देन विकारास्तण्डुलाः प्रकाशिता लक्षणया। इहापि चोदकस्तथैव प्रापयति। तस्मान्मृगशब्देन मांसं प्रकाश्यं लक्षणया।

नैतदेवम्। विकृतावर्थश्चोदकेनातिदिश्यते, न शब्दो वाचक इत्येतद्वक्ष्यामः। स चार्थोऽस्मदायत्ते प्रयोगे किमित्यवाचकेन प्रकाश्यते। प्रकृतावाम्नानसामर्थ्यादवाचकेन शब्देन प्रकाशनं कृतम्। तच्चार्थान्निवृत्तं न चोदकः प्रापयति। न वचनमस्ति, प्रकृत्या विकारः प्रत्याय्यत इति। तस्मान्मांसशब्दस्यैव प्रयोगः ॥ ३९ ॥

---

'यज्ञपतिं वर्धान्' इति वृद्ध्या सह यज्ञपतेरिडापदमनपेक्ष्य प्रत्यक्षैकवाक्यता, इडया सह परोक्षा।

---

× प्रयोजने इति—भाष्यकारीयद्वितीयवर्णकप्रयोजन इत्यर्थः।

किं प्राप्तम् । ऊहितव्यः, समवेताभिधायीति । कथम् । यज्ञपतिवृद्धिवचनाद्यज्ञपतयः प्रोत्सहन्ते । इडापदानपेक्षैश्च पदैर्यज्ञपतिवृद्धिरभिधीयते । तस्मान्मुख्यः प्रत्ययः इडास्तुतौ जघन्यः । तस्मादर्थविप्रकर्षान्नेडास्तुतिः । अतो यज्ञपतिशब्द ऊहितव्यः । यस्यैव वृद्धिर्नोच्यते, स एवोत्साहसंस्कारेण संस्कृतो न स्यात् । तस्मात्सर्वे वृद्धिसंस्कारार्थं वदितव्याः । सर्वेषु वदितव्येषु बहुवचनम् ।

एवं प्राप्ते, ब्रूमः । चोदिते तु परार्थत्वाद्विधिवदविकारः स्यात् । चोदितमपि यत्, समवेतं परार्थं चिकीर्ष्यते× न स्वसंस्कारार्थं, तदप्यविकारेण प्रयुज्यते । तन्नोहितव्यं स्यात् । परार्थत्वात् । अत्र हि यज्ञपतिवचनं वृद्धिविशेषणार्थं, वृद्धिवचनं चेडास्तुत्यर्थम् । कथमवगम्यते । इडोपह्वानेनैकवाक्यत्वात् । इडाप्रकरणाच्च । अथ यदुक्तं— गम्यते, इडापदानपेक्षं यज्ञपतिवृद्धिवचनं तेषामुत्साहकम् । उपहूता मनुष्या ये यज्ञपतिं वर्धयेयुरिति ।

अत्रोच्यते । स यो हैवं विद्वानिडया चरतीत्यभिधाय, अथ प्रतिपद्यते, इडोपहूतोपहूनेडोपास्माँ इडाह्वयतामिडोपहूतेत्याह । तेनावगम्यते यस्यैष आरम्भः स इडाया मन्त्र इति । तन्मध्यपतितश्च, उपहूता मनुष्या इत्येवमादिः, यज्ञपतिं वर्धान्न इत्यन्तः । तस्मादिडामुपह्वातुं वदितव्य इति वाक्यादवगम्यते । समर्थश्चेडोपाह्वाने । यजमानं तु प्रोत्साहयितुं वदितव्य इति नास्ति वाक्यम् । केवलं वदितुं सामर्थ्यमस्ति । न च सामर्थ्यमात्रेण वाक्यादृते विनियोगा भवन्ति । इडाप्रकरणं चैवमनुगृहीतं भविष्यतीति । इडया च सहैकवाक्यता । तस्मादियं वचनव्यक्ति, उपहूता मनुष्या ये यज्ञपतिं वर्धयितुं समर्था इति । तत्र यज्ञपतिविशिष्टा वृद्धिर्वक्तव्येति, एकस्मिन्नपि यजमाने कीर्तिते भवति विशेषणकार्यम् । तस्मादविकारः स्यात् । विधिवत् । यथा यत्र यजमानो गुणभूतो विधीयते, तत्र येन

× कीर्त्यते–पा० ।

केनचिद्यजमानेन स विधिः सिध्यति । यथा, यजमानसंमितौदुम्बरी भवति, शुक्रं यजमानोऽन्वारभत इति ॥ ४० ॥

( सूक्तवाके श्रूयमाणस्य यजमानपदस्य विकृतावूहाधिकरणम् ॥१४॥ )

[ १४ ] विकारस्तत्प्रधाने स्यात् ॥ ४१ ॥ सि०

अस्ति दर्शपूर्णमासयोः सूक्तवाकः, सूक्तवाकेन प्रस्तरं प्रहरतीति । तत्रेदं समाम्नायते । अयं यजमान आयुराशास्त इति । तत्रायमर्थः सांशयिकः । किं बहुकर्तृके विकारे यजमानशब्द ऊहितव्य उत नेति । किं प्राप्तम् । अविकारेण प्रयोक्तव्यः । तथा सामर्थ्यमनुगृह्यते । न चार्थं समवेतवचनः । परार्थेन ह्यत्र, यजमान आयुराशास्त इति । आयुराशासनेन× यजमानस्य न कश्चिद्दृष्टोऽर्थः संजन्यते । तस्मादायुराशासनमदृष्टार्थम् । यजमानाविशिष्टाऽऽशीरेकेनापि यजमानेन कीर्तितेन यथा श्रुता, तथा कृता भवति । यथा, यजमानेन संमितौदुम्बरी भवतीति । तथैतत् । तस्मादविकारेण प्रयोक्तव्यमिति ।

---

सिद्धान्तस्तु—यज्ञपतिशब्दो वृद्धिविशेषणम् । वृद्धिरिडास्तुत्यर्था । इडोपह्वानेनैकवाक्यत्वात् । अथ यदुक्तमिडापदानपेक्षं यज्ञपतिवृद्धिवचनं गम्यत इति । उच्यते । 'स यो हैवं विद्वानिडया चरति' इत्यनेन, इडया चरितव्यमिति विधीयते । तत्रेडाप्रचारस्यायं मन्त्र इडोपहूतेत्यादिः । 'ब्रह्मदेवकृतमुपहूतम्' इत्येवमन्त इडोपह्वानार्थः । 'दैव्या अध्वर्यवः' इत्यादि ऋत्विगुपह्वानार्थः । अध्वर्युशब्दवाच्याः सर्वऋत्विजो लक्षणया, 'उपहूता मनुष्याः' इति त एवोच्यन्ते । कीदृशास्त इति । उच्यते । ये यज्ञमवन्ति रक्षन्ति, ये च यज्ञपतिं वर्धयितुं क्षमास्तादृशा मनुष्या उपहूताः । तस्मान्मनुष्यविशेषणत्वात्परार्थो यज्ञपतिशब्दः । तेन नोह्यते ॥ ४० ॥

---

प्रत्युदाहरणमिदम् । अथवाऽधिकरणान्तरं कयाचिदाशङ्कयाऽऽरभ्यते । 'अयं यजमान आयुराशास्ते' इत्यायुषः फलत्वं नावगतं प्रमाणान्तरेण ।

---

× आयुराशासने यज—पा० ।

एवं प्राप्ते, ब्रूमः। विकारः स्यादूहः। तत्प्रधाने यजमानप्रधाने। कथं यजमानप्राधान्यम्। एवं श्रूयते, सूक्तवाकेन प्रस्तरं प्रहरतीति। यदि सूक्तवाकः प्रस्तरप्रहरणे तत्साधनं, तत्फलं वा, प्रकाशयति ततः सूक्तवाकेन प्रस्तरः प्रहृतो भवति। प्रहरणफलमायुराशासनं कल्पितम्। यजमान आयुराशास्त एतेन कर्मणेति, यजमानेन प्रस्तरः प्रहृतो भवति। तत्र य एव यजमानः फलं प्रति प्रधानभूतो न संकीर्त्यते, तेन न प्रहृतं स्यात्। तस्मात्सर्वे समवेताः संकीर्तयितव्याः। सर्वेषु च कीर्त्यमानेषु बहुवचनं भवति। तस्मादूहो यजमानस्येति ॥ ४१ ॥

( सुब्रह्मण्यानिगदे हरिवदादिगुणवाचकपदानामनूहाधिकरणम् ॥ १५॥ )

[ १५ ] असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥ ४२ ॥ सि०

अस्ति ज्योतिष्टोमः। तत्र सुब्रह्मण्यानिगदः समाम्नातः, इन्द्र आगच्छ हरिव आगच्छ मेधातिथेर्मेष इत्येवमादिः। अग्निष्टुति च श्रूयते, आग्नेयी सुब्रह्मण्या भवतीति। तत्रेन्द्रशब्दस्य स्थाने, ऊहः क्रियते। अथेदानीं हरिव आगच्छ इत्येवमादिषु संशयः। ऊहितव्यं, नेति। किं प्राप्तम्। तद्विशिष्टं प्रतीयेत। तेन विशिष्टम्। इन्द्रपद-

---

तस्माद्यजमानाशीःसंबन्धो वाच्योऽदृष्टार्थाय। यजमानसंबद्धाऽऽशीर्वक्तव्या। सा चैकेनापि भवत्येव। तस्मादनूहः।

नैतदेवम्। 'सूक्तवाकेन प्रस्तरं प्रहरति' इति करणविभक्तिनिर्देशात्सूक्तवाकाः प्रहरणाङ्गम्। न चासौ प्रहरणं प्रकाशयति, न तत्साधनम्। श्रुत्या च तस्याङ्गता निर्ज्ञाता। तस्माच्छ्रुतिसामर्थ्याद्यदनेन प्रकाश्यते तत्प्रहरणसंबन्धि। तत्र चाग्न्यादयो देवताः प्रकाश्यन्ते, आयुरादीनि च फलानि। तत्र देवताः साधनतां प्रतिपद्यन्ते, आयुरादीनि च साध्यत्वम्। तस्मादायुरादीनि फलानि। कर्तृगामि च क्रियाफलम्। तस्माद्यजमानः प्रधानभूतः फलं प्रति। प्रधानत्वादूह्यः ॥ ४१ ॥

---

नैते सन्तीन्द्रे गुणाः, प्रमाणाभावात्। ऊहं चेच्छता सन्तीन्द्र एते गुणा-

स्थान ऊहः। एतेन* विशेषेण विशिष्टमाविकृतमेव वचनं प्रतीयेत। कुतः। असंयोगात्तदर्थेषु। नैषां शब्दानां तेष्वर्थेषु संयोगः, हरिवत्तादिषु। न हरिवदादयः समवेता इन्द्रे विद्यन्ते गुणाः। प्रमाणाभावात्। अविद्यमानास्तस्योच्यन्ते। एवं श्रुत्याऽर्थः+ प्रतिज्ञातो भवति। इतरथा लक्षणा स्यात्। न हरिवत्तादय उच्येरन्। हरिवत्तादिभिः सोऽस्य गुणो लक्ष्यते। अथासमवेतवचना मुख्यार्था एव भविष्यन्ति। आत्मीयं गुणं न लक्षयिष्यन्तीत्युच्येत। तथाऽसमत्पक्ष एव। तस्माददृष्टार्थं गुण उच्यत इत्यविकारेण प्रयोगः स्यात्।

तत्रैवं वचनव्यक्तिर्भवति इन्द्र आगच्छ हरिव आगच्छ, इति हरिवदानीनस्य गुणानारोपयति। हरिवदादिभिः संबध्यमानं इन्द्रोऽभ्युदयकारी भवतीति। शक्यते चाग्निरपि तैः संबन्धयितुम्। तस्मादविकारेण गुणानां प्रयोगः। अथोच्यते। अस्मादेव सामानाधिकरण्यवचनादिन्द्र एते गुणा विद्यन्त इति। तन्न। अविद्यमानेष्वपि स्तुत्याऽस्य सामानाधिकरण्यवचनमुपपद्येतैव। तथा, इन्द्रो बृहस्पतिर्देवदत्त इति ॥ ४२ ॥

कर्माभावादेवमिति चेत् ॥ ४३ ॥

इति चेद्भवान् पश्यति, अविकारेण हरिवदादीनां वचनमिति। कर्माभावादेवं= स्यात्, यद्येते गुणा इन्द्रे न भवेयुः। कर्मजास्तु, एते गुणा इन्द्रस्य विद्यन्ते। हरिव आगच्छेति पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी, ताभ्यां ह्येष सर्वं हरतीति। मेधातिथेर्मेष इति, मेधातिथिं हि काण्वायनं मेषो भूत्वा जहार। वृषणश्वस्य+ मेनका नाम दुहिता बभुव, तामिन्द्रश्चकमे। गौरावस्कन्दन् इति, गौरमृगो भूत्वाऽरण्याद्राजानं सोमं पिबतीति वचनैरिमे गुणा इन्द्रस्याऽऽख्यायन्ते। तस्मात्समवेतवचना हरिवदादयः शब्दाः। तथा सतीन्द्रप्रत्य-

---

इत्यभ्युपगमनीयमिन्द्रगुणसंबन्धमात्रम्×। इन्द्रस्याऽऽत्मीयगुणा इति चाभ्युपगमे

---

* तेन विशेषणविशिष्ट—पा०। + श्रुतोऽर्थः। = 'कर्माभावान्नेति चेत'—पा०। + वृषणश्वस्य मेनस्य—पा०। × अभ्युपगमनीयमिति—विनैव प्रमाणान्तरेणेति शेषः।

यायोच्चार्यन्त इति नादृष्टकल्पना भविष्यति । तत्रैवं वचनव्यक्तिः। इन्द्र आगच्छ, हरिव आगच्छ, इति–हरिवत्त्वादिगुणवान् यस्त्वं स आगच्छेति। लक्षणा चादृष्टकल्पनाया ज्यायसी । तस्मादूहितव्या हरिवदादयः शब्दा इति ॥ ४३ ॥

न परार्थत्वात् ॥ ४४ ॥

नैतदेवम् । परार्था हि हरिवदादयः शब्दा इन्द्रस्तुत्यर्थाः । स्तुतये हरिवदादिसंबन्धोऽस्य क्रियते। तत्पुरस्तादेवोपवर्णितम् । स्तुत्यर्थं चाग्नेरप्येतैरभिसंबन्धः शक्यते कर्तुम् । यत्तूक्तं, समवेता गुणा इन्द्रस्य विद्यन्ते, पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी इत्येवमादिभिर्वचनैरवगता इति। तन्न । न हीमानि वचनानीन्द्रस्य संबन्धिनौ हरी विदधति। न ह्येवमभिसंबन्धः क्रियते, यावेतौ पूर्वपक्षापरपक्षौ ताविन्द्रस्य हरी इति। तत्र हि हेतुरुपदिश्यते । ताभ्यां ह्येष सर्वं हरतीति। न हीदं प्रसिद्धं, ताभ्यामिन्द्रः सर्वं हरतीति । सिद्धो हि हेतुर्भवति, न प्रसाध्यः। यथा त्विमौ हर्तारौ प्रसिद्धौ, कालेन सर्वमपक्षीयत इति। तथा नेन्द्रस्याग्नेश्च कश्चिद्विशेषः । तत्रैभिरभिधानमग्नेः प्राप्नोत्येव।

अथ इन्द्रस्य हर्तृत्वं विधीयत इत्युच्यते। तथा च वाक्यं भिद्येत। इन्द्रस्यैतौ हरी इत्येतदपि विधातव्यम् । अथैतन्न विधीयते। तथा स एव दोषः, नास्त्यग्नेरिन्द्रस्य वा विशेष इति । अथ पूर्वपक्षापरपक्षाविन्द्रस्येति विधीयते, तौ च हरी । तस्मादिन्द्रो हरिवा

---

लक्षणा स्यादनेनांशेन प्रकाश्यमानेषु। अथोच्येत, असमवेता एते गुणा इन्द्रे। न चाऽऽत्मीयत्वं लक्षयिष्यन्ति । द्वावपि दोषौ परिहरिष्यामः। इन्द्रो हरिवद्गुणविशिष्ट उच्चार्यमाणोऽभ्युदयकारी ॥ ४२ ॥ ४३ ॥

---

'पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी, ताभ्यां ह्येष सर्वं हरति' इति यदुक्तं, तन्न। कुतः। यावेतौ पूर्वपक्षापरपक्षौ करणभूतौ,* ताभ्यामिन्द्रो हरति,

---

* करणभूताविति–हरणस्य कारणभूतावित्यर्थः।

निति । तथा हेत्वप्रसिद्ध्यादिः स एव दोष । न च विधीयमाने वै-शब्दो भवति । प्रसिद्धवचनो ह्येष दृष्टः । न वै स्त्रैणानि सख्यानि सन्तीति यथा ।

तथा मेधातिथेर्मेष इत्येवमादि* इतिहासवचनमिव प्रतिभाति। इतिहासे च विधौ सति, आदिमत्तादोषो वेदस्य प्रसज्येत । अस्त्विति चेत् । तथा सति तस्याप्रामाण्यान्मेधातिथेर्हि काण्वायनस्य मेष इत्यप्रसिद्धिः । सर्वत्र च निगदविधानम्= तत्रापरस्मिन् विधीयमाने वाक्यभेदप्रसङ्गः । तस्मान्नैते गुणा इन्द्रे विद्यन्त इत्यसमवेतवचनत्वादविकारेण प्रयोग इति । तदेतन्न रोचयन्ते याज्ञिकाः । ऊहं कुर्वन्ति । अग्न आगच्छ रोहिताश्व बृहद्भानो धूमकेतो जातवेदो वि-चर्षण इति ॥ ४४ ॥

---

नान्य इत्ययमर्थो न लभ्यते । कुतः । 'ताभ्यां ह्येष सर्वं हरति' इति हेतुर-यम् । हेतुश्च प्रसिद्धे संबन्धे भवति । न चेन्द्रस्य हर्तृत्वमवगतं प्रमाणान्तरेण । येन× हेतुः स्यात् । वाक्यभेदादिदोषश्च स्थित एव । तस्मात्सर्वेषां स्तुतिद्वारे-णैकवाक्यता ॥ ४४ ॥

---

---

* इत्येवमादिरितिहास—पा० । = निगदव्याख्यानं विधानं—पा० । × 'येन हेतु स्यात' इत्यस्य पश्चात् 'वाक्यभेदादिदोषश्च' इत्यस्यार्वाक् वार्तिकग्रन्थो लुप्तः। यतस्तद्व्याख्यानपरस्तन्त्ररत्नग्रन्थ एवमुपलभ्यते । अत्र चैवं तन्त्ररत्नग्रन्थः । 'येन हेतुः स्यात् । नापि चेताविन्द्रस्य करणत्वेन प्रसिद्धौ । तस्माद्धरणे हरिशब्दवाच्यं कर्तृत्वं विधीयते । तस्मादिन्द्रो हरिमान् भविष्यतीत्येवमपि हेत्वप्रसिद्धिस्तदवस्थैव । कर्तृत्वं हीन्द्रस्य प्रमाणान्तरेणानवगतम् , येन हेतुः समर्थितो भविष्यति । न केवलमन-वगतकर्तृत्वस्य । किं तु विपर्यय एवेत्याह—पूर्वपक्षापरपक्षयोः कर्तृत्वं विधीयमानं कथमिन्द्रस्य स्यात । योऽयं प्रतिज्ञाहेत्वोर्विरोधः । पूर्वपक्षापरपक्षौ हर्ताराविति प्रतिज्ञा । तस्य हर्तृत्वादिति हेतुः तेन प्रतिज्ञयैव हेतोर्विपर्यय इति । वाक्यभेदादिदोषश्च स्थित एव' इति ।

अथेदमन्यदुदाह्रियते—

असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥ ४२ ॥ सि०

अस्ति साद्यस्कः। तत्रेदं समामनन्ति, साण्डस्त्रिवत्सः सोमक्रयण इति। अस्ति तु प्रकृतावेकहायनी क्रयार्था। तत्रेदमाम्नायते, इयं गौस्तया ते क्रीणामि, तस्यै शृतं, तस्यै* शरः, तस्यै दधि, तस्यै मस्तु, तस्या आतञ्चनं, तस्यै नवनीतं, तस्यै घृतं, तस्या आमिक्षा, तस्यै वाजिनामिति। तदिह चोदकेन प्राप्तम्। तत्र संदेहः। किं गोशब्दस्थान ऊहं कृत्वाऽवशिष्टानां पदानामविकार उत सर्वेषामूह इति। किं प्राप्तम्। गोपदार्थविशिष्टमेवोहवचनं स्यात्। तस्यै शृतमित्येवमादीनामविकारः। असंयोगाच्छृतादिभिरर्थैः। तेषामेकहायन्यामेकहायनीत्वादेव। न ह्येकहायनी दुग्धे, तस्यां× समवेतं वदन्त्येते। तस्मात्साण्डेऽप्यविकारेण प्रयोक्तव्या इति ॥४२॥

कर्माभावादेवमिति÷ चेत् ॥ ४३ ॥

इति चेत्- एवं भवान्मन्यते, नैकहायन्यामेते समवेतानर्थानभिवदन्तीति। भवेदेतदेवं, यद्येकहायन्या इमे गुणा न भवेयुः। कालान्तरे तु तस्या उपपद्यन्ते, न तु साण्डस्य। भविष्यत्कालवचना अप्येते प्ररोचनार्था भवन्ति। तस्यै शृतं भविष्यति। तस्मान्नाविकारेण प्रयोक्तव्या इति ॥ ४३ ॥

न परार्थत्वात् ॥ ४४ ॥

नैतदेवम्। अविकारेण प्रयोक्तव्या इति। असमवेतवचना ह्येते, नैकहायन्यां भवन्ति। एकहायनीत्वादेव। अथोच्यते, कालान्तरे भविष्यन्तीति। साण्डेऽपि कालान्तरे भवितुमर्हन्ति। साण्डादपि हि या धेनुर्जनिष्यते, सा धोक्ष्यत इति। तस्मादविकारेण प्रयोक्तव्या इति ॥ ४४ ॥

---

चतुर्षु पशुष्वेकवचनान्तोऽसमर्थ एव प्रास्मैशब्दः।

उच्यते। प्रातिपदिकार्थस्तावद्विद्यते। वचनेन यथा प्रातिपदिकं नोत्कृष्यते

---

* 'तस्यै शरः' इति क्वचिन्नास्ति। + तस्यामसमवेतं—पा०। ÷ 'कर्माभावान्नेति चेत्' इत्येवं पाठो लिखितपुस्तकेषु दृश्यते।

( सारस्वत्यां मेष्यामध्रिगुप्रैषस्य प्रवृत्त्यभावाधिकरणम् ॥ १६ ॥ )

[ १६ ] लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात् ॥ ४५ ॥ सि०

अस्ति ज्योतिष्टोमः । तत्र पशवः समाम्नाताः । आग्नेयः पशुरग्निष्टोम आलब्धव्यः, ऐन्द्राग्नः पशुरुक्थ्ये, ऐन्द्रो वृष्णिः षोडशिनि, सारस्वती मेष्यतिरात्रे, इति । अस्ति त्वग्नीषोमीयेऽध्रिगुप्रैषः । उपनयत मेध्या दुर आशासाना मेधपतिभ्यां* मेधम् , इति । तत्र संदेहः। किं सारस्वत्यां मेष्यामध्रिगुवचनं कर्तव्यं, नेति । नन्वग्नीषोमीयार्थं तत् , चोदकेनेह प्राप्तमिति । अत्रोच्यते । सर्वेषां समानो विधिरिति कृत्वा चिन्ता । किं तावत्प्राप्तम् । समानविधानेष्वेषु पशुषु, अप्राप्ता सारस्वती मेष्यध्रिगुवचनम् । कुतः । लिङ्गविशेषनिर्देशात् । विशिष्टलिङ्गो ह्यध्रिगुवचनेन= निर्दिष्टः, प्रास्मा अग्निं भरत इति पुंपशुः+ स्त्रीत्वं चास्याः । न च पुंवचनः स्त्रियमभिवदितुमलं भवति शब्दः । तस्मादध्रिगुवचनमप्राप्ता सारस्वती मेषीति ॥ ४५ ॥

पश्वभिधानाद्वा तद्धि चोदनाभूतं पुंविषयं पुनः पशुत्वम् ॥ ४६ ॥ पू०

---

तथा वक्ष्यामः पाशाधिकरणे÷ । तस्मात्समवेतवचनः, प्रातिपदिकार्थसंभवात् । स्त्री तु पुंलिङ्गेन न शक्यते वदितुम् । नात्र लिङ्गं वचनमिव विभक्त्यर्थः । किं तु प्रातिपदिकार्थो लिङ्गमित्युक्तम्× । तस्मान्मेष्यामभावो युक्तः, असमवेतार्थत्वादिति सिद्धान्तवादी मन्यते, ' लिङ्गविशेषानिर्देशात् ' इति ॥ ४५ ॥

---

पूर्वपक्षवादी तु मन्यते । पशुशब्देनात्र सामानाधिकरण्यं भविष्यति, ' प्रास्मै पशवे ' इति । तच्च पशुशब्दवाच्यं मेष्यामपि विद्यते । तस्मात्समर्थो*

---

* मेधपतये-पा० । = वचनेनेह-पा० । + पुंशब्दः—पा० । ÷ ( अ० ९ पा०३ अ० ५ सू० १५ ) इत्यत्रेति शेषः । × इत्युक्तमिति—( अ० ९ पा० १ अ० ९ सू० ३३ ) इत्यत्र ' प्रातिपदिकविशेषणं हि स्त्रीशब्दः । स्त्रियां यत्प्रातिपदिकं वर्तते, तत्टाबादय इति ' इत्यादिना भाष्यकारेणेति शेषः । * समर्थ इति—मेष्यामपीति शेषः ।

वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति । अप्राप्ता सारस्वती, अध्रिगुवचनमिति । तस्यामप्यध्रिगुवचनं स्यात् । कुतः। प्रकरणात्। समानं प्रकरणं सर्वेषां पशूनामिति कृत्वा चिन्त्यते । तेन सारस्वत्यां अपि प्राप्नोतीति । लिङ्गविशेषादयुक्तं तस्यामिति यदुच्यते । तन्न । पश्वभिधानात् । अस्ति तत्र पशुत्वं संनिहितम् । तदभिप्रेत्य, प्रास्मा अग्निं भरत पशव इति ब्रूयात् । तद्धि चोदनाभूतम् । सर्वनामशब्दस्य पुंविषयत्वम् । तत्पशुशब्देनोच्यते । अस्ति च तत् , मेष्याम् । तदभिप्रेत्य पशुशब्दसमानाधिकरणं सर्वनामशब्दं समुच्चारयिष्यति । एवं प्रकरणमनुग्रहीष्यते । तस्मात्प्राप्नुयात्सारस्वती, अध्रिगुवचनमिति ॥ ४६ ॥

विशेषो वा तदर्थनिर्देशात् ॥ ४७ ॥

वाशब्द एतं पक्षं व्यावर्तयति । नैतदस्ति । प्राप्नुयात्सारस्वत्यध्रिगुवचनमिति । अयमन्यः पक्षः, न प्राप्नुयादिति । कुतः । विशेषो वा तदर्थनिर्देशात् । पुमर्थं ह्येष शब्दो निर्देष्टुं शक्नोति । स्त्रीलिङ्गश्चायमर्थो मेषीति । स्त्रियं पुंशब्दो न शक्नोत्यभिवदितुमिति प्रथम एव पक्षः संकीर्तितः । केवलं परपक्षस्यानवक्लृप्तिर्वक्तव्या ॥ ४७ ॥

पशुत्वं चैकशब्द्यात् ॥ ४८ ॥

अथ तदुक्तं, पशुत्वाभिप्रायमेतद्वचनम् । एको हि शब्दः पशुत्वस्य च पशोश्च । तेन, प्रास्मै पशव इत्यभिसंबन्धो भविष्यतीति । तत्परिहर्तव्यमिति ॥ ४८ ॥

---

निगदोऽयम् । ' पश्वभिधानाद्वा ' इत्यनेन प्रतिपादयति ॥ ४६ ॥

---

विशेषो वा तदर्थनिर्देशात् । इति सिद्धान्तसूत्रेण प्रथमसूत्रार्थ एव स्मार्यते ॥ ४७ ॥

---

' पशुत्वं चैकशब्द्यात् ' इति पशुशब्दोऽयं पुंलिङ्गः । अस्मैशब्दोऽपि, तयोर्यत्सामानाधिकरण्यं तत्प्रत्युच्चार्यते* ॥ ४८ ॥

---

* तत्प्रत्युच्चार्यंत इति–सामानाधिकरण्यं परिहर्तुमुच्चार्यंत इत्यर्थः ।

यथोक्तं वा संनिधानात् ॥ ४९ ॥ सि०

यथोक्तं स्यादध्रिगुवचनम्। अप्राप्ता सारस्वती। कुतः। पूर्वस्मादेव कारणाल्लिङ्गविरोधादिति। यदुक्तं, पशुशब्दसमानाधिकरणः सर्वनामशब्दः प्रयोक्ष्यत इति। तन्न। कुतः। संनिधानात्। संनिहितवचनो हि सर्वनामशब्दः। उच्चारितमात्रो यः पदार्थः शब्देन संनिहितः, तेन संबध्यते। अथ तस्मिन्नसति, लिङ्गादिसर्वविशेषणविशिष्टे* रूपेण संनिहिते प्रयुज्यते। संनिधाने नैकेन विशेषणेन विशिष्टां व्यक्तिमभिवदितुं शक्नोति। संनिधानात्तत्रैकं सामान्यमाश्रीयते, नान्यत्किंचित्पशुत्वादि। तत्रोच्चार्यमाणे पशुशब्दे शब्देन व्यक्तेर्निष्कृष्टे पशुत्वे, अस्मै पशव इति शक्यते संबन्धः कर्तुम्। अनुच्चार्यमाणे तु लिङ्गविशेषवचनः प्राप्नोति। तस्मादप्राप्ता सारस्वत्यध्रिगुवचनमिति। कृत्वा चिन्तेयम्। अत्र प्रयोजनं न वक्तव्यम्। किमग्नीषोमीयार्थाः पशुधर्मा उत साधारणा इत्यस्मिन्नधिकरणे प्रयोजनाय विचारोऽयम्। यदि साधारणाः पशुधर्मास्ततः सारस्वत्यध्रिगुवचनमप्राप्ता, अथाग्नीषोमीयधर्मास्ततोऽस्यामध्रिगुवचनमूहेन प्राप्यते। न च प्रयोजनस्य प्रयोजनं वक्तव्यम् ॥ ४९ ॥

( यज्ञायज्ञीये नित्यमिरापदस्य गिरापदबाधकत्वाधिकरणम् ॥ १७ ॥ )

[ १७ ] आम्नातादन्यदधिकारे वचनाद्विकारः स्यात् ॥ ५० सि०

अस्ति ज्योतिष्टोमः, ज्योतिष्टोमेन स्वर्गकामो यजेतेति। तत्र यज्ञायज्ञीयं प्रकृत्याऽऽमनन्ति—न गिरा गिरेति ब्रूयात्, यद्गिरा गि-

---

यथोक्तं, वा संनिधानात्' इति पूर्वपक्षवादिना यदुक्तं तदेतेन निराक्रियते। संनिहितवचनत्वं सर्वनामशब्दानां स्वभावः। उच्चरितमात्रः सर्वनामशब्दो यत्पदान्तरेण संनिधाप्यते, तेन सह शीघ्रं संबध्यते। न चेह पशुशब्द उच्चरितः, येन संबन्धः स्यात्। तस्मिन्नसति शब्दोपात्ते, संबन्धप्रकार आश्रीयते प्रकरणाद्यालोचनेन। लिङ्गादिसर्वविशेषणविशिष्टेन रूपेण संनिहिते प्रयुज्यत इति—कोऽर्थः। जातिलिङ्गसंख्याविशेषणविशिष्टां व्यक्तिमभिदधाति,

---

* विशिष्टेन स्वरूपेण संनिहितेन युज्यते—पा०।

रेति ब्रूयादात्मानं तदुद्गातोद्गिरेत। ऐरं कृत्वोद्गेयमिति तत्र संशयः। किमिरापदं गिरापदं वा कर्तव्यम्। अथवेरापदमेवेति। किं प्राप्तम्। यत्राधिकार आम्नातादन्यदुच्यते, तत्र= तद्विकारभूतं स्यात्। ज्योतिष्टोमाधिकार आम्नाताद्गिरापदादन्यदुच्यत इरापदम्। तद्विशेष उच्यमानं सामान्येन प्राप्तं गिरापदं बाधेत ॥ ५० ॥

द्वैधं वा तुल्यहेतुत्वात्सामान्याद्विकल्पः स्यात् ॥ ५१ ॥ पू०

वाशब्दः पक्षं व्यावर्तयति। न, इरापदं नियम्येत। द्वैधं स्यात्। द्वौ प्रकारौ स्यातामित्यर्थः। कौ द्वौ प्रकारौ। इरापदवचनं, गिरापदवचनं च। तुल्यो हि हेतुः। गिरापदमाम्नातम्। तद्भूता साम्ना ज्योतिष्टोमः साधयितव्य इत्येतदप्यवगम्यते। इरापदेन साधयिष्यामित्येतदपि। समानार्थे चैते द्वे पदे। एकमपि स्तुत्यर्थमपरमपि। तस्मा-

---

रूपेण—स्वसामर्थ्येनेत्यर्थः। सर्वनाम्नामेतदेव सामर्थ्यं, यदेतानि विपरिवर्तमानमेवाभिदधति। व्यक्तिस्तु विपरिवर्तते।

अथवा, रूपेणेति रूपशब्देन विद्यमानं वस्त्वभिधीयते। तच्च विद्यमानं यदि विपरिवर्तते प्रकरणसंनिहितम्। संनिधानेनैकेन विशेषणेन विशिष्टां व्यक्तिमभिवदितुं शक्नुवन्ति। यद्यत्संनिधानविशिष्टं तत्तदभिदधति। तस्मात्संनिधानमेषां सामान्यं निमित्तम्। संनिहितं च पुंलिङ्गम्। यद्यपि स्त्रीलिङ्गमपि संनिहितं तथाऽप्ययमसमर्थः शब्दस्तत्र वर्तितुं, पुंलिङ्गत्वात्। तत्रोच्चार्यमाणे पशुशब्द इति। उच्चार्यमाणः पशुशब्दः 'भारमं पशवे' इति पुलिङ्गेन पुंलिङ्गशब्दः शक्यः संबन्धयितुम्। अस्मिन्पक्षे व्यक्तितो निष्कृष्य पशुत्वं तेन सह संबध्यते, अस्मैशब्दो न व्यक्त्या। एतदपि पशुशब्द उच्चार्यमाणे न भवतीत्युक्तमेव ॥ ४९ ॥ ५० ॥

---

यज्ञायज्ञीयं प्रकृत्याऽऽमनन्ति 'न गिरा गिरेति ब्रूयात्। यद्गिरा गिरेति ब्रूयादात्मानमेव तदुद्गातोद्गिरेत्, ऐरं कृत्वोद्गेयम्' इति।

अत्र पूर्वः पक्षः। 'ऐरं कृत्वोद्गेयम्' इति, इरापदस्यानेनोत्पत्तिः केवलं क्रियते। उत्पत्त्युत्तरकालं च प्रयोजनं प्रति साकाङ्क्षस्य यज्ञायज्ञीयप्रयोगवच-

---

= तत्रेति क्वचिन्नास्ति।

द्विकल्पः स्यात् । इरापदं गिरापदं वेति ॥ ५१ ॥

उपदेशाच्च साम्नः ॥ ५२ ॥

अत्राऽऽह । नैतयोस्तुल्यता विद्यते । गिरापदे समाम्नानमात्रं, न कर्तव्यता विधीयते । इरापदे तु कर्तव्यता विधीयते । तन्न । कुतः । उपदेशात्साम्नः । उपदिश्यते हि साम, यज्ञायज्ञीयेन स्तुवन्तीति । गिरापदवच्च यज्ञायज्ञीयम् । तस्मिन्नुपदिश्यमाने गिरापदमप्युपदिष्टं भवति । तस्माद्विकल्प इति ॥ ५२ ॥

नियमो वा श्रुतिविशेषादितरत्साप्तदश्यवत् ॥ ५३ ॥ सि०

नियमो वा स्यादिरापदस्य । कुतः । श्रुतिविशेषात् । श्रुतिविशेषेणेरापदमुपादिष्टम् , ऐरं कृत्वेति । सामान्येन गिरापदम् । तत्कथं साम्नः कर्तव्यतोच्यते । गिरापदस्य पाठमात्रं, न कर्तव्यता । न त्वन्यथा साम कृतं भवतीत्यर्थापत्त्या गिरापदस्य कर्तव्यता कल्प्यते । इरापदस्य पुनः श्रुत्यैव कर्तव्यता । तेन साम्नि सिद्धे नास्त्यर्थापत्तिर्गिरापदस्य । अथ यः सामान्येनोपादिष्टस्तस्य को विषयः । तदुच्यते ।

---

नेनाङ्गता* विधीयते । गिरापदस्यापि, यज्ञायज्ञीयस्य प्रयोगवचनेनैवाङ्गता । तस्मादुभयोस्तुल्यप्रमाणत्वाद्विकल्पः । अथवा, यद्यपीरापदमनेन वाक्येन विधीयते स्तोत्राङ्गत्वेन, तथाऽपि नानुत्पन्नं श्रुतिः शक्नोति निर्वर्तयितुमित्यर्थादुत्पत्तिरपेक्षितव्या । 'यज्ञायज्ञीयेन स्तुवीत' इत्यनेन गिरापदस्य स्तुतिसाधनत्वमुपपद्यते× । पाठात्तु गिरापदस्योत्पत्तिः सिद्धा । तस्मादेकत्रोत्पत्तिरपेक्षितव्या,* अपरत्र+ विनियोगः । तस्मादेकाङ्गविकलत्वाद्द्वयोरपि प्रत्ययविप्रकर्षः । विप्रकर्षाच्च विकल्पः ॥ ५१ ॥ ५२ ॥

— — —

यदुक्तम् 'ऐरं कृत्वोद्गेयम्' इत्यनेनोत्पत्तिः, यज्ञायज्ञीयप्रयोगवचनेन स्तुतिसाधनत्वमिति । तन्न । यद्येवं श्रूयते, 'ऐरं भवति' इति, तदोत्पत्तिः स्यात् । इह तु 'ऐरं कृत्वा—ऐरमभिनिर्वर्त्य, उद्गेयमिति श्रुत्यैवास्य साधनता

---

* प्रयोगवचनेनेति—'यज्ञायज्ञीयेन स्तुवीत' इत्येवं रूपेणेत्यर्थः । × उपपद्यत इति—यज्ञायज्ञीयस्य गिरापदं विना स्तुतिसाधनत्वानुपपत्तेरिति शेषः । * एकत्र—इरापदे । अपरत्र—गिरापदे ।

इतरत्साप्तदश्यवादिति । इतरादिति+ गिरापदमुपादिश्यते । तद्यथा साप्तदश्यं, तथा स्यात् । विकृतिषु साप्तदश्यं निविशते । इतरदपि विकृतिरभिनिवेष्टुमर्हतीति ॥ ५३ ॥

---

विधीयते । यज्ञायज्ञीयेन त्वन्यथानुपपत्त्या गिरापदस्य स्तुतिसाधनत्वं विधीयते । सा प्रत्यक्षेणेरापदेनान्यथानुपपत्तिर्बाध्यते । यदुक्तमर्थादुत्पत्तिरपेक्षितव्येति = ।

उच्यते । श्रुत्यैरापदविशेष एव विहितः । तस्यार्थादुत्पत्तिर्यदुच्यते, शब्दस्य नास्ति तत्र व्यापारः । इह× तु शब्देन कश्चिद्विशेषो विधातव्यः । तत्र गिरापदस्य शब्दो* न विद्यते । गिरापदं साप्तदश्यवदिति तुल्यो न दृष्टान्तः । न दार्ष्टान्तिकः । कथम् । ' सप्तदश सामिधेनीरनुब्रूयात् ' इत्यनारभ्य श्रूयते । ' पञ्चदशानुब्रूयात् ' इति दर्शपूर्णमासयोः । तत्र क्लृप्तसंबन्धेन÷ पाञ्चदश्येन साप्तदश्यं बाधितम् । तत्र कासुचिद्विकृतिषु साप्तदश्यं पुनः पठ्यते । तेन चोदकप्राप्तं निवर्त्यते प्रत्याम्नातेन । गिरापदं पुनर्न कस्यांचिद्विकृतौ, येनेरापदं बाधेत* । अपि चेरापदं क्लृप्तोपकारं विकृतौ चोदकेन प्राप्यते । गिरापदं पुनर्नोपदेशेन, नातिदेशेन प्राप्नोति । तस्माद्विकृतिष्विरापदमेवेति, सूत्रं भाष्यं चानुपपन्नमेव ॥

उच्यते । यथा प्रकृतौ साप्तदश्यं पाञ्चदश्येन बाध्यते, एवं गिरापदमिरापदेनेति तद्बाधितम् = । यासु विकृतिषु प्रमाणं भवति तासु भविष्यति । प्रमाणाभावेन क्वचिदपि मा भवतु । अथवा, विनाऽपि स्तुतिसाधनत्वेन प्रमाणान्तरेण भवति कासुचिद्विकृतिषु गिरापदम् । यथा ह्यग्नौ श्रूयते, ' यज्ञायज्ञीयं पुच्छे गायति ' इति । तत्र यथाम्नातमेव गिरापदयुक्तं प्रयोक्तव्यम् । यत्र त्वग्निष्टोमस्तोत्रसाधत्वेन यज्ञायज्ञीयं प्रयुज्यते, तत्रैव क्लृप्तोपकारेरापदेन गिरापदं बाध्यते । तत्रैव तस्य प्रकृतावुपदेशान्नान्यत्र प्राप्तिरिति ॥ ५३ ॥

---

+ इतरादिति-इति क्वचिन्नास्ति । = अपेक्षितव्येति-इरापद इति शेषः । ×इहतु-गिरापद इत्यर्थः । * शब्द इति-कार्यविशेषे विनियोजकः क्लृप्तः शब्दो न विद्यते । न वा कल्पयितुं शक्यते । प्रत्यक्षश्रुतेरापदेनैव स्तोत्रस्य निराकाङ्क्षत्वादित्यर्थः । ÷ क्लृप्तसंबन्धेनेति-प्रकरणादिति शेषः । + कासुचिदिति—पशुचातुर्मास्यमित्रविन्दादिष्वित्यर्थः । * बाध्येत-पा० । = तद्बाधितमिति-एतावता दृष्टान्त इति शेषः ।

( गिरापदस्थानापन्नेरापदे गानकर्तव्यताधिकरणम् ॥ १८ ॥ )

[ १८ ] अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशः स्यात् ॥ ५४ ॥ पू०

ज्योतिष्टोमे यज्ञायज्ञीयं प्रकृत्याऽऽमनन्ति, न गिरा गिरेति ब्रूयात्, यद्गिरा गिरेति ब्रूयादात्मानमेव तदुद्गातोद्गिरेत्, ऐरं कृत्वोद्गेयमिति । ज्योतिष्टोमे गिरापदस्य स्थान इरापदं कर्तव्यमिति समधिगतम् । इदानीमिदं संदिग्धम् * । किं प्रगीतमिरापदं कर्तव्यमुताप्रगीतमिति । किं प्राप्तम् । गिरापदादन्यस्मिञ्शब्दे श्रूयमाणे ब्रूमः, अप्रगीतमिरापदं कर्तव्यमिति । कुतः । अप्रगाणात् । न हि तत्प्रगीतमुपदिश्यते । सर्वं हि यद्यथाभूतमुपदिश्यते, तत्तथाभूतमुपयोक्तव्यम् ।

ननु नैव तदप्रगीतमुच्चार्यते । तद्धितशब्देनायं निर्देशः क्रियते । तेन स्वरविशेषः कश्चिन्निर्दिष्टो भवति । अत्रोच्यते । यद्यपि चास्ति स्वरविशेषः । अन्ये तु गीतिविकारा आईभावादयो न निर्दिश्यन्ते । अविकृतात्तद्धित उत्पादितः । तस्मादविकृतं प्रयोक्तव्यम् । अथोच्यते । तद्भूतनिर्देशोऽविवक्षित+ इति । उच्यते । अविवक्षायां= कारणं

---

गिरापदगीतिरिरापदे न स्यात् । कुतः । गीत्या वर्णाः संस्क्रियन्ते । गिरापदवर्णानां च या संस्कारिका गीतिः, सा तानेव वर्णान्संस्करोति । तैरेव वर्णैः प्रयुज्यते । इरापदवर्णैर्न प्रयुज्यते । गिरापदवर्णस्वरूपप्रयुक्तत्वाद्गीतेः । तस्माद्यथाभूतमिरापदं तथाभूतमेव प्रयोक्तव्यम् । ननु च 'ऐरम्' इति विकारे तद्धित उत्पन्नः । वर्णानां च स्वर एव विकारः । तस्मात्तद्धितशब्देनैव गीतिरुपदिश्यते । नात्र विकारे तद्धित उत्पन्नः । किं तर्हि । स्वार्थ एव । यावदेवोक्तम् 'इरां कृत्वोद्गेयम्' तावत् 'ऐरम्' इति । यदि च प्रगीतात्तद्धित उत्पद्यते, तथा सति वृद्धं तालव्यं प्रथमस्वरं वेति कृत्वा, इकारस्य, आयीभावः स्यात्÷ । तत्र 'वृद्धाच्छः×' इति छो भवति । तथा च 'आयिरीयम्' इति

---

× संदिग्धम्–पा० । + तद्भूतनिर्देशो न विवक्षितः–पा० । = अविवक्षायां न किंचित्–पा० । ÷ स्यादिति–'तालव्यमायी यद्वृद्धम्' इति छन्दोगसूत्रेण गीतिदशायां यत्त्रिमात्रात्मकतया वृद्धं तालव्यं तत, आयीभवतीत्यर्थकेणेत्यर्थः । × पा० सू० ( ४–२–१२० ) ।

वक्तव्यम् । विवक्षायां तु निर्देश एव कारणम् । तस्मादप्रगीतं प्रयोक्तव्यमिति ॥ ५४ ॥

यत्स्थाने वा तद्गीतिः स्यात्पदान्यत्वप्रधानत्वात् ॥ ५५ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । यस्य पदस्य स्थान इरापदं प्रयुज्यते, तस्य पदस्य या गीतिः सा, इरापदे स्यात् । कुतः । पदान्यत्वप्रधानत्वात् । पदान्यत्वप्रधानं हीदं वाक्यम् । गिरापदस्य स्थान इरापदं भवतीति । नाप्रगीतं प्रयोक्तव्यमिति । अन्या हि वचनव्यक्तिरिरापदस्य+ विशेषे विधीयमाने । अन्या, इरापदे । एवं हि श्रूयते, इरापदस्य विकारं कृत्वोद्गेयमिति । तत्रानेन प्रकारेणेरापदं विधीयते, नान्यं प्रगाणादिरापदस्य विकारं ब्रूयात । न गिरापदस्येत्येतत्तद्धितेनोच्यते । नाप्रगीतस्येरापदस्य विकारस्तद्धितशब्देनाध्यवसीयते । पश्चात्तद्धितार्थो विकारं ब्रूयादित्यसावनूद्यत एव । यः प्रकृत्यर्थ इरापदस्येति, स विधीयते । तेन पदान्यत्वपरमेतद्वचनं, न गीत्यनन्वयपरम् * । गीतिर्हि विकारः सामान्यान्निर्दिश्यते ॥५५॥

---

स्यात् । न चैवं श्रूयते । तस्मात्स्वार्थे तद्धितः ॥ ५४ ॥

---

गिरापदे× कर्तव्या । कुतः । एतात्रापूर्वप्रयुक्ता हि गीतिः, न वर्णस्वरूपप्रयुक्ता । तस्माद्गिरापदाभावेऽपि गीतिरवतिष्ठते । सा च साकाङ्क्षा÷ । इरापदमपि विधीयमानं गीतिं प्रति साकाङ्क्षम् तस्मात्तयोः संबन्धः । ननु विकारतद्धितोऽयं, न स्वार्थीयः । आनर्थक्यप्रसङ्गात् । तस्माच्छब्देनैव गीतिर्विधीयत इति ।

सत्यम् । अत्र चतस्रो वचनव्यक्तयः प्रतिभान्ति । यद्वा, इरापदगीतिविकारे तद्धितोऽयमनूद्येरापदं= विधीयते । अथवेरापदमनूद्य गीतिः अथवोभयम्* ।

---

+ इरापदविशेषे–पा० । * गीत्यनन्वयकरम्—पा० । × गिरापदे कर्तव्येति–गिरापदे या गीतिः सेरापदे कर्तव्येत्यर्थः . अथवा–'गिरापदगीतिरिरापदे कर्तव्या' इति वा वार्तिकपाठ आवश्यकः ÷ साकाङ्क्षेति–गेयं प्रतीति शेषः । = अनूद्येति–तद्धिताभिहिता गीतिमिति शेषः । * अथवोभयमिति–प्रगीतामिरापदं कर्तव्यमित्येवमित्यर्थः ।

गानसंयोगाच्च ॥ ५६ ॥

गानसंयोगो भवति, उद्वेयमा इरा चा दाक्षासा, इतीरागानं दर्शयति ॥ ५६ ॥

वचनमिति चेत् ॥ ५७ ॥

इति चेत्पश्यसि, गानदर्शनमेतद्भवतीति। नैवम्। वचनं भवि-

अथवा, शुद्धमिरापदम्। तत्रेरापदस्य न लोकवेदयोर्गीतिः प्रसिद्धा। अप्रसिद्धत्वाच्च न शक्याऽनुवदितुम्। इरा,+ एवमप्रसिद्धत्वादेव न शक्याऽनुवदितुम्। अपि च यदीरापदमनूद्य गीतिर्विधीयते, गिरापदस्य निवृत्तिर्न प्राप्नोति। न गीत्या वर्णा निवर्त्यन्ते। अतुल्यकार्यत्वात्। तत्र गिरापदप्रतिषेधानुवादो न प्राप्नोति। तत्र गिरापदस्य भेदेन प्रतिषेधो वक्तव्यः। तस्मिन्नुच्यमाने वाक्यभेदः।

अपि च गिरापदे निषिद्धेऽनियमेन तत्स्थाने वर्णाः प्राप्नुवन्ति, नावश्यमिरापदम्। अथोभयं* प्रगीतमिरापदं च, तथा वाक्यभेदः। तस्मादिरैव प्रातिपदिकं× विधीयते। तच्च विधीयमानं गिरापदस्य या गीतिस्तां कार्यापत्त्या लभते।

**यदि पूर्वपक्षः-प्रप्रपदं प्रप्रीपदं वा प्रयोक्तव्यम्। यदि सिद्धान्तः-प्रप्रीपदमेव प्रयोक्तव्यम्।** नैतदनन्तराधिकरणस्य प्रयोजनम्। पदप्रयोगविकल्पमाह, न प्रगाणे। तस्मात्पूर्वाधिकरणस्य= प्रयोजनमिदं 'आम्नातादन्यत्' इत्यस्य, प्रप्रपदं प्रप्रीपदं वा पूर्वपक्षे, सिद्धान्ते प्रप्रीपदमेवेति। प्रमादाल्लिखितम्×। 'अप्रगाणात् +' इत्यस्य प्रयोजनम्, अप्रगीतमिरापदं पूर्वपक्षे। सिद्धान्ते तु प्रगीतं प्रयोक्तव्यम्।

+ द्वितीयपक्षं दूषयति-इरेत्यादिना। * तृतीयं दूषयति-अथेत्यादिना। × प्रातिपदिकमिति—ऐरमिति पदे-इति शेषः। = पूर्वाधिकरणस्येति-'आम्नातादन्यदधिकारे वचनाद्विकारः स्यात्' (अ० ९ पा० १ अ० १७ सू० ५०) इत्यस्येति शेषः। × प्रमादाल्लिखितमिति-लेखकैः प्रमादादस्मिन्नधिकरणे लिखितमित्यर्थः। + किं तर्ह्यस्याधिकरणस्य प्रयोजनमिति चेदाह-अप्रगाणादित्यादिना।

ष्यति, उद्गेयमा इरा चा दाक्षासा, इति ॥ ५७ ॥

न तत्प्रधानत्वात् ॥ ५८ ॥

नैतदेवम् । तत्प्रधानं हीदं वाक्यम् । किंप्रधानम् । इरापदप्रधानम् । निर्देशात् । न गीतिप्रधानम् । अनिर्देशादित्युक्तम् । तथा, इरापदस्यार्थवादो भवति, न गीतेः । इरामहं यजमाने दधानि, इति पदस्य चायमर्थवादो न गीतेः । तस्मात्प्रगीतं प्रयोक्तव्यमिति । किं भवति प्रयोजनं चिन्तायाः, नात्र कश्चिद्विशेषः । अन्यस्मिन्नेतत्सदृशे प्रयोजनमस्ति, न प्रप्रेति ब्रूयात्, प्रप्रीति ब्रूयात् । यदि पूर्वः पक्षः, प्रप्रपदं वा वक्तव्यं, प्रप्रीपदं वा । यदि सिद्धान्तः, प्रप्रीपदमेव वक्तव्यमिति ॥ ५८ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये नवमस्याध्यायस्य प्रथमः पादः ॥

---

यत्पुनरिदं नात्र कश्चिद्विशेषः । अन्यस्मिन्नेतत्सदृशे प्रयोजनमस्तीति । इदं, 'वचनमिति चेत्' इत्यस्य सूत्रद्वयस्य प्रयोजनम् । इरापदे वचनात्प्रगाणं, यदि वा स्थानापत्त्या, सर्वथेरापदं प्रगीतं प्रयोक्तव्यम् । प्रप्रीपदे तु न वाचनिकं प्रगाणमस्ति । किं तर्हि । न्यायात् । तत्र यदि वचनेन गानं* प्राप्यते, प्रप्रीपदादीनां तु वचनाभावादप्रगीतता स्यात् ।

तस्मात्प्रप्रीपदादीनां नैव स्यादप्रगीतता ।
पदान्यत्वप्रधानत्वाद्वाक्यस्य स्यात्प्रगीतता ॥५५॥५६॥५७॥५८॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां नवमाध्यायस्य प्रथमः पादः ।

---

* गानं प्राप्यत इति-इरापदे गानं प्राप्यते तत इति शेषः ।

## अथ नवमाध्यायस्य द्वितीयः पादः ॥

---

( सामादिशब्दानां गीतिवाचित्वाधिकरणम् ॥ १ ॥ )

[ १ ] सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥ पू०

सन्ति सामानि, रथंतरं–बृहत् वैरूपं–वैराजं–शाक्वरं–रैवतमिति, अभित्वा शूर नोनुम इत्येवमादिषु । तत्रैषोऽर्थः संदिह्यते । किं प्रगीता एते मन्त्राः सामानि, उत गीतयः सामानीति । ननु सिद्धं, गीतिषु* सामाख्येति । उच्यते । तत्र द्वितीयेऽध्याये मन्त्रगते भावशब्दे चोदकत्वं प्रति विचार्यमाणे, मन्त्राभावाशङ्कायां मन्त्रसद्भावोपपादनाय, तच्चोदकेषु= मन्त्राख्या, इति कृते लक्षणे अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रयिविदा विदुः । ऋचःसामानि यजूंषि इति, ऋगादीनां विभागाय प्रसक्तानुप्रसक्तं लक्षणं गीतिषु* सामाख्या, इत्युक्तम् । तत्र यदि प्रगीतो मन्त्रः साम, यदि वा गीतिमात्रम् । उभयथाऽपि, ऋग्यजुर्भ्यामन्यत्सामेति सिद्धे विभागे न विवेकाय प्रयत्नः, प्रयोजनाभावात् । इह तु प्रगीते मन्त्रेऽन्यत्कर्म, गीतिमात्रेऽन्यदिति विवेकाय प्रयत्यते ।

आह । नन्वेतदपि सिद्धं, गानकर्मणो वाचकः सामशब्द इति । उच्यते । तदेव पुनरभिधीयते स्मरणाय, उत्तरमधिकरणं चिन्तयितुम् । गीतिः सामेति स्थित इदं चिन्त्यते, गीतिषु ऋचः प्रधानभूता उत गुणभूता इति । आह । नैव स्मरणाय पूर्वपक्षोद्धरणम् । न हि मन्त्राः सामानीत्येषोऽर्थः स्मर्तव्यः । अत्रोच्यते । पूर्वपक्षेऽपि सिद्धान्तस्मरणार्थमेवोपादीयते । यत्प्रगीतं मन्त्रवाक्यं तत्सामेत्येवं पूर्वपक्षं कृत्वा गीतिमात्रं सामेति स्थापितम् । तस्मिन् स्थितेऽयमुत्तरो विचारः कर्तव्यः, गीतिषु किमृचः प्रधानभूता उत गुणभूता इति ।

किं प्राप्तम् । एके मन्यन्ते, प्रगीतं मन्त्रवाक्यं सामेति ।

---

* ( अ० २ पा० १ अ० ११ सू० ३६ ) । = ( अ० २ पा० १ अ० ७ सू० ३२ ) । तै० ब्रा० ( १-२-१ ) ।

कुतः । स्मृत्युपदेशाभ्याम् । एवं हि स्मरन्ति, प्रगीतं मन्त्रवाक्यं सामेति तत्रभवन्तश्छान्दसाः । एवं चोपदिशन्ति शिष्येभ्यः । आह । ननु यदेव स्मरन्ति, तदेवोपदिशन्ति । नैवं सत्युपदेशो हेत्वन्तरमिति । उच्यते । बाढम् । अन्यथा तर्ह्युपदेशं वर्णयामः । अयमुपदेशः । अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रयिविदा विदुः । ऋचः सामानि यजूंषि, इति । मन्त्रप्रकारः कश्चित्सामानीति मन्त्रोपदेशो भवति । तस्मादुपदेशान्मन्त्राः सामानीत्यवगच्छामः ॥ १ ॥

तदुक्तदोषम् ॥ २ ॥ सि०

तस्यैतस्य पक्षस्योक्तो दोषः सप्तमे * । ऋचः प्रदेशो नोपपद्यते, कवतीषु रथंतरं गायतीति । देशलक्षणा धर्मलक्षणा वा प्राप्नोतीति । तस्माद्गीतयः सामानि, न प्रगीतानि मन्त्रवाक्यानीति ॥ २ ॥

( अथवा—ऊहग्रन्थस्य पौरुषेयत्वाधिकरणम् ॥ १ ॥ )

एवं वा—

[ १ ] सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥ पू०

इदं संदिह्यते, योऽयमूहो नाम कया नश्चित्र आभुव इति । किमयमण्यार्षो नित्य उत पुरुषप्रणीत× इति । किं प्राप्तम् । एतान्यूहसामानि मन्त्रभूतानि आर्षाणि नित्यानीत्येके मन्यन्ते । कुतः । स्मृत्युपदेशाभ्याम् । एवं हि स्मरन्ति । मन्त्रभूतान्येतान्यार्षाणि नित्यानीति । उपदिशन्ति चैवंविधमेव शिष्येभ्यः। आह । ननु यदेव स्मरन्ति, तदेवोपदिशन्ति । बाढम् । अयमन्य उपदेशो वर्ण्यते, ऊहश्चिकीर्षित इति ब्राह्मणमुपदिशन्ति । चिकीर्षित इति च, इष्ट उच्यते । इच्छायां हि सन् विधीयते । यदि चायमपुरुषबुद्धिपूर्वको वेदतुल्यस्तत इष्टः । अथ पुरुषप्रणीतस्ततो न प्रमाणम् । यज्ञे चाचिकीर्षितो न प्रयोक्तव्यः । चिकीर्षित इति च शब्दो भवति । तस्मान्नित्य ऊह इति ॥ १ ॥

---

॥ १ ॥

---

* सप्तम इति—( अ० ७ पा० २ अ० १ सू० १३ ) इत्यत्रेति शेषः । × चिन्तयित्वा प्रगीतः—पा० । + मन्त्रभूतान्यार्षाणि—पा० ।

तदुक्तदोषम् ॥ २ ॥ सि०

तदेतदुक्तदोषं भवद्वचनम् । भवतैव हेतुं वर्णयताऽस्योक्तो दोषः, ऊहश्चिकीर्षित इति । ऊहश्चिकीर्षित इत्यनित्ये, एतद्भवति । यदुक्तम्, इष्टे चिकीर्षितशब्दो भवति । इच्छायां हि सन् विधीयत इति। उच्यते । सत्यम् । इष्टं कर्तुं यद्धि क्रियते, तत्कर्तुमिष्टं भवतीति । तस्मादनित्य ऊहः । यदुक्तं, स्मृतेर्नित्यतेति । नैषा स्मृतिः प्रमाणम् । दृष्टमूला ह्येषा । भवति हि वचनं, कवतीषु रथंतरं गायतीति । तस्मादतिदेशवचनान्न्यायेनैवं गातव्यमिति वाचनिकं प्रथमं विज्ञानम् । तत एषा स्मृतिः । तस्मादप्रमाणम्, कृत्रिम ऊह इति । किं भवति प्रयोजनम् । न्यायाविरुद्धमपि प्रमाणं, यथा पूर्वः पक्षः । यथा तर्हि सिद्धान्तः, न्यायाविरुद्धमप्रमाणम् ॥ २ ॥

( साम्नामृक्संस्कारकर्मत्वेन प्राधान्याधिकरणम् ॥ २ ॥ )

[ २ ] कर्म वा विधिलक्षणम् ॥ ३ ॥ पू०

तान्येवोदाहरणानि । तेष्वयमर्थः समधिगतः गीतिः सामशब्देनोच्यत इति । तत इदमिदानीं संदिह्यते, किं सा× गीतिः, ऋचः प्रति प्रधानभूता, उत गुणभूतेति । ननु सिद्धं संस्कारकर्मणः साम-

---

'तदुक्तदोषम् *' इति ह्येतदयुक्तम् । कथम् । 'कवतीषु रथंतरं गायति' इति कवत्यस्तावन्न कृतकाः । रथंतरमपि नैव कृतकम् । यदप्यतिदेशवाक्यं 'कवतीषु रथंतरं गायति' इति, तदपि नैव कृतकम् । तस्मादूहे= न किंचित्कृतकम् ।

अत्रोच्यते । रथंतरगीतौ कवतीषु क्रियमाणायां पुरुषस्य गीतिक्रियां प्रति यः प्रथमः प्रयत्नः स कृतकः । समाम्नायेन 'अभिवत्यां रथंतरगीतिर्दृष्टा । अतिदेशसामर्थ्याच्च' साऽन्यत्र नियता । यथा प्रयाजानां नित्यानामपि यदनु-

---

× सामगीतिः–पा० । * ऊहग्रन्थस्य पौरुषेयत्वसाधकं यद्भाष्यकारीयं वर्णकान्तरं तत्र सिद्धान्तं तावदाक्षिपति—तदुक्तेत्यादिना । = ऊह इति–ऊहनामके ग्रन्थे सामगानां प्रसिद्धे, इति शेषः ।

शब्दो वाचक इति, अपि= तु कर्मशब्दः स्याद्भावोऽर्थः प्रसिद्धग्रहणत्वादिति। उच्यते। सत्यम्, आक्षेपेण प्रवर्तते। स एव निर्णयो भविष्यति। किं प्राप्तम्। तेनैवाधिकरणेन संस्कारकर्मेति।

तथा प्राप्ते, ब्रूमः। प्रधानकर्म वा सामशब्देनोच्यत इति। किं कारणम्। प्रधानविधिलक्षणं ह्यत्रास्ति द्वितीया विभक्तिः–रथंतरं गायति, बृहद्गायतीति। तस्मात्प्रधानकर्मेति। अपि च, अकर्मकाले× गानं भवति। तद्यदि द्रव्यसंस्कारार्थं, संस्कृतं द्रव्यमदृष्टेन संस्कारेण, न कर्मकाले पुनः संस्कर्तुं शक्यम्। न हि स्निग्धस्य स्नेहनं शक्यं कर्तुं, पिष्टस्य वा पेषणम्। स एषोऽग्नीनामिवाभ्युपगन्तव्यः, अकर्मकाले क्रियमाणः संस्कारो भवतीति। अस्मत्पक्षे पुनः प्रधानकर्म फलाय भविष्यति। तत्राविप्रतिषिद्धमकर्मकाले गानम्। अपि च, श्रावण्यां पौर्णमास्यां व्रतान्युपाकृत्य, अर्धपञ्चमान् मासान् स्वाध्यायमधीयीतेति। तदेषां फलाय भविष्यति। इतरथा] पुरुषाणामुपदिश्यमानं कर्मणां कल्प्येत। तस्मादपि प्रधानकर्मेति॥ ३॥

तद्द्रव्यं वचनात्पाकयज्ञवत्॥ ४॥

आह। प्रधानकर्मेत्युच्यते। न चैतत्प्रधानकर्म। न हीदं फलदम्। फलकल्पनायां चाश्रुतं कल्प्येत। तेन यागं प्रति गुणभूतम्।

---

ष्ठानं तत्कृतकम्, एवमिहापि÷॥ २॥

---

ननु सप्तमे निर्णीतं संस्कारकर्म सामेति। उच्यते। यदि प्रधानकर्म,+ सर्वथाऽप्यतिदेशस्य सिद्धिः। इह गुणप्रधानताऽवश्यं विचारणीया। यदि

---

= (अ० ७ पा० २ अ० १ सू० १२)। × कर्मकाले–पा०। ÷ एवमिहापीति–अयमाशयः। रथंतरगीतिर्यथा 'अभि त्वा शूर नोनुमः' इत्यस्यामाम्नाता, न त्वेवं कवतीषु ऋक्षु। किंतु 'कवतीषु रथंतरं गायति' इत्यतिदेशशास्त्रात्त रथंतरगीतिः कवतीषु पुरुषेण स्वयमनुष्ठीयते। अत ऊहग्रन्थे, ऋचां साम्नां च स्वरूपेणापौरुषेयत्वेऽपि कवत्यादिष्वतिदिष्टन्यायसिद्धसामरचनाप्रकारस्य पौरुषेयत्वादूहग्रन्थः पौरुषेय इति। प्रधानकर्मेति–अथवा गुणकर्म, इत्यस्याप्युपलक्षणम्।

यदि न गुणभूतं, किमस्य द्रव्यम् , यत्प्रति प्रधानभूतमेतत् । तदुच्यते । ऋग्द्रव्यम् । ऋगस्य द्रव्यस्थानीया । यथाऽन्यस्य कर्मणो द्रव्यं साधकम् , एवमस्य ऋक् साधिका । तस्माद्दचं प्रति प्रधानभूतमेतत् । भूतं हि भव्यायोपदिश्यते । कथं पुनरेतदृग्द्रव्यम् । वचनात् । वचनमिदं भवति, ऋचि साम गायतीति । यथा, पाकयज्ञेषु तत्तद्वाचनिकं द्रव्यं भवति, लाजाः, धानाः, तण्डुलाः, आज्यमिति । एवमिहापि ऋग्द्रव्यं, वचनादिति ॥ ४ ॥

तत्राविप्रतिषिद्धो द्रव्यान्तरे व्यतिरेकः प्रदेशश्च ॥ ५ ॥

आह । या ऋगस्य वचनेनोच्यते, तद्द्रव्यमेतद्भवति+ । कथं द्रव्यव्यतिरेके सति द्रव्यान्तरप्रदेशे च तादिदं सामेति । अत्रोच्यते । अविप्रतिषिद्धमेतत् । गीतिमात्रं हि सामेति । द्रव्यमस्य निर्वर्तकं वाचनिकम् । तत्सामान्यविहितं विशेषविहितेन द्रव्यान्तरेण बाध्यते । यदत्र द्रव्यव्यतिरिक्तं गीतिमात्रं, तदेव बृहद्वा रथंतरं वेति न दोषो भवति । तस्मात्प्रधानकर्म सामेति ॥ ५ ॥

शब्दार्थत्वात्तु नैवं स्यात् ॥ ६ ॥ सि०

तुशब्दः पक्षं व्यावर्तयति । नैतदेवं÷ भवितुमर्हति, प्रधानकर्मसामेति । गुणकर्म स्यात् । कुतः । शब्दार्थत्वात् । शब्दस्योपकारकं साम प्रत्यक्षमुपलभ्यते । साम्नि क्रियमाण ऋगक्षराण्युच्चार्यन्ते । त- । स्मिन्न सति नादृष्टं कल्पनीयम् ॥ ६ ॥

परार्थत्वाच्च शब्दानाम् ॥ ७ ॥

परार्थाश्च शब्दाः स्तुत्यर्थाः । स्तुतिर्हि चोदिता, आज्यैः स्तुवते, पृष्ठैः स्तुवत इति । सा ऋगक्षरैरुच्चार्यमाणैः प्रत्यक्षाऽवगम्यते । ततः स्तुत्यर्थाया ऋचः सत्याः सामार्थता परिकल्प्येत । कल्पनायां च प्रमाणं नास्ति । तस्मादपि साम गुणभूतमृच× इति ॥ ७ ॥

---

प्रधानं ततो गीत्यनुरोधेन वर्णाः । अथ गुणभूताः, ततो विपरीतम् ॥ ३ ॥ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

---

+ तस्माद्द्रव्यमेतद्भवतीति—पा० । ( अ० १० पा० ६ अ० १ सू० २ ) ÷ नैवं भवितुमर्हति—पा० । × गुणभूतमिति—पा० ।

असंबन्धश्च कर्मणा शब्दयोः पृथगर्थत्वात् ॥ ८ ॥

इतश्च गुणभूतं साम । कुतः । असंबन्धश्च साम्नः स्तोत्रेण स्यात् । तत्प्रधानभावेन स्तुतिः साम्न उपादिश्येत, न साम स्तुतेः । तत्र बृहत् पृष्ठं भवति, रथंतरं पृष्ठं भवतीति वचनं बाध्येत । रथंतर-गुणकं पृष्ठं भवति, बृहद्गुणकं पृष्ठं भवतीत्येतदेवमुपादिश्यते । तद्‌गर्थे साम्न्यवकल्पते । प्रत्यक्षं हि तदा पृष्ठस्योपकारं साम करोति । यद-स्य वाचकं प्रकाशयति शब्दं, तद्रथंतरपृष्ठशब्दयोः सामानाधिकर-ण्यादेकार्थत्वे शक्यं विज्ञातुम् । पृथगर्थत्वे त्वसंबन्धः स्यात् । तस्मा-दृचः= साम गुणभूतमिति ॥ ८ ॥

संस्कारश्चाप्रकरणेऽग्निवत्स्यात्प्रयुक्तत्वात् ॥ ९ ॥

अथ यदुक्तं, अकर्मकाले* गानमृचः संस्कारकमग्न्याधानमिव कल्प्येत । प्रयुक्तत्वादिति । तत्परिहर्तव्यम् ॥ ९ ॥

अकार्यत्वाच्च शब्दानामप्रयोगः प्रतीयेत ॥ १० ॥

यदि ह्यकर्मकाले* गानं कृतं कर्मकालं यावत्तिष्ठेत्, न विन-श्येत् । ततः पुनरप्रयोगः प्रतीयेत । यदि वा पुनर्न शक्येत कर्मकाले गानं कर्तुं तथाऽप्यप्रयोगः स्यात् । शक्यन्ते तु प्रगीताः शब्दाः पुनः प्रयोक्तुम् । तस्मादकर्मकाले प्रयुक्ता असाधका इति कर्मकाले प्रयु-ज्येरन् । तस्मान्न दोषो भविष्यतीति ॥ १० ॥

आश्रितत्वाच्च ॥ ११ ॥

अपि च, कर्मकालाश्रितं गानं दर्शयति । औदुम्बरीं स्पृष्ट्वाऽ-नपाश्रित उद्‌गातोद्‌गायेदिति । सदस्यौदुम्बरी मध्यमा स्थूणा भव-ति । तां स्पृष्ट्वेति ब्रुवन् सदसि गानं दर्शयति । तस्मान्नाकर्मकाले× गानमग्न्याधानवत्कल्पयितव्यमिति ॥ ११ ॥

---

॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

---

+ तस्य प्रधानभावेन–पा० । = तस्मादप्यृचः–पा० * कर्मकाले–पा० । * कर्म-काले–पा० । × तस्मान्नाकर्मकालमग्न्याधान–पा० ।

प्रयुज्यत इति चेत् ॥ १२ ॥

अथ यदुक्तम्, अर्धपञ्चमान्मासानध्ययनं प्रयुज्यते, तत्फलाय भविष्यतीति । तत्परिहर्तव्यम् ॥ १२ ॥

ग्रहणार्थं प्रयुज्येत ॥ १३ ॥

न हि फलाय भवितुमर्हति । तथा ह्यदृष्टं कल्प्येत । दृश्यतेऽत्र प्रयोजनम् । यत्तावदुपाध्यायः शिष्यसंनिधावधीते, तद्ग्रहणार्थम् । यच्छिष्यस्तद्धारणार्थम् । ग्रहणधारणे प्रयोगार्थे भूमिराथिकवत्, शुष्कोष्टिवद्वा* । तद्यथा, भूमिराथिको भूमौ रथमालिख्य शिक्षां करोति, संग्रामे प्राशुभावो भवितेति । यथा च छात्रः शुष्केष्टीः प्रयुङ्क्ते, प्रयोगे प्राशुकर्मा भविताऽस्मीति । एवमेतद्द्रष्टव्यम् । तस्माद्दृष्टे सति नादृष्टायाध्ययनम् × । तस्मात्संस्कारकर्म सामेति ॥ १३ ॥

( तृचे गेयस्य साम्नः प्रत्यृचं परिसमापनाधिकरणम् ॥३॥)

[ ३ ] तृचेस्याच्छुतिनिर्देशात् ॥ १४ ॥ पू०

ज्योतिष्टोमे समाम्नायते, तस्मादेकं साम तृचे क्रियते स्तोत्रीयमिति । अत्रायमर्थः सांशयिकः । किं तिसृषु ऋक्षु व्यासज्य गानं कर्तव्यमुत प्रत्यृचं समाप्तं गानं कर्तव्यमिति । किं प्राप्तम् । व्यासज्येति । कुतः श्रुतिनिर्देशात् । एवं श्रूयते, एकं साम तृचे क्रियत इति । साम्नि क्रियमाणे, तन्निर्वृत्तौ= गुणभूता त्रिसंख्या ऋग्गता श्रूयते । तत्र यद्येकस्यामृच्युपक्रम्य तस्यामेवैतत्परिसमापयेयुः, न त्रिसंख्यया साधनमस्य क्रियमाणस्य परिच्छिन्द्युः । एकसंख्यापरि-

॥ १२ ॥ १३ ॥

---

ननु 'तृचे वा* लिङ्गदर्शनात्' इति दशमे तिसृषु ऋक्षु साम गेयमित्येतत्स्थापितम् । आधस्त्ये चाधिकरणे संस्कारकर्म सामेति स्थितम् । प्रतिसंस्कारं च संस्कारावृत्तिरित्यतो व्यासज्य गानपक्षो नैवोत्तिष्ठति ।

* शुष्केष्टिवच्च । × अध्यापनम्—पा० । = निर्वृत्तो—पा० । * ( अ० १० पा० ६ अ० १ सू० २ ) ।

च्छिन्नं क्रियमाणं स्यात् । तत्र श्रुतिर्बाध्येत । तद्यथा, अयं घटस्त्रिषु नागदन्तकेषु स्थाप्यतामित्युक्ते व्यासज्य स्थाप्यते, न पर्यायेण एवमिहापि द्रष्टव्यम् ।

ननु पर्यायेऽप्येवंजातियकः शब्दो भवति । यथा, त्रिषु गृहेषु× देवदत्तो भुङ्क्त इत्युक्ते न यौगपद्यमवगम्यते । पर्यायेणापि भुञ्जाने भवत्येषः वादः । एवमिहापि पर्यायेण प्राप्नोतीति । अत्रोच्यते । न तत्र त्रिसंख्या भुजिं प्रत्युपदिश्यते, येनैतदेवं भवति । तत्र गृहशब्देन* संबध्यते । त्रिषु गृहेषु= न द्वयोरेकस्मिन्वेति । यदा भुजिनिर्वृत्तिं ÷ प्रत्युपदिश्यते, तदा यौगपद्येनैव भोजयितव्यः । इह तु त्रिसंख्या क्रियतइत्यनेन संबध्यते । एवं सति क्रियायां त्रिसंख्या विहिता भवति । तत्र स्वपदगतस्य किंचिद्विधायकेन विहितं भवति । इतरथा, ऋचः संख्यायाश्च संबन्धस्य पदान्तरगतेन शब्देन भावनोच्येत । तथा, अर्थविप्रकर्षः स्यात् । तस्मात्सामनिर्वृत्तिं प्रति त्रिसंख्योच्यते ।

आह । ननु त्रिसंख्या ऋक्शब्देनैवात्र संबध्यते । अन्यथा, असति सामर्थ्ये समास एव न स्यादिति । अत्रोच्यते । न ब्रूमो न संबध्यत इति । संबध्यत एव । समासश्च भवति । स तु समासशब्दः

---

उच्यते । दशमे ह्येवं चिन्ता, तृचे साम गेयं, न द्वयोरेकस्यां वेति । इह, तृचगाने स्थिते किं प्रत्यृचमुत व्यासज्येति । यदुक्तं प्रत्यृचं गानं सिद्धमिति + । श्रुत्या न्यायबाधं मन्यमानः पूर्वपक्षमारभते । 'एकं साम तृचे क्रियते इत्ययं धातुः सामान्यवचनो* विशेषधातुना ( न ) निराकाङ्क्षी क्रियते । तस्मादयं निराकाङ्क्षीकर्तव्यः । साम चात्र द्वितीयासंयोगादीप्सितम् =। तस्मात्तेन निराकाङ्क्षी क्रियते सामान्यम् । धातुविशेषस्थानीयं सामजातम् । तस्य धातुविशेषस्थानीयस्य निर्वर्तकत्वेन तृचो विधीयते । एवं करोतिरभूतप्रादुर्भाववचनोऽ-

---

+ कुलेषु-पा० । * कुलशब्देन-पा० । = कुलेषु-पा० । ÷ भुजिं प्रति-पा० ।

+ सिद्धमिति—प्रतिप्रधानं गुणावृत्तिरिति न्यायादिति शेषः । * सामान्यवचन इति—धात्वर्थसामान्यात्मकभावनावचनः कर्मसाकाङ्क्षो धात्वर्थविशेषवाचिना धातुना निराकाङ्क्षी भवति, नान्यथेत्यर्थः । = द्वितीयासंयोगादिति—कर्मोत्पन्नलकारेण क्रियत इत्यनेन सामानाधिकरण्यादित्यर्थः ।

सामनिर्वृत्तावुपदिश्यत* इति। तत्र त्रिशब्दस्य ऋक्शब्दस्य चार्थो निर्वृत्तावुपदिष्टो भवति। ऋचि साम निर्वर्तयितव्यम्, एवं तास्तिस्र ऋचो भवन्ति, न न्यूना इति। इतरस्मिन्पक्षेऽभ्यासस्त्रिसंख्यया संबध्येत। तत्र, साम क्रियत इति लक्षणा स्यात्। अभ्यासनिर्वृत्तौ सामनिर्वृत्तिशब्दो भवेत्=। तस्माद्व्यासज्य गानं कर्तव्यम् ॥१४॥

शब्दार्थत्वाद्विकारस्य ॥ १५ ॥

इतश्च पश्यामः। तृचे व्यासज्य साम गातव्यमिति। कुतः। शब्दार्थोऽयं सामसंज्ञको विकारः। ऋचो गुणभूत इत्यर्थः। स यदि व्यासज्य क्रियते, बह्वन्यक्षराण्यविकृतानि भवन्ति। तत्रायं चोदकोऽनुग्रहीष्यते। तस्माद्व्यासज्य गातव्यम् ॥ १५ ॥

दर्शयति च ॥ १६ ॥

ऋक्* सामोवाच मिथुनी संभवावेति। सोऽब्रवीत्, न वै त्वं म-

---

नुगृहीतो भविष्यति। इतरथा यत्साम ऋचं संस्कुर्यात्तत्तृच इत्यभ्यासलक्षणा प्राप्नोति करोतेः।

अथवाऽन्यः श्रुतिप्रकारः। यदि, ऋगनुवादेन तृचो विधीयते तथा स त्येको× विधीयमानत्वाद्गुणभूतः। शब्दवृत्तेन चाप्रधानभूतः। अपर* उद्दिश्यमानत्वात्प्रधानभूतः *। शब्दवृत्तेन चागुणभूतः। तयोः सापेक्षत्वादसमास स्यात्। 'तृचे' इति च समासः। तस्मादपि च धात्वर्थे किंचिद्विधेयम्। अपि च, सप्तम्याऽऽधारत्वं तृचस्य प्रतिपाद्यते। तत्र यद्येकस्यां सामाऽऽधीयेत तथा सप्तमी बाध्येत तिसृषु श्रुता ॥ १४ ॥ १५ ॥

---

---

* उपयुज्यते—पा०। = वर्तेत—पा०। * 'ऋक् सामोवाच, मिथुनी संभवावेति। सोऽब्रवीत् 'न वै त्वं ममालं जायात्वे, वेद्दो मम महिमेति। ते द्वे भूत्वोचतुः। सोऽब्रवीत्, न वै वां ममालं स्थो जायात्व इति। तास्तिस्रो भूत्वोचुः। सोऽब्रवीत्, संभवामेति। तस्मादेकं साम तृचे क्रियते स्तोत्रीयम्' इत्येवं भाट्टदीपिकायां खण्डदेवधृतः पाठः। × एक इति—तृच इत्यत्र त्रिशब्दोपात्तत्रित्वरूपोऽर्थ इत्यर्थः। * ऋक्शब्दार्थो वस्तुतः शब्दवृत्त्या च प्रधानभुत इत्याह—अपर इत्यादिना।

मालमसि जायार्थे, वेदो मम महिमेति । ते द्वे भूत्वोचतुः । सोऽब्रवी-त् । न युवां ममालं स्थो जायार्थे, वेदो मम महिमेति । तास्तिस्रो भूत्वोचुः, मिथुनी संभवामेति । सोऽब्रवीत्, संभवामेति । तस्मादेकं साम तृचे क्रियते स्तोत्रीयामिति । नैका स्तोत्रीयसाम्नः संभवति । नापि द्वे, तिस्रः संभवन्तीति व्यासज्य गानं दर्शयति ॥ १६ ॥

वाक्यानां तु विभक्तत्वात्प्रतिशब्दं समाप्तिः स्यात्सं-
स्कारस्य तदर्थत्वात् ॥ १७ ॥ सि०

तुशब्दः पक्षं व्यावर्तयति । वाक्यानि विभक्तानि त्रीण्येतानि । यास्तिस्र ऋचस्तत्रैकैका ऋक् कृत्स्नेन पदग्रामेण कांचित्स्तुतिमभि-निर्वर्तयति, न ऋगन्तरेण सह कंचिदर्थं संस्तौति तत्र साम, ऋचः संस्तवमभिनिर्वर्तयन्त्या गुणभावं गच्छत्साहाय्यं करोति । तत्र यदि व्यासज्य गीयेत, न ऋचः स्तुतिमभिनिर्वर्तयन्त्याः साम उपकारकं स्यात् । न हि सामावयवः साम भवतीति । न च ऋक्समुदायेन कश्चिदर्थः स्तूयते, यत्र सामसंबद्धा स्तुतिं कुर्यात् । ऋक् स्तुतिं क-रोति, सा न सामसंबद्धा । य ऋक्समुदायः सामसंबद्धः स स्तुतिं न करोति । तत्र प्रत्यृचं साम्नि परिसमाप्ते क्रियमाणे सामवता शब्देन स्तुतिः कृता भवति । सामसंस्कारस्य स्तुतिभावनार्थत्वात् । प्रत्यृचं

---

॥ १६ ॥

---

प्रत्यृचं वा गेयम् । कुतः । सा स्तोत्रसाधनतया विहिता । सा स्वरं वर्णानां संस्कारमनियमेनाऽऽकाङ्क्षति । तत्र साम नियम्यते संस्कारकत्वेन । तस्मात्साम ऋक्संस्कारद्वारेण स्तोत्रेण संबध्यते । यथा ऋग्गुणः । ‘ एकं साम तृचे क्रियते ’ इति निर्ज्ञाते साम्नि संस्कारके गुणवाक्यमिदम् । तत्र योऽप्राप्तो गुणः स विधीयते । यत्साम्ना ऋचं संस्कुर्यादित्यनूद्यते, तास्तिस्र इति विधी-यते । व्यासज्य गाने साम्ना न ऋक् संस्क्रियेत । ऋगेकदेशः संस्क्रियेत । न च ऋगेकदेशस्य स्तोत्रीयेण संस्कारोऽपेक्षितः । ऋचः स्तुतिसाधनत्वात् । तस्माद्व्या-सज्य गाने कृत्स्नं वाक्यमनर्थकं स्यात् ।

परिसमाप्तं गानं कर्तव्यमिति ॥ १७ ॥

तथा चान्यार्थदर्शनम् ॥ १८ ॥

अन्यार्थमपि वाक्यमेतमर्थं दर्शयति । अष्टाक्षरेण प्रथमायामृचि प्रस्तौति द्व्यक्षरेणोत्तरयोरिति प्रस्तावभेदं* दर्शयति । तथा च, एका वाऽस्योत्तमा स्तोत्रीया, तामुद्गृह्णोद्गायेदिति–उद्गीथभेदं दर्शयति । तस्मादपि प्रत्यृचं गानं कर्तव्यमिति । अर्धर्चप्रगीतेष्वपि ऋच्येव गानं कर्तव्यम् । अपरिपूर्णं तद्वाक्यमर्धर्चे भवति । ऋचि तु परिपूर्यत इति । पादप्रगीतेषु पाद एव गानं कर्तव्यमिति । पाद एव हि तत्परिपूर्णं वाक्यम् । यथा, गोष्ठो वासिष्ठ इति । एवं यावति परिपूर्णं वाक्यं, तावति साम परिसमापयितव्यम् । क्वचित्पादेऽपि पूर्णं वाक्यम् । ऋच्यपि, क्वचिदर्धर्चेऽपि परिपूर्णम् । यत्र यथा परिपूर्णं तत्र तथा गातव्यमिति ॥ १८ ॥

अनवानोपदेशश्च तद्वत् ॥ १९ ॥

अनवानोपदेशश्च तद्वदुक्तो भविष्यति । यथाऽस्माभिर्न्याय उपदिष्टः । अनवानं गायत्रीति, शक्यतेऽनवानं प्रत्यृचं परिसमापयितुम् । न तु तिसृषु व्यासज्य शक्यते । अपि च, स्वाध्यायकाले प्रत्यृचं गानं परिसमापितम् । स्वाध्यायकाले चाभ्यासः, प्रयोगकाले कथं प्राप्नुता स्यादिति । तद्यदि प्रयोगकाले प्रत्यृचं गानं कर्तव्यं, ततः स्वाध्यायकाले तदभ्यासो युक्तः । तस्मादपि प्रत्यृचं गेयमिति ॥ १९ ॥

---

पादप्रगीतेषु पाद एव गानं कर्तव्यम् । पाद एव हि तत्परिपूर्णं वाक्यम् । यथा गोष्ठो वासिष्ठ इति । एतदयुक्तं भाष्यम् । कथम् । ऋच्येवैते सामनी× उत्पन्ने, न पादे । समाना गीतिरिति लाघवात्त्रिषु पादेषु न गीयते । यथा, 'तेभ्यो दश प्राचीः' इति मन्त्रे । अपि च, पादोत्पन्नायाः पाद एव प्रयोगश्छान्दोग्ये नैव दृश्यत ऊह+ इति ॥ १७ ॥ १८ ॥ १९ ॥

---

* प्रस्तावे भेदं–पा० । × एते सामनी इति–गोष्ठवासिष्ठसंज्ञके सामनी इत्यर्थः ।
\+ ऊहे–ऊहग्रन्थे ।

अभ्यासेनेतरा श्रुतिः ॥ २० ॥

अथ यदुक्तं, तस्मादेकं साम तृचे क्रियत इति । तास्वभ्यासेनेतरा श्रुतिर्द्रष्टव्या। पर्यायेणेत्यर्थः। न ह्यत्र ऋक् सामनिर्वृत्त्यर्थमुपादीयते। तस्मान्न शक्यमिदं वक्तुम्। सामनिर्वृत्तिसाधनीभूतामृचं त्रिशब्दः परिच्छेत्स्यतीति । साम स्तोत्रस्य गुणभूतं निर्दिश्यते। रथंतरं पृष्ठं भवति, बृहत् पृष्ठं भवतीत्येवमादि । तत्र प्रत्यृचं न्यायेन गानं प्राप्तं, न सामनिर्वृत्त्या संख्या संबध्यते। किं तर्हि। ऋग्भिः। तत्रान्यथा नावकल्पत इत्यभ्यासो लक्ष्यते। तिसृष्वभ्यासितव्यं सामेति। यथा त्रिषु कुलेषु देवदत्तो भोजयितव्य इति। यदा त्रिसंख्या कुलैः संबध्यते, तदाऽभ्यासो लक्ष्यते। एवमिहापि द्रष्टव्यम्। तस्मात्प्रत्यृचं परिसमाप्तं गानं कर्तव्यमिति ॥ २० ॥

( समानच्छन्दस्कास्वेव तिसृषु ऋक्षु गानाधिकरणम् ॥ ४ ॥ )

[ ४ ] तदभ्यासः समासु स्यात् ॥ २१ ॥ सि०

अस्ति ज्योतिष्टोमः। ज्योतिष्टोमेन स्वर्गकामो यजेतेति। तत्रैतत्समाम्नायते, तस्मादेकं साम तृचे क्रियते स्तोत्रीयमिति। तत्रैतत्समधिगतम्। प्रत्यृचं परिसमाप्तं गेयमिति । इदमन्यत्सांशयिकं, समासु विषमासु वा गेयमुत समास्वेवेति। किं तावन्नः प्रतिभाति। नियामकस्य शास्त्रस्याभावादनियम इति।

एवं प्राप्ते, ब्रूमः। समास्वेव गेयं, न नानाच्छन्दस्कास्विति। किमेवं भविष्यति। गीतिः संशरविलेशौ न भविष्यतः। यदि न्यूनच्छन्दस्का ऋच उपादास्यामहे गीतिं संशृणीयाम। अथ, अधिकच्छन्दस्काः, ततो गीतिं विलेशयाम। उभयथा चाऽऽर्षं बाधेमहि। समासु तूपादीयमानासु न किंचिद्दुष्यति। तस्मात्समासु गानं कर्तव्यमिति। अपि च, त्रिशब्दोपचारः समासु युक्तो भविष्यति। समाने हि कस्मिंश्चिदाश्रीयमाणे संख्याव्यवहारो भवति ॥ २१ ॥

---

॥ २० ॥ २१ ॥

लिङ्गदर्शनाच्च ॥ २२ ॥

लिङ्गं खल्वप्यस्मिन्नर्थे पश्यामः । स्थाल्यां सक्त्ववधीयत इत्याहुः, यद्बृहद्गायत्रीषु क्रियते, ऋक्त्वेनान्तरुजतीति, न चास्यां संभवतीति विच्छन्दस्कासु दोषं ब्रुवन् समानच्छन्दस्कासु गानं दर्शयति ॥ २२ ॥

( उत्तराशब्देनोत्तराग्रन्थपठितानामेव ऋचामुपादानाधिकरणम् ॥ ५ ॥ )

[ ५ ] नैमित्तिकं तूत्तरात्वमानन्तर्यात्प्रतीयेत ॥ २३ ॥ सि०

ज्योतिष्टोमे समामनन्ति । रथंतरमुत्तरयोर्गायति, बृहदुत्तरयोर्गायति, कवतीषु रथंतरं गायति, यद्योन्यां गायति, तदुत्तरयोर्गायतीति। तत्रैतत्समधिगतम् । समासु गेयमिति । अथेदानीमिदं संदिह्यते । किं योन्युत्तरयोर्वा, उत्तराग्रन्थसमधिगतयोर्वा गेयमुतोत्तराग्रन्थसमधीते एव उपादातव्ये इति । किं प्राप्तम् । नियमकारिणः शास्त्रस्याभावादनियम इति ।

एवं प्राप्ते, ब्रूमः । नैमित्तिकं तूत्तरात्वमुत्तराग्रन्थसमधीतासूपपद्यत इति । कुतः । समाख्यानात् । प्रकृतत्वाच्चोत्तराग्रन्थाधीतानाम् * । आह । द्वाभ्यामपि समाख्याप्रकरणाभ्यां वाक्यं बलीयः । तस्मादनियम एव प्राप्नोति । अत्रोच्यते। सर्वे हि संबन्धिशब्दाः पदान्तरमनपेक्षमाणा न कंचिदप्यर्थमाहुः । तस्मादपेक्षितं पदान्तरं, तत्प्रकृतं संनिहितं वा । इतरथाऽपरिपूर्णार्थं वाक्यमनभिधायकमेव कस्यचिदर्थस्य स्यात् । संज्ञाग्रहणे× पुनर्न पदान्तरमपेक्षते । श्रुत्यैव प-

---

'रथंतरमुत्तरयोर्गायति' इति । अत्र पूर्वपक्षवाद्युत्तराशब्दं संख्याशब्दं मन्यते । 'यद्योन्यां तदुत्तरयोर्गायति' इति वाक्याद्योन्युत्तरे गम्येते । प्रकरणादुत्तराग्रन्थसमाम्नाते । प्रकरणाच्च वाक्यं बलीयः । अथवा, 'यद्योन्यां तदुत्तरयोः' इति योन्युत्तरे वाक्यात् । उत्तराग्रन्थपठिते अपि वाक्यादेव । तस्मादनियमः ।

---

* उतराग्रन्थसमधीतानाम्—पा० ।× संज्ञासंज्ञिग्रहणे न पुनः—पा० ।

रिपूर्णार्थो गृह्यते। तस्मान्न संबन्धिशब्दोऽध्यवसानीयः। उत्तरासंज्ञैवोपादातव्येति। न हि संज्ञासु गृह्यमाणासु पदान्तरानन्तर्यमपेक्षितव्यं भवति ॥ २३ ॥

ऐकार्थ्याच्च तदभ्यासः ॥ २४ ॥

तास्वेव चोत्तराग्रन्थसमधीतासु सामाभ्यसितव्यम् । एवमेकार्थता तृचशब्दस्य भविष्यति। एकं कंचित्सामान्यविशेषमाश्रित्य तृचशब्दमुपचरन्ति। एतदेवमुक्तम्। यद्विशेषे कस्मिंश्चित्संख्या भवति। इतरथा हि सर्वत्र सर्वसंख्या भवेयुः। तथा हि संव्यवहाराभावः स्यात्। तस्मात्समानच्छन्दस्कासु समानदेवताकासु च तृचशब्दोपचारादुत्तराग्रन्थसमधीता एव ग्रहीतव्या इति ॥ २४ ॥

( अथवा—त्रैशोकसाम्न उत्तराग्रन्थपठितयोर्बृहत्योरेव गानाधिकरणम् ॥ ५ ॥ )

एवं वा—

[ ५ ] तदभ्यासः समासु स्यात् ॥ २१ ॥ पू०

अस्ति द्वादशाहः, द्वादशाहेन प्रजाकामं याजयेदिति। तत्र चतुर्थेऽहनि त्रैशोकं नाम साम, अतिजगत्यामुत्पन्नम्। अतिजगती-×

---

सिद्धान्तस्तु, उत्तराशब्दो रूढ्या ग्रन्थे प्रसिद्धः। उत्तरा वर्तते, उत्तरा अध्यापयाम इति। तस्मिन्गृह्यमाणे न पदान्तरसंनिधानमपेक्षितव्यम्। योन्युत्तरासु गृह्यमाणासु प्रकृतत्वमपेक्षितव्यम् =। तत्र विलम्बितः प्रत्ययः। इतरत्र त्वविलम्बितः ॥ २३ ॥

---

एकविंशतिकृत्वः* षोडशिन्यभ्यस्यमाने त्रैशोकस्याभ्यास इति। एतदयुक्तम्। न हि द्वादशाहे षोडशिन एकविंशतिकृत्वः प्रयोगः। किं तर्हि। सकृदेव प्रयोगः। तस्मादन्यो वाक्यार्थः। 'एकविंशः षोडशी' इति सर्वस्तोत्राणि षोडशीनि, एकविंशानि भवन्ति। ( तत्रैकविंशतिकृत्वः+ संपत्तये )

---

× अतिजगतीति—पा०। = अपेक्षितव्यमिति—संबन्धिशब्दत्वादिति शेषः। * यत्तावद्भाष्यकारैः 'तदभ्यासः समासु स्यात्' इत्यादिसूत्रचतुष्टयेन वर्णकान्तरमारचितं तत्र 'ऐकार्थ्याच्च तदभ्यासः' इति सूत्रस्थं भाष्यमाक्षिपति—एकविंशतीत्यादिना। + चिह्नितस्थाने 'तत्रैकविंशतित्वसंपत्तये' इति पाठ आवश्यक इति भाति।

विश्वाः पृतना अभिभूतरं नरं सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे। क्रत्वा वरिष्ठं वर आमुरीमुतोग्रमोजिष्ठं तवसं तरस्विनम्। उत्तरे द्वे बृहत्यौ। तयोः पूर्वा, नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरा। सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः। उत्तरा, समीं रेभासो अस्वरन्निन्द्रं सोमस्य पीतये। स्वर्पतिं यदीं वृधे धृतव्रतो ह्योजसा समूतिभिरिति। तत्रैषोऽर्थः सांशयिकः। किमन्ये अतिजगत्यावुपादाय समासु गेयमुत ये एव उत्तरे बृहत्यौ, एते एवोपादाय विषमास्वेव गातव्यमिति। किं प्राप्तम्। संशरविलेशौ मा भूतामित्यन्ये उत्पत्तिजगत्यावुपादायैतत्साम समास्वेवाभ्यासितव्यमिति ॥२१॥

लिङ्गदर्शनाच्च ॥ २२ ॥

लिङ्गं खल्वप्यस्मिन्नर्थे दर्शयति, अतिजगतीषु स्तुवन्तीति। किं लिङ्गम्। अतिजगतीष्विति बहुवचनम्। तस्मादन्ये अतिजगत्यावुपादातव्ये इति ॥ २२ ॥

नैमित्तिकं तूत्तरात्वमानन्तर्यात्प्रतीयेत ॥ २३ ॥ सि०

नैमित्तिकं तूत्तरात्वमानन्तर्यादुत्तरापाठनिमित्तमानन्तर्ये सति प्रतीयेत। श्रुतिर्हि वाक्याद्बलीयसीति। प्रकृतत्वादुत्तरे बृहत्यावेवमनुग्रहीष्येते। तस्मान्नान्ये आदातव्ये× इति ॥ २३ ॥

ऐकार्थ्याच्च तदभ्यासः ॥ २४ ॥

एवं च समानदेवताके त्रैशोके= तृच इति तृचशब्दोपचारो युक्तो भविष्यति। तस्मादपि नान्ये उपादातव्ये इति। अत्राऽऽह। अथ यदुक्तम्, अतिजगतीषु स्तुवन्तीति+ शब्दोपचारादतिजगतीबहुत्वं दर्शयतीति। तत्परिहर्तव्यम्। अत्रोच्यते। तदभ्यास एव* द्रष्टव्यः। षोडश्यभ्यासः। एकविंशः षोडशीति, एकविंशतिकृत्वः षोडशिन्यभ्यस्यमाने त्रैशोकाभ्यासः। तत्र सप्तकृत्वोऽतिजगत्यामभ्यस्यमानायामतिजगतीषु स्तुवन्तीति वचनमुपपत्स्यत इति ॥ २४ ॥

---

त्रैशोकस्य सप्तकृत्वोऽभ्यासः। तस्मिन्नभ्यस्यमाने सप्तातिजगत्यो भवन्ति। एवं सति जगतीबहुत्वं भविष्यति ॥ २४ ॥

---

× उपादातव्ये—पा०। = त्रैशोके तृचशब्दोपचारो भविष्यति—पा०। + स्तुवन्तीत्यतिजगतीबहुत्वं—पा०। * एष—पा०।

( बृहद्रथंतरयोः स्वयोन्युत्तराप्रग्रथनेन संपादितककुभोरेव गानाधिकरणम् ॥ ६ ॥ )

[ ६ ] प्रागाथिकं तु ॥ २५ ॥ सि०

ज्योतिष्टोमे श्रूयते, बृहत् पृष्ठं भवति, रथंतरं पृष्ठं भवतीति। रथंतरस्य योनिर्बृहती, अभि त्वा शूर नोनुमो दुग्धा इव धेनवः। ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः। उत्तरा पाङ्क्तिः, न त्वावान् अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते। अश्वायन्तो मघवन्निन्द्र वाजिनो, गव्यन्तस्त्वा हवामहे । बृहतो योनिर्बृहत्येव, त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः । उत्तरा पाङ्क्तिरेव, स त्वं नश्चित्र वज्रहस्त धृष्णुया महःस्तवानो अद्रिवः । गामश्वं रथ्यमिन्द्र संकिर सत्रा वाजं न जिग्युषे, इति । तयोर्वैच्छन्दस्कं गानमाम्नायते, न वै बृहद्रथंतरमेकच्छन्दो यत्तयो* पूर्वा बृहती ककुभावुत्तरे इति। तत्रायमर्थः सांशयिकः। किमन्ये उत्पत्तिककुभावागमय्य गातव्यमुत याऽसौ पूर्वा बृहती, उत्तरा च पाङ्क्तिस्तयोः प्रग्रथनेन तृचकर्म कृत्वा ककुबुत्तराकारं गानं कर्तव्यमिति। किं प्राप्तम् । उत्पत्तिककुभावागमयितव्ये इति। कुतः। एवमन्यासां ककुभामुत्पत्तिरथर्वती भविष्यति, यदि ताः ककुप्कार्ये प्रयुज्यन्ते । आह। ननु वाचस्तोमे तासामर्थवत्ता भविष्यति। उच्यते। सत्यमर्थवत्ता तत्र भविष्यति। ककुप्कार्यार्थताऽपि तु गम्यते। सा नापह्नोतव्येति।

एवं प्राप्ते, ब्रूमः । प्रागाथिकं तु। तुशब्दः पक्षं व्यावर्तयति। प्रागाथिकं सामगानं कर्तव्यमिति। याऽसौ पूर्वा बृहती, उत्तरा च पाङ्क्तिस्तयोः प्रग्रथनं कर्तव्यम् । एवं हि स्मरन्ति। काकुभः प्रगाथ इति। आह। ननु ककुभि, अनाधायां काकुभ इति न प्राप्नोतीति। उच्यते। तस्येदमिति, तत्र भव इति वा, न दोषः ॥ २५ ॥

॥ २५ ॥

— —

* यच्चैतयोः—पा०। × ककुभावुत्तराकारं—पा०।

स्वे च ॥ २६ ॥

एवं च, स्वे छन्दसि गानं कृतं भवति । उत्तरापाठेन ह्यत्रैषा पङ्क्तिरुपदर्शिता तृचकर्मणि । तत्र प्रकृतहानमप्रकृतप्रक्रिया च न कृता भविष्यति । तस्मादपि तयोः प्रग्रथनं कर्तव्यमिति ॥ २६ ॥

प्रगाथे च ॥ २७ ॥

एवं चात्र प्रगाथशब्द उपपन्नो भवति । प्रकर्षं हि प्रशब्दो द्योतयति । प्रकर्षेण यत्र गानं स प्रगाथः । कश्च प्रकर्षः । यत्किंचित्पुनर्गायति । तस्मादपि प्रकृतयोः प्रग्रथनं कर्तव्यमिति ॥ २७ ॥

लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥

अव्यतिरेकेण च सर्वत्र लिङ्गं दर्शयति । कथमिदमव्यतिरेकेणेति । यत्प्रकृतयोरेव प्रग्रथनमुपपद्यते, न प्रकृतव्यतिरेकेणेति । किं लिङ्गं भवति । एवमाह । एषा वै प्रतिष्ठिता बृहती या पुनःपदा । तद्यत्पादं पुनरारभते तस्माद्वत्सो मातरमभि हिंकरोतीति । पुनःपादारम्भः प्रग्रथन उपपद्यते, नान्यथा । तस्माद्याऽसौ पूर्वा बृहती, उत्तरा च पङ्क्तिः, तयोः प्रग्रथनेन तृचकर्म कृत्वा ककुबुत्तराकारं गानं कर्तव्यमिति ॥ २८ ॥

( अथवा—बृहतीविष्टारपङ्क्त्योरेव प्रग्रथनेन संपादिते बार्हते तृचे रौरवयौधाजयसाम्नोर्गानाधिकरणम् ॥ ६ ॥ )

एवं वा—

[ ६ ] प्रागाथिकं तु ॥ २५ ॥ सि०

अस्ति ज्योतिष्टोमः । ज्योतिष्टोमेन स्वर्गकामो यजेतेति । तत्र त्रिच्छन्दा आवापो माध्यंदिनः पवमानः पञ्चसामा । गायत्रामहीयवे गायत्रे तृचे भवतः, रौरवयौधाजये बार्हते तृचे, औशनमन्त्यं त्रिष्टुप्स्विति । यदेतद्रौरवं यौधाजयं च द्वे सामनी, तयोः पूर्वा बृहती,

---

एवं हि स्मरन्ति । काकुभः प्रगाथ इति । एतदयुक्तम् । बार्हत एवायं प्रगाथश्छन्दोगैः स्मर्यते । अतो भ्रान्त्या परिचोदनापरिहारौ ॥ २६ ॥ ॥ २७ ॥ २८ ॥

पुनानः सोम धारयापो वसानो अर्षसि । आ रत्नधा योनिमृतस्य सीदस्युत्सो देव हिरण्ययः । उत्तरा विष्टारपङ्क्तिः, दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत् । आपृच्छ्यं धरुणं वाज्यर्षति नृभिर्धूतो विचक्षणः । तदत्र संशयः किमन्ययोरुत्पत्तिबृहत्योरागमं कृत्वा समासु गानं कर्तव्यमुत याऽसौ पूर्वा बृहती, उत्तरा च विष्टारपङ्क्तिस्तयोः प्रग्रथनेन तृचकर्म कृत्वा बृहतीकारं गानं कर्तव्यमिति । किं प्राप्तम् । अन्ये बृहत्यावागमयितव्ये इति । कुतः । एवमृचामुत्पत्तिरर्थवती भविष्यतीति ।

एवं प्राप्ते ब्रूमः । प्रागाथिकं तु । तुशब्दः पक्षं व्यावर्तयति । प्रागाथिकं सामगानं कर्तव्यं, नोत्पत्तिबृहत्यावागमयितव्ये । प्रकृतयोरेव प्रग्रथनं कर्तव्यम् । एवं हि स्मरन्ति, बार्हतः प्रगाथ इति । उत्पत्तिबृहत्योरानीयमानयोः प्रगाथो न स्यात् । तत्र स्मृतिर्बाध्येत । तस्मात्प्रकृतयोः प्रग्रथनं कर्तव्यमिति ॥ २५ ॥

स्वे च ॥ २६ ॥

एवं च स्वे छन्दसि प्रकृते गानं भविष्यति, न प्रकृतहानमप्रकृतप्रक्रिया । तस्मादपि नान्ये बृहत्यावागमयितव्ये इति ॥ २६ ॥

प्रगाथे च ॥ २७ ॥

एवं च प्रगाथशब्द उपपन्नो भविष्यति । स हि प्रकर्षे गानस्य भवति । प्रकर्षश्चेह पुनःपादे, उपादीयमाने× भवति । तस्मादपि नान्य बृहत्यावुपादातव्ये इति ॥ २७ ॥

लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥

अव्यतिरेकेण च लिङ्गं दर्शयति । किं लिङ्गं भवति । एवमाह, षष्टिस्त्रिष्टुभो माध्यंदिनं सवनमिति । कथं कृत्वा लिङ्गम् । यदि प्रग्रथनेन बृहतीकारं गानं क्रियते, ततः सर्वस्मिन्= सवने या ऋचः

॥ २५ ॥ २६ ॥ २७ ॥

—

× गीयमाने—पा० । = सर्वस्मिन् सवने इत्यस्य स्थाने, अस्मिन् सवने इति पाठ उचितः ।

समाम्नातास्ताः षष्टिर्भवन्ति । इतरथा उत्पत्तिबृहत्योरानीयमानयोरभ्यधिका भवेयुः । तदिदं निर्दिश्यते, गायत्रामहीयवे गायत्रे तृचे भवतः । ताः षड् गायत्र्यः । रौरवयौधाजये बार्हते । ता अपि षड् बृहत्यः । औशनमन्त्यं त्रिष्टुप्सु । ता अपि तिस्रस्त्रिष्टुभः । अथ होतुः पृष्ठे बृहति रथंतरे वा सप्तदशस्तोमे क्रियमाणे पञ्च बृहत्यो भवन्ति । द्वादश च ककुभः । कथम् । एषा हि तत्र तत्र विष्टुतिः पञ्चभ्यो हिंकरोति, स तिसृभिः, स एकया स एकया । पञ्चभ्यो हिंकरोति, स एकया, स तिसृभिः स एकया । सप्तभ्यो हिंकरोति स एकया, स तिसृभिः, स तिसृभिरिति ।

तत्र बृहतीभिस्तिसृभिः प्रथममेकया च ककुभा, पुनश्चैकया ककुभा । ततः पुनरेकया बृहत्या तिसृभिः ककुब्भिः, एकया च ककुभा । एवं चतस्रो बृहत्यः षट् ककुभः । ततः पुनः, एकया बृहत्या, पुनश्च तिसृभिः ककुब्भिः । पुनश्च तिसृभिः ककुब्भिरिति । एवं पञ्च बृहत्यो द्वादश ककुभ इति । ताभिश्च बृहतीभिः सहैकादश बृहत्यो भवन्ति । ततः षण्णां गायत्रीणां चतस्रो गायत्र्यो द्वादशभिः ककुब्भिर्द्वादश बृहत्यो भवन्ति । एवं त्रयोविंशतिर्बृहत्यः । ततो वामदेव्ये सप्तदशका गायत्र्यः । पावमानीभ्यां द्वाभ्यां गायत्रीभ्यामवशिष्टाभ्यां सहैकोनविंशतिर्गायत्र्यो भवन्ति । ततो नौधसकालेययोरेकत्र सप्तदश बृहत्यः, एकत्र सप्तदश । ताश्चतुस्त्रिंशत्, पूर्वसंकलिताभिस्त्रयोविंशत्या बृहतीभिः सप्तपञ्चाशद्बृहत्यो भवन्ति । यास्ता एकोनविंशतिर्गायत्र्यस्तासां सप्तपञ्चाशता गायत्रीपादैः सह सप्तपञ्चाशद्बृहत्यः सप्तपञ्चाशत् त्रिष्टुभो भवन्ति । पावमानीभिस्त्रिष्टुब्भिः सह षष्टिस्त्रिष्टुभ इति सिद्धं भवति ।

अथ बृहद्रथंतरयोरुत्पत्तिककुभोरागमः क्रियते ततो याः सवने-

---

अत्र ग्रन्थः । षष्टिस्त्रिष्टुभो माध्यंदिनं सवनमिति । नात्र कर्माणि सवनशब्द इति । यदि कर्मणि सवनशब्दो वर्तेत, तथा सति ज्योतिष्टोममात्रे प्रवृत्तो न माध्यंदिनं विशेष्यते । तत्रायं प्रयोग एव न स्यात्*, 'षष्टिस्त्रिष्टुभो

---

* न स्यादिति—त्रिषु सवनेषु बह्वीनां त्रिष्टुभां सत्त्वादिति शेषः ।

समाम्नाताः, ताः* षष्टिर्भवन्ति । ये ते द्वे सवने ककुभावसमाम्नाते आनीयेते, तयोर्द्वादशकृत्वः प्रयोगः । तेन सा षष्टिः पूर्यते । यास्ता ऋचः सवने समाम्नातास्ता इह सवनशब्देनोच्यन्ते, न कर्मणि सवनशब्दप्रयोगः । तत्र हि त्रिषु सवनेषु बह्व्यस्त्रिष्टुभो भवेयुः । न षष्टिस्त्रिष्टुभो माध्यंदिनं सवनमिति । तस्माद्याऽसौ पूर्वा बृहती, उत्तरा च विष्टारपङ्क्तिस्तत्र प्रग्रथनं× कृत्वा गातव्यमिति ॥ २८ ॥

( अथवा—अनुष्टुग्गायत्रीद्वयप्रग्रथनेन संपादिते आनुष्टुभे तृचे श्यावाश्वान्धीगवसाम्नोर्गानाधिकरणम् ॥ ६ ॥ )

एवं वा—

[ ६ ] प्रागाथिकं तु ॥ २९ ॥

---

माध्यंदिनं सवनम् ' इति । यदि सवनशब्दो न कर्मणि वर्तेत= । तथा सति सामानाधिकरण्यमुपपद्यते÷ । यदि+ च लक्षणया कर्मणि सवनशब्दो वर्तेत तथा सत्याध्वर्यवे हौत्रे च बह्व्यस्त्रिष्टुभो भवेयुः । तथा सति ' षष्टिस्त्रिष्टुभो माध्यंदिनं सवनम् ' इति प्रयोगो न स्यात् । तस्मात्सवनशब्दश्छन्दोगे श्रूयमाणस्तत्राऽऽम्नातासु वर्तते* यदि चोत्पत्तिबृहत्यावानीयेयातां तदा प्रकृतानां षष्टित्वाभावाद्द्वादशतयीभ्य आगमः स्यात् । तत्र तयोः प्रकरणसंबन्धः कर्तव्यः । न च प्रमाणमस्ति । प्रग्रथनेनापि स्तुत्युत्पत्तेः । प्रगाथसामर्थ्यादवश्यं प्रग्रथनं कार्यम् । तत्रोत्पत्तिबृहत्योरानीयमानयोः ' षष्टिस्त्रिष्टुभः ' इत्यसंबद्धं प्रगाथवचनं च ॥ २८ ॥

—-—

---

*ता इत्यस्य स्थाने, न ता इति पाठ आवश्यक इति भाति। ×प्रगाथं-पा० =न कर्मणि वर्तेत इति-किंतु लक्षणया सवनशब्दः सवनाङ्गभूतासु ऋक्षु वर्तेत इति शेषः। ÷उपपद्यते इति—लक्षणया ऋग्वाचिना सवनशब्देन त्रिष्टुप्छब्दस्य सामानाधिकरण्यमुपपद्यत इत्यर्थः। + यदि च मुख्येऽपि त्रिष्टुप्छब्दे षष्टित्रिष्टुप्संबन्धिलक्षणामभ्युपगम्य सामानाधिकरण्यं निर्वाह्यत इत्युच्यते तदा दोषमाह-यदि चेत्यादिना । * वर्तेत इति–तथा च जघन्ये माध्यंदिनसवनशब्द एव लक्षणामङ्गीकृत्य माध्यंदिनसवनाङ्गभूता याः सामवेदे समाम्नातास्ताः षष्टिरित्यभिप्रायकं ' षष्टिस्त्रिष्टुभो माध्यंदिनं सवनम् । इति लिङ्गं भवतीत्यर्थः।

पञ्चच्छन्दा आवाप आर्भवः पवमानः सप्तसामा। गायत्रसंहिते गायत्रे तृचे भवतः, श्यावाश्वान्धीगवे आनुष्टुभे, उष्णिहि सफं, ककुभि पौष्कलं, कावमन्त्यं जगतीष्विति। यदेतत्, श्यावाश्वमान्धीगवं च द्वे सामनी तयोः पूर्वाऽनुष्टुप्, पुरोजिती वो अन्धसः सुताय मादयित्नवे। अप श्वानं श्नथिष्टन सखायो दीर्घजिह्व्यम्। उत्तरे द्वे गायत्र्यौ, यो धारया पावकया परिप्रस्यन्दते सुतः। इन्दुरश्वो न कृत्व्यः। तं दुरोषमभी नरः सोमं विश्वच्या धिया। यज्ञं हिन्वन्त्यद्रिभिरिति। तत्रैषोऽर्थः सांशयिकः। किमन्ययोरुत्पत्त्यनुष्टुभोरागमं कृत्वा समासु गानं कर्तव्यमथवा, याऽसौ पूर्वाऽनुष्टुप्, उत्तरे च गायत्र्यौ, तयोः प्रग्रथनेन तृचकर्म कृत्वाऽनुष्टुप्कारं गानं कर्तव्यमिति। किं प्राप्तम्। अन्ये अनुष्टुभावागमयितव्ये इति। कुत एतत्। एवं तासामुत्पत्तिरर्थवती भविष्यति।

एवं प्राप्ते, ब्रूमः। प्रागाथिकं तु। प्रागाथिकं गानं कर्तव्यम्। एवं हि स्मरन्ति। आनुष्टुभः प्रगाथ इति। प्रगाथता स्मर्यमाणा नापह्नोतव्या॥ २५॥

स्वे च॥ २६॥

एवं स्वे गानं भविष्यति। तत्र प्रकृतमनुग्रहीष्यते। नाप्रकृतप्रक्रिया भविष्यति॥ २६॥

प्रगाथे च॥ २७॥

प्रगाथशब्दश्चोपपत्स्यते पुनःपादे गीयमाने॥ २७॥

लिङ्गदर्शनाव्यतिरेकाच्च॥ २८॥

अव्यतिरेकेण च लिङ्गं भवति। एवमाह, चतुर्विंशतिर्जगत्यस्तृतीयसवनम्, एका ककुबिति। तन्निदर्श्यते। पञ्चच्छन्दा आवाप आर्भवः पवमानः सप्तसामा। गायत्रसंहिते गायत्रे तृचे भवतः। ताः षड् गायत्र्यस्तिस्रो जगत्यो भवन्ति। श्यावाश्वान्धीगवे आनुष्टुभे, तयोः पूर्वाऽनुष्टुप्, उत्तरे गायत्र्यौ। तत्र प्रग्रथनेन क्रियमाणे द्वयोः

---

॥ २५॥ २६॥ २७॥

साम्नोः षडनुष्टुभः, ताश्चतस्रो जगत्यः, पूर्वाभिः सह सप्त । उष्णिहि सफं, ककुभि पौष्कलम् । एकमप्येकस्यामृचि, अपरमप्येकस्याम् । ते द्वे उष्णिक्ककुभौ । सैका जगती, गायत्रीपादश्च । पूर्वाभिः सहाष्टौ जगत्यः । काव्ये तिस्रो जगत्यः । ताभिः सहैकादश भवन्ति । एकविंशं यज्ञायज्ञीयम् तत्र पूर्वा बृहती, उत्तरा विष्टारपङ्क्तिः । ततः ककुभावुत्तरे कृत्वा प्रगाथः क्रियते । एकविंशे च स्तोमे क्रियमाणे सप्त बृहत्यो भवन्ति । चतुर्दश ककुभः । या सप्त बृहत्यः, ताः पञ्च जगत्यः । पूर्वाभिः सह षोडश । एकश्चात्र जगतीपादः । पूर्वेण गायत्रीपादेन सह विंशतिरक्षराणि । अथ चतुर्दशसु ककुप्सु या द्वादश ककुभः, ताः सप्त जगत्यः । पूर्वाभिः सह त्रयोविंशतिः । ये द्वे ककुभौ शिष्टे, सैका जगती, गायत्रीपादश्च । पूर्वाभिः सह चतुर्विंशतिर्जगत्यः । गायत्रीपादः पूर्वैर्विंशत्यक्षरैः सहैका ककुब् भवति । एवं प्रगाथे क्रियमाणे चतुर्विंशतिर्जगत्यः, एका च ककुप् । अथ प्रगाथो न क्रियते, ततः श्यावाश्वान्धीगवयोरुत्पत्त्यनुष्टुभोरागमात् ÷, यज्ञायज्ञीय उत्पत्तिककुभोरागमान्नैषा संख्या संपद्यते । तस्मात्प्रग्रथनेन गानं कर्तव्यमिति ॥ २८ ॥

( अथवा–गवामयने द्वयोर्द्वयोर्ऋचोः प्रग्रथनेन ब्रह्मसामगानाधिकरणम् ॥ ६ ॥ )

एवं वा–

[ ६ ] प्रागाथिकं तु ॥ २५ ॥ सि०

गवामयने ब्रह्मसाम प्रकृत्य समामनन्ति, चतुःशतमैन्द्रा बार्हताः प्रगाथाः । त्रयस्त्रिंशच्च* सतोबार्हतास्तृचा इति । तत्र संदेहः । किं द्वयोर्द्वयोर्ऋचोः प्रग्रथनं+ कृत्वा गातव्यमुत तिसृषु ऋक्षु गातव्यमिति । किं प्राप्तम् । तिसृषु ऋक्ष्विति । कुतः । एवं प्रकृतौ श्रूयते,

---

॥ २८ ॥

---

÷ उत्तरत्रानुष्टुभोः—पा० । * त्रयस्त्रिंशतं सतोबार्हतास्त्रिकाः–पा० । + प्रमाथं–पा० ।

तस्मादेकं साम तृचे क्रियत इति। तदिह चोदकेन प्राप्तम्। तस्मात्तिसृषु गातव्यमिति।

एवं प्राप्ते, ब्रूमः। प्रागाथिकं तु। स्वे च। प्रगाथे च।

द्वयोर्द्वयोर्ऋचोर्गेयम्। एवं स्वे गानं कृतं भविष्यति। कस्मिन्, स्वे प्रगाथे। कथं प्रगाथः स्वः। विहितो हि गवामयने* ब्रह्मसाम प्रकृत्य। तस्माद्ब्रह्मसाम्नः स्वः प्रगाथः। प्रगाथशब्देन च वचनात्स्वः प्रगाथ इत्युच्यते ॥ २५ ॥ २६ ॥ २७ ॥

लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥

भवति हि लिङ्गदर्शनं, पञ्चसु मासु बार्हताः प्रगाथा आप्यन्त इति। तच्च प्रग्रथने युज्यते, न तृचगाने। कथम्। चतुरुत्तरं हि शतं ते प्रगाथाः। तत्र बृहद्रथंतरयोर्ज्योतिष्टोमे प्रगाथद्वयम्। नौधसकालेययोरपि तत्रैव प्रगाथद्वयम्। इन्द्रक्रतुः प्रगाथ उत्तरस्मिन् प-

॥ २५ ॥ २६ ॥ २७ ॥

---

* गवामयन इति—गवामयने ह्येकषष्ट्यधिकशतत्रयं सुत्याः। तासां क्लृप्तिस्ताण्डकशाखिनामेवमाम्नाता। तत्राशीतिशतं पूर्वं पक्षः, तथोत्तरं, मध्ये विषुवान्। पूर्वस्मिन् पक्षसि–'प्रायणीयं प्रथममहः, चतुर्विंशं द्वितीयं, ततश्चत्वारोऽभिप्लवाः षडहाः। तानि चतुर्विंशत्यहानि। एकः पृष्ठ्यः षडहः। एवं मासः, तादृश एव द्वितीयस्तृतीयश्चतुर्थः पञ्चमः ततस्त्रयोऽभिप्लवाः षडहाः। तान्यष्टादशाहानि, एकः पृष्ठ्यः षडहः, अभिजिन्नामैकाहः, त्रयः स्वरसामानः, इत्यष्टाविंशत्यहानि। आद्याभ्यामहोभ्यां सह षण्मासाः। तादिदं पूर्वं पक्षः। मध्ये विषुवान्। अथोत्तरं पक्षः। त्रयः स्वरसामानः, विश्वजिन्नामैकाहः, एकः पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणः, त्रयोऽभिप्लवाः षडहाः, तान्यष्टाविंशत्यहानि, पुनः पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणः, चत्वारोऽभिप्लवाः षडहाः। एवं मासः, तादृश एव द्वितीयस्तृतीयश्चतुर्थः ततस्त्रयोऽभिप्लवाः षडहाः। आयुर्गौरिति द्वे अहनी, द्वादशाहस्य दशाहानि, महाव्रतं चातिरात्रश्चेति द्वाविंशदहानि। आद्यैरष्टाविंशत्यहोभिः सह षण्मासाः' इति।

क्षासि भवति । त एते नवनवतिः प्रगाथाः शिष्टा अभिप्लवेषु कर्तव्याः। पृष्ठेषु सतोबृहत्यो विधीयन्ते। अभिप्लवानां तृतीये दिवसे सतोबृहत्यः। एवमवशिष्टान्यभिप्लवानां शतमहानि । तेषामन्त्ये सतोबृहत्यः । अन्येषु नवनवतौ दिवसेषु नवनवतिः प्रगाथा आप्यन्त इति लिङ्गमप्युपपन्नं भवति । तृचे पुनर्गाने क्रियमाणे षट्षष्टिस्तृचास्त्रिषु सप्ताधिकेषु मासेषु समाप्येरन् । तदेतस्माल्लिङ्गदर्शनात्प्रगाथे गानं कर्तव्यमिति मन्यते ।

आह । अथ कस्मान्न प्रथमतृचे गानं कृत्वा ततस्तस्मात्तृचादेकामृचमादायान्ये द्वे ऋचौ गृहीत्वा तृचे गानं क्रियते। तथा हि तृचगानप्रापी चोदकोऽनुगृहीतो भवति । लिङ्गं चोपपत्स्यते । पञ्चसु मासु बार्हताः प्रगाथा आप्यन्त इति । उच्यते । अव्यतिरेकेण लिङ्गं दर्शयति, अन्या अन्या ऋचो भवन्ति । तदेव सामेति । तस्माद्द्वयोर्द्वयोर्ऋचो प्रग्रथनं+ कृत्वा गानं कर्तव्यमिति ॥ २८ ॥

( गीत्युपायानां शाखाभेदेन समाम्नातानां विकल्पाधिकरणम् ॥ ७ ॥ )

[ ७ ] अर्थैकत्वाद्विकल्पः स्यात् ॥ २९ ॥ सि०

सामवेदे सहस्रं गीत्युपायाः । आह । क इमे गीत्युपाया नाम । उच्यते । गीतिर्नाम क्रिया । सा, आभ्यन्तरप्रयत्नजनितस्वरविशेषाणामभिव्यञ्जिका । सा सामशब्दाभिलप्या । सा नियतपरिमाणा, ऋचि च गीयते । तत्संपादनार्था ऋगक्षरविकारो विश्लेषो विकर्षणमभ्यासो विरामः स्तोभ इत्येवमादयः सर्वे समधिगताः समाम्नायन्ते। तेषु संशयः किं समुच्चीयन्त उत विकल्प्यन्त इति । किं तावन्नः प्रतिभाति। सर्वेषां समाम्नानात्सर्वाङ्गोपसंहारित्वाच्च प्रयोगवचनस्य, समुच्चीयेरन्निति ।

एवं प्राप्ते ब्रूमः । अर्थैकत्वाद्विकल्पः स्यादिति । एकार्था हि गीत्युपायाः । गीतिः कथं निर्वर्ततेति प्रयुज्यन्ते । तत्रान्यतमेन*

॥ २८ ॥

---

+ प्रगाथं–पा० । * तत्रान्यतरेण भित्तौ गीतौ निर्वृत्तायां–पा० ।

गीतौ निर्वृत्तायां नेतरे प्रयोगमर्हन्ति। तस्माद्विकल्प इति ॥ २९ ॥

( प्रगीताया एव ऋचो वैकृतापूर्वस्तोत्रसाधनत्वाधिकरणम् ॥ ८ ॥ )

[ ८ ] अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् ॥ ३० ॥ पू०

क्वचित्कर्मविशेषे श्रूयते, ऋचा स्तुवते, साम्ना स्तुवते। यदृचास्तुवते तदसुरा अन्ववायन्, यत्साम्ना स्तुवते तदसुरा नान्ववायन्। य एवं विद्वान् साम्ना स्तुवीतेति। तत्रायमर्थः सांशयिकः। किमृचा वा स्तोतव्यं साम्ना वा, उत साम्नैवेति। किं तावत्प्राप्तम्। विकल्पः, ऋचा वा साम्ना वा। भिन्नमिदं= वाक्यं दृश्यते। यदृचा स्तुवते तदसुरा अन्ववायन्निति। ऋचा स्तवे क्रियमाणेऽसुरा अन्ववगता इति। परिपूर्णमेतावति वाक्यं पश्यामः। एवमर्थमिदं संकीर्त्यते, कथं नाम गम्यत ऋचा स्तोतव्यमिति। किमर्थम्। यस्मिन् कर्मविशेषे श्रूयते, तस्याङ्गं यथा स्यात्। तच्च* प्रयोगसामर्थ्यात्प्रयोगवचनेन गम्यत इति। नन्वसुरसंकीर्तनान्निन्दैषा। नेत्याह। न ह्ययं निन्दितानानिन्दितान्वाऽसुरान् विद्मः। संकीर्तनात्कर्तव्यतामध्यवस्यामः। एवं साम्ना स्तुवत इति पृथग्वाक्यम्। तस्माद्विकल्पः ऋक्सामयोः स्तुत्यर्थत्वादुभयोरप्येकं कार्यम्। स्तुतिर्हि निर्वर्तयितव्येति, तदन्यतरेण सिध्यतीति विकल्पः ॥ ३० ॥

---

[ २९ ]

—

ऋचा स्तोतव्यं, साम्ना वा। कुतः। उभयत्र वर्तमानापदेशात्। यदि साम्नि विधायकः श्रूयेत, तथा सति कांचिन्निन्दां प्रकल्प्य साम्नां स्तुत्येकवाक्यता स्यात्। न तु विधायकः श्रूयते+। तस्मात्स्तुत्यैवोभयत्र विधायकं कल्पनीयम्। ननु ऋचि निन्दा श्रूयते। उच्यते। विपरीतमिदं कस्मान्न भवति - इत्थमृक्शोभना यदसुरा अप्यनागतपूर्वास्तत्राऽऽगच्छन्तीति ॥ ३० ॥

—

---

= भिन्नमिदं हि-पां०। * एतच्च—पा०। + श्रूयत इति—'य एवं विद्वान् साम्ना स्तुवीत' इति, अन्ते श्रूयमाणोऽपि यच्छब्दोपबन्धान्न विधायक इति बोध्यम्।

वचनाद्विनियोगः स्यात् ॥ ३१ ॥ सि

नैतदस्ति, विकल्प इति । साम्नो विनियोगः स्यात् । कुतः । तस्येह विनियोजकं वचनमस्ति । यदृचा स्तुवते तदसुरा अन्ववायन्। यत्साम्ना स्तुवते तदसुरा नान्ववायन् । य एवं विद्वान् साम्ना स्तुवीतेति साम्ना स्तुतिः प्रशस्यते प्रत्यक्षेण प्रशंसावचनेन । इतरथा कल्प्या स्यात्, ऋचा स्तवनेऽसुरा अनुगताः । तस्मादृचा स्तोतव्यमिति । अथ साम्ना स्तवः प्रशस्यते, ततो यदृचा स्तुवते तदसुरा अन्ववायन्नितीतरप्रशंसार्था निन्दैषा, न किंचित्कल्पयिष्यत इति । कथं निन्दावचनमेतदिति गम्यते । इतरस्तुतिवचनात् । तस्मात्साम्नैव स्तोतव्यमिति ॥ ३१ ॥

[ अथवा—विकृतिविशेषे प्रगीतयैव ऋचाऽऽहवनीयोपस्थानाधिकरणम् ॥ ८ ॥ ]

एवं वा—

[ ८ ] अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् ॥ ३० ॥ पू०

क्वचित्कर्मविशेषे श्रूयते अयं सहस्रमानव इत्येतयाऽऽहवनीयमुपतिष्ठत इति । अत्रायमर्थः सांशयिकः । किमप्रगीतयोपस्थातव्यमुत प्रगीयेति । किं प्राप्तम् । प्रगीतया, अप्रगीतया वा । कुतः । अविशेषोपदेशात् । प्रगीताऽप्यसावियमेव ऋक्, अप्रगीताऽपीयमेव ।

---

साम्ना स्तुवते, इति साम्नः स्तुतौ विधानमसुराणामनागमनार्थवादेन* । असुरागमननिन्दाद्वारेण, साम्ना सहैकवाक्यतां याति 'यदृचा स्तुवते' इत्येतत् । इतरथा निन्दया निन्दितायाः प्रशंसां कल्पयित्वा वाक्यद्वयं प्रकल्प्यम् । वाक्यद्वयाच्चादृष्टद्वयं प्रकल्प्यम् । न च विपरीतो वाक्यार्थः । साम्नामुपसंहारे श्रवणात्, 'य एवं विद्वान्साम्ना स्तुवते' इति ॥ ३१ ॥

---

'अयं सहस्रमानव इत्येतयाऽऽहवनीयमुपतिष्ठते' इति प्रगीतायामपि

---

* अर्थवादेनेति—'यत्साम्ना स्तुवते, तदसुरा नान्ववायन्' इत्यनेनेति शेषः ।

उभयथा हि तां समामनन्ति । तस्मान्न विशेष आदर्तव्य इति । न चेद्विशेषः, स्तुतिपरत्वाहृक्सामयोर्विकल्प इति ॥ ३० ॥

एवं प्राप्ते ब्रूमः--

वचनाद्विनियोगः स्यात् ॥ ३१ ॥

प्रगीतैव विनियुज्येत, नाप्रगीता । कुतः । वचनात् । किं वचनम् । अयं सहस्रमानव इत्येतया—इति प्रकृतवचनः शब्दः । प्रगीता च सामवेदे प्रकृता । सा, एतयेति संबध्यते । नन्वप्रगीताऽपि तत्र पठ्यते । सत्यम् । प्रगाणसंबन्धार्था तु सा । न ह्यपठितायां प्रगाणं शक्यते कर्तुमिति, ऋक् × सामार्थे । ऋचोऽध्ययनं सामार्थं गम्यते । न ह्यन्तरेण ऋचं सामनिर्वृत्तिर्भवति । अन्तरेणापि तु साम, ऋक् निर्वर्त्यते । न ऋक् सामाऽऽकाङ्क्षत इति । तस्मादेव सामदेवे, उपतिष्ठते वा, स्तौति वेत्युक्ते प्रगीतायामेव ऋचि संप्रत्ययो भवति, नाप्रगीतायाम् ।

आह । यदि प्रगीतायां संप्रत्ययः प्रकरणात्, वचनादप्रगीतायाम् । अप्रगीताऽपि हि शाखान्तरे समाम्नायते। सा प्रकरणं बाधित्वा वाक्येन गृह्येतेति ।

उच्यते । न वाक्येन ऋक् गृह्यते । प्रतीकग्रहणं ह्येतत् । अयं

---

संप्रत्ययोऽप्रगीतायामपि । उपस्थानं, स्तुतिं वा प्रगीताऽपि= । तस्माद्विकल्पः ॥ ३० ॥

---

एवं प्राप्ते, ब्रूमः । ' एतया ' इति संनिहितवचनः । प्रगीता च संनिहिता । यद्यप्यप्रगीताऽपि संनिहिता, तथाऽपि प्रगीतैव ग्राह्या। कुतः । यदप्रगीतायाः परार्थपाठः । न ह्यपठितायां सामर्थ्यं निर्वर्तयितुम् * । नन्वप्रगीताऽपि शाखासु पठ्यते । सा वाक्येन ग्रहीष्यते ।

---

× ऋक्सामसंबन्धे, ऋचोऽध्ययनं—पा० । = प्रगीताऽपीति—निर्वर्तयेत् । अप्रगीताऽपीति शेषः । * निर्वर्तयितुमिति—ह्यनवधारिता साम्नाचि सुखेन सामगानं संभवति । अतोऽप्रगीतायाः पाठः प्रगाणार्थ इति प्रगीतैव प्रयोजनसाकाङ्क्षा ग्राह्येत्यर्थः ।

सहस्रमानव इत्येतयेति पुनः प्रकृतायाः× ऋचो वाचको मुख्य ऋक्-शब्दः। त्वत्पक्षे प्रतीकग्रहस्य* लक्षणा स्यात्। श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा। तस्मात्प्रगीतयोपस्थातव्यामिति ॥३१॥

( अथवा—ऋग्यजुर्मन्त्राणां तानस्वरेण कर्मणि प्रयोगाधिकरणम् ॥८॥ )

एवं वा—

[ ८ ] अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् ॥ ३० ॥ पू०

इह केचित्त्रैस्वर्येणाधीयन्ते+, केचिच्चातुःस्वर्येण। आह। य इमे चातुःस्वर्येणाधीयते,÷ किं तु उदात्तानुदात्तस्वरितेभ्योऽधिकमपरं स्वरं कुर्वन्ति। नेत्याह। तेषामप्येत एव स्वराः, येऽन्येषाम्। किं नु कुर्वन्ति। एकं स्वरान्तरमुत्क्रम्याधीयते =। तत्र संदेहः। किं समुच्चयस्त्रैस्वर्यादीनामुत विकल्प इति। किं प्राप्तम्। सर्वाङ्गोपसंहारित्वात्प्रयोगवचनस्य, समुच्चय इति। एवं प्राप्ते, ब्रूमः अर्थैकत्वाद्विकल्पः स्यात्। एकोऽर्थः सर्वेषां त्रैस्वर्यादीनामध्ययननिर्वृत्तिः। तस्माद्विकल्पः ॥ ३० ॥

वचनाद्विनियोगः स्यात ॥ ३१ ॥ सि०

वचनमिदं भवति स्मृत्यनुमितम्*, तानो यज्ञकर्मणीति। तस्मात्तानेन प्रयोगः कर्तव्यः। अथ त्रैस्वर्यादीनां किमर्थं समाम्नानमिति। उच्यते। अर्थावबोधनार्थं भविष्यति ॥ ३१ ॥

---

उच्यते। तस्याः प्रकरणेन संबन्धः कल्प्यः। इतरस्य तु क्लृप्तः =। 'एतया' इत्यपि नैव संनिहितवचनो बाध्यते ॥ ३१ ॥

---

× प्रगीतायाः—पा०। * प्रतीकग्रहणमस्य लक्षणार्थं स्यात्—पा०। + आम्नायन्ते—अधीयते—इति च—पा०। ÷ अधीयन्ते—पा०। = अधीयन्ते—पा०। × स्मृत्यनुमितमिति—'यज्ञकर्मण्यजपन्यूङ्खसामसु' ( पा० सू० १–२–३४ ) इति व्याकरणस्मृत्यनुमित्यर्थः। तान इति च पूर्वाचार्याणामेकश्रुतेः संज्ञा। = क्लृप्त इति—प्रकरण संबन्ध इत्यर्थः। तथा चाऽऽग्नेयीन्यायेन कल्प्यसामान्यसंबन्धामप्रगीतां बाधित्वा क्लृप्तसामान्यसंबन्धा प्रगीतैव ग्राह्येत्याशयः।

( योनिसाम्न उत्तरावर्णवशेनोत्तरयोर्ऋचोर्गानाधिकरणम् ॥ ९ ॥ )

[ ९ ] सामप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात् ॥ ३२ ॥ पू०

इदमाम्नायते, रथंतरमुत्तरयोर्गायति, यद्योन्यां तदुत्तरयोर्गायति, कवतीषु रथंतरं गायति, विराट्सु वामदेव्यं गायतीति । तत्र संदेहः । किमुत्तरावर्णवशेन गातव्यं, किं योनिवर्णवशेन । कथमुत्तरावर्णवशेन गीतं भवति, कथं वा योनिवर्णवशेनेति । उच्यते । किंचिदुदाहरणं गृहीत्वा व्याख्यास्यामः । यदा तावत्, वृद्धं तालव्यमाई भवतीति, योनौ यस्मिन्न भाग× आईभावः कृतस्तस्मिन्नेव भाग उत्तरासु, आईभावः क्रियते, ततो योनिवर्णवशेन गीतं भवति । अथ भागान्तरे वृद्धं तालव्यं दृष्ट्वा, आईभावः क्रियते, तत उत्तरावर्णवशेन गीतं भवति ।

किं पुनरत्र कर्तव्यम् । योनिवर्णवशेनेति । कथम् । यावति भाग एकारस्य योनावाईभावः कृतस्नं* विचारयामः । किं तत्र कृतमिति । एकारो नोच्चारितः, इकाराकारावागमिताविति । एवं चेदुत्तरास्वपि तावत्येव भागे यो वर्णः, स नोच्चारयितव्यः । इकाराकारावागमयितव्याविति । एवं, यद्योन्यां तदुत्तरयोर्गीतं भवति । तस्माद्योनिवर्णवशेन गातव्यमिति । अपि चैवं गीतिर्न प्रणङ्क्ष्यति । इतरथा क्वचित्प्रणश्येत् । यत्र महती गीतिरल्पेष्वक्षरेषु गीयते । तत्र व्यक्तं प्रणश्यति यद्युत्तराक्षरवशेन क्रियते । तस्माद्योन्यक्षरवशेन कर्तव्यम् ।

---

'आम्नातादन्यत् =' इत्यारभ्यौपोद्घातिकं वृत्तम् । प्रासङ्गिकं च । प्रकृतमिदानीमभिधीयते । सामोहः प्रतिज्ञातः । सोऽभिधीयते ।

अत्र पूर्वपक्षः । नोहः साम्नाम् । कुतः । वचनादेतदतिदिश्यते, 'यद्योन्यां तदुत्तरयोः' इति । यद्यपि साम ऋगक्षराणामुपकारकामिति समधिगतं, तथाऽप्युपकारस्थानातिदिष्टत्वात्÷ । यादृशं× योनौ तादृशमेवोत्तरयोरपि यदि * ।

---

× सामभागे—पा० । * कृतस्तत्र—पा० । = ( अ० ९ पा० १ अ० १७ सू० ५० ) । ÷ तथाऽपीति—नोहः साम्नामित्यनुषङ्गः । + यादृशं—यथोपकारजनकम् । * यदीति—मन्यसे इति शेषः ।

अपि च क्वचित्क्रम उपरुध्यते, यत्राक्रम आईभावभाग्वर्णः। आर्षं च क्वचिदुपरुध्यते । यत्र प्राकृत आगमो नैव क्रियते, तत्र स्वाध्यायकाले गानेन च कर्मकालं गानमविरुद्धं कर्तव्यम् । तस्माद्योन्यक्षरवशेन कर्तव्यमिति । सामप्रदेशे विकार आईभावादिः । तदपेक्षो योन्यपेक्षः । एतच्छास्त्रेण कृतं, यद्योन्यां तदुत्तरयोरिति । यावति सामभागे योनावाईभावः कृतस्तावत्येवोत्तरासु कर्तव्यः ॥३२॥

वर्णे तु बादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात् ॥ ३३ ॥ सि०

उत्तरावर्णवशेन कर्तव्यं बादरिर्मन्यते स्म, न योनिभागवशेन । कुतः । योऽसौ प्रकृतावाईभावः कृतो नासावागमः । न च तत्रैकारलोपः । किं× तर्ह्येकारो नाम । अवर्णम्, इवर्णं च । अवर्णं संवृतम्, इवर्णं विवृतम् । उभे अपि च दीर्घे । ताभ्यामसाधुभ्यां संध्यक्षरं साधु जन्यते । तत्र प्रकृतावकारेकारौ विश्लेषितौ, नापूर्वावागमितौ गुणस्तु तयोः कश्चिदपूर्वः कृतः । सर्वत्रात्र प्रमाणं प्रत्यक्षम् । तद्यत्र, तावति भागेऽन्यो वर्णो भवति, न संध्यक्षरं, तत्र संश्लेषाभावे विश्लेषो न शक्यः कर्तुम् । अन्यस्मिन् भागे यत्र संध्यक्षरं भवति, तत्र तद्वशाद्विश्लेषः क्रियते । एवं यद्योन्यां तदुत्तरयोः कृतं भवति । योन्यां हि संश्लिष्टयोर्विश्लेषः कृतः । इहापि संश्लिष्टयोर्विश्लेषः । इतरथा व्यतिरिक्तं कल्पितं स्यात् । अथ यदुक्तं, गीतिः प्रणङ्क्ष्यतीति । न प्रणङ्क्ष्यतीति । विरामं÷ कृत्वाऽनक्षरं गायिष्यते । संश्लेषा-

---

नात्र= यथातथाभावः [ पाठान्यथाभावः + ] । यथा ऐष्टिकानां विकृतिषु । वचनादिदं* साधारणीकृतम् । तस्माद्यथा सप्तमे पूर्वपक्षे साधारणा धर्मा इति तथेहापि । वचनसामर्थ्याच्च यत्र भागे योनावाईभावः कृतः, उत्तरयोरपि तथैव कर्तव्यः ॥ ३२ ॥

---

एवं प्राप्ते, ब्रूमः । नैतद्वचनमुपकारस्य निषेधकम् । किं तर्हि । उत्तरयोः कर्तव्यमित्येतावत्कृत्वा कृतार्थम् । तत्तूत्तरयोः क्रियमाणं यथोपकरोति ऋगक्ष-

---

× किं तर्ह्येकारो नाम बादरिर्मन्यते स्म—पा० । ÷ विनामं—पा० । + चिह्नितस्थाने 'अतिदेशार्थः' इति पाठ आवश्यकः । * इदमिति—सामस्वरूपमित्यर्थः ।

भावाच्चाशक्यो विश्लेषः कर्तुम् । आर्षक्रमौ नोपरोत्स्येते+ ॥ ३३ ॥

[ उत्तरयोः स्तोभातिदेशाधिकरणम् ॥ १० ॥ ]

[ १० ] स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् ॥ ३४ ॥ पू०

कवतीषु रथंतरं गायति, रथंतरमुत्तरयोर्गायति, यद्योन्यां तदुत्तरयोर्गायतीति । तत्रोत्तरावर्णवशेन गातव्यमित्येतत्समधिगतम् । अथेदानीमिदं संदिह्यते । किं स्तोभाः प्रदिश्यन्ते, नेति । किं प्राप्तम् । न प्रदिश्यन्त इति । कुतः । गीतिर्हि साम, न स्तोभाः । या गीतिः सा प्रदिश्यते । यद्योन्यां तदुत्तरयोर्गायतीति गायतिशब्दसंबन्धात् । अपि च, ऋक्शब्दार्थैरसंबध्यमानः स्तोभोऽनर्थकः स्यात् । तस्मादपि न प्रदिश्येत, अपि च, क्वचिद्भवति वचनम्, ऐन्द्र्यामवभृथसाम गायतीति । तत्रानुपपत्तिर्भवेत् । शीतकर्मा हीन्द्रो वाक्यशेषेभ्योऽवगम्यते । तस्य तपतीत्यनेन संबन्धो न स्यात् । तस्मात्स्तोभस्य ऋगन्तरे निवृत्तिः । यथा, ऋगक्षराणामगीतित्वान्निवृत्तिरेवं स्तोभाक्षराणामपीति ॥ ३४ ॥

सर्वातिदेशस्तु सामान्याल्लोकवद्विकारः स्यात्
॥ ३५ ॥ सि०

नैतदस्ति, स्तोभानां निवृत्तिरिति । सर्वातिदेशो* भवति । ऋ-

---

राणां तथा कर्तव्यम् । नदमदृष्टेनोपकरोति । तस्माद्यस्य वर्णस्य येन प्रकारेणोपकारकमवगम्यते तस्मिंस्तथैव प्रयोक्तव्यमत आह—सर्वत्रात्र प्रमाणं प्रत्यक्षमिति । विरामं कृत्वाऽनक्षरं गायिष्यत इति । एतदयुक्तम् । ऋगक्षराणां साम संस्कारकं समधिगतं योनौ । तत्र यद्यनक्षरं गीयतेऽयथाप्रकृतिकं स्यात् । अदृष्टार्थं च स्यात् । सर्वं चैतदन्याय्यम् । तस्माद्यत्राल्पान्यक्षराणि महती गीतिस्तत्रापि तयाऽक्षराण्येव संस्कर्तव्यानि । तथा यत्राल्पा गीतिर्बहून्यक्षराणि, तत्रापि सैव तेषां संस्कारिकाऽवगन्तव्या । न तत्रैकश्रुत्यं× त्रैस्वर्यं वा कर्तव्यम् । एतदेव साम्नामृचं प्रति गुणभावस्य प्रयोजनम् ॥ ३३ ॥ ३४ ॥

---

ऋक्स्तोभस्वरकालाभ्यासविशिष्टाया गीतेः सामशब्दो वाचक

---

+ नोपरुध्येते—पा० । * सर्वातिदेशो हि—पा० । × न तत्रेति—ऋक्शेषे, ‘तानो यज्ञकर्मणि’ इति स्मृत्यवगतमेकश्रुत्यं, अध्ययनावगतं त्रैस्वर्यं वा न कर्तव्यमित्यर्थः ।

कस्तोभस्वरकालाभ्यामविशिष्टाया गीतेः सामशब्दो वाचकः । कथमवगम्यते । तत्र प्रयोगात् । यदि स्तोभा निवर्तेरन्, तत्कृतो विशेषो नोपसंगृहीतः स्यात् । तत्र शब्दो बाध्येत । तस्मात्स्तोभाः प्रदिश्येरन् । यत्तूक्तम्, ऋक्शब्दार्थैरसंबध्यमानाः स्तोभा अनर्थका भवेयुः । अत्र ब्रूमः । लोकवत् । नानर्थका भविष्यन्ति । तद्यथा लोके गायनैरङ्गवस्तुकानि यानि नाम प्रक्षिप्यन्ते. तानि गीतिकालगणनार्थानि, नार्थसंबन्धायोच्चार्यन्ते । सुखं ह्यक्षरैर्गीतिकालः परिच्छिद्यते । तद्वदिहापि कालपरिच्छेदार्थानि स्तोभाक्षराण्यनुवर्तेरन्निति ॥ ३५ ॥

अन्वयं चापि दर्शयति ॥ ३६ ॥

अन्वयतश्चापि स्तोभान् दर्शयति । यत्राऽऽर्चिकानि पदानि निवर्तन्ते, स्तोभा गेह्लाश्चानुयन्तीति । स्तोभाः–स्तोभा एव । गेह्लाः–स्वराः । तस्मादपि स्तोभाः प्रदिश्यन्ते ॥ ३६ ॥

निवृत्तिर्वाऽर्थलोपात् ॥ ३७ ॥

वाशब्दात्पक्षो विपरिवर्तते× । निवृत्तिः, अग्निष्टपतीत्येवंजातीयकानां स्तोभानाम् । शीतकर्मा हिन्द्रो वाक्यशेष उपलभ्यते । न तैरेवंजातीयकाः स्तोभाः संबध्येरन्निति । अन्वयात्संबध्यन्ते लोकादिति यदुक्तं, तत्परिहर्तव्यम् ॥ ३७ ॥

अन्वयो वाऽर्थवादः स्यात् ॥ ३८ ॥

अन्वीयुर्वा, एवंजातीयकाः स्तोभाः । न हि वयमिन्द्ररूपं प्रत्यक्षमुपलभामहे । यच्च वाक्यशेषवचनं, सोऽर्थवादः ॥ ३८ ॥

---

इति–एतदयुक्तम् । 'गीतिषु= सामाख्या' इत्युक्तत्वात् । तस्मादन्यथा वर्ण्यते । यद्यपि स्तोभा न सामशब्दवाच्यास्तथाऽप्यतिदिश्यन्ते । कथम् । सामोपकारकमृगक्षराणाम् । तस्योपकुर्वतो दृष्टेन साहाय्यं कुर्वन्तः स्तोभा उपकुर्वन्ति । तदतिदेशे च यदि स्तोभा नाऽऽगच्छेयुस्तत्कृत उपकारोऽपि हीयेत । तस्मादतिदिश्यन्त ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

---

× विनिवर्तते–पा० । = ( अ० २ पा० १ अ० ११ सू० ३६ ) ।

[ स्तोभानां लक्षणाधिकरणम् ॥ ११ ॥ ]

[ ११ ] अधिकं च विवर्णं च जैमिनिः स्तोभशब्दत्वात् ॥ ३९ ॥ सि०

अथ कः स्तोभो नाम, तस्य लक्षणं कर्तव्यम् । उच्यते । य ऋगक्षरेभ्योऽधिकः, न च तैः सवर्णः स स्तोभो नाम । ईदृशे हि लौकिकाः स्तोभशब्दमुपचरन्तीति । तद्यथा, देवदत्तेन सभायां परं प्रलपता बहुस्तोभं कथितमिति । यदर्थवचनेभ्योऽधिकं विवर्णं च, तदालोच्यैवंवक्तारो भवन्ति । लक्षणकर्मणः प्रयोजनं न वक्तव्यम् । लक्षणकर्मणो हि तदेव प्रयोजनं, यल्लक्षितो भविष्यतीति । किमर्थमुभयं सूत्रितम् । नन्वन्यतरत्पर्याप्तम्, अधिकमिति वा विवर्णमिति वेति । नेत्याह । भवति हि किंचिदधिकं, न विवर्णम् । यथा, अभ्यासः; श्वाद्भिः श्वाद्भिरिति । तथा किंचिद्विवर्णं नाधिकम् । यथा, विकारः, ओ श्रा ई, इति । तस्मादुभयं× सूत्रयितव्यमिति ॥ ३९ ॥

( प्राकृतव्रीह्यादिस्थानापन्नेषु नीवारादिषु व्रीह्यादिधर्माणामूहेनानुष्ठानाधिकरणम् ॥ १२ ॥ )

[ १२ ] धर्मस्यार्थकृतत्वाद्द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धः समवायात् ॥ ४० ॥ सि०

वाजपेये श्रूयते । बार्हस्पत्यं चरुं नैवारं सप्तदशशरावं निर्व-

---

॥ ३९ ॥

---

यद्यप्यपूर्वप्रयुक्ता धर्मा इति स्थितं,+ तथाऽपि कार्यापत्त्या विनोहसि-

---

× तस्मादुभयमिति । एवं च ऋगक्षरेभ्योऽधिकत्वे सति, ऋगक्षरविलक्षणत्वं स्तोभानां लक्षणमुक्तं भवति । अत्र च—ऋगक्षरविलक्षणत्वं यदि, अर्थानभिधायकत्वं विवक्ष्यते, तदाऽर्थाभिधायकेषु 'अग्निष्टपाति' इत्यादिस्तोमेष्वव्याप्तिः । प्रकारान्तरं च दुर्निर्वचम् । अतः स्तोभपदवाच्यत्वप्रकारकाभियुक्तप्रसिद्धिविशेष्यत्वमेव स्तोभत्वमिति सुवचम् । वाच्यतावच्छेदकं च स्तोभत्वमखण्डोपाधिरित्यङ्गीकारान्न वाच्यतावच्छेदकाप्रसिद्धिरित्यादिदोषानवकाश इति ज्ञेयम् । + स्थितमिति—प्रथमपाद इति शेषः ।

पतीति। अस्ति च प्रकृतौ व्रीहिषु प्रोक्षणम्। तन्नीवारेषु भवति, न वेति संशयः। तथा, उद्गीथा वा एतर्हि वाग्भवति यर्हि पृष्ठ्यः षडहः संतिष्ठते, न बहु वदेत्, नान्यं पृच्छेत्, नान्यस्मै ब्रूयात्। संस्थिते षडहे मध्वाशयेत्, घृतं वा—इति मध्वशने घृताशने च षडहधर्मा भवन्ति वा, न भवन्तीति संशयः। तथा, राजसूये श्रूयते, नैर्ऋतं चरुं नखावपूनानां परिवृत्त्यै ग्रहे, इति। अस्ति प्रकृतावुलूखलमुसलयोः प्रोक्षणम्। प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीति। तन्नखेषु भवति, न भवतीति संशयः। तथा चातुर्मास्येषु श्रूयते, परिधौ पशुं नियुञ्जीतेति। परिधौ यूपधर्माः कर्तव्या न कर्तव्या इति संशयः। तथा, न गिरा गिरेति ब्रूयाद्यदि गिरा गिरेति ब्रूयादात्मानं तदुद्गातोद्गिरेदैरं कृत्वोद्गेयमिति। इरापदे गिरापदधर्मा भवन्ति, न भवन्तीति संशयः। किं तावत्प्राप्तम्। व्रीह्यादिषूक्ता धर्माः, न नीवारादिषु। तस्मात्तेषु न भवेयुरिति।

एवं प्राप्ते, ब्रूमः। नीवारादिषु चोदनानुबन्धः स्यात्। समवैति हि तेषु स प्राकृतो धर्मः। प्रकृतौ तावदपूर्वप्रयुक्तोऽसौ*, न व्रीह्यादिप्रयुक्तः। येनापूर्वस्य विशिष्टोऽयं साधनविशेषस्तत्रैव धर्मो न व्रीह्यादाविति समधिगतमेतत्। नीवारादयश्च व्रीह्यादिकार्यकारिण इत्यवगम्यते। नीवारस्य तावच्चोदना,= नैवारश्चरुः कर्तव्य इति। स च नान्येन प्रकारेण नीवारो यागस्योपकरोति वर्जयित्वा तण्डुलनि-

---

द्धिर्नास्तीत्यनेनाधिकरणेन कार्यापत्तिः प्रतिपाद्यते। सा च पञ्चधा भवति। वास्तवी सा द्विविधा, प्रत्यक्षानुमानाभ्याम्। शब्दात्त्रेधा। स्वशब्दात्, प्रतिषेधेन स्वशब्दानुमानं, संस्थया प्रतिषेधानुमानं, प्रतिषेधाच्च शब्दः÷। तत्र प्रत्यक्षात्तावत् 'नैवारो बार्हस्पत्यश्चरुः'। ननु स्वशब्देनैव नीवारा व्रीहिकार्ये विनियुज्यन्ते।

---

* तावद्दर्शपूर्णमासप्रयुक्तोऽसौ—पा०। = भावचोदना—पा०। ÷ शब्द इति—स्वशब्दः कल्प्यत इत्यर्थः। तथा च तत्कार्यकारित्वरूपा स्थानापत्तिः पञ्चधा भवति—प्रत्यक्षात्—अनुमानात्-श्रुतस्वशब्दात्-प्रतिषेधानुमितस्वशब्दात्-अभावे विध्यनुमितप्रतिषेधकल्पितस्वशब्दादिति मूलतात्पर्यं ज्ञेयम्।

वृत्तिम् । स प्रत्यक्षेणावगम्यते व्रीहिकार्ये वर्तत इति । तस्माद्व्रीहिधर्मा नीवारे भवेयुरिति ।

एवं, षडहेनोपासीतेति चोदनायां सत्यां यदा षडहः संतिष्ठते, न षडहेनोपास्यत इत्यर्थः । मधुघृताभ्यामशनेनोपासीतेति× गम्यते । यस्य भावे यस्य निवृत्तिस्तत्तस्य स्थानेऽवगम्यते। षडहनिवृत्तौ मध्वशनं ब्रुवन् षडहकार्ये वदतीति गम्यते । तस्मात्षडहधर्मो व्रतं नियमो वा मध्वशने भवतीति । यागाभावात्तन्निमित्ता ग्रहा न प्रवर्तन्ते । ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोतीति ग्रहचमसाभावात्स्तोत्राभावः । स्तुतमनुशंसतीति स्तोत्राभावाच्छस्त्राभावः* । सवनाभावात्सवनीया न प्रवर्तन्ते, इत्येवमादि न प्रवर्तते । व्रतानि नियमाश्च प्रवर्तन्त इति । यच्चान्यदनर्थलुप्तं, नखावपूतानामिति । नान्यथा नखावपूता भवन्ति । यदि न तैस्तुषा विपूयन्ते, तस्मात्तुषविमोचने नखाः श्रुता इति गम्यते । अतश्चोलूखलमुसलधर्मैः संबध्यन्त इति ।

तथा, परिधिर्यूपकार्ये वर्तत इति विस्पष्टमेव वचनं, परिधौ पशुं

---

उच्यते । नीवारशब्दो नीवारान्वदति, तद्धितो विकारं, देवतां बार्हस्पत्यशब्दः, चरुशब्दो द्रव्यम् । कतरः कार्यापत्तिपरः । तस्मात्प्रत्यक्षेणात्र कार्यापत्तिः । व्रीहयः पुरोडाशाख्यहविर्निर्वृत्त्या यागार्थाः । नीवारा अपि तन्निर्वृत्त्या यागसाधनार्था एव प्रत्यक्षमुपलभ्यन्ते । तस्माद्व्रीहयो यथाऽपूर्वार्था इति धर्मान्प्रयुञ्जते तथा नीवारा अपि । 'नखावपूतानां चरुः' इत्यवहननस्य तुषकणविप्रमोकं फलं दृष्ट्वाऽनुमानं भवति, नूनमुलूखलमुसलकार्ये नखा वर्तन्त इति ।

'परिधौ पशुं नियुञ्जन्ति' इति स्वशब्देनैव यूपकार्ये परिधिर्वर्तते । 'न गिरागिरेति ब्रूयात्' इति, गिरापदं प्रतिषेधन् तत्कार्थं लक्षयति । तत्र लक्षित इरापदविधिः । तच्च शब्दादृते न शक्यं विधातुम् । अत उच्यते प्रतिषेधात्स्वशब्दानुमानम् । लक्षणयाऽत्र= स्वशब्दः । 'उद्गीथा वा एतर्हि वाग्भ

---

× मधुघृताभ्यामुपासीत—पा० । * स्तोत्राभावादस्याभावः—पा० । = लक्षणयेति—अत एव परिध्युदाहरणादस्य विशेषः । परिध्युदाहरणे हि स्वशब्दः श्रुतः । अत्र तु लक्षणया स्वशब्द इत्यर्थः ।

नियुञ्जीतेति*। तस्मात्तद्धर्मकः परिधिः स्यादिति । तथा, न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयमिति नैतौ द्वावपि विधीयेते–प्रतिषेध इरापदं च । तथा हि वाक्यं भिद्येत । न चेरापदमप्राप्तत्वादनूद्यते । प्रतिषेधे त्वनुवादः संभवति । यदा, इरापदं तदा व्यक्तं गिरापदं न भवतीति । एकवाक्यरूपं च गम्यते । यस्माद्गिरापदस्यायं दोषस्तस्मादिरापदं ब्रुयादिति । भिन्नवाक्यरूपे त्वाश्रीयमाणे भूयसी अदृष्टानुमानकल्पना स्यात् । न ह्यात्मानं गिरेदिति दोषो विधीयते । शरीरं गिरितुमसंभवः। परमात्मन्यदोषः । वाक्यभेदस्तु स्थित एव । तस्मा-

---

वति, यर्हि पृष्ठ्यः षडहः संतिष्ठते ' इति संस्थया प्रतिषेधः ÷ । तेन तत्कार्यम् । तस्मिन्मध्वशनघृताशने । एवमत्र लक्षितलक्षणया स्वशब्दः ।

तदेतदयुक्तम् । कथम् । यदि मध्वशनघृताशने षडहकार्ये वर्तेयातां तथा फलसाधके स्याताम् । तत्र ' द्वादशाहेन प्रजाकामं याजयेत् ' इति वचनं विरुध्येत । यागा ह्येतेन फले विधीयन्ते । ते च द्वादशसंख्याविशिष्टाः । न मध्वशनघृताशने यागौ । ताभ्यां फलवद्भ्यां चतुर्दशसंख्योपजायेत । राजसूयवदिति चेत् । तन्न । ' षट्त्रिंशदहो वा एष यद्द्वादशाहः ' इत्येवमादीनि लिङ्गानि विरुध्येरन् । यदि चानयोस्तत्कार्यापत्तिः स्यात्तथा सति षडहं निवर्तयेताम् । तत्रास्योत्पत्तिरनार्थिका स्यात् । लिङ्गविप्रतिषेधस्तु स्थित एव । कर्तृसंस्कारकेऽवगम्यमाने कथं फलसाधिके इत्यभ्युपगम्येते । सर्वं चैतदन्याय्यम् ।

तत्र वर्णयन्ति । द्वयमिहास्ति× फलसाधनत्वं साधनत्वं च । तत्र न फलसाधनत्वाद्धर्मलाभः । किंतु साधनत्वात्+ । तदप्ययुक्तम् । यद्येते षडहकार्यं कुरुतः, ततस्तद्धर्मैः संबध्येयातां, यथा नीवाराः । न चैते षडहकार्यं वर्तन्त इत्युक्तमेव । तदङ्गत्वाद्धर्मलाभो न भवति । किं तर्हि । कार्यापत्त्या । तस्मादन्यदुदाहरणमुदाह्रियते, ' स* प्रत्यापनेत् स्थानात् ' इति द्रव्यविनाशात्कर्मवि-

---

* नियुञ्जन्तीति–पा० । ÷ प्रतिषेध इति–लक्ष्यत इति शेषः । × इह–षडहे । + साधनत्वादिति–मध्वशनघृताशनयोः षडहाङ्गत्वेन क्रतूपकारकत्वात्साधनत्वसामान्येन षडहधर्मप्राप्तिरिति केचिद्वर्णयन्तीत्यर्थः । * ( अ० ६ पा० ४ अ० १० सू० ३० )।

द्विरापदोच्चारणमिरापदस्य तत्कार्यापत्तिप्रदर्शनार्थं, न* गिरा गिरेति कृत्वोद्गायेदिति। तस्माद्गिरापदधर्मा इरापदे भवेयुरिति। सर्वत्र पर्यवसितम्। परिधावनन्तरा= कथा वर्तिष्यते ॥ ४० ॥

( परिधौ यूपधर्माणामाक्षेपसमाधानाधिकरणम् ॥ १२ ॥ )

[ १३ ] तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात्स्यात् ॥ ४१ ॥ पू०

चातुर्मास्येष्वाम्नायते। मध्यमे पर्वाणि परिधौ पशुं नियुञ्जीतेति×। तत्रोक्तं, यूपधर्माः परिधौ कर्तव्या इति। तद्विपरिवर्तते। ते न कर्तव्याः। तदुत्पत्तेः–परिधेराहवनीयपरिधानार्थोत्पत्तेर्यूपधर्मा निवर्तेरन्। तत्कृता हि तेऽपूर्वप्रयुक्तपशुबन्धनद्वारेणापूर्वं गच्छन्ति। तत्र यद्बन्धनस्याङ्गभूतमिति श्रुतं तद्बन्धनार्थमेव द्रव्यमुत्पन्नम्। यच्चाऽऽहवनीयपरिधानार्थमुत्पन्नं, तस्मिन् पराङ्गभूते बन्धनं कृतं भवति। न तद्धर्माणां द्वारं भवितुमर्हति। न हि तत्र क्रियमाणाः पशोः कृता भवन्ति, न पाशुकस्य। अपि च, सत्वक्कः परिधिरनुच्छ्रयश्च यूपधर्मैः परिधित्वाद्धीयेत। यूपायाज्यमानायेति च शब्द ऊह्येत। तत्रायं बाधितः स्यात्। तस्मा त्परिधौ यूपधर्मा न स्युरिति ॥ ४१ ॥

---

नाशः। कर्मविनाशेन प्रतिषेधो लक्ष्यते। प्रतिषेधाच्च स्वशब्दः। अयमप्यस्मिन्नधिकरणे नैव सिद्धान्त÷। तस्मादेतत्सदृशमन्यदुदाहरणं मृग्यम्+ ॥४०॥ ॥ ४१ ॥

---

* न गिरा गिरेति ब्रूयादैरं कृत्वोद्गायेदिति–पा०। = परिधावुत्तरा कथा—पा०। × नियुञ्जन्तीति–पा०। ÷ नैव सिद्धान्त इति–सांनाय्यद्रव्यनाशे सांनाय्यफलार्थं तत्स्थाने पञ्चशरावयागो नैव विधीयते। सांनाय्यफलस्य सांनाय्ययागेनैव सिद्धेः साधनान्तरानपेक्षत्वात्। न हि द्रव्यनाशे यागलोपे प्रमाणमस्ति। हविरन्तरोत्पत्त्या, आज्येन वा समापनसंभवात्। अतो द्रव्यविनाशप्रयुक्तवैगुण्यपरिहारार्थत्वेन सांनाय्याङ्गतयैव पञ्चशरावयागो विधीयत इति 'अङ्गविधिर्वा निमित्तसंयोगात्' इति सूत्रेण सिद्धान्तितत्वादित्यर्थः। + मृग्यमिति–तच्चोदाहरणं 'यदि सत्राय दीक्षितानां साम्युत्तिष्ठेरन्, 'सोममपभज्य विश्वजिता यजेत' 'यः सत्रायाऽऽगुरते स विश्वजिता यजेत' इत्यादि खण्डदेवोक्तमनुसंधेयम्।

आवेश्येरन्न वाऽर्थवत्त्वात्संकारस्य तदर्थत्वात्
॥ ४२ ॥ सि०

आवेश्येरन् वा यूपधर्माः परिधौ । बन्धनोपकारसाधने हि विधीयन्ते । यश्च परार्थो× बन्धनं नयति निष्पादयति, करोत्यसौ बन्धनोपकारम् । अयं च संस्कारो बन्धनं निष्पादयति, तदर्थोत्पत्तिमतदर्थोत्पत्तिं वा नापेक्षते । तस्मात्परिधौ यूपधर्माः कर्तव्या इति । यदुक्तम् , अनुच्छ्रयश्च सत्वक्कश्च परिधिरिति । अत्रोच्यते, ये परिधित्वाविरोधिनो यूपधर्मास्ते करिष्यन्ते, न विरुद्धा इति ॥ ४२ ॥

आख्या चैवं तदावेशाद्विकृतौ स्यादपूर्वत्वात् ॥ ४३ ॥

अथ यदुक्तं, यूपायाज्यमानायेति शब्द ऊहितव्यः स्यादिति । अत्रोच्यते । नोहितव्यो भविष्यति । धर्मावेशादाख्याऽपि यूप इति भविष्यति । धर्मनिबद्धा हि सा यथैव यूपे, तथा परिधावपि भवितुमर्हति । तस्मान्नोहिष्यते यूपशब्द इति ॥ ४३ ॥

( अभ्युदयेष्टौ दधिपयसोः प्रणीताधर्मानुष्ठानाधिकरणम् ॥ १४ ॥ )

[ १४ ] परार्थे न त्वर्थसामान्यं संस्कारस्य
तदर्थत्वात् ॥ ४४ ॥ पू०

वि वा एनं प्रजया पशुभिरर्धयति, वर्धयत्यस्य भ्रातृव्यं, यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति,* स त्रेधा तण्डुलान् विभजेत्, ये मध्यमास्तानग्नये= दात्रे पुरोडाशमष्टाकपालं निर्वपेत् । ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं, ये क्षोदिष्ठास्तान्+ विष्णवे शिपिविष्टाय शृते चरुम् । शृते चरुं दधंश्चरुमित्येतदुदाहरणम् । तत्रायमर्थः सांशयिकः । किं शृते दध्नि प्रणीताधर्माः कर्तव्या उत न कर्तव्या इति । किं प्राप्तम् ? न कर्तव्या इति । परार्थमेतत्प्रदानार्थमिति,

---

॥ ४२ ॥ ४३ ॥

---

× परार्थेन—इति तृतीयन्तः पाठोऽर्थानुसारीत्युपेक्षितः । * अभ्युदियात्–पा० ।
= मध्यमाः स्युः—पा० । + येऽणिष्ठाः–पा० ।

न प्रणीतार्थम् । दधि च तडुण्लाविभागश्चैको भाग इन्द्राय प्रदात्रे दातव्यः। शृतं च तण्डुलविभागश्च विष्णवे शिपिविष्टाय । न श्रपणार्थं दधि पयो वा विधीयते । तत्र हि सप्तमीसंयोगोऽनुवाद एव। न च* प्रणीताकार्ये विधीयते दधि पयो वा । तस्मात्प्रणीतानां× धर्मैर्न संयुज्येते। न हि प्रणीतानां दध्नश्चार्थसामान्यं किंचिदस्ति। तदर्थश्चायं संस्कारः श्रपणद्वारकः । तस्मान्न प्रणीताधर्माः पयसि दधनि वा भवेयुरिति ॥ ४४ ॥

क्रियेरन् वाऽर्थनिर्वृत्तेः ॥ ४५ ॥ सि०

न चैतदस्ति, प्रणीताधर्मा दधिपयसोर्न कर्तव्या इति । श्रपणसाधने हि ते विधीयन्ते, न श्रपणार्थमुत्पन्ने द्रव्ये। येनार्थो निवर्तेत । तत्र तेऽपूर्वप्रयुक्तत्वात्क्रियन्ते। क्रियते च दधिपयोभ्यां श्रपणम्। तस्मात्तद्धर्मैः संयोगः स्यात् ॥ ४५ ॥

( बृहद्रथंतरधर्माणां व्यवस्थया तत्तत्सामगानकालेऽनुष्ठानाधिकरणम् ॥ १५ ॥ )

[ १५ ] एकार्थत्वादविभागः स्यात् ॥ ४६ ॥ पू०

ज्योतिष्टोमे समामनन्ति, बृहत्पृष्ठं भवति, रथंनरं पृष्ठं भवतीति। व्यक्तो हि बृहद्रथंतरयोर्विकल्पः। यस्मिन् कार्ये रथंतरं प्रवर्तते, तस्मिन्नेव कार्ये बृहत्पृष्ठसिद्धिद्वारेण धर्मा विहिताः। तस्माद्बृहद्धर्मा रथंतरधर्माश्चोभयत्र कर्तव्या इति । बृहद्ग्रहणं च लक्षणार्थं भविष्यति ॥ ४६ ॥

---

॥ ४४ ॥ ४५ ॥ ४६ ॥

---

पृष्ठशब्दः स्तुतेरभिधाता। सा चादृष्टार्थेत्युक्तम्÷ । तस्माद्वचनाद्विकल्पः। 'बृहद्वा पृष्ठं, रथंतरं वा' इति । तत्र स्तुतिरदृष्टाय, साम, ऋगक्षराभिव्यक्त्या दृष्टोपकारि । तस्माद्ये साम्न्युपनिबद्धा धर्मा उच्चैर्गेयत्वादयस्तेषामुभयत्र संबन्धो न व्यवस्था। यथा व्रीहिसंबद्धं प्रोक्षणं न व्रीहिष्वेवावतिष्ठते, एवमिहापि ॥४६॥

---

* न चेत्प्रणीताकार्ये–पा०। × प्रणीताधर्मैः–पा०। ÷ उक्तमिति–स्तुतशस्त्राधिकरण इति शेषः।

निर्देशाद्वा व्यवतिष्ठेरन् ॥ ४७ ॥

निर्देशाद्वा, रथंतरे रथंतरधर्माः कर्तव्याः। नोच्चैर्गेयं, न च बलवद्गेयम्। रथंतरे प्रस्तूयमाने संमीलयेत्, स्वर्दृशं प्रतिवीक्षेतेत्येवमादयः। बृहद्धर्माश्च, बृहति उच्चैर्गेयं, बृहति गीयमाने× समुद्रं मनसा ध्यायेदित्येवमादयः। एवं निर्देशोऽर्थवान् भविष्यति। इतरथा रथंतरग्रहणं च बृहद्ग्रहणं च प्रदर्शनार्थं स्यात्। तथा लक्षणा भवेत्। न च श्रुतिसंभवे लक्षणा न्याय्या। यदुच्यते, अर्थैकत्वाद्बृहद्रथंतरयोरिति।

सत्यमेकोऽर्थः पृष्ठसिद्धिः। एतदप्यस्ति। अन्यथा बृहता साध्यते पृष्ठम्। अन्यथा रथंतरेणेति। तथा पर्वाणि विभज्यमाने द्वावप्युपायौ। यथा, द्वौ पुरुषावन्तयोर्गृहीत्वाऽऽकर्षतः। यद्वा तीक्ष्णेन शस्त्रेण छेदनम्। तत्र यच्छस्त्रस्य तीक्ष्णीकरणं द्रव्यं तच्छेदनाभ्युपाये संबध्यते, नाऽऽकर्षणाभ्युपाये तदर्थापन्नेऽपि। एवं बृहद्धर्मा रथंतरे तदर्थापन्ने भवेयुर्वा न वेति जायते विचारणा। तत्र निर्देशसामर्थ्यादिदमवगच्छामः। अन्यथा बृहत्साधयति। अन्यथा रथंतरमिति। प्रत्यक्षं खल्वप्यन्यदुपलभामहे। रथंतरं शूरादिकां संस्तुतिं कुर्वत् पृष्ठं साधयति। बृहत चित्रादिकाम्। तस्माद्रथंतरधर्माः शूरादिकायां

---

अन्यथा बृहता साध्यते पृष्ठमन्यथा रथंतरेणेति। नन्वेवं ब्रुवता व्रीहियवयोरपि धर्मव्यवस्थेत्युक्तं भवति। अन्यथा व्रीहयः साधयन्त्यन्यथा वा यवा इति।

उच्यते। व्रीहयस्तण्डुलनिर्वृत्तिं कुर्वन्ति। ततः पिष्टानि, तेभ्यः पुरोडाशयागो, यागादपूर्वम्। यवेष्वेतत्तुल्यं सर्वम्। किमतः। एतदतो भवति। व्रीहियवयोरत्यन्तदृष्टार्थत्वान्नापूर्वभेदः। तस्मादपूर्वं यागसाधनद्वारेण धर्माभिलाषि। उभौ च व्रीहियवौ यागसाधनम्। अत उभयत्र धर्माः। नास्ति व्यवस्था। व्रीहिस्थानीयं साम, प्रोक्षणस्थानीया उच्चैर्गेयत्वादयः। तत्र यद्यपि साम दृष्टोपकारि, तथाऽपि यस्योपकारि [तत्पृष्ठनिवर्तकम्=]। ते च स्तुती भेदेन

---

× स्तूयमाने-पा०। = चिह्नितस्थाने 'तत्पृष्ठमदृष्टनिर्वर्तकम्' इति पाठ आवश्यकः।

स्तुतौ निबद्धा रथंतरे प्रस्तूयमाने भवेयुर्न बृहति । बृहद्धर्मा अपि चित्रादिकायां स्तुतौ निबद्धा बृहति भवेयुः, न रथंतरे । तस्माद्व्यवस्था धर्माणामिति ॥ ४७ ॥

---

चोदिते । अदृष्टार्थत्वाच्च तयोरपूर्वभेदः । अपूर्वप्रयुक्ताश्च धर्माः । नन्वेकस्मिन्नेवापूर्वे द्वे अपि स्तुती चोद्येते । एकार्थत्वाच्च तयोर्विकल्पो व्रीहियवयोरिव । तस्मान्न व्यवस्था ।

उच्यते । न निष्पन्नमपूर्वमास्ते, यत्रैते चोद्येते । किंत्वाभ्यामेवापूर्वं जन्यते । तत्रादृष्टार्थत्वात्स्तुत्योः, यदेव शूरादिकया जन्यते तदेव चित्रादिकयेति कुत एतत् । तस्माच्चित्रादिका यथा साधयति*, येन साधनेनोपगृहीता । शूरादिकाऽपि तैः साधयिष्यतीति नास्त्येतत् । अत एव वचनाद्विकल्पः । अनैकार्थ्यात् । तस्माद्यथा, श्रयणानामपूर्वभेदाद्व्यवस्था=, एवमिहापि । व्रीहियवौ न साक्षादपूर्वस्य साधकौ । यागादपूर्वम् । स चाऽऽग्नेयादिभिरुत्पादितो व्रीहियववाक्ययोर्द्रव्यविधानायानूद्यते । न तु ताभ्यां यागोत्पत्तिः क्रियते । येन यागभेदोऽपूर्वभेदश्च स्यात् । तस्मात्तत्रापूर्वस्य भिन्नत्वाद्युक्ता व्यवस्था ।

अन्ये त्वाहुः । यद्यपि साम दृष्टोपकारि, स्तोभास्त्वदृष्टोपकारिणः । तस्मात्स्तोभप्रयुक्ता उच्चैर्गेयत्वादयः । अतो व्यवस्था । तथा च वक्ष्यति÷ । 'साम्नाऽपि दृष्टमदृष्टं च क्रियते' इति ।

तदयुक्तम् । रथंतरशब्दः× स्तोभलक्षणार्थः स्यात् । अपि च स्तोभाश्चोच्चैर्गेयत्वादयश्च साम्नि गुणभूताः । गुणानां च परार्थत्वादसंबन्ध इत्युक्तम्* । अरुणान्यायोऽपि+ नास्ति, स्तोभानामुच्चैस्त्वादीनां च परस्परनिराकाङ्क्षत्वात् । यत्तु 'साम्नाऽपि दृष्टमदृष्टं चेति' ऋगक्षराभिव्यक्त्या दृष्टं, येन पुनरदृष्टार्थां स्तुतिमुत्पादयति तेनादृष्टम् ॥ ४७ ॥

---

* साधयतीति—स्वापूर्वमित्यर्थः । = श्रयणानामिति—'पयसा मैत्रावरुणं श्रीणाति' 'सक्तुभिर्मन्थिनम्' इत्यादाविति शेषः । ÷ वक्ष्यतीति—एकन्तरिताधिकरणे भाष्यकार इति शेषः । × रथंतरशब्द इति—'रथंतरे प्रस्तुयमाने' इत्यादिविधाविति शेषः । * इत्युक्तमिति—( अ० ३ पा० १ अ० १२ सू० २२ ) इत्यत्रेति शेषः । + अरुणान्याय इति—( अ० ३ पा० १ अ० ६ सू० १२ ) अत्रत्य इति शेषः ।

[ कण्वरथंतरेऽविरुद्धानां बृहद्रथंतरधर्माणां समुच्चयाधिकरणम् ॥१६॥ ]

[ १६ ] अप्राकृते तद्विकाराद्विरोधाद्व्यवतिष्ठेरन्

॥ ४८ ॥ सि०

अस्ति वैश्यस्तोमः, वैश्यो वैश्यस्तोमेन यजेतेति । तत्रेदमाम्नायते, कण्वरथंतरं पृष्ठं भवतीति । तत्रायमर्थः सांशयिकः । किं कण्वरथंतरेऽन्यतरस्य, रथंतरस्य बृहतो वा धर्माः कर्तव्या उतोभयोरपीति । किं प्राप्तम् । अन्यतरस्येति । कुतः । एवं ह्युक्तम् । रथंतरस्य राथंतरा भवन्ति । बृहतो बृहद्धर्माः× । निर्देशसामर्थ्यादिति । तद्विशेषेऽनुच्यमाने यावदुक्तं तावत्प्राप्तमिति । तस्मादन्यतरस्य धर्माः कर्तव्या इति ।

एवं प्राप्ते, ब्रूमः । अप्राकृते कण्वरथंतरे तद्विकारात् । यस्मात्कण्वरथंतरमुभयोः कार्ये वर्तते, तस्मादुभयधर्माँल्लभेत । न हि विकृतौ निर्देशोऽस्ति, यथा प्रकृतौ । अर्थापत्तित इह धर्मा भवन्ति, न चोदकेन । कण्वरथंतरमुभयोरर्थापन्नम् । तस्मादुभयधर्माँल्लभेत । ये तु विरुद्धा धर्माः, तद्यथा, उच्चैर्गेयं बलवद्गेयमित्येवंजातीयका विरोधाद्व्यवतिष्ठेरन् । अविरुद्धेषु समुच्चयः ॥ ४८ ॥

( बृहद्रथंतरोभयसामके क्रतौ रथंतरादिधर्माणां प्रकृतिवद्व्यवस्थाधिकरणम् ॥ १७ ॥

[ १७ ] उभयसाम्नि चैवमेकार्थापत्तेः ॥ ४९ ॥ पू०

सन्त्युभयसामानः क्रतवः । संसव उभे कुर्यात्, गोसव उभे कुर्यात् । अपचितावप्येकाहे उभे बृहद्रथंतरे कुर्यादिति श्रूयते । सन्ति

---

द्वेधा कर्मणां प्राप्तिः, चोदकेन कार्यापत्त्या च । कण्वरथंतरं चोभयोः कार्यापन्नम् । अत उभयधर्मग्राहकम् । अर्थापत्तित इह धर्मा भवन्ति, न चोदकेनेति कार्यापत्तिमाह+ ।

तदेतदयुक्तम् । कथम् । बृहद्रथंतरयोरग्निष्टोमे समुच्चयः । किमतः । एतदतो भवति, यद्यप्यग्निष्टोमस्य बृहद्रथंतरे पृष्ठसाधनत्वेनावगते, तथाऽपि तयो-

---

× बृहद्धर्मा इति-पा० । + कार्यापतिमाहेति-कार्यापत्तिमेवार्थाप्रत्तिमाहेत्यर्थः ।

तु प्रकृतौ बृहद्धर्मा रथंतरधर्माश्च । त इह चोदकेन प्राप्यन्ते । तत्र संशयः । किमुभयसाम्नि, उभयधर्माः कर्तव्या अथवेहापि तथैव व्यवतिष्ठेरन्निति । किं प्राप्तम् । उभयसाम्नि चैवं स्यात् । यथा कण्वरथंतरे । उभे ह्यत्र सामनी पृष्ठकार्ये वर्तेते, नैकैकम् । तस्मान्नैकैकधर्माल्लँभेत । उभे ह्यत्र संहते, उभे धर्मैः संयुज्येयाताम् । उभे हि ते संहते, एकार्थापत्तेः* पृष्ठकार्ये वर्तेते इति ॥ ४९ ॥

स्वार्थत्वाद्वा व्यवस्था स्यात्प्रकृतिवत् ॥ ५० ॥ सि०

वाशब्दः पक्षं व्यावर्तयति। न चैतदस्ति बृहद्रथंतरयोः संहतयोरुभये धर्माः कर्तव्या इति । रथंतरे रथंतरधर्मा बृहति बृहद्धर्माः। कुतः। स्वार्थत्वाद्धर्माणाम् । रथंतरधर्मा रथंतरार्थाः, बृहद्धर्मा बृहदर्थाः। साम्नोश्चैते धर्माः, न पृष्ठस्य । तच्च साम प्रयुज्यते रथंतरं बृहद्वा । रथंतरे प्रयुज्यमाने तद्धर्माः प्रयोक्तव्याः। बृहत्यपि प्रयुज्यमाने बृहद्धर्माः । सामप्रयुक्ता एवैते धर्माः । साम्नाऽपि हि दृष्टमदृष्टं च क्रियते । तस्मात्सामापि धर्मप्रयोजने समर्थम् । अतो व्यवस्था धर्माणां प्रकृतिवत् । तथा प्रकृतौ रथंतरे प्रयुज्यमाने तदङ्गं प्रयुज्यते । बृहति तदङ्गम् । एवमिहापीति ॥ ५० ॥

( पार्वणहोमयोर्विकृतावनतिदेशाधिकरणम् ॥ १८ ॥ )

[ १८ ] पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात्तदभिज्या हि ॥ ५१ ॥ सि०

---

वैकल्पिकत्वादेकस्यैवेदं कण्वरथंतरमापद्यते । एवं चोदकस्यैव धर्मान्ग्रहीष्यतीति ॥ ४८ ॥ ४९ ॥

---

× पृष्ठानुवादेन कण्वरथंतराविधिः । यत्पृष्ठं तत्कण्वरथंतरमिति । बृहद्रथंतरे च न पृष्ठानुवादेन विधीयेते । चोदकेन विकल्पेन प्राप्नुवती वचनेन

---

* एकार्थापन्ने-पा० । × ' उभे बृहद्रथंतरे भवतः ' इत्यादौ पृष्ठानुवादेन सामद्वयं कण्वरथंतरवद्विधीयते । तथा च यद्रथंतरस्य कार्यं पृष्ठस्तोत्रं तदुभाभ्यां साध्यते । एवं बृहत्कार्यमपि । अतः कार्यप्रयुक्ता धर्माः कण्वरथंतरवदेवोभयत्रोभये स्युरित्येवं पूर्वपक्षे प्राप्ते सिद्धान्तमाह-पृष्ठानुवादेनेति ।

स्तो दर्शपूर्णमासौ। तत्रेदं समामनन्ति। स्रुवेण पार्वणौ जुहोतीति। सौर्यादिषु वैकृतेषु कर्मसु भवति संदेहः। किं तेषु पार्वणहोमौ उत समुदायाभीज्येति। कालाभीज्यायां तयोः प्रवृत्तिः। समुदायाभीज्यायामप्रवृत्तिः। कुतः संशयः। उभयत्र प्रसिद्धेः। उभयत्र हि पर्वशब्दो लोके प्रसिद्धः। काले समुदाये च, आ हिमवत आ च कुमारीभ्यः। किं तावत्प्राप्तम्। कालाभीज्येति। ततः कालगता प्रसिद्धिर्व्यपदिश्यते।

एवं प्राप्ते, ब्रूमः। पार्वणयोर्वैकृतेषु कर्मस्वप्रवृत्तिः। कुतः। समुदायार्थसंयोगात्। ततः समुदाये प्रसिद्धिर्व्यपदिश्यते। काले प्रसिद्धिं परिहरिष्याम इति। अतः समुदायवाचित्वात्पर्वशब्दस्य समुदायस्याभियष्टव्यत्वाद्वैकृतेष्वप्रवृत्तिरिति ॥ ५१ ॥

कालस्येति चेत् ॥ ५२ ॥

इति चेत्पश्यसि, कालस्य पर्वशब्दो वाचकः। तस्मात्कालाभीज्येति। तत्परिहर्तव्यम्। आभाषान्तं सूत्रम् ॥ ५२ ॥

प्रकरणेन*, विशेष्यते—

नाप्रकरणत्वात् ॥ ५३ ॥

नास्ति कालस्य प्रकरणम्। अस्ति तु समुदायस्य। तस्मात्प्रकरणेन विशेषेण समुदायवाची गृह्यते, न कालवाची। अत्राऽऽह। न प्रकरणेन शक्यते पर्वशब्दस्य कालवाचितां बाधितुम्। दुर्बलं हि लिङ्गात्प्रकरणम्। उच्यते। नायमुभयत्र पर्वशब्दो वर्तते। यदि कालवचनः, तत्संबन्धात्समुदाये गम्यते। यदि वा समुदायवचनः, तत्संबन्धात्काले। अन्यतरवचनो युक्तो नोभयवचनः। तत्र समुदा-

---

समुच्चीयेते। तस्माद्यथाप्राप्ते प्रयोक्तव्ये। यद्यपि च पृष्ठशब्दो नोच्चारितस्तथाऽपि पृष्ठसाधने प्रकृतौ दृष्टे इति विकृतावपि पृष्ठसाधने एव भवतः। नान्यस्मिन्देशे प्रयोक्तव्ये इति ॥ ५० ॥ ५१ ॥ ५२ ॥

—..—

---

* परेण—पा०।

यवचने कल्प्यमाने प्रकरणमनुगृहीतं भवति। अपि च, पृणातेः पर्वशब्दः। पृणातिश्च दाने प्रसिद्धः। दानानि च समुदायाः। तस्मात्समुदायाभिज्या। एवं शब्दावयवप्रसिद्धिरनुगृहीता भवतीति। तस्माद्वैकृतेषु पार्वणयोरप्रवृत्तिः॥ ५३॥

मन्त्रवर्णाच्च॥ ५४॥

मन्त्रवर्णाच्च फलवदनुवादो भविष्यति=। ऋषभं वाजिनं वयं पूर्णमासं यजामहे। अमावास्या सुभगा सुशेवा, इति च। तस्मादपि समुदायाभिज्येति॥ ५४॥

तदभावेऽग्निवदिति चेत्॥ ५५॥

नैतदस्ति, यदुक्तं वैकृतेष्वप्रवृत्तिरिति। तदभावेऽपि—यद्यपि समुदायवचनोऽयम्। न च वैकृतेष्वयमस्ति समुदायः। तथाऽपि पार्वणहोमौ भवेतामेव। कुतः। अन्या एवंशब्दिका देवता भविष्यन्ति ×। समुदायो वाऽसंनिहितोऽपि यक्ष्यते, सौर्याद्युपकारार्थेन। यथा, अग्निमग्न आवह—इति। संनिहितोऽसंनिहितो वाऽग्निर्यागार्थेनाऽऽवाह्यते। एवमिहापीति॥ ५५॥

नाऽऽधिकारिकत्वात्॥ ५६॥

नैतदेवम्। आधिकारिकं हीदं वचनम्। अधिकारे भवं, यस्याधिकारस्तस्य गुणं विदधातीति। आग्नेयादीनां चाधिकारः। ते चात्र देवताः। तेषां होमो देवतार्थः। एवं यत्र सा देवता नास्ति, तत्र तदर्थो होमो न करिष्यते। तस्मात्पार्वणहोमयोर्वैकृतेभ्यो निवृत्तिः॥ ५६॥

[ पार्वणहोमयोरन्यतरस्यैव तत्तत्समुदायोपकारकस्य दर्शपूर्णमासयोरनुष्ठानाधिकरणम्॥ १९॥ ]

[ १९ ] उभयोरविशेषात्॥ ५७॥

---

॥ ५३॥ ५४॥ ५५॥ ५६॥

— —

---

= भवति—पा०। × भविष्यति—पा०।

इदमिदानीं संदिह्यते । किमुभौ होमौ पौर्णमास्याममावास्यायां च, उत पौर्णमासीहोमः पौर्णमास्याम् , अमावास्याहोमोऽमावास्यायामिति । किं प्राप्तम् । उभावप्युभयत्र । कुतः । उभयोर्हि प्रकरण उभावप्याम्नातौ । तस्मादुभयत्र भवितुमर्हतः ॥ ५७ ॥

यदभीज्या वा तद्विषयौ ॥ ५८ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति, उभयमुभयत्रेति । यदभीज्या, स तत्र भवेत् । तस्य हि स उपकारकः । अनुपकारक इतरस्य । न चानुपकारकः कर्तव्यः । समुदायप्रधानावत्र होमावित्युक्तम् । तस्माद्यदभीज्या, तद्विषयौ भवेतामिति ॥ ५८ ॥

---

किमुभौ होमौ पौर्णमास्याममावास्यायां चेत्येतदयुक्तम् । यदा समुदायस्य संस्कारकौ होमाववगतौ तदा यः पौर्णमासीलिङ्गः स पौर्णमास्यामेव प्राप्नोति । इतरोऽपि तत्रैवेति, नास्त्यनियमः । तस्मादन्यथा वर्ण्यते । प्रयोजनसूत्रे* एते । यदि पर्वशब्दः कालवचनस्तथा सति कालस्यासंस्कार्यत्वादारादुपकारकौ स्याताम् । कथम् । यद्यपि कालस्य कर्माङ्गताऽवगम्यते,× तथाऽपि सकृदेव वेदिते कर्म प्रस्तूयते । न तस्य भूयो भूयः स्मृत्या प्रयोजनम् । यथाऽन्यान्यङ्गानि भूयो भूयः स्मारकमपेक्षन्ते, नैवं कालः । तस्मात्कालवचने पर्वशब्देऽदृष्टार्थौ होमौ प्राप्नुतः । अत आह--कालाभीज्यायां विकृतिषु प्रवृत्तिरिति । न च प्रकरणादुत्कृष्य कालस्य संस्कारकौ कल्प्येते । फलकल्पनाभयात् । तस्माद्यदि कालवचनः पर्वशब्दस्तथा सत्यारादुपकारकैकत्वान्न लिङ्गं व्यवस्थां करोति । अत आह--' उभयोरविशेषात् ' इति । समुदायवाचकत्वेन तस्य संस्कार्यत्वाद्भवति व्यवस्थाकरणे लिङ्गम् । अत आह--' यदभीज्या वा तद्विषयौ ' इति ॥ ५७ ॥ ५८ ॥

---

* प्रयोजनसूत्रे इति--' उभयोरविशेषात् ' ' यदभीज्या वा तद्विषयौ ' इति सूत्रद्वयं नाधिकरणान्तरपरं, किं तु पूर्वाधिकरणप्रयोजनपरमित्यर्थः । × अवगम्यत इति--तथा च पर्वशब्दस्य कालवाचित्वेऽपि कालस्य कर्माङ्गतयोपयोगात्. तस्य च ' देशकालौ संकीर्त्य ' इत्यादिस्मृतिबलेन कर्मादौ सकृत्स्मृतस्यापि पुनरकालिकत्वसंभावनानिमित्तकाशङ्कापरिहारार्थं कर्मवदेव स्मरणोपपत्तेः सामवायिकत्वलाभाय युक्तमेव कालसंस्कारकत्वमिति कथमारादुपकारकत्वमिति शङ्काशयः ।

( समिदादिपदानां नामधेयत्वेन प्रयाजानामारादुपकारकत्वाधि-
करणम् ॥ २० ॥ )

[ २० ] प्रयाजेऽपीति चेत् ॥ ५९ ॥ पू०

दर्शपूर्णमासयोः प्रयाजा आम्नाताः-समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजतीति। तत्र संशयः क्रियते। किं समिधो यजतीत्यादिशब्दैः समिदादयो देवताविशेषा विधीयन्ते, एतान्समिदादीन् यजतीति। किंवा न प्रकृतैः समिदादिभिः संबन्ध उपादीयते, एवंशब्दिका देवता न प्रकृतावुपदिश्यन्त इति। किं तावत्प्राप्तम्। प्रकृतानां समिदादीनां यागो विधीयते। समिदादयश्च देवता वाक्यसंबन्धादिति। एवं प्रकृतैः समिदादिभिः संबन्धे क्रियमाणे प्रकरणानुग्रहो भविष्यति। तस्मात्प्रयाजेऽपि प्रकृता देवता भवितुमर्हतीति। देवताप्राधान्यं च यथा पार्वणहोम इति' ॥ ५९ ॥

नाचोदितत्वात् ॥ ६० ॥ सि०

नैतदेवम्। नात्र समिदादयश्चोद्यन्ते देवतात्वेन। कुतः। द्वितीयानिर्देशात्। तद्धितनिर्देशेन वा देवता चोद्यते, चतुर्थ्यन्तनिर्देशेन वा। तत्र हि तादर्थ्यं गम्यते। तादर्थ्ये च सति देवता भवति। न देवता नाम जात्या काचित्। सैव कस्यचिद्रूपस्य देवता, सैव नान्यस्य। यस्य यां प्रति तादर्थ्यं, सा तस्य देवता। द्वितीया हीप्सिततमे कारके भवति। तत्र न द्रव्यस्य तादर्थ्यं गम्यते। तस्मान्न द्वितीयान्तेन देवताविधानम्।

---

॥ ५९ ॥

---

अत्र सिद्धान्ते ग्रन्थः। 'विष्णुं यजति,' वरुणं यजति' इति परिचोदना। अत्रोच्यते। वाक्यान्तरेण वैष्णवयागो विहितः। तस्यायमनुवादः। यदि वा याग एवात्र विधीयते। तस्य प्रकरणसंनिधिभ्यां मान्त्रवर्णिको विष्णुः प्राप्तः। तस्यायमनुवादो यागस्तुत्यर्थः। न चात्र नामधेयं विष्णुः।

अत्राऽऽह । तादर्थ्यं कल्पयिष्यामः । यथा, विष्णुं यजति, वरुणं यजतीति । अत्र न विष्णुर्वरुणो वा यागः । नापि यागादर्थान्तरं, यागस्य कारकं यदीप्सितं, तद्द्वितीययाऽभिधीयते । तेन तत्र कल्प्यते तादर्थ्यम् । शब्दान्तरेण वा विहितं गम्यते । इह तु न शब्दान्तरविहितम् । न चैवं शक्यं परिकल्पयितुम् । न च यागस्य कारकत्वेन संभवति । समिदादिशब्दकत्वात्तु यजीनां समिदादयः शब्दा वाचका उपपद्यन्ते । क्रियायां चेप्सितायामिष्यते द्वितीया । यथा पाकं पचतीति ।

तस्मात्, समिधो यजतीत्ययमर्थः, समिद्यजिः कर्तव्य इति । यदा च यजिं प्रत्युनुष्ठानं चोद्यते, तदा यजिरुपदिष्टो भवति । यदि पुनरत्र देवतोपदिश्येत, उपदिष्टे यजौ देवतोपदिश्येत । तत्रोपदिष्टोपदेशे वाक्यं भिद्येत । तस्मान्न देवतोपदेशः । यदा न देवतोपदेशस्तदा मान्त्रवर्णिको देवताविधिः । तदा चोपादेयत्वादेवंशब्दिका देवताश्चोद्यन्ते । तस्मान्मान्त्रवर्णिको देवताविधिः ॥ ६० ॥

इति श्रीशबरस्वामिकृते मीमांसाभाष्ये नवमाध्यायस्य
द्वितीयः पादः ॥

---

द्वितीयान्तस्य यजतिसामानाधिकरण्याभावात् । प्रयाजेष्वपि च मान्त्रवर्णिको देवताविधिः । अग्निसमिदादिश्चैवमेवानूद्यते । संज्ञारूपा वा । यद्यपि सामानाधिकरण्यमस्ति । न च सा भेदिका, किंत्वभ्यास एव भेदकः । तदुक्तं द्वितीये× ॥ ६० ॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां
टुप्टीकायां नवमाध्यायस्य द्वितीयः पादः ॥

---

× द्वितीये–इति । ( अ० २ पा० २ अ० २ सू० २ ) अत्रेति शेषः ।

अथ नवमेऽध्याये तृतीयः पादः ॥

( सौर्यादिविकृतावतिदिष्टमन्त्रे वैकृतद्रव्यादिवाचकपदोहाधिकरणम् ॥ १ ॥ )

[ १ ] प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात् ॥ १ ॥ सि०

वैकृतानि कर्माण्युदाहरणम् । सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इति । ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम इति । चित्रया यजेत पशुकाम इति । वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकाम इति । अस्ति तु प्रकृतौ निर्वापमन्त्रः, अग्नये जुष्टं निर्वपामीति । तथा, इन्द्राय मरुत्वते नैवारमेकादशकपालं निर्वपेदिति । अस्ति तु प्रकृतौ व्रीहिलिङ्गो मन्त्रः, स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि । तस्मिन्न् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इति । तच्चैतच्च विकृतौ चोदकप्राप्तं संदिह्यते । किमविकारेण प्रयोक्तव्यमुतोहेनेति । किं प्राप्तम् । अविकारेणेति । तथा, आर्षमनुगृह्यते । यत्प्रकृतौ कर्तव्यं, तद्विकृताविति । प्रकृतौ चाग्निव्रीहिशब्दौ प्रयुक्तौ । तस्माद्विकृतावपि तावेव प्रयोक्तव्याविति ।

एवं प्राप्ते, ब्रूमः । सत्यं, प्रकृतौ यथोत्पत्ति वचनमर्थाना कृतं मन्त्रे, तथोत्तरस्यामपि ततौ विकृतौ तेनैव मन्त्रेण वचनं कर्तव्यम् । तत्प्रकृतित्वात् । तथा प्राप्त इदमुच्यते । नैतदेवम् । अर्थे× चाकार्यत्वादिति । एतावर्थौ अग्निव्रीहिशब्दौ सूर्यं नीवारं च नाभिदध्या-

मन्त्रविषय इदानीमूहश्चिन्त्यते । स च षडङ्गः । यद्यस्यपरा मन्त्राः, मुख्यार्थाभिधायिनश्च, अपूर्वप्रयुक्ताश्च धर्माः प्रकृतौ, समवेतार्थाभिधायिनोऽपरार्थाश्च । यदि वोच्यते देवता विकृतिरिति । तथोहोऽप्यष्टविधः । क्वचित्प्रकृतिरूह्यते । यथा, सूर्यायेति क्वचिल्लिङ्गमूह्यते । यथा, वसुरसि रुद्रोऽसीति । (साङ्ग) क्वचिद्वचनमूह्यते । यथा प्राजापत्ये; छागानामिति । क्वचित्प्रकृतिश्च लिङ्गं च, अदित्यै जुष्टमिति । क्वचित्प्रकृतिवचने, विश्वेभ्यो देवेभ्य इति । क्वचिल्लिङ्ग-

× अर्थेऽकार्यत्वात्—पा० ।

ताम् । च शब्दोऽत्र तुशब्दस्यार्थे । मन्त्राणां चार्थवचनं कार्यं, न स्वरूपम् । स्वरूपे ह्यदृष्टं कल्पयितव्यम् । अर्थवचनेन दृष्ट उपकारः । तस्मादूहितव्याविति ॥ १ ॥

लिङ्गदर्शनाच्च ॥ २ ॥

लिङ्गं खल्वप्यस्मिन्नर्थे भवति । न माता वर्धते न पिता न भ्राता न सखा, इति । प्रत्यक्षं भ्रातरं सखायं च वर्धमानं पश्यामः । अतो नार्थवृद्धिप्रतिषेधसंवादोऽयम् । शब्दवृद्धिप्रतिषेधस्तु—न भ्रातृशब्दो वर्धते, न सखिशब्द इति । का च तयोर्वृद्धिः । वर्णान्तरोपजननम् । सा, एकस्मिन् भ्रातेति, द्वयोर्भ्रातराविति । एतदुक्तं भवति । न भ्रातृशब्द ऊह्यते, न सखिशब्दश्चेति । अतोऽवगम्यते, अन्य ऊह्यन्त इति । यथा, न भवन्तः समाजं गच्छन्ति, न भवन्तः प्रेक्षका भवन्तीत्युक्ते नूनमन्ये गच्छन्तीति गम्यते । एवमिहापि, न भ्रातोह्यते, न सखा, इत्युक्ते नूनमन्य ऊह्यन्त इति लिङ्गदर्शनम् ॥ २ ॥

---

वचने, पाभ्योऽग्निमिति । क्वचित्त्रयाणामपि= । यथा+ घृतप्रोक्षणे, घृत देव शुद्धमसि । क्वचिदभ्यासः, एकधैकधेति यथा । प्रकृत्यूहस्तत्र प्रथमे पादे प्रायेण चिन्तितः । इदानीं वचनोहश्चिन्त्यते । ननु च 'फलदेवतयोश्च÷' इत्येवमादिना गतार्थमेतत् ।

उच्यते । यत्तत्र नाऽऽशङ्कितं तदाशङ्क्यते । चोदको द्विविधः । शब्दचोदकोऽर्थचोदकश्च । तत्र 'सौर्यं चरुं निर्वपेत्' इति विध्यादिवाक्यं विध्यन्तवाक्यैर्निराकाङ्क्षी क्रियते । वाक्यसामान्याच्च प्रयाजादिवाक्यानामतिदेशः । एवं मन्त्रवाक्यानामपीति पूर्वः पक्षः । उपकारापेक्षया तु सिद्धान्तः । अर्थचोदकत्वेन स बलवान् । अर्थाभिधानाय हि शब्दचोदकः प्रवर्तते, न पृथक्, अदृष्टकल्पनाभयात् । तस्मान्नास्त्यक्षरातिदेशः । अर्थातिदेशस्त्विति* ॥१॥२॥

---

= त्रयाणां—प्रकृतिलिङ्गवचनानामूह इत्यर्थः । × यथेति—प्रकृतौ 'आपो देवीः, शुद्धाः स्थ' इति प्रोक्षण्यभिमर्शनार्थो मन्त्रः' । यत्र विकृतौ 'घृतं प्रोक्षणम्' इति विहितं, तत्र 'घृत देव शुद्धमसि' इत्येवं सर्वांश ऊह्यत इत्यर्थः । ÷ ( अ० ९ पा० १ अ० ३सू० ४) । *अर्थातिदेशस्त्विति—अयं च साक्षात्कार्यसिद्ध्यर्थत्वादावश्यक इत्यर्थः ।

( मौद्गे चरौ प्राकृतबर्हिःस्तरणमन्त्रे हरितपदस्थाने रक्तपदो-
हाधिकरणम् ॥ २ ॥ )

स्थितं तावदपर्यवसितमेवान्तरा चिन्तान्तरं वर्तिष्यते—

[ २ ] जातिनैमित्तिकं यथास्थानम् ॥ ३ ॥ सि०

इदमामनन्ति । मौद्गं चरुं निर्वपेच्छ्रियै श्रीकाम इति । तत्रेदं विधीयते । पौण्डरीकाणि बर्हींषि भवन्तीति । अस्ति प्रकृतौ मन्त्रः । स्तृणीत बर्हिः परिधत्त वेदिं जामिं मा हिंसीरमुया शयाना । दर्भैः स्तृणीत हरितैः सुपर्णैर्निष्का इमे यजमानस्य ब्रध्न इति । इह चोदकेन प्राप्तः । अत्र दर्भैरिति जातिशब्दः । हरितैरिति नैमित्तिको गुणशब्दः । तत्र संशयः । किं जातिशब्द ऊहितव्यः नैमित्तिकोऽविकारेण प्रयोक्तव्य उतोभावपि यथास्थानमूहितव्यौ, जातिशब्दः स्तरणे, नैमित्तिकः स्तरणसाधने द्रव्य इति ।

तत एवं तावत्परीक्ष्यम् । किमयं हरितशब्दो हरितगुणविवक्षया प्रयुज्यत उत स्तरणद्रव्यगुणाभिधित्सयेति । कश्चात्र विशेषः । यदि दर्भाणां हरितगुणसंबन्धो वक्तव्यः, व्यक्तमसावदृष्टोऽर्थः । तदा पुण्डरीकाणामप्यदृष्टायैव हरितसंबन्धो वचनीयो भवतीत्यविकारेण प्रयोक्तव्यः । अथ स्तरणद्रव्यगुणविवक्षया प्रयुज्यते, तत्र पुण्डरीकाणामपि स्वगुणो वक्तव्यो भविष्यति । तदेतद्द्वयमपि हरितशब्दादवगम्यते । किंनु विवक्षितमिति संशयः ।

किं तावत्प्राप्तम् । अविकारेण प्रयोक्तव्य इति । तत एतत्तावच्चिन्त्यते । हरितगुणविवक्षया प्रयुज्यत इति । कुतः । हरितशब्दस्य मन्त्रे भावात् । न हि यो यो द्रव्यगुणः सोऽवश्यवचनीयो भवति । यस्य यस्य तु वाचको मन्त्रे शब्दोऽस्ति, स गुणो वक्तव्य इति गम्यते । हरितगुणस्य वाचको मन्त्रोऽस्ति । तस्माद्धरितगुणो वक्तव्य इति ।

ननु स एव स्तरणद्रव्यगुणस्य वाचकः । नेत्याह । न ह्यसौ स्तरणद्रव्यगुण इत्यनेन कारणेन हरितशब्देनोच्यते । कथं तर्हि ।

हरितत्वयोगाद्धारितशब्देनोच्यते । स एव हारित्यं श्रुत्याऽभिदधाति, लक्षणया स्तरणद्रव्यगुणम् । श्रुतिश्च लक्षणाया ज्यायसी । तस्माद्धरितगुणाविवक्षया प्रयुज्यते, विकृतौ नोहितव्य इति ।

एवं प्राप्ते, ब्रूमः । जातिशब्दो नैमित्तिकश्चोभावप्यूहितव्यौ । तत एतद्वर्ण्यते । स्तरणद्रव्यस्य गुणविवक्षया प्रयुज्यत इति । यद्यपि हारित्यं श्रुत्या हरितशब्दोऽभिवदति, तथाऽपि हरितगुणवचनमनर्थकम् । अदृष्टं हि तत्र कल्पनीयं स्यात् । तच्चाशक्यं दृष्टे संभवति । स्तरणद्रव्यगुत्तं तु लक्षणयाऽभिवदति । तद्वचने तु दृष्टं प्रयोजनं, स्तरणद्रव्यप्रत्यायनम् । एवं चेदिहापि स्तरणद्रव्यस्य पुण्डरीकस्य गुणः प्रत्याययितव्यः । तस्मात्तद्वाचक ऊहितव्यो रक्तशब्द इति ॥ ३ ॥

तत एवान्तरागर्भिणीन्यायो भवतीत्यन्यथा सूत्रं वर्ण्यते—

लिङ्गदर्शनाच्च ॥ २ ॥

जातिनैमित्तिकं यथास्थानम् ॥ ३ ॥

इति । इतश्च पश्यामो विकृतावूहः कर्तव्य इति । कुतः । लिङ्गं दृश्यते । किं लिङ्गं भवति । एवमाह । विश्वेषां देवानामुस्राणां वपानां मेदसोऽनुब्रूहीति । जातिशब्दानामूहितानां समुच्चारणं भवति । तन्मन्त्राणामर्थवचनपक्ष एव कल्प्यते। ऊहेऽक्रियमाणेऽनर्थपरत्वेऽग्निच्छागशब्दावेव प्रयुज्येयाताम् । तत्रामीषामक्रियार्थानां वचनमनर्थकमेव स्यात् । न चात्रैते शब्दा विधीयन्ते, विधायकस्याभावात् । ननु प्रयोगवचनेन विधायिष्यन्ते । एवं तर्ह्यदृष्टार्थता दोषः । तस्मादस्ति, ऊह इति ॥ २ ॥ ३ ॥

अविकारमेकेऽनार्षत्वात् ॥ ४ ॥

एके पुनराचार्या अविकारमनुमन्यन्ते । अस्मिन्नर्थे लिङ्गं वक्ष्यति । तस्येयं प्राप्तिः क्रियते । यदि ह्यूह्येत, आर्षश्चोदको बाध्येत । तस्मादनूह इति ॥ ४ ॥

---

॥ ३ ॥ ४ ॥

लिङ्गदर्शनाच्च ॥ ५ ॥

लिङ्गमस्मिन्नर्थे दृश्यते । आग्नेये वैकृते पशावाम्नायते, अग्नये छागस्य वपाया मेदसोऽनुब्रूहीति । ऊहपक्षे न विधातव्यं स्यात् । विधीयते तु । तस्मादनूह इति । अपि चेदमपरं लिङ्गमग्नीषोमीये पशौ श्रूयते, यद्येकं यूपमुपस्पृशेत्, एष ते वायो इति ब्रूयात् । यदि द्वौ, एतौ ते वायू इति । यदि बहून्, एते ते वायव इति । यद्यूहो भवेदेतदपि प्राप्तत्वान्न विधातव्यं स्यात् । विधीयते तु । तस्मादप्यनूह इति ॥ ५ ॥

विकारो वा तदुक्तहेतुः ॥ ६ ॥

वाशब्देन पक्षो व्यावर्त्यते×। यदुक्तमविकार इति । तन्न । ऊहः स्यात् । अस्मिन्नर्थे पूर्वोक्तो हेतुः । अर्थे चाकार्यत्वादिति * । मन्त्रार्थं ह्यनुरुध्य चोदको न मन्त्राक्षराणि । अर्थपराणि हि तानि, न स्वरूपप्रधानानि । तस्मादूहः स्यात्पूर्वेणैव हेतुना । केवलं लिङ्गपरिहारो वक्तव्यः ॥ ६ ॥

लिङ्गं मन्त्रचिकीर्षार्थम् ॥ ७ ॥

यल्लिङ्गमुक्तम्, अग्नये छागस्य वपाया मेदसोऽनुब्रूहीति, तन्मन्त्रचिकीर्षया विधीयते । इतरथा, ऊहितत्वादमन्त्रः स्यात् । तस्मात्पुनर्वचनम् ॥ ७ ॥

नियमो वोभयभागित्वात् ॥ ८ ॥

यल्लिङ्गमुक्तम्, एष ते वायो इति । तत्परिह्रियते । यदि ह्येतन्नोच्येत, यदि द्वावुपस्पृशेत्, यदि बहूनिति, सर्व इमे मन्त्रा एकयूपे भवेयुः । उभयमपि मा प्रकृतौ भूदिति नियमः क्रियते । यदि द्वावुपस्पृशेत्, एतौ ते वायू इति ब्रूयात् । यदि बहून्, एते ते वायव इति ब्रूयात् । तस्मादेतदप्यालिङ्गमिति ॥ ८ ॥

---

॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

—

---

× विपरिवर्तते—पा० । * ( अ० ९ पा० ३ अ० १ सू० १ ) ।

[ लौकिकयूपस्पर्शे पुरुषार्थतया प्रायश्चित्तविधानाधिकरणम् ॥ ३ ॥

[ ३ ] लौकिके दोषसंयोगादपवृक्ते हि चोद्यते निमित्तेन प्रकृतौ स्यादभागित्वात् ॥ ९ ॥ सि०

अस्ति ज्योतिष्टोमः । तत्राग्नीषोमीये पशावाम्नायते । यद्येकं यूपमुपस्पृशेदेष ते वायो इति ब्रूयात् । यदि द्वावेतौ ते वायू इति । यदि बहूनेते ते वायव इति । तत्रैषोऽर्थः सांशयिकः। लौकिके वैदिके च यूपोपस्पर्शने प्रायश्चित्तमुत वैदिके, अथवा लौकिके, इति । किं प्राप्तम् । लौकिके वैदिके वाऽनियम* इति । कथम् । विशेषानाश्रयणात् ।

न हि विशेष आश्रीयते लौकिके वैदिके वेति । तस्मादनियम इति । वैदिके वा । तथा हि । अस्य मन्त्रस्य समीपगतेन प्रयोजनाभिसंबन्धो भविष्यति । इतरथा दूरगतेनाप्रकृतेन परोक्षः संबन्धः स्यात् । तस्माद्वैदिके यूपोपस्पर्शन इदं प्रायश्चितमिति ।

एवं प्राप्ते, ब्रूमः । लौकिक उपस्पर्शने भवितुमर्हति, न वैदिके। कुतः । दोषसंयुक्तं× हि श्रूयत इदं प्रायश्चित्तम्—यूपो वै यज्ञस्य दुरिष्टमामुञ्चते, यद्यूपमुपस्पृशेथज्ञस्य दुरिष्टमामुञ्चते । तस्माद्यूपो नोपस्पृश्य इत्यभिधाय, यद्येकं यूपमुपस्पृशेदिति समाम्नायते । तस्माद्यत्र दोषस्तत्र प्रायश्चित्तमिति । लौकिके च दोषो न वैदिके । वैदिके हि, अञ्जनमुच्छ्रयणं च कर्तव्यमुक्तम् । न तत्कर्तव्यं सदकर्तव्यं भविष्यति । सावकाशं चोपस्पर्शनप्रतिषेधवचनं लौकिकेऽविरुद्धं भविष्यति ।

अपि च, अपवृक्ते कर्मणि चोद्यते निमित्तेन । कथम् । यूपो वै यज्ञस्य दुरिष्टमामुञ्चत इति । यत्किल यज्ञे दुरिष्टं तद्यूप आमुञ्चते, यत्सुकृतं तद्यजमान इति । सर्वमिदं प्रशंसार्थं, न विधिपदान्तरेण संबध्यते । इष्टशब्द एवैको विधिपदैः संबन्धमुपैति । प्रशंसापदैरपि संबध्यमान इह संनिहितो भवति। संनिहितत्वाच्च पदान्तरैः संबध्यते।

* वानियम इति—पा० । × एवं दोषसंयुक्तं—पा० ।

यथा, दण्डो मनोहरो रमणीयश्च, प्रहर शीघ्रमिति रमणीयमनोहर-संबन्धेऽपि सति संनिहितत्वात्प्रहर शीघ्रमित्येतैः पदैः संबध्यते। एव-मिष्टशब्दोऽपि संनिहितत्वात्संबध्यते। इष्टे यदि यूपमुपस्पृशेदेष ते

---

येयं सूत्रावयवव्याख्या, अपवृक्ते हि चोद्यत इति,× 'यूपो वै यज्ञस्य दुरिष्टम्' 'यद्येकमुपस्पृशेत्' इति वाक्ययोरेकवाक्यतया, सा न युक्ता। अर्थैकत्वादेकवाक्यत्वमिति= ह्येवम्। अर्थभेदाद्भिन्ने एते वाक्ये। स्तुतिस्तुत्यभेदाच्चार्थभेदः। 'यूपो वै यज्ञस्य' इत्येतया निन्दया प्रतिषेधः संबध्यते-'तस्मान्नोपस्पृश्यः' इति। 'यद्येकम्' इत्यस्यापरा÷ स्तुतिः। न च दुरिष्टि, शब्दः समाप्तिवाचकः। इष्टशब्देन सोच्येत वा न वा। सोपपदस्तु समुदायप्रसिद्ध्या पापवचनः। दुरिष्टं पापमित्यर्थः। यथा दुष्कृतम्। न चोपस्पर्शनं निमित्तत्वेनानूद्यमानं दुरिष्टेनोपपदेन विशेषयितुं न्याय्यम्। आर्तिवत्।

तस्मादन्यथा वर्ण्यते। अपवृक्ते हि—प्रतिषेधे सति, चोद्यते मन्त्र उपस्पर्शनेन निमित्तेन। प्रतिषेधो ह्युपरमोऽनितिकर्तव्यतारूपो न प्रयोगाङ्गम्। यच्चेतिकर्तव्यतारूपं तत्प्रकरणेन गृह्यते। प्रतिषेधस्तु पुरुषार्थः। स हि स्वभावाद्विचरन् कदाचिदुपस्पृशेदपि, कर्ममध्यगतो वा। तत्र प्रतिषिध्यते नोपस्पृशेदिति। तत्र हि पापमाबद्धमिति। यस्य* च प्रतिषेधस्तस्य निमित्ते प्रायश्चित्तं ब्रह्महण इव। तत्रैवं वचनव्यक्तिर्भवति, 'यद्येकमुपस्पृशेत्, एवं ब्रूयादिति'। प्रकरणात् 'यूपम्' इत्यनुवादः। न च शक्या संख्योपस्प्रष्टुमित्यर्थाच्च यूपानुवादः, यूपस्तु× निमित्तभूतो ह्यशक्यः संख्यया विशेषयितुं ग्रहवत्। इदमेवास्याः स्मृते-

---

× इतीति—इत्यस्य भाष्यकारैः कृतेति शेषः। = इति ह्येवमिति—(अ० २ पा० १ अ० १४ सू० ४६) इत्यत्रोक्तमित्यर्थः। ÷ इत्यस्येति—प्रायश्चित्तविधेरप्यपरा स्तुतिः कल्पनीया। कुतः। पूर्वस्याः स्तुतेर्निषेधशेषत्वादित्यर्थः। * यस्य चेति—यस्यैव पुरुषस्य प्रतिषेधोऽङ्गं, तस्यैव प्रतिषेधातिक्रमणरूपे निमित्ते सति प्रतीकारापेक्षया प्रायश्चित्तविधानं ब्रह्महन्तुरिव युज्यते। अतः प्रतिषेधस्य पुरुषार्थत्वे प्रायश्चित्तस्यापि पुरुषार्थत्वं सेत्स्यतीत्याशयः। + यूपस्य वाक्यान्निमित्तान्तर्भावेऽनिष्टं दर्शयति—यूपस्त्विति।

वायो इत्येवमादि ब्रूयादिति । सोऽयमिष्ट इत्यपवर्गस्य वक्ता शब्दः । अपवृक्ते चेदुपस्पर्शनं मन्त्रस्य निमित्तं, व्यक्तं न वैदिकम् । तस्माल्लौकिके यूपोपस्पर्शने प्रायश्चित्तं, न प्रकृतौ वैदिके, अभागित्वात्-प्रतिषेधस्यापवर्गस्य च, वैदिके न संभवतीति ॥ ९ ॥

( द्विपाशिकायां विकृतावेकवचनान्तबहुवचनान्तपाशमन्त्रयोर्द्विवचनान्तेनोहाधिकरणम् ॥ ४ ॥ )

[ ४ ] अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य ॥ १० ॥ पू०

अस्ति पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभत इति । तत्र पाशैकत्वाभिधायी मन्त्रः, अदितिः पाशं प्रमुमोक्त्वेतमिति । तथा पाशबहुत्वाभिधायी, अदितिः पाशान् प्रमुमोक्त्वेतानिति । प्रकृतौ तयोः समुच्चयं वक्ष्यति । अस्ति द्विपशुर्विकृतिः । मैत्रं श्वेतमालभेत, वारुणं कृष्णमपां चौषधीनां च संधावन्नकाम इति ।

---

मूलं, ' यूपचित्याद्युपस्पर्शने स्नायात् ' इति । ननु प्रतिषेधोऽपि प्रकरणात्कर्माङ्गं, ' नानृतं वदेत् ' इतिवदिति चेत् ।

उच्यते । द्विसाधनके कर्मणि व्रीहिमयं संकल्प्य यवमयो न देय इत्युक्तम् । इह तु न द्वौ प्रयोगौ । सोपस्पर्शनकोऽनुपस्पर्शनकश्च । यत्रानुपस्पर्शनके स्पर्शप्रतिषेधोऽङ्गं स्यात् । यत्तु तक्षणाद्युपस्पर्शनं तद्वाचनिकं, तक्षणादिकर्तरि च । इदमधिकरणमुदाहरणप्रसङ्गेन । पूर्वश्चोहः प्रातिपदिकविषयः । इतःप्रभृति वचनविषय एव । पाशौ, पाशं, पाशानितिवत् ॥ ९ ॥

---

तयोः समुच्चयं वक्ष्यति । प्रकृतावुभयोर्निवेश× इत्यर्थः । नन्वयं=पाशमन्त्रः करणत्वात्पर्यायेण स्यात् । नार्थ ऊहेनेति । जपोऽयं, पाशोन्मोचन-

---

× ' तयोः समुच्चयं वक्ष्यति ' इति भाष्यं यथाश्रुतेऽनुपपन्नार्थम् । कुतः । एकवचनान्तबहुवचनान्तपाशमन्त्रयोः पाशप्रकाशनार्थत्वेन दृष्टार्थतया समुच्चयासंभवात् । अतस्तदभिप्रायमाह—प्रकृताविति । = ननु पाशमन्त्रस्य करणमन्त्रत्वाद्द्विपाशिकायां विकृतौ प्रत्येकस्मिन् पाश आवृत्त्यैव प्रयोगापत्तेर्नोभयोरपि मन्त्रयोरूहेन प्रयोजनमिति शङ्कते—नन्वित्यादिना ।

तत्र चोदकेन पाशाभिधायिनौ मन्त्रौ प्राप्तौ । तयोः संशयः । किं बहुवचनान्तोऽविकारेण प्रवर्तते, एकवचनान्तस्य निवृत्तिः, उत बहुवचनान्तो निवर्तते, एकवचनान्त ऊहितव्यः, उतोभयोरपि प्रवृत्तिरभिधानविप्रतिपत्तिश्च, उतैकवचनान्त ऊहितव्यो बहुवचनान्तोऽपि न निवर्तेत । किं प्राप्तम् । अन्यायस्त्वविकारेण । अन्यायनिगदो बहुवचनान्तोऽविकारेण प्रवर्तते । एकवचनान्तो निवर्तितुमर्हति । कुतः । नास्यैकस्मिन् पाशे प्रवर्तमानस्य दृष्टः प्रतिघातः । यथैवैकस्मिन् पाशे प्रवर्तते, तथा द्वयोरपि प्रवर्तितुमर्हति । नासावेकस्य वाचकः, न द्वयोः । एवमार्षश्चोदकोऽनुगृहीतो भविष्यति । इतरथा हि, ऊह्यमाने यथाप्रकृति मन्त्रो न कृतः स्यात् । न द्वयोः पाशयोः, एकस्मिंश्च पाशे कश्चिद्विशेषोऽस्ति । तस्मादविकारेण बहुवचनान्तः प्रयुज्यते, एकवचनान्तस्य निवृत्तिरिति ॥ १० ॥

विकारो वा तदर्थत्वात् ॥ ११ ॥

वाशब्दः पक्षं व्यावर्तयति । विकारो वा स्यात् । एकवचनान्त ऊहेन प्रवर्तते, बहुवचनान्तनिवृत्तिरिति । कुतः । तदर्थत्वात् । यौ पाशौ विकृतौ वक्तव्यौ, तौ च प्रयोगवचनानुग्रहाद्यौगपद्येन, न पर्यायेण । तत्र न गम्यते विशेषः, पाशशब्द उच्चरिते कस्य पाशस्याभिधानं, कस्य नेति । अविशेषाद्द्वयोरपि पाशयोः । तत्र तयोः कर्मत्वाभिसंबन्धं द्वितीयाद्विवचनमेव शक्नोति वदितुं, नान्यत् । तस्माद्द्विवचनमूह्येत । बहुवचनमेकवचनं च निवर्तितुमर्हत इति ॥ ११ ॥

अपि त्वन्यायसंबन्धात्प्रकृतिवत्परेष्वपि
यथार्थं स्यात् ॥ १२ ॥

अपि त्विति पक्षो व्यावर्त्यते,× न बहुवचनं निवर्तेत= । यथा प्रकृतौ बहुवचनान्तमेकवचनान्तं च प्रवृत्तम् । अन्यायसंबन्धाद्बहुवच-

---

काले क्रियमाणानुवाद्येव वा । अर्थाच्चोत्तराधिकरणं, प्रकृतौ विचारितायां विकृतेर्विषयः ॥ १० ॥ ११ ॥

---

× विपरिवर्तते—पा० । = निवर्त्येत—पा० ।

नान्तम् । एवं विकृतावप्येकवचनान्तं द्विवचनान्तमूह्येत । अन्यायसंबन्ध उच बहुवचनान्तं प्रवर्तेत । यदि प्रकृतौ प्रातिपदिकार्थमात्रं पक्षे प्रकाशितं, विकृतावपि तत्पक्षे प्रकाशयितव्यम् । अथ बहुवचनान्ते नैकत्वमुक्तम्, इहापि बहुवचनान्तेन द्वित्वं वक्तव्यम् । तस्मादभिधानविप्रतिपत्तिः कर्तव्येति ॥ १२ ॥

यथार्थं त्वन्यायस्याचोदितत्वात् ॥ १३ ॥ सि०

तुशब्दस्तमपि* पक्षं व्यावर्तयति । नाभिधानविप्रतिपत्तिः कर्तव्येति । किं तर्हि । यथार्थं द्विवचनमूहितव्यं, बहुवचनमेकवचनं च निवर्तेयाताम् । ताद्धि द्विपाशाभिधायिनः पाशशब्दात्परं बहुवचनमेकवचनं वा न शक्नोति कर्मसंबन्धं वदितुम् । लोको हि शब्दार्थावगमे प्रमाणम् । न च लोके द्वयोरर्थयोर्बहुवचनान्त एकवचनान्तो वा प्रवर्तमानो दृश्यते । तस्मादूहेन द्वयोः पाशयोर्बहुवचनान्त एकवचनान्तो वा प्रयोक्तव्यः ॥ १३ ॥

कथं प्रकृतावेकस्मिन् पाशे बहुवचनान्त इति चेत्—

छन्दसि तु यथादृष्टम् ॥ १४ ॥

यावद्दर्शनं प्रामाण्यमभ्युपगन्तव्यं छन्दसि, न दर्शनमतिक्रमितव्यम् । यो हि दर्शनमतिक्रम्यान्यदपि+ कल्पयेत्, न तेन छान्दसं कृतं स्यात्, न लौकिकं, नापि लक्षणसिद्धम् । यदुक्तं, चोदकेनाभिधानविप्रतिपत्तिश्चोद्यत इति । नैतदेवम् । अन्यायस्याचोदितत्वात् । न हि चोदकोऽन्याय्यामभिधानविप्रतिपत्तिमभिप्रापयति । किं कारणम् । प्रकृतावेकत्वात्पाशस्य, प्रयुक्तत्वाच्च= बहुवचनान्तस्य, प्रत्यक्षाऽभिधानविप्रतिपत्तिः । केयमभिधानविप्रतिपत्तिर्नाम । यदन्यथाभिधानम्, अन्यथाऽभिधेयम् । न च प्रकृतावेकस्मिन् बहुवचनान्तं प्रयुक्तमभिधानविप्रतिपत्तिं कर्तुम् । किं तर्हि । यत्तेन शक्यते, तत्कर्तुम् । किंचानेन शक्यते । अस्य सिद्धे प्रयोगेऽर्थमन्विच्छन्तो यदव-

॥ १२ ॥ १३ ॥

---

* तुशब्द एतमपि—पा० । + अन्यत्रापि-पा० । = प्रकृतत्वाच्च-पा० ।

गम्यते तदर्थः शब्द इत्यवधारयामः। अस्माच्च पाशद्रव्यस्य मोचनेन संबन्धोऽवगम्यते । तदर्थता शब्दस्य भवितुमर्हति । नैकत्वेन बहुत्वेन वा प्रयोजनम् ।

इह तु विकृतौ पाशस्य च पाशस्य च यौगपद्येन मोचनेन संबन्धो वदितव्यः। बहुवचनं च द्वयोः पाशयोरन्याय्यम् । कर्माभिधाने* इह पुनर्न प्रयोगः सिद्धः । किंतु प्रयोग एव चिन्त्यते कः शब्दः प्रयोक्तव्य इति । तत्र प्रयोगेऽस्मदायत्ते किमित्यवाचकं प्रयोक्ष्यामहे विद्यमाने वाचके । न चायं द्वयोश्छन्दसि दृष्टो बहुवचनान्तः । सोऽयं मन्त्रः प्रयुज्यमानोऽपभ्रंश एव स्यात् , न छान्दसः । न च बहुवचनं द्वित्वप्रत्ययार्थं लभ्यते लौकिके वैदिके+ वा । न चाभिधित्सिते द्वित्वे द्वयोर्बहुवचनं भवति । तद्यथा, देवदत्तयज्ञदत्ताभ्यां कर्तव्यमिति देवदत्तयज्ञदत्तशब्दद्वयादेव द्वित्वं प्राप्तं. न विभक्त्याऽभिधास्यते= । तथाऽपि द्विवचनमेव भवति, न बहुवचनम् । तस्माद्विकृतावूहितव्यमिति ॥ १४ ॥

( बहुवचनान्तपाशमन्त्रस्य विकल्पेन प्रकरण एव निवेशाधिकरणम् ॥ ५ ॥ )

[ ५ ] विप्रतिपत्तौ विकल्पः स्यात्समत्वाद्गुणे त्वन्यायकल्पनैकदेशत्वात् ॥ १५ ॥ सि०

अस्ति* पशुरग्नीषोमीयः । यो दीक्षितो यदग्नीषोमीयं पशुमालभत इति । तत्र पाशैकत्वाभिधायी पाशबहुत्वाभिधायी च मन्त्रौ समाम्नातौ । तयोः किमेकत्वाभिधायी प्रकरणे निविशते, बहुत्वाभिधायी प्रकरणादुत्कृष्यत उतोभावपि प्रकरणमभिनिविशेते इति । किं प्राप्तम् । बहुत्वाभिधायी× उत्कर्ष्टव्य इति । कुतः । बहूनां हि स

॥ १४ ॥

* तस्याभिधाने, इह न प्रयोगः—पा० । + वैदिके च—पा० । = विधित्स्यते—पा० । * अस्ति सोमे पशु—पा० । × बहुत्वाभिधायी यत्र बहवः पाशास्तत्रोत्कर्ष्टव्य इति—पा० ।

पाशानां मोचकः। न च प्रकरणे बहवः पाशाः सन्ति। तस्मात्प्रकरणेऽसंबध्यमानो यत्र बहवः पाशास्तत्र नीयेत। यथा, शुवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यादिति। एते असृग्रमिन्दव इति। बहुभ्यो यजमानेभ्यः प्रतिपदं कुर्यादिति प्रतिपद्विधानमुत्कृष्यते। यथा च, पौष्णसावित्रसारस्वतद्यावापृथिवीयाद्यनुमन्त्रणान्युत्कृष्यन्ते, एवं पाशबहुत्वाभिधाय्यपीति।

एवं प्राप्ते, ब्रूमः। विप्रतिपत्तावेतस्यां, का विप्रतिपत्तिः। यत्प्रकृतावेकः पाशः, पाशबहुत्वाभिधायी च मन्त्रः। एतस्यां विप्रतिपत्तौ किं मन्त्र उत्कृष्यते, नेति। उच्यते। नोत्कर्ष्टव्यः। ननु प्रकृतावन्यो मन्त्रः। उच्यते। तेन सह विकल्पो भविष्यति। कुतः। पाशप्रातिपदिकार्थस्य प्रकृतौ विद्यमानत्वादुत्कर्षो न न्याय्यः। ननु बहुपाशवचन एष मन्त्रः। प्रकृतौ त्वेकः पाशः। तस्मात्तत्र न संभवतीति। उच्यते। बहूनप्यसौ पाशान् वदन् बहुत्वाधिष्ठानं द्रव्यं प्रकाशयत्येव। यदि न प्रकाशयेत, न पाशविशिष्टं बहुत्वं गम्येत। प्रकाशयति चेत्, तावता नः प्रयोजनम्। तस्य ह्युन्मोचनं क्रियते, न बहुत्वस्य, पाशाकृतेर्वा। तस्मात्तस्य प्रकाशनं कर्तव्यम्। तत्प्रातिपदिकेन करिष्यते, नोत्कृष्यते।

अथोच्यते। अस्त्येव ह्येकवचनान्तं प्रातिपदिकम्। तत्तस्य प्रकाशनं करिष्यतीति। अत्रोच्यते। न हीदं तस्मादन्यत्। यद्येकवचनान्तं प्रातिपदिकं नोत्कृष्यते, प्रकरणादित्युच्यते, सिद्धस्तर्ह्यनुत्कर्षस्तदेवेदमिति। ननु बहुवचनस्य बहुपाशकप्रयोगेऽर्थवत्ता। तस्मादुत्कर्ष्टव्यम्। तदुत्कृष्यमाणमेकदेशत्वात्प्रातिपदिकमुत्कर्षतीति। उच्यते। गुणे त्वन्यायकल्पना स्यादिति, न प्रधाने। गुणश्च विभक्त्यर्थः। प्रधानं प्रातिपदिकार्थः। प्रातिपदिकार्थविशेषो विभक्त्याऽभिधीयते। सति प्रातिपदिकार्थे विभक्त्यर्थेन भवितव्यम्। न च विकृतौ प्रातिपदिकमस्ति। अनारभ्याप्यभिहितं* प्रकृतिं प्रविशति। किम-

* आनरभ्याधीतं हि-पा०।

ङ्‌ पुनः प्रकृतावेवाभिहितम् । तस्माद्यत्र प्रातिपदिकार्थस्तत्र विभक्त्यर्थो भविष्यति ।

ननु विकृतावपि चोदकेन प्राप्तं प्रातिपदिकं, प्रातिपदिकार्थश्चोच्यते । बाढम् । विप्रकृष्टस्तु चोदकः । बहुवचनसमर्थकं प्रातिपदिकं चोदको नोत्कक्ष्यति । तस्मात्प्रातिपदिकमेकदेशत्वाद्बहुवचनमाकक्ष्यतीति । न च प्रकृतावनर्थकमेव बहुवचनं, पाशाकृतिकस्य हि तदुन्मोचने कर्मसंबन्धं करोति । तस्माद्गुणे बहुवचनेऽन्यायकल्पना, न प्रधाने प्रातिपदिकार्थे, इति । किं पुनरन्याय्यम् । यद्बहुत्वं गम्यमानमविवक्षितमित्युच्यते । तत्कल्प्यतां, न तु प्रकृतौ प्रातिपदिकस्य प्रातिपदिकार्थाभिधानमन्याय्यं कल्पयितव्यम् । अस्य हि गुणस्यावाच्यमेव वैकृतं बहुत्वं, संनिधानाभावात् । तस्मात्प्रकृतौ बहुवचनान्तस्यापि निवेश इति ॥ १५ ॥

प्रकरणविशेषाच्च ॥ १६ ॥

प्रकरणविशेषाच्चैतदध्यवसीयते, प्रातिपदिकं बहुवचनमाकर्षति, न प्रातिपदिकं बहुवचनेनोत्कृष्यत इति । प्रकृतौ हि प्रातिपदिकार्थो विद्यतेऽग्नीषोमीये पशौ । बहुवचनार्थो* विकृतिषु । तस्मादपि बहुवचनान्तस्य प्रकृतौ निवेश इति ॥ १६ ॥

उत्कर्षो वा द्वियज्ञवदिति यदुक्तं, तत्परिहर्तव्यम्—

अर्थाभावात्तु नैवं स्याद्गुणमात्रमितरत् ॥ १७ ॥

युक्तं यत्प्रातिपदिकाभिधानमुत्कृष्यते, नास्ति प्रकृतौ यजमानद्वित्वं यजमानबहुत्वं वा । तत्र न भवेद्विषय एतयोः प्रतिपदोः । इह तु गुणमात्रं नास्ति बहुत्वम् । अन्यत्तु बहुवचनस्य प्रयोजनं, शुचिना संबन्धः । न चानेकप्रयोजनमन्यतमेन प्रयोजनेन न प्रयुज्यते । न हि, उल्का प्रकाशनेनाप्रयुज्यमाना भस्मना न प्रयुज्यते । तस्माद्विषमं प्रतिपद्भ्यामिदमिति ॥ १७ ॥

---

॥ १५ ॥ १६ ॥ १७ ॥

---

* अप्रकृतौ हि बहुवचनार्थः—पा० ।

द्यावोस्तथेति चेत् ॥ १८ ॥

अथ यदुक्तं, द्यावापृथिव्यादीनामनुमन्त्रणानां यथोत्कर्षस्तथाऽस्येति । तत्परिहर्तव्यम् ॥ १८ ॥

नोत्पत्तिशब्दत्वात् ॥ १९ ॥

नैतदनुमन्त्रणेन तुल्यम् । न हि दर्शपूर्णमासयोर्द्यावापृथिव्यादीनामुत्पत्तौ शब्दोऽस्ति । अस्ति त्विह पाशस्योत्पत्तौ शब्दः । तस्माद्विषममनुमन्त्रणेनेति ॥ १९ ॥

[ दर्शपूर्णमासयोर्द्विबहुपत्नीकप्रयोगे पत्नीमन्त्रस्यानूहाधिकरणम् ॥६॥ ]

[ ६ ] अपूर्वे त्वविकारोऽप्रदेशात्प्रतीयेत ॥ २० ॥ सि०

दर्शपूर्णमासयोरामनन्ति, प्रोक्षणीरासादयेध्माबर्हिरुपसादय, स्रुवं च स्रुचश्च संमृड्ढि, पत्नीᳲ संनह्याऽऽज्येनोदेहीति । तत्र, पत्नीं संनह्येति चिन्त्यते । अस्ति हि यजमान एकपत्नीको बहुपत्नीकश्च । तत्र सर्वस्य प्रयोगमधिकृत्य पत्नीशब्द उच्चरित इत्येतत्पाशाधिकरणेनैव* निर्णीतम् । इदं तु संदिह्यते । किं द्विपत्नीके बहुपत्नीके च प्रयोग ऊहितव्यः पत्नीशब्द उत नेति । किं प्राप्तम् । अभिधानार्थत्वान्मन्त्राणामूहितव्य इति ।

---

॥ १८ ॥ १९ ॥

---

यदि पत्नी प्रातिपदिकार्थः प्रधानं बलवत्, तत एकद्विबहुपत्नीकेषु प्रयोगेषु [ प्रातिपदिकार्थे= इत्येतयोः साधिकरणे वर्णितं + ] अथापि कथंचिदेकवचनं विवक्षितमिति—अदृष्टार्थमेकवचनमुच्चारितं, न समवेतसंख्या-

---

*( अ० ९ पा० ३ अ० ५ ) : =कुण्डलितस्थान एवं पाठ आवश्यक इति तन्त्ररत्नेनानुमीय प्रकाश्यते । 'प्रातिपदिकार्थोऽस्तीति तद्वशेन विभक्तिरप्येकवचनं त्रिष्वपि प्रवर्तमानमाकृतिसंख्याभिप्रायं स्यात् । अथ विभक्तिः प्रधानं ततो यत्र सा स्वार्थं लभते तत्रैव पर्यवसितः प्रातिपदिकार्थ इति द्विबहुपत्नीके मन्त्र एव न स्यात् । इत्येतयोः पक्षयोः किं न्याय्यमित्येतत्पाशाधिकरणे वर्णितम् । इति । +( अ० ९ पा० ३ अ० ५ ) इत्यत्रेति शेषः ।

एवं प्राप्ते, ब्रूमः । अपूर्वे तु—अप्रकृतिपूर्वके कर्मणि, अविकारेण प्रयुज्येत । कुतः । ईकारान्तं हीदं पत्नीमात्रस्य वाचकम् । तत्र द्विपत्नीके बहुपत्नीके च प्रयोगे पत्नीशब्द उपादीयमाने द्विवचनं बहुवचनं च सामर्थ्यात्प्राप्नोति संनहनसंबन्धं कर्तुम् । समाम्नानसामर्थ्यात्त्वेकवचनेन क्रियते । न चात्र द्वित्वं बहुत्वं वा विवक्ष्यते । लक्षणत्वेन हि पत्नीशब्दस्य श्रवणात् । न चैकपत्नीकात्प्रयोगाद्द्विबहुपत्नीके प्रयोगेऽतिदेशो भवति । यथा, तत्र संख्योक्ता तद्वदिहापीति । तस्मादविकारेण पत्नीशब्दस्य प्रयोगः । अथापि कथंचिदेकत्वं विवक्ष्येत, तथाऽपि द्विबहुपत्नीके प्रयोगे संप्रतिपत्त्यभावादेकवचनार्थमेकवचनम् । तदनेकपत्नीके प्रयोगेऽविरुद्धमित्यविकारेण प्रयुज्यत इति ॥ २० ॥

( विकृतावपि द्विबहुपत्नीकप्रयोगे पत्नीमन्त्रस्याविकाराधिकरणम् ॥७॥ )

[ ७ ] विकृतौ चापि तद्वचनात् ॥ २१ ॥ सि०

अथेदानीं विकृतौ पत्नीशब्दश्चिन्त्यते । किं द्विपत्नीके बहुपत्नीके च प्रयोग ऊहितव्यो नेति । किं प्राप्तम् । द्विवाची बहुवाची वा पत्नीशब्दो द्विवचनं बहुवचनं शोपाददानः प्रकृतौ समाम्नानेन बाधितः । इह समाम्नानाभावात्तु उपादातुमर्हतीति ।

एवं प्राप्ते, ब्रूमः । विकृतावप्यविकारेण प्रयोक्तव्य इति । कुतः । तद्वचनात् । यत्प्रकृतौ तद्विकृतौ कर्तव्यमिति तद्वचनम् । प्रकृतौ चैकत्वमविवक्षितम् । इहापि द्वित्वं बहुत्वमेकत्वं च न विवक्षितव्यमिति । तस्मा-

---

भिदानार्थं, द्विबहुत्वस्यानभिधानात् । यत्र चान्यत्राभिधानविप्रतिपत्तिस्तत्र पाशन्यायः । यत्र त्वेक एव मन्त्रः, तत्र पत्नीन्यायः, ‘ पवित्रे स्थः ’ इति यथा । ननु “ पवित्रयोरुपादीयमानत्वाद्विवक्षितं द्वित्वम् । उपादीयमानता च ‘ पवित्राभ्यामुत्पुनाति ’ इत्यादौ तयोरिति । न वयं द्वित्वविवक्षां वारयामः । किं तर्हि । समवेतं वदति न वदतीति । समवेतवचनत्व ऊहो विवक्षितः प्रयोजनमिति ॥ २० ॥

दविकारः। अथवा, तदेव विदाक्षितम्। तदनेकपत्नीकेऽप्यविरुद्धमित्यविकार एवावसीयते ॥ २१ ॥

( पशुधर्मसायानविध्यपक्षे प्रास्मा इत्यध्रिगुप्रैषस्याविकाराधिकरणम् ॥८॥)

[ ८ अध्रिगौ सवनीयेषु तद्वत्, समानविधानाश्चेत्
॥ २२ ॥ सि०

अस्ति सोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभत इति। तत्राध्रिगाविदं समाम्नायते। प्रास्मा अग्निं भरत, स्तृणीत बर्हिरन्वेनं माता मन्यतामनु पिताऽनु भ्राता, इत्येवमादि। यदा त्वग्नीषोमीय सवनीयाश्च समानविधानाः, तत्रेदं विचार्यते। किमध्रिगौ, प्रास्मै, इत्येवमादिपदमूहितव्यमुत नेति। किं प्राप्तम्। ततोऽतिदेशः क्रियते। अध्रिगौ* तद्वदिति। तत्र यः पत्न्यधिकरणे पूर्वपक्षः स इह पूर्वपक्षः। यः सिद्धान्तः स इह सिद्धान्तः। ऊह इति पूर्वपक्षः। अविकार इति सिद्धान्तः ॥ २२ ॥

[ नीवारादिसदृशप्रतिनिधिप्रयोगे व्रीह्यादिमन्त्रस्याविकारेण प्रयोगाधिकरणम् ॥ ९ ॥ ]

[ ९ ] प्रतिनिधौ चाविकारात् ॥ २३ ॥ सि०

अस्ति प्रतिनिधिः। श्रुतेद्रव्येऽप्रचराति, आगमो= वा चोदनार्थाविशेषादिति। स च सदृशः, सामान्यं× तच्चिकीर्षेति। तद्यदा व्रीहिष्वपचरत्सु नीवारा उपादीयन्ते प्रतिनिधित्वेन, तदा व्रीहिमन्त्रो यः समाम्नातः, स्योनं ते सदनं कृणोमि। घृतस्य धारया सुशेवं कल्पयामि, तस्मिन्न सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इति। तं प्रति संदेहः। किं नीवारेषु व्रीहिशब्दस्योहेन प्रयोग उताविकारेणेति। किं प्राप्तम्। अविकारेण व्रीहिशब्दः प्रयुज्यमानः कार्यवतो

॥ २१ ॥ २२ ॥

---

* आध्रिगुः–पा०। = ( अ० ६ पा० ३ अ० ४ सू० १५ ) × (अ० ६ पा० ३ अ० ११ सू० २७ )।

नीवारान् न शक्नोति प्रकाशयितुमिति तेषु प्रकाशयितव्येषु नीवारशब्दः प्रयोक्तव्यो भवति । तस्मादूहः कर्तव्य इति ।

एवं प्राप्ते, ब्रूमः । प्रतिनिधौ चाविकारात् । प्रतिनिधौ× चेति, किं-ऊहो न कर्तव्य इत्यनुकृष्यते । किमेवं भविष्यति । एवमविकारो भविष्यति । तत्राऽऽर्षमनुग्रहीष्यते । तस्मादनूहः ॥ २३ ॥

अनाम्नानादशब्दत्वमभावाच्चेतरस्य स्यात् ॥ २४ ॥

न= चैतदस्त्यनूह इति । एवमनूहो भवेत् । यदि तस्मिन् मन्त्रे-व्रीहिशब्दोऽनाम्नातः स्यात् । अभावाच्चेतरस्य, यदि च नेदं द्रव्यान्तरं नीवाराख्यं स्यात् । न चेदमुभयमस्ति । तस्मादभिधानसिद्धय ऊहितव्यो नीवारशब्द इति ॥ २४ ॥

तादर्थ्याद्वा तदाख्यं स्यात्संस्कारैरविशिष्टत्वात् ॥ २५ ॥

वाशब्दः पक्षं व्यावर्तयति । नैतदस्त्यूह इति । अविकारेण प्रयोगः । कुतः । तादर्थ्यात् । तादर्थ्ये, व्रीह्यर्थता नीवाराणाम् । ये व्रीहौ प्रोक्षणादयः संस्कारास्ते तल्लक्षितेषु विशेषेषु कर्तव्याः । तेषां च विशेषाणां केचिन्नीवारेषु विद्यन्ते । तदर्थेन प्रोक्षणादयः संस्काराः क्रियन्ते । संस्कारैरविशिष्टश्चायं व्रीहिशब्दो यथाऽन्येषु* व्रीहिलक्षितेषु भवति, एवमेतेष्वपि नीवारेषु । तस्मादविकारेण प्रयोक्तव्य इति ॥ २५ ॥

उक्तं च तत्त्वमस्य ॥ २६ ॥

कथं पुनर्ज्ञायते, यो यो व्रीहिगतो विशेषः स नीवारेष्विति ।

---

॥ २३ ॥ २४ ॥ २५ ॥

— -—

व्रीह्याकृतिव्यक्तिसादृश्यानां च व्याख्यानं तत्रैवोक्तम् । 'व्रीहीणां मेध' इत्यस्य प्रैयङ्गवादिषु कथं प्रयोग इति चेत् । यदि व्रीहीणां विकारस्तत ऊहः,

---

× प्रतिनिधौ चेति, ऊहो—पा० । = न चैतदस्ति प्रतिनिधावनूह इति—पा० ।
* यथा धान्येषु—पा० ।

उक्तं च तत्त्वमस्य । उक्तोऽस्य विशेषस्य तद्भावः षष्ठेऽध्याये, सामा-न्यं* तच्चिकीर्षा, इति । तस्मादप्यविकारः ॥ २६ ॥

[ पशुगणेऽध्रिगुप्रैषगतानां संसर्गिद्रव्यवाचकचक्षुरादिपदाना-मनूहाधिकरणम् ॥ १० ]

[ १० ] संसर्गिषु चार्थस्यास्थितपरिमाणत्वात् ॥ २७ ॥ सि०

सन्त्यध्रिगुप्रैषे संसर्गिणोऽर्थाः । तद्यथा, चक्षुः प्राण इत्येवमादयः । सूर्यं चक्षुर्गमयतात्, वातं प्राणमन्ववसृजतादिति । द्विपश्वादिषु पशुगणेषु किमूहितव्य उत नेति । उच्यते । नन्वन्यायानिगदत्वादेवायं नोहितव्यः । द्वयोश्चक्षुषोरेकवचनान्तो यतः श्रूयते । उच्यते । नायमध्रिगावधिष्ठानयोः सूर्यगमनमाह । न ह्यधिष्ठाने सूर्यं गच्छतः । तेजोरश्मिवचनस्त्वयम् । एकं च तत्तेजः । तस्मान्नायमन्यायानिगदः । द्विपश्वादिषु च वैकृतेषु प्रयोगेषु, मैत्रं श्वेतमालभेत, वारुणं कृष्णमपां चौषधीनां च संधावन्नकाम इत्येवमादिषु पशुभेदात्तेजसो भेदे× गम्यमान ऊहः स्यादिति प्राप्नोति । नन्वेकस्मिन्नपि पशावधिष्ठानभेदेन भिन्ने एव तेजसी । नेत्युच्यते । सूर्यमस्य चक्षुर्गमयतादिति, यत्पशोस्तेजस्तद्विवक्षितम् । नाधिष्ठानभेदः । पश्वन्तरेषु पशुतेजोभेदादूह इति ।

एवं प्राप्ते, ब्रूमः । संसर्गिषु चार्थस्यास्थितपरिमाणत्वात् । संसर्गिष्वर्थेषु यद्यपि पशुभेदस्तथाऽपि रश्मीनां संसर्ग एवैकीभूतास्तेषां रश्मयः । यथैव पानीयस्य तैलस्य घृतस्य वा स्तोका नानादेशेषु भिन्नाः समानदेश एकीभूता भवन्ति तद्वद्रश्मयः । तस्मादेकवचनान्तस्तेषां वाचक इत्यनूहः स्यात् ॥ २७ ॥

---

यदि यवानां ततोऽनभिधानमेवेति प्राप्ते, ब्रूमः । कण्वरथंतरवदुभयविकारोऽयं, उभयधर्माणां ग्राहक इति ॥ २६ ॥ २७ ॥

---

* ( अ० ६ पा० ३ अ० ११ सू० २७ ) । × भेदो गम्यते । तेनोहः-पा० ।

लिङ्गदर्शनाच्च ॥ २८ ॥

लिङ्गं खल्वपि भवति, यथा संसर्गिणो नोह्यन्त इति । न माता वर्धते, न पिता=, न नाभिः, प्राणो हि सः—इति प्राणस्य सिद्धमनूहं हेतुत्वेनोपदिशति । तस्मात्संसर्गिणो नोह्यन्त इति ॥ २८ ॥

( पशुगणेऽध्रिगुप्रैषगतैकधाशब्दस्य यावत्त्वचमभ्यासाधिकरणम् ॥ ११ )

[ ११ ] एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यात् ॥ २९ ॥ सि०

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभत इति । तत्राध्रिगुप्रैषे समाम्नायते, एकधाऽस्य त्वचमाच्छ्यतादिति । तद्विकृतौ द्विपश्वादिषु संदिह्यते । किमेकधाशब्दोऽभ्यसितव्य उताविकारेण प्रयोक्तव्य इति । किं प्राप्तम् । एकधेत्ययमभ्यसितव्यः । कुतः । एकसंयोगात् । एकस्त्वचः प्रकार आच्छ्यता* कर्तव्य इति । तत्र द्वयोर्बहवीषु वा त्वक्षूत्कृत्यमानासु नैकः प्रकारो भवति । पर्यायेण हि पशुभ्य आच्छ्यन्ति । एकस्यां त्वच्याच्छ्यमानायामेकेन प्रकारेणाऽऽच्छ्येयुः । तस्मादसर्वविषयो भवति, अविकृतः शब्दः प्रयुज्यमानः । तस्मादभ्यासितव्य इति ॥ २९ ॥

अविकारो वा बहूनामेककर्मवत् ॥ ३० ॥

वाशब्दात्पक्षो विपरिवर्तते । नैतदस्ति, अभ्यासितव्य इति । अविकारेण प्रयोक्तव्य इति । कुतः । ऐकध्यवचन एष शब्दः । एकीकुर्वेषां त्वच इति ।

किं तत्रैक्यम्, एककालोपदेशो वा, एकदेशोपदेशो वा । बहूनामेककर्मवत् । यथा बहूनामेककाले कर्माणि भवन्ति, एकधा गाः पाययतीति । एवमिहापि, ऐकध्यं त्वचः कुर्विति । बहूनां त्वेकीकरणं

॥ २८ ॥ २९ ॥

———

= न मज्जा—पा० । * आच्छ्यता तस्य—पा० । × त्वच्यपाच्छ्यमानायां—पा० ।

शक्यते कर्तुं, नैकस्यास्त्वचः। तस्माद्बह्वीषु त्वक्ष्वेकीकरणमेकधा शब्दो वदतीत्यध्यवसेयम् ॥ ३० ॥

सकृत्त्वंत्वैकध्यं स्यादेकत्वात्त्वचोऽनभिप्रेतं तत्प्रकृतित्वात्परेष्वभ्यासेन विवृद्धावभिधानं स्यात् ॥ ३१ ॥

तुशब्दः पक्षं व्यावर्तयति। नाविकारः। अभ्यासितव्यः शब्द इति। एककाले कर्मण्यभिधीयमाने सहत्वं त्वचामभिहितं भवति। तत्प्रकृतावेकस्यां त्वच्यसंभवादनभिप्रेतम्। तत्प्रकृतित्वादुत्तरासां ततीनां परेषु वर्धमानेषु पशुष्वभ्यासेनाभिधानं स्यात् ॥ ३१ ॥

( अध्रिगुप्रैषगतमेधपतिशब्दस्य देवतापरत्वाधिकरणम् ॥१२॥ )

[ १२ ] मेधपतित्वं स्वामिदेवतस्य समवायात्सर्वत्र च प्रयुक्तत्वात्तस्य चान्यायनिगदत्वात्सर्वत्रैवाविकारः स्यात् ॥ ३२ ॥ पू०

अस्ति ज्योतिष्टोमेऽग्नीषोमीये पशावध्रिगुप्रैषे मेधपतिशब्द एकवन्निगदः। परेषां शाखिनां द्विवन्निगदः। तं प्रति संशयो भवति। द्विपश्वादिषु पशुगणेषु किमविकारेणेतरश्चेतरश्च प्रयोक्तव्य उत स्वामिपरः, ऊहः कर्तव्य उत देवतापर इति। किं प्राप्तम्। अविकारः। कुतः। मेधपतित्वं स्वामिदेवतस्य, स्वामी मेधपतिर्देवता च। स्वामिना पशुर्देवताभ्यां दत्तः संकल्पितः। मेधपतये स्वामिनेऽप्यसौ भवति। तस्य कार्यं करिष्यतीति। देवताभ्यामपि ताभ्यामुत्स्रक्ष्यत इति। त्रयाणामपि हि तं मेधं प्रति, आधिपत्येन समवायोऽस्ति। सर्वत्र चाऽऽधिपत्ये पतिशब्दः प्रयुक्त आ हिमवत आ च कुमारिभ्यः। स एष त्रयाणामेकवचनान्तो वाचको द्विवचनान्तश्च। यथा प्रकृतावावि-

---

॥ ३० ॥ ३१ ॥

—

'मेधम्' इत्यत्र चत्वारः पक्षाः। अविकारेणोभयोः प्रयोगः। व्यवस्थया वा—द्विवन्निगदो देवतायाम्, एकवन्निगदो यजमाने। उभौ वा स्वामिपरौ। द्विवन्निगदः पत्न्यपेक्षया। उभौ वा देवतापरौ। संघातापेक्षयैकवन्निगद

वक्षितैकत्वोऽविवक्षितद्वित्वश्च संबन्धमात्रनिबन्धनः, एवं सर्वासु विकृतिषु। तस्मान्न विक्रियेत्॥ ३२॥

अपि वा द्विसमवायोऽर्थान्यत्वे यथासंख्यं
प्रयोगः स्यात्॥ ३३॥

अपि वा, नैतदेवम्। तयोरिह समवायः, एकवन्निगदस्य, द्विवन्निगदस्य च। तयोरेकवन्निगदः स्वामिनि प्रयोक्ष्यते, येषां समाम्नातः। येषां द्विवन्निगदः समाम्नातस्तेषां स देवते वक्ष्यति। तस्माद्विकृतौ बह्वीषु देवतासु द्विवन्निगद ऊहेन प्रवर्तिष्यते। बहुयजमानेष्वेकवन्निगद ऊहिष्यते। एवं यथासंख्यं प्रयोगो भविष्यति॥ ३३॥

स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात्पत्न्यां
द्वितीयशब्दः स्यात्॥ ३४॥

वाशब्दः पक्षं व्यावर्तयति। स्वामिदेवतयोरुभयोर्वाचक इति नैतदेवम्। एक एव मेधपतिशब्दः, यस्माद्द्विवचनं, यस्मादेकवचनं, स एव न स्वामिदेवतयोर्वाचको भविष्यति। नन्वेकोऽपि मेधपतिरपरोऽपि प्रतीयते। कथमवाचक इत्युच्यते। यदा स्वामिनस्तदा, मेधपतये यो मेधस्तं मेध्या दुर उपनयतेति संबन्धः। यदा देवतावचनस्तदा, मेधपतये उपनयत मेध्या दुर इति संबन्धः। स एष सकृदुच्चरित उभाभ्यां पदाभ्यां न संबन्धुमुत्सहते। वचनव्यक्तिभेदाद्वाक्यभेदः प्रसज्यते। तस्मात्स्वामिनो वाचक इत्यध्यवसीयते। अथ कि-

॥ ३२॥ ३३॥

---

इति। तत्र तृतीये* पक्षे दोषमाह—'उत्कर्षो देवतायां स्यात्' इति। यस्य देवतावचनः, तस्योत्कर्षः प्राप्नोति, एकवन्निगदोऽसावेकदेवत्येषु पशुष्विति। तत्पाशन्यायमनालोच्य। यत्रास्ति× प्रधानभूतः प्रातिपदिकार्थस्तत्र गुणभूतं वचनं नीयत इति। संघातस्य देवतात्वमदृष्ट्वैव॥ ३२॥ ३३॥

---

* तृतीये पक्षे दोषमाहेति—तृतीयपक्षे स्थित्वा चतुर्थपक्षस्य दोषमाहेत्यर्थः। × पाशन्यायं दर्शयति—यत्रेति। + किं चैकवन्निगदस्योत्कर्षाभिधाने कारणान्तरमाह—संघातस्येति।

मर्थं न देवतावचनः कल्प्यते । तथा हि कल्प्यमान एकवन्निगद उत्कृष्येत, एकदेवत्ये× क्रतौ । तत्र प्रकरणं बाध्येत । यजमानवचने पुनः कल्प्यमाने न द्विवन्निगद उत्कृष्येत । तत्रैव यजमानयोर्दंपत्योर्वाचको भविष्यति । तस्मात्प्रकरणानुग्रहाय स्वामिवचनः कल्प्यते । स्वामिपरस्योहो भविष्यतीति ॥ ३४ ॥

देवता तु तदाशीष्ट्वात्संप्राप्तत्वात्स्वामिन्यनर्थिका स्यात् ॥ ३५ ॥ सि०

तुशब्दः पक्षं व्यावर्तयति । न स्वामिवचनः । देवतापरो भविष्यति । कुतः । तदाशीष्ट्वात् । आशासाना मेधपतये मेधम्, इति देवताभ्यां हविराशास्यते । मेधपतिभ्यां मेधमाशासाना उपनयत ताभ्यामिति । यजमानं प्रत्याशासानानुकीर्तनमनर्थकम्, अकर्तव्यं च । स प्राप्त एव स्वामिनं× मेधः, किमर्थमाशास्यते । न* च तेन नित्यमेव स्वामिसंबद्धेन प्रयोजनम् । याग एव हि न संवर्तेत । तस्माद्देवतावचनो मेधपतिशब्द इति ॥ ३५ ॥

उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात् ॥ ३६ ॥

उत्सृष्टं च यजमानेन नायं ममेति । केवलं परकीयो रक्ष्यते । कालेन देवतया संभन्त्स्यत इति । कः पुनरस्य देवतया संबन्धः । यत्तामुद्दिश्य परिग्रहोऽस्य त्यज्यते । स च यागः प्राक् कृतः । तस्मा-

---

सिद्धान्तस्तु देवतावादिपक्षः । स्वामिपक्षे वाक्यार्थ एव तावन्न घटते । आशासानपदानर्थक्यात् । अपि च, यजमानाय मेधपतये यो मेधस्तं÷ मेध्या+ दुरः— यज्ञद्वारं*, उपनयत । किमर्थमिति प्रयोजनार्थित्वादसमर्थो= वाक्यार्थः। न च मेधमनूद्य किंचिद्विधीयत इति । इतरथा+ मेध्या दुर उपनयत, मेधपतये मेधं कर्तुमित्येवमाशासाना इत्युपपन्नो वाक्यार्थः । न च परकीयो देवतायै कर्तुं शक्यत इत्यर्थाद्योऽयं यजमानस्येति ॥ ३५ ॥

---

× स्वामिनो—पा० । * न चानेन-पा० । + मेधः—पशुः । + मेध्याः—ऋत्विजः । * यज्ञद्वारं—चात्वालोत्करयोर्मध्यदेशम् । = असमर्थ.—अपरिपूर्णः । + इतरथेति—मेधपतिशब्दस्यं देवतापरत्वपक्षे, इत्यर्थः । यजमानस्येति—देवतापरत्वपक्षेऽपि मेधस्य पशोर्यजमानसंबन्धित्वमर्थलब्धमिति निराकाङ्क्षो वाक्यार्थः संभवत्येवेत्यर्थः ।

थागात्परार्थं द्रव्यं नाऽऽत्मीयं, परित्यज्याऽऽस्ते । आत्मप्रधानं यत्त-द्रात्मीयं, न यं प्रत्यात्मा गुणभूतः । तादृशे तु भक्त्या पतित्वं भवति। तस्माद्देवतयोरेव तत्र मुख्यं मेधपतित्वं, भाक्तं स्वामिन इति ॥३६॥

उत्कृष्येतैकसंयुक्तो द्विदेवतेऽसंभवात् ॥ ३७ ॥

इति यदुक्तं, तत्परिहर्तव्यम् ॥ ३७ ॥

एकस्तु समवायात्तस्य तल्लक्षणत्वात् ॥ ३८ ॥

अत्रोच्यते । यौ हि तौ द्वावग्नीषोमौ तयोर्गणे मेधपतिशब्दः । स चात्र देवतासमवेतः । तास्मिन् कर्मण्येकस्मै गणाय मेधमुपनयत, इत्युच्यते । तस्मादेकवचनान्तो गणवाची मेधपतिशब्दो नोत्कृष्यत इति ॥ ३८ ॥

संसर्गित्वाच्च तस्मात्तेन विकल्पः स्यात् ॥ ३९ ॥

अयं चान्यः परिहारः । संसर्गी अयमर्थो देवता नाम । द्वावर्थौ संसृष्टौ कदाचिदेका देवता भवति । यदि द्वयाय परिकल्पितं किंचि-द्द्रव्यं, तत्र द्वयं देवता भवति । द्वावर्थौ संसृष्टावेकतां यातः । तस्मा-देकवचनान्तोऽपि प्रकरणमभिनिविशते, पूर्वेण च सह विकल्पेते इति ३९ ॥

एकत्वेऽपि गुणानपायात् ॥ ४० ॥

अन्वारुह्य वचनमिदम् । मा= तावद् भूदिहैकत्वमर्थः । तथाऽपि प्रकरणमनुप्रविशेतैवैकवचनान्तः । प्रातिपदिकं हि तस्य विद्यमाना-र्थम् । एकवचनं चोपनयनसंबन्धार्थम् । एकत्वं वाऽविवक्षितम् । त-स्मान्न प्रकरणादुत्कृष्येतेति । अथोच्यते । एकत्वविशिष्टस्य विभक्तिः संबन्धं ब्रवीतीति । तथाऽप्यस्मत्पक्ष उपपद्यतेतराम् । सर्वोऽपि ह्येक-त्वसंबद्ध इति । अथ संबन्धं करोति, एकत्वं च ब्रवीतीति । न तेन विशिनष्टि, अविवक्षितत्वादविरुद्धं भविष्यतीति । अथोच्यते । अवि-वक्षितेऽपि वचन एकत्वसंबन्ध× एकवचनं भवति, नान्यत्रेति । तथा

॥ ३६ ॥ ३७ ॥ ३८ ॥ ३८ ॥ ३९ ॥

= मा नाम भूत्—पा० । × एकत्वसंबद्धेऽर्थे—पा० ।

मेधपतिगतमेकत्वमस्य भविष्यति । ततः सोऽनुवदिष्यते । तस्माददोष इति ॥ ४० ॥

( बहुदेवत्ये पशावेकवचनान्तमेधपतिशब्दस्य द्विवचनान्तेन विकल्पाधिकरणम् ॥ १३ ॥ )

[ १३ ] नियमो बहुदेवते विकारः स्यात् ॥ ४१ ॥ पू०

अस्ति बहुदेवत्यः पशुः । स एतान पशूनादित्येभ्यः कामायाऽऽलभत इति । तथा वैश्वदेवं धूम्रमालभेतेति । अस्ति तु प्रकृतावग्नीषोमीये द्विवन्निगद एकवन्निगदश्च मेधपतिशब्दः । अत्र चोदकप्राप्तः संदिह्यते । किं द्विवन्निगद ऊहितव्यः । एकवन्निगदो निर्वर्तेत, उतोभावपि परस्परेण विकल्पमानौ निविशेयातामिति । किं तावत्प्राप्तम्। द्विवन्निगदः समवेताभिधायित्वादूहितव्यः । एकवन्निगदोऽशक्नुवन्नभिधातुमित्येतावता दर्शनेन निवर्तते । एष नियमः । आह । ननु प्रकृतौ द्वित्वस्याविवक्षितत्वादविकारेण प्रयोगः प्राप्नोतीति । उच्यते । अविशेषकमत्र द्वित्वं, न तु तत्र समवेतं न गम्यते । न च गम्यमानं निष्प्रयोजनम् । अन्यसंख्यापरिच्छेदेन पुनः संख्येयमुपस्थापयति । तदस्य दृष्टमेव प्रयोजनम् । तस्माद्बहुष्वप्यूहो भवतीति ॥ ४१ ॥

विकल्पो वा प्रकृतिवत् ॥ ४२ ॥ सि०

यदुक्तं द्विवचनान्त ऊहितव्य इति । तद्गृह्णीमः । यत्त्वेकवचनान्तो निवर्तेतेति । तन्न । एकवचनान्तोऽपि प्रकृतिवदिह द्विवचान्तेन विकल्पितुमर्हति । उक्तं हि गणाभिप्रायं तत्प्रकृतौ । संसर्गित्वाद्वा देवतानामिति । तद्वादिहापि गणाभिप्रायात् , संसर्गित्वाद्वा देवतानां विकल्पेन निवेक्ष्यत इति ॥ ४२ ॥

---

सिद्धेऽपि पूर्वाधिकरणेऽस्य पूर्वपक्षो यत्क्रियते, तदसङ्गतः ।

ननु प्रकृतौ द्वित्वस्याविवक्षितत्वादिति—अयमपि चार्थः प्रायेण गतः ' एकत्वेऽपि* गुणानपायात् ' इति । किंतु तत्रैकत्वस्याविवक्षोक्ता, स एव हेतुर्विवक्षायामपीति । तस्मात्पूर्वस्यैवैतत्प्रयोजनाधिकरणमुत्तरस्यौपोद्घातिकमिति ॥ ४१ ॥ ४२ ॥

---

*( अ० ९ पा० ३ अ० १२ सू० ४० )

[ पशुगणे, एकवचनान्तमेधपतिशब्दस्योहाधिकरणम् ॥१४॥ ]

[ १४ ] अर्थान्तरे विकारः स्योद्देवतापृथक्त्वादेकाभिसमवायात्स्यात् ॥ ४३ ॥ सि०

अस्त्येकादशिनी, प्रैवाऽऽग्नेयेन वापयति, मिथुनं सारस्वत्या करोति, रेतः सौम्येन दधाति, प्रजनयति पौष्णेन, इत्येवमादि । अस्ति च प्रकृतावध्रिगुप्रैषे, एकवन्निगदो द्विवन्निगदश्च मेधपतिशब्दः । तस्येह= चोदकप्राप्तिश्चिन्त्यते । द्विवन्निगद ऊहितव्य एव । अथैकवन्निगदः किमविकारेण प्रवर्तेत, उत निवर्तेतेति । किं प्राप्तम् । विकल्पो वा प्रकृतिवदिति ।

एवं प्राप्ते, ब्रूमः । विकार एवैकादशिन्यां, न विकल्पः । तत एवैकचनान्तेन निवर्तितव्यम् । कुतः । देवतापृथक्त्वात् । पृथगत्र देवता । अन्यस्य पशोरन्या देवता, अन्यस्यान्येत्येवं, नात्र गणो देवतात्वेन । तदभावात्संसर्गित्वमपि नास्ति । प्रकृतौ चैतद्द्वयं कारणं, एकवचनान्तस्य निवेशे । न तदभावादिहास्ति प्रवृत्तिः। यच्चोक्तम्, एकत्वेऽपि गुणानपायादिति । परपक्षमन्वारुह्य तद्वचनं, न स्वपक्षः । तस्माददोष इति ॥ ४३ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये नवमस्याध्यायस्य तृतीयः पादः ॥

---

॥ ४३ ॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां नवमाध्यायस्य तृतीयः पादः ॥

---

= स इह चोदकप्राप्तश्चिन्त्यते—पा० ।

## अथ नवमाध्यायस्य चतुर्थः पादः ॥

[ पशुगणेऽध्रिगुप्रैषे समस्तवङ्क्रीयत्ताप्रकाशनार्थं समस्य वचनाधिकरणम् ॥ १ ॥ ]

[ १ ] षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद्गुणस्य प्रविभक्तत्वादविकारे हि तासामकात्स्न्र्येनाभिसंबन्धो विकारान्न समासः स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥ पू०

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभत इति । तत्राध्रिगुप्रैष इदमाम्नायते—षड्विंशतिरस्य वङ्क्रय इति । तच्चोदकेन द्विपश्वादीन् पशुगणान् संप्राप्तम् । मैत्रं श्वेतमालभते, वारुणं कृष्णमपां चौषधीनां च संधावन्नकाम इत्येवमादिषु । अयमर्थः सांशयिकः । किं षड्विंशतिशब्दोऽभ्यसितव्यः, किमविकारेण प्रयोक्तव्यः, किं वचनमात्रमूहितव्यम्, अथवाऽस्यपदाभ्यासः, उत समस्य वचनमिति ।

---

अस्मिन्नधिकरणे पञ्च= पक्षाः । पक्षस्य वचनव्यक्तिर्निरूप्यते* । षड्विंशतिरिति त्रिपदं वाक्यम् । तत्राऽऽद्यः पक्षः संबन्धप्रधानः षड्विंशतिरस्येत्यनयोर्यः संबन्धः, तस्य शब्दो नास्ति वाचकः । येनासावुच्येत । यत्प्रधानं, स प्रकाश्यः । तत्रार्थात्संबन्धिनावभ्यस्येते । एवमल्पमप्राकृतं भविष्यतीति । वङ्क्रिशब्दश्च षड्विंशत्यर्थो× द्रष्टव्यः ।

द्वितीयः पक्षः । अकरणोऽयं मन्त्रः, प्रमाणान्तरेण प्रकाशितमर्थं प्रकाशयति । न प्रकाशितस्य प्रकाशान्तरेण प्रयोजनमस्ति+ । एवं च यत्प्रकृतौ कृतं तद्विकृतौ भवति, न किंचिद्बाधितम् ।

---

= पञ्च पक्षा इति—षड्विंशतिरस्येत्यनयोः पदयोरभ्यास इति प्रथमः । अविकार इति द्वितीयः । षड्विंशतिपदे वचनोह इति तृतीयः ; अस्यपदस्योह इति चतुर्थः । समास इति पञ्चमः । इति पञ्चपक्षा ज्ञेया इत्यर्थः । * वचनव्यक्तिः—तात्पर्यम् । × षड्विंशत्यर्थः—षड्विंशतिशब्दविशेषणार्थः । + प्रयोजनमस्तीति—दृष्टमिति शेषः । अतोऽदृष्टार्थत्वादविकार इति द्वितीयः पक्ष इत्यर्थः ।

किं प्राप्तम्। षड्विंशतिशब्दोऽभ्यासितव्यो द्विपश्वादिषु पशुगणेषु। किं* कारणम्। प्रकृतावेकस्य पशोः षड्विंशतिर्वङ्क्रय उक्ताः। इह स गुणः प्रविभक्तः। पशौ पशौ षड्विंशतिर्वङ्क्रय इति। तत्र यद्यविकारेण प्रयुज्येत, न कृत्स्ना वङ्क्रीरभिवदेत्। अथ समस्य वचनं क्रियते, तथा षड्विंशतिशब्दो निवर्तेत। तत्राऽऽर्थं बाधितं स्यात्। न च सर्वाभिर्वङ्क्रिभिः पशोः+ संबन्धोऽस्ति। पशुद्वयस्य ताभिः संबन्धः। न च पशुद्वयं पशुः।

ननु पशोः कार्ये यः पशोः स्थाने, स वङ्क्रिभिः संबन्धयितव्यः। तथा हि प्रकृतौ वचनं कृतम्। समस्ताभिर्वङ्क्रिभिः पशुद्वयस्य संबन्धे कृत एकैकस्य षड्विंशतया संबन्धः प्रत्यायितः स्यात्।

---

तृतीयः पक्षः। षड्विंशतिशब्द उभाभ्यां विशेष्यते। सोऽत्र प्रधानभूतः। ( तयोश्चैषा= द्वितीयः प्रकाश्यते। न चाविकृतेन षड्विंशतिशब्देन पक्षः प्रकाशयितुम्। ) तस्माद्वचनोहः। एवमल्पं विकृतं भविष्यति। ननु षड्विंशतिशब्द प्राधान्ये वङ्क्रीणां प्रथमा न प्राप्नोतीति--कोऽभिप्रायः। द्वेधा हि संख्याशब्दाः। प्राग्विंशतेः संख्याप्रधानाः। ऊर्ध्वं विंशतेरुभयप्रधानाः। तत्र यदा संख्याऽऽत्मानमुपसर्जनीकृत्य संख्येये वर्तते, तदा विना षष्ठ्या सामानाधिकरण्यं भवति। यथा विंशतिर्गाव इति। यदा संख्या प्रधानभूता, तदा षष्ठीमन्तरेण संख्येयशब्देन सामानाधिकरण्यं नास्ति। विंशतिर्गवामिति यथा। इह च संख्या प्रधानभूता, वङ्क्रयश्च प्रथमान्ताः। कथं विना षष्ठ्या सामानाधिकरण्यमित्यभिप्रायः परिचोदयतः+। अत्र लक्षणया सामानाधिकरण्यं, वाक्येनेत्यर्थः। दृश्यते च प्रयोगः, यथा, इन्द्राग्नी देवतेति। यदा देवतात्वेन गुणो विवक्षितो भवति, न च प्रधानभूतस्तदाऽपि विनैव षष्ठ्या सामानाधिकरण्यं दृश्यते। तथा,

---

* किं कारणं—इति क्वचिन्नास्ति। + पशोरभिसंबन्धः—पा०। = चिह्नितस्थाने ऽयं पाठ आवश्यक इति भाति—'द्वयोश्चैषा षड्विंशतिसंख्या प्रकाश्यते। ते चाविकृतेन षड्विंशतिशब्देनाशक्ये प्रकाशयितुम्'। इति। + परिचोदयत इति—'आम्नातस्त्वविकारात्संख्यासु सर्वगामित्वात्' इति सूत्रे 'ननु षड्विंशती इत्यभिधाने वङ्क्रीणां प्रथमा न प्राप्नोति' इति भाष्येण परिचोदयत इत्यर्थः।

अत्रोच्यते । नैवं= प्रकृतौ कृतम् । प्रकृतौ च साक्षात्षड्विंशत्या पशुसंबन्धः । इह परसंख्यया संबन्धे क्रियमाणे परोक्षयाऽवयवसंख्यया संबन्ध आनुमानिकः स्यात् । न च नियोगतः षड्विंशत्या, एकैकस्य संबन्धः प्रत्यायितः स्यात् । पञ्चविंशतिरेकस्य सप्तविंशतिरेकस्येदृशमपि तत्र गम्यते । न चैवं प्रकृतावभिधानं कृतम् । तस्मादभ्यसितव्य इति ॥ १ ॥

अभ्यासेऽपि तथेति चेत् ॥ २ ॥

इति चेद्भवान् पश्यति, समासवचनेऽप्राकृतः शब्द उच्चरितो भवतीति । अभ्यासेऽपि, अनभ्यस्तं प्रकृतौ वचनम् । इह साभ्यासमप्राकृतं स्यात् ॥ २ ॥

---

देवदत्ताविष्णुमित्रयज्ञदत्ताः पर्षदित्यत्र पर्षच्छब्दश्च प्रधानभूतः । इतरे देवदत्तादयः शब्दास्तद्विशेषणत्वेन, तथाऽपि विना षष्ठ्या सामानाधिकरण्यम् । तथा वेदेऽपि ' पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः ' इत्यत्र संख्या प्रधानभूता, तथाऽपि विनैव षष्ठ्या सामानाधिकरण्यम् । ननु संख्या संवत्सरविशेषणार्था । तथा सति पञ्चशब्दोऽकिंचित्करो भवति । पञ्चाशच्छब्दस्तु विशेषयन्नप्यर्थवान् । तस्मात्संख्या प्रधानभूता ।

चतुर्थपक्षः । वङ्क्रिशब्दोऽस्यपदविशेषणम् । संख्याऽपि । अस्यशब्दः षष्ठ्या परार्थः कथं प्राधान्यं प्रतिपद्यते । आह—यथा ' इन्द्रस्य नु वीर्याणि प्रवोचम् ' इतीन्द्रे षष्ठी वाऽस्ति । न च परार्थः । लोके च यथा, चित्रगुरानीयतामित्युक्ते षष्ठीनिर्दिष्टोऽपि* प्रधानम् । एवमिहापि । यत्र द्वौ पशू विधेते तत्र द्वयोः प्रकाशनं कर्तव्यम् । तथाऽस्यशब्देन= न क्रियते । पशुश्चोदितः । स च प्रकाशयितव्यः ।

सिद्धान्तस्तु—उभाभ्यां वङ्क्रीयत्ता परिच्छिद्यते, एतावत्योऽस्य वङ्क्रय इति । अस्यशब्दस्य षष्ठ्यन्तत्वात्संख्याशब्दस्य संख्येयप्राधान्यात् । तद्यत्र द्वौ

---

= नैवम् । प्रकृतौ च—पा० । * षष्ठीनिर्दिष्टोऽपीति—चित्रा गावो यस्येति विग्रहे षष्ठ्या निर्दिष्टोऽपि पुरुषः समासे प्रधानं भवतीत्यर्थः । =अस्यशब्देनेति—अनभ्यस्तेनेति शेषः ।

न गुणादर्थकृतत्वाच्च ॥ ३ ॥

नैष दोषः । गुण एष शब्दस्याभ्यासो नाम । स मत्पक्षेऽप्राकृतः। त्वत्पक्षे पुनः शब्द एव । अङ्गगुणविरोधे* च तादर्थ्यादित्युक्तम् । अर्थाच्च मयैतदश्रुतमुपादीयते, प्रविभक्तं गुणं वक्तुम् । यच्च श्रुतचिकीर्षयाऽश्रुतं क्रियते, इष्यत एव तदस्माभिः । तस्माददोषः ॥३॥

समासेऽपि तथेति चेत् ॥ ४ ॥

इति चेत्पश्यसि, अभ्यासवचने चोदकोऽनुगृहीतो भविष्यति । कार्त्स्न्येन वङ्क्रयो वक्ष्यन्त इति । समासेऽपि चोदकानुग्रहः । कार्त्स्न्येन वङ्क्रीणामभिधानात् । अपि च समासवचने यौगपद्यवचनात्प्रयोगवचनोऽनुगृहीतो भविष्यति । तस्मात्समसितव्या वङ्क्रय इति ॥ ४ ॥

---

पशु, तत्र वङ्क्रीयत्तापरिच्छेदकः शब्द उच्चारयितव्यः। न च समासमन्तरेणेयत्ता शक्या वदितुम् । यत्तावत्पशुप्राधान्यं,+ तद्यज्ञपतिशब्देन प्रत्युक्तम् । यज्ञपतेः परविशेषणतया न प्राधान्यम् । संख्याप्राधान्ये÷ लक्षणया सामानाधिकरण्यम् । स एव दोषः । अदृष्टार्थता वा । न च सर्वं प्राकृतमदृष्टार्थम् । अदृष्टार्थत्वे,= अदृष्टार्थतैव दोषः, सत्यां दृष्टार्थतायाम् । न× च संबन्धो वचनेन चोदितः, यः स प्रकाश्यते । अदृष्टार्थताऽवस्थितैव । प्राकृतशब्दबाधश्च । 'ता अनुष्ठ्योच्यावयतात्' इति । च सर्वनामशब्दो वङ्क्रिप्रत्यवमर्शकः । यद्यस्यपदाभ्यासः, ताविति प्राप्नोति । यदि संख्यायाः,* तामिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

---

*( अ० १२ पा० २ अ० ९ सू० २७ ) । + अधुना पूर्वपक्षचतुष्टये प्रातिलोम्येन दूषणमनुसंदधाति—यत्तावदित्यादिना । ÷ चतुर्थपक्षे दूषणमभिधाय तृतीयपक्षे दूषणमाह—संख्येत्यादिना । = द्वितीयपक्षं दूषयति—अदृष्टार्थत्वे, इत्यादिना । मन्त्रस्येति शेषः । × आद्यपक्षे दूषणमाह—न चेत्यादिना । * संख्याया इति—संख्यायाः प्राधान्यमिति तृतीयपक्षे संख्याया एकत्वात्, 'तामनुष्ठ्य' इति स्यात् । प्रकृते च 'ता अनुष्ठ्य' इति निर्देशाद्वङ्क्रीणामेव प्राधान्यं गम्यत इत्यर्थः ।

नासंभवात् ॥ ५ ॥

नैतदेवम् । मम चोदकोऽनुगृहीतः, षड्विंशतिशब्दप्रयोगात् । तव प्रयोगवचनः, समस्य वचनात् । न च संभवति चोदके प्रयोगवचनं प्रत्यादर्तव्यम् । बलीयान् हि चोदकः । स हि धर्माणामुत्पादकः प्रापकश्च । प्रयोगवचनः प्राप्तानामुपसंग्राहकः । स उत्तरकालोऽर्थविप्रकर्षाद्दुर्बलः । तस्मादभ्यसितव्यं वचनमिति ॥ ५ ॥

स्वाभिश्च वचनं प्रकृतौ तथेह स्यात् ॥ ६ ॥

स्वाभिश्च वङ्क्रिभिः पशुरुपलक्षितः प्रकृतौ । इहापि तथैवोपलक्षयितव्यः । सोऽभ्यासवचने शक्यते । समासवचने हि परसंख्या समुदायस्योक्ता भवति । तथा न स्वाभिः पशव उपलक्षिता भवन्ति । तस्मादसदेतत् ॥ ६ ॥

वङ्क्रीणां तु प्रधानत्वात्समासेनाभिधानं स्यात्प्राधान्यमध्रिगोस्तदर्थत्वात् ॥ ७ ॥ सि०

तुशब्दः पक्षं व्यावर्तयति । नैतदेवम् । अभ्यसितव्यः षड्विंशतिशब्द इति । किं तर्हि । समस्य वदितव्या वङ्क्रय इति । कुतः । तत्र वङ्क्रीणां प्रधानत्वात् । प्राधान्यं हि तासाम् । प्रकृतौ षड्विंशतिरेता वङ्क्रय इत्यभिसंबन्धस्तत्रेप्सितः । षड्विंशतिरस्येति वङ्क्रयो गणिताः । न ताभिर्गणिताभिः पशुरुपलक्षितः । किं कारणम् । वङ्क्रीभिर्गणिताभिर्दृष्टं प्रयोजनं, कृत्स्नं पार्श्वमुद्धरिष्यत इति। न तु वङ्क्रीभिर्गणिताभिः पशावुपलक्ष्यमाणे किंचिद्दृष्टमभ्यधिकं भवति । तस्मान्न पशुसंबन्धो विवक्षितः । एवं प्राधान्यं वङ्क्रीणाम्। अध्रिगोर्वङ्क्यर्थत्वान्न तस्य संख्यापशुसंबन्धः प्रयोजनम् । तस्मात्समस्य वचनं कर्तव्यम् । एतावत्त्वं प्रकृतावुक्तामिति विकृतावेतावत्त्वेव वक्तव्येति । तस्मात्समस्य वचनं कर्तव्यमिति ॥ ७ ॥

---

॥ ५ ॥ ६ ॥ ७ ॥

तासां च कृत्स्नवचनात् ॥ ८ ॥

तासां च वङ्क्रीणामिदं कात्स्न्र्यमुच्यते, न पशूनाम्। ता अनुष्ठ्योच्च्यावयतात्— इति, षड्विंशतिवङ्क्रयस्ताः प्रयत्नेनोद्धर्तव्या इति। इतरथा षड्विंशतिरस्य वङ्क्रयस्तं प्रयत्नेन किंचित्कुर्यादित्येवमभिसंबन्धो भवेत्। यद्धि लक्ष्यते, तद्धि कार्यसंबन्धार्थं प्रतिनिर्दिश्यते। तदिह षड्विंशतिरस्य वङ्क्रयस्ता इति वङ्क्रीणां प्रतिनिर्देशः कार्यार्थः। तस्मात्तासां प्राधान्यमिति ॥ ८ ॥

अपि त्वसंनिपातित्वात्पत्नीवदाम्नातेनाभिधानं स्यात् ॥ ९ ॥

अपि त्विति पक्षव्यावृत्तिः। नैतदेवं, समसितव्या वङ्क्रय इति। किं तर्हि। अविकृतः षड्विंशतिशब्दः प्रयोक्तव्यः। कुतः। असंनिपातित्वात्। असंनिपाती ह्यध्रिगुः। न करणत्वेन निर्दिश्यते। यदि हि करणत्वेन निर्दिश्येत, ततोऽनेन प्रकाशितं कर्तव्यम्, न ध्यानादिनेति* मन्त्रान्तेन कर्मसंनिपातः स्यात्। तत्राशक्यमविकृतेन यौगपद्यं कर्तुमिति विक्रियेत, अभ्यस्येत वा। अथ पुनरेतदकरणं क्रियमाणानुवादि नयनकालमध्रिगुवचनमनेकस्मिन् पशौ चोदकेनात्र निपतितम्। तत्रैषां स्वसंख्यावतीर्वङ्क्रीरभिवदितुमशक्तं विप्रतिपन्नरूपं तत्। तस्मान्न× तद्वङ्क्रीणामियत्ता वदितव्या। किं

---

॥ ८ ॥

---

अकरणेनाध्रिगुणा प्रकरणे समाम्नानात्प्रकरणिन उपकर्तव्यम्। तत्कथं, यथा शक्नुयात्। किं नु शक्नोत्ययमिति÷, क्रियाप्रधानेन यथा समाम्नातैः पदैरभिधानम्+। तत्र वङ्क्रिषड्विंशत्यभिधानाददृष्टं यथा प्रकृतौ, तथा विकृ-

---

* ध्यानेन—पा०। × तस्मान्न वङ्क्रीणां—पा०। ÷ अयमिति—अपेक्षायामिति शेषः। + अभिधानमिति—अभिधानक्रियामात्रं शक्यं कर्तुं न प्रकाशनं, अकरणमन्त्रत्वादित्याशयः।

तर्हि। षड्विंशतिसंख्याया संबन्धः कर्तव्यः। यथा, द्विपत्नीके बहुपत्नीके वा प्रयोगे पत्नीशब्द एकवचनान्तो न संख्यया पत्नीः परिच्छिनत्ति। किं तर्हि। एकत्वेन संबध्नाति। एवमिहापि। तस्मादविकारेण प्रयोगः। एवमविकारे, आर्षमनुग्रहीष्यत इति॥ ९॥

विकारस्तु प्रदेशत्वाद्यजमानवत्॥ १०॥

तुशब्दात्पक्षो विपरिवर्तते। नाविकारः। ऊहः कर्तव्य इति। यद्यत्तत्संख्येष्वाहत्य तत्संख्योच्चार्यते, तत्र वचनप्रामाण्याद्विप्रतिपन्नसंख्याकस्य* शब्दस्य प्रयुज्यमानस्यादृष्टोऽर्थोऽभ्युपगम्यते। यथा, प्रकृतौ पत्नीशब्दस्य। न त्विहाऽऽहत्य षड्विंशतिशब्दोऽनेकस्मिन् पशौ प्रयुज्यते। किंतु चोदकेनेह प्राकृतवचनं प्राप्यते। तत्र यन्न्याय्यं तच्चोदकः प्रापयिष्यति, नाऽऽहत्य षड्विंशतिशब्दम्। किं तन्न्याय्यम्। यत्प्रकृतौ विवक्षितम्। प्रकृतौ च वङ्क्रीणामियत्ता कथिता। तस्मादिह सा प्रदिश्यते।

नन्वेतदुक्तं नाध्रिगोः करणत्वेन निर्देश इति। यदा च न करणं, तदा कथमयं वङ्क्रीयत्तावचनः। श्रुत्या षड्विंशतिसंख्यावचन एव भवितुमर्हतीति। उच्यते। यद्यपि नास्य तृतीयया निर्देशः, तथाऽपि प्रयोगवचनेनोपगृहीतः साधको भवन् कमन्यं दृष्टमुपकारं करिष्यत्यन्यतोऽवदानप्रकाशनात्। अत्रोच्यते। नास्यावदानैरभिसंबन्धः प्रकृतयागप्रयोगवचनो= यागेन संबध्नाति। तत्र च हविःसंकीर्तनं दृष्टं प्रयोजनम्। षड्विंशतिशब्दोऽपि तत्स्तुतये भविष्यतीति।

नैतदेवमिति ब्रूमः। प्रकरणाद्यागमात्रेणाभिसंबन्धे सति ऋत्विजां प्रैष इति गम्यते। लिङ्गात्तु शमितृप्रैषमेनमध्यवस्यामः। तथारूपाणि ह्यत्र वाक्यानि, दैव्याः शमितार उत+ मनुष्या आरभध्व-

---

तावपीति॥ ९॥

— —

उच्यते। यदि वङ्क्रिषड्विंशत्योः समवेतार्थता नाभविष्यत्ततोऽदृष्टार्थं

---

* विप्रातिपत्तिसंख्याकस्य–पा०। = प्रकृतियाग–पा०। + उपहूता—पा०।

मिति। तथा, षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयतादिति। तस्माद्वङ्क्रीयत्तावचन एषः, न षड्विंशतिसंख्यावचनः। यथा, यजमानशब्द एकयजमानवाचिनि स्वसंख्यावाच्येकवचनमिति कृत्वा द्वियजमानके च प्रयोगे स्वसंख्यावचनप्रदेशादूहः क्रियते, एवमिहापीति ॥ १० ॥

अपूर्वत्वात्तथा पत्न्याम् ॥ ११ ॥

यदुक्तं पत्नीवदिति । युक्तं पत्न्यां, न तत्रैकपत्नीके यजमाने पत्नीशब्दः समाम्नातः । द्विपत्नीके बहुपत्नीके च प्रदेशाद्भवति। यथा, एकस्याः पत्न्याः स्वसंख्यावचनः, एवं द्वयोर्बहूनां च स्वसंख्यावचन इति । तस्माद्वैषम्यं पत्न्याम् ॥ ११ ॥

आम्नातस्त्वविकारात्संख्यासु सर्वगामित्वात् ॥ १२ ॥

तुशब्दोऽन्यं पक्षमवतारयति, न ममस्य वचनं, संख्योहः स्यादिति। यथासमाम्नातषड्विंशतिप्रातिपदिकं प्रयोक्तव्यम् । एवमविकारे, आर्षानुग्रहो भविष्यति। प्रविभक्तं गुणमभिवदितुं वचनमूहिष्यते। षड्विंशती एतयोर्वङ्क्रय इति । ननु षड्विंशती इत्यभिधाने वङ्क्रीणां प्रथमा न प्राप्नोति।

उच्यते। यदा षड्विंशतिगुणः प्राधान्येन विवक्षितो भवति, तद्विशेषणार्थं संख्येयमुच्चार्यते, तदा प्रथमान्तेनापि लक्षणया संख्या विशेष्यते। यथा, इन्द्राग्नी देवतेति । यदा दिवेरैश्वर्यकर्मणोऽर्थो गुणो विवक्षितो भवति, तदेकवचनान्तं द्विवचनान्त एवेन्द्राग्नी इति शब्दो लक्षणया विशिनष्टि। तथा च प्रयोगो दृश्यते, पञ्चपञ्चाशत-

---

तामवकल्पयेम । अस्ति तु समवेतोऽवदानसंबद्धो वङ्क्रयर्थः। स च स्वभावात्षड्विंशत्यैव परिच्छिन्नः। तस्यावदातुः संस्कारो दृष्टार्थमेव प्रस्मरणम् । एवं तासामपि गुणत्वात्प्रकाशनं प्रकृतौ, तद्वदपीति॥ १० ॥ ११ ॥

---

ननु षड्विंशती इत्यभिधाने वङ्क्रीणां प्रथमा न प्राप्नोति। कोऽर्थः। गुणवचनो हि कश्चित्संसृष्टगुणवचनो भवति द्रव्येण । यथा शुक्लः पट

त्रिवृतः संवत्सराः, पञ्चपञ्चाशतः पञ्चदशाः, पञ्चपञ्चाशतः सप्तदशाः, पञ्चपञ्चाशत एकविंशा इति संख्यावचनः शब्दस्त्रिवृत इत्यनेन लक्षणया विशेष्यते। यथा देवदत्तयज्ञदत्तविष्णुमित्राः पर्षादिति। एवं षड्विंशती वङ्क्रय इति। एवमविकारश्च भविष्यति। सर्ववङ्क्रिगामी* च षड्विंशतिशब्दो भविष्यतीति ॥ १२ ॥

संख्या त्वेवं प्रधानं स्याद्वङ्क्रयः पुनः प्रधानम् ॥ १३ ॥

सत्यमुपपद्यत एव वचनं, षड्विंशती वङ्क्रय इति। संख्याप्रधानस्त्वेवं निर्देशः कृतो भवति। षड्विंशतिगुणः प्राधान्येन विवक्षितः। तद्विशेषणत्वेन वङ्क्रीणामुच्चारणम्। वङ्क्रयः पुनः प्रकृतौ प्रधानं, न संख्या। तदुक्तं, प्राधान्यमाध्रिगोस्तदर्थत्वात्×। तासां= च कृत्स्नवचनादिति। तदेवं न प्रकृतिवदभिधानं कृतं भवेत्। तत्र चोदक एव बाध्येत। तस्मात्समसितव्यमेव वचनमिति ॥ १३ ॥

---

इति। कश्चिन्निष्कृष्टगुणवचनः। यथा शौक्ल्यं पटस्येति। तत्र= प्राग्विंशतेः संसृष्टगुणवचनाः। पञ्च गावो दश गाव इति। विंशत्यादयस्तूभयवचनाः। यदीह द्रव्यं प्रधानं, 'वङ्क्रयः' इति प्रथमाबहुवचननिर्देशात्षड्विंशतिशब्देनापि प्रथमाबहुवचनान्तेन भवितव्यम्। 'गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति' इति। दुष्परिहरश्चायम्। अतोऽन्यः पक्ष आश्रीयते। निष्कृष्टो गुणः प्रधानभूतः षड्विंशतिरित्यभिधीयते। नन्वेवं वङ्क्रय इति प्रथमा न प्राप्नोति। षष्ठ्या भवितव्यम्। उच्यते। शक्यपरिहारमिदं चोद्यम्। तत्परिहारं भाष्यकारेण ॥ १२ ॥

---

'संख्या त्वेवं प्रधानं स्याद्वङ्क्रयः पुनः प्रधानम्' इत्युक्तम्+। नन्वेवं सति षड्विंशतौ बहुवचनं प्राप्नोति। उच्यते। उभयत्र प्रत्ययेन माति-

---

× ( अ० ९ पा० ४ अ० १ सू० ७ )। = ( अ० ९ पा० ४ अ० १ सू० ८ )।

* वङ्क्रिगामी च–पा०। = तत्रेति–संख्याशब्देषु ये प्राग्विंशतेः, ते द्रव्यसंसृष्टगुणवचना एवेत्यर्थः। + इत्युक्तमिति–इति सिद्धान्तसूत्रं निगदव्याख्यातमित्यर्थः।

अनाम्नातवचनमवचनेन हि वङ्क्रीणां स्यान्निर्देशः ॥ १४ ॥

न खल्वप्यस्मिन् पक्षे सर्वमेवाम्नातमुच्यते, अनाम्नातवचनमपि प्रतीयत इति, षड्विंशती षड्विंशतय इति । अथ द्विवचनं बहुवचनं वाऽनार्षतया* न क्रियते, नैव+ तासां वङ्क्रीणां कार्त्स्न्येनाभिधानं स्यात् ॥ १४ ॥

अभ्यासो वाऽविकारात्स्यात् ॥ १५ ॥

वाशब्दः पक्षं व्यावर्तयति । न समासवचनम् । अभ्यासः स्यात् । एवमविकारो भविष्यति । तत्राऽऽर्षचोदकावनुग्रहीष्येते । सर्वं सामम्नातं कृतं भविष्यति । केवलमस्यशब्दोऽभ्यसिष्यते । कृत्स्नाश्च वङ्क्रयोऽभिहिता भविष्यन्ति ॥ १५ ॥

---

पदिकेनोपात्तं बहुत्वं, विशेषश्च । तत्र वङ्क्रय इति यत्तद्गतं बहुत्वं, यच्च विंशतिमातिपदिकगतं विशेषरूपं, तयोरेकं वङ्क्रिद्रव्यमधिकरणम् । अतस्तयोर्विशेषणविशेष्यभावो युक्तः । यत्तु षड्विंशतावेकवचनं तद्युक्तं विशेषणस्यैकत्वात् । स्वभावाद्विंशत्यादीनां स्वाभिधेयसंख्याग्राहित्वमेव, न तु द्रव्यसंख्याग्राहित्वम् । तद्यथा विंशतिर्गावो गच्छन्तीति द्रव्यमेव प्रधानं, बहुवचननिर्देशात् । संख्याप्राधान्ये हि तस्यैकत्वाद्गच्छतीति* प्राप्नोति । त्वत्पक्षेऽपि तुल्यम् । संख्याप्राधान्ये हि वङ्क्रिषु बहुवचनं न स्यात् । संख्याविशेषणत्वात् । अथ बहुवचनान्विताभिर्वङ्क्रिभिः पश्चात्षड्विंशतिसंख्या लक्ष्यते । ममाप्येकवचान्विता षड्विंशतिर्वङ्क्रिविशेषणम् । अथवा, षड्विंशतिप्रातिपदिकेनोक्तत्वाद्बहुवचनं निवृत्तम् । निर्देशार्थमेकवचनमेव युक्तमिति । ननु द्वौ बहव इत्यादौ प्रातिपदिकेनोक्तत्वाद्द्विवचनबहुवचने न प्राप्नुतः । उच्यते । अन्यत्र तद्वक्ष्यामः, नेहातिप्रसङ्गः÷ इष्यते ॥ १३ ॥ १४ ॥ १५ ॥

---

अनार्ष तथा—पा० । + नैं तासां—पा० । * गच्छतीति प्राप्नोतीति—गच्छतीत्येकवनं प्राप्नोति । तस्माद्भाव एव प्रधानं तथापि विंशतावेकवचनमेव । तद्वत्प्रकृतेऽपीति ग्रन्थपूरणम् । ÷ नेहातिप्रसङ्ग इष्यत इति—नेह प्रपञ्च्यत इत्याशयः ।

पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात्तस्मा-
त्समासशब्दः स्यात् ॥ १६ ॥

तुशब्देनावधार्यते । नैतदेवम् । समस्य वचनमेवेति । कथम् । एवं सति पशुः प्राधान्येनात्र निर्दिष्टः स्यात् । पशोः पशोः षड्विंशतिः षड्विंशतिर्वङ्क्रयो न कश्चिदषड्विंशतिवङ्क्रिः पशुरिति पशोः संख्यासंबन्धेऽभिधित्सित एवं वचनं भवति । न च पशुसंख्यासंबन्धः प्रकृतौ विवक्षित इत्युक्तम् । इयत्ता वङ्क्रीणां प्रकृतौ वक्तव्या । इहापि सैव चोदकेन प्रदिश्यते । तेन नाभ्यासः। स हि पशुनिमित्तकः। तस्मात्समस्य वचनं वङ्क्रीणां कर्तव्यमिति ॥ १६ ॥

[ अश्वमेधेऽश्वविषये वङ्क्रीयत्ताप्रकाशनार्थं वैशेषिकमन्त्राकरणपक्षे
त्रयाणां पशूनामर्थे, षडशीतिरेषां वङ्क्रय इति
समासवचनाधिकरणम् ॥ २ ॥ ]

[ ३ ] अश्वस्य चतुस्त्रिंशत्तस्य वचनाद्वैशेषिकम्
॥ १७ ॥ पू०

अस्त्यश्वमेधः । तत्र सवनीयः पशुः, अश्वस्तूपरगोमृगौ च । अस्ति तु प्रकृतावग्नीषोमीये, षड्विंशतिरस्य वङ्क्रय इति वचनम् । तदिह चोदकेन प्राप्तम्। तत्राश्वस्य चतुस्त्रिंशद्वङ्क्रयः तूपरगोमृगयोः षड्विंशतिः । अस्ति तु ऋक् समाम्नाता—चतुस्त्रिंशद्वाजिनो* देवब-

---

॥ १६ ॥

---

अयं तावत्सिद्धान्त एव । ‘ चतुस्त्रिंशद्वाजिनः ’ इत्यनयाऽवश्यं वङ्क्रीयत्ता प्रकाशयितव्या । आनर्थक्यभयात्प्रकरणानुमितेन× वाक्येन प्रापितत्वात् । ननु प्रतिषिद्धेयं ‘ न चतुस्त्रिंशत् ’ इति । उच्यते । विधिपूर्विकेयं प्राप्तिरिति विधिप्रतिषेधयोर्विकल्पः षोडशिवदिति पक्षे तावदनया प्रकाशनम् । यत्त्वर्थात्प्राप्नोति तत्प्रतिषेधेन बाध्यते । यथा, व्रत्येऽहनि मधुमांसाशने ।

---

* ऋ. सं. ( अष्ट० २ अ० ३ व० १० ) । × आनर्थक्यभयादिति -मन्त्रस्य प्रकरणाम्नानानर्थक्यभयादित्यर्थः।

न्धोर्वङ्क्रीरिश्वस्य स्वाधितिः समेति । अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्याविशस्ता, इति । तदिदं संदिह्यते । किमश्वस्य वैशेषिकमिदं वचनं कर्तव्यं तूपरगोमृगयोः समासेन, उत सर्वेषामेव समासवचनम् । किं प्राप्तम् । अश्वस्य चतुस्त्रिंशद्वङ्क्रयस्तस्य वैशेषिकमिदं वचनं कर्तव्यम् । कस्मात् । वचनात् । एवं, चतुस्त्रिंशद्वाजिनो देवबन्धोरित्येतद्वचनमर्थवादिति । इतरथा, एतद्वचनमनर्थकं स्यात् । तस्माद्वैशेषिकमश्वस्येति ॥ १७ ॥

तत्प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् ॥ १८ ॥ सि०

तत्प्रतिषिध्य प्रकृतिर्नियुज्यते, प्रकृतौ यत्कृतं वचनं तत्कर्तव्यमिति । कथम् । न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयादिति । सा नियुज्यमाना चतुस्त्रिंशद्वाच्यत्वाद्वारयति शब्दम् । तस्मात्प्रतिषिद्धत्वाद्वैशेषिकं वचनं न कर्तव्यं, सामासिकं वचनं कर्तव्यम् ।

ननु, षड्विंशतिरित्येव ब्रूयादिति वचनात्प्रतिषिद्धेऽपि वैशेषिकमेव वचनं कर्तव्यमिति । नेत्युच्यते । न ह्ययं षड्विंशतिशब्दो विधीयते । किं तर्हि । यथाप्राप्तं* वचनमनूद्यते । कथमवगम्यते । एव-

---

नन्विहाऽऽनुमानिको विधिः प्रत्यक्षेण प्रतिषेधेन बाध्यते । उच्यते । न विधिर्यदि बाध्यते= । अपि चान्यदेतदानुमानिकम्, इदं तु प्रत्यक्षमिति । विधिश्चेन्न बाधितुं शक्यते । एवमुभयप्राप्तौ स्थितायामुत्तरा चिन्ता । न चैतत्पूर्वपक्षसूत्रं, समाम्नायस्य बलवत्त्वात् । तथा पक्षव्यावर्तकस्य तुशब्दस्य चोत्तरत्राभावात् ॥ १७ ॥

— —

तत्प्रतिषिध्य ॥ इदं+ श्रूयते, न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरि-

---

* यथा प्राप्तिवचनं—पा० । = बाध्यत इति—इदं तावदुपलक्षणम् । यदि विधिर्न स्यात्, तदा प्राप्त्यभावात्प्रतिषेधोऽपि दुःस्थितः स्यादिति । + एवं तावद्वार्तिककारा भाष्यमनादृत्य स्वयं प्रथमसूत्रमधिकरणान्तरपरतया व्याख्याय 'तत्प्रतिषिध्य' इत्यादिसूत्रान्तरैरधिकरणान्तरं व्याचिख्यासवस्तस्य विषयं तावत्प्रदर्शयन्ति—इदं श्रूयत इत्यादिना ।

कारकरणात्। यथाप्राप्त एवकारकरणम् । न च षड्विंशतिशब्दः प्राप्तः। षड्विंशतिसंख्याभिधानं* प्रकृतौ कृतम्। इहापि तदेव प्राप्तम् =। षड्विंशतिशब्देन तत्प्रकृतौ लक्षितामिहापि षड्विंशतिशब्दस्तल्लक्षणार्थमेवोच्चारितः । षड्विंशतिसंख्यापरेऽनेकोऽर्थो विधीयते। चतुस्त्रिंशत्प्रतिषेधः षड्विंशतिसंख्यावचनं च। तत्र वाक्यं भिद्येत। भिद्यमान एकवाक्यरूपं बाध्येत। किं तत्। साकाङ्क्षत्वम्। न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयादिति। एतद्धि वचनं चतुस्त्रिंशद्वचनाभावे प्राप्तमेव सत्कर्तव्यतया प्रतिषेधं प्रशंसितुमुच्चार्यते। तदेवमेकवाक्यतामापद्यते। सैकवाक्यता संख्यापरे बाधिता स्यात्। अनेकार्थविधानं चान्याय्यम्, एकार्थविधाने संभवति। भूयसी हि त त्राद्दष्टकल्पना स्यात्। तस्माद्यथाप्राप्तवचनं कर्तव्यमिति ॥१८॥

त्येव ब्रूयात्' इति। तत्र संशयः। किं समस्ता ऋक् प्रतिषिध्यते, अश्वस्यापि समस्य* वचनं, उत चतुस्त्रिंशत्पदप्रतिषेधः। अश्वस्य वैशेषिकवचनं× षड्विंशतिरिति। तत्र सिद्धान्तेनोपक्रमः 'तत्प्रतिषिध्य' इति। ननु षड्विंशतिरिति ब्रुवन् निगदे षड्विंशतिरिति शब्दस्य विधिं बोधयति पूर्वपक्षवादी। तस्य कर्मानुष्ठानं, तूपरगोमृगयोः सामासिकवचनमन्यत्, 'द्विपञ्चाशदनयोर्वङ्क्रयः' इति। अश्वस्य तु, वैशेषिकं वचनमन्यत् 'षड्विंशतिरस्य वङ्क्रयः' इति। तदितरः प्रत्याह। नह्ययं विधीयत इति।

शक्यश्चात्रान्यतरानुवादः। यदि तावत्प्रतिषेधो विधीयते, ऋचि प्राकरणिकायां प्रतिषिद्धायां यदन्यच्चोदकप्राप्तमियत्तावचनं तत्स्वयमेव भवति। षड्विंशतिवचनमनुवादः सहैवकारेण । षड्विंशतिरितीयत्ता विधीयते। न सा शक्या, चोदकप्राप्तत्वात्। एवकारोपबद्धत्वाच्च। एवकारस्त्वप्राप्तः स विधीयते। तस्य परिसंख्यारूपोऽर्थः। यदन्यत्प्राकरणिकं प्रतियोगि+ तन्न भवति। एवमन्यतरस्यानुवादत्वेऽवश्यंभाविनि, ऋचः प्रतिषेधविधानं, मुख्यत्वात्। इतरस्य चानुवादः, जघन्यत्वात्प्रतिषेधस्तुत्यर्थ इति ॥ १८ ॥

---

* षड्विंशतिशब्देन च स्वसंख्याभिधानं-पा० । = प्राप्तं षड्विंशति शब्देन। ननु प्रकृतौ-पा०। + प्रतियोगीति-'चतुस्त्रिंशद्वाजिनः' इति मन्त्र इत्यर्थः। तथा च प्राकरणिकमन्त्रानिवृत्ति रूपैवकारार्थविधानादेव निषेधस्य प्राप्तत्वात् 'न चतुस्त्रिंशदिति' निषेधेऽनुवादो भवतीत्यर्थः।

ऋग्वा स्यादाम्नातत्वादविकल्पश्च न्याय्यः ॥ १९ ॥ पू०

आम्नाता हि ऋक्, अप्रतिषिद्धा च तस्मादश्वस्य वैशेषिकं वचनं स्यात् । तथा चाविकल्पो भविष्यति । अविकल्पश्च न्याय्यः । विकल्पे विरुद्धं वचनमन्योन्येन भवति । भवतीति चेत्, न प्रतिषेधः । नेति चेत्, न विधिः । तस्माद्वैशेषिकं वचनं कर्तव्यम् ॥१९॥

तस्यां तु वचनादैरवत्पदविकारः स्यात् ॥ २० ॥

अथ यदुक्तम्, ऋक् तत्र प्रतिषिध्यत इति । नैतदेवम् । तस्यां वचनात्पदविकारः स्यात् । वचनं हि भवति, न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयादिति । तत्र चतुस्त्रिंशत्पदं श्रुत्या प्रतिषिध्यते । ऋग् लक्षणया प्रतिषिध्यते । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या । तस्माद्वैशेषिकं वचनं कर्तव्यमिति ॥ २० ॥

सर्वप्रतिषेधो वाऽसंयोगात्पदेन स्यात् ॥ २१ ॥ सि०

सर्वस्या एव वा ऋचः प्रतिषेधोऽयं, न चतुस्त्रिंशत्पदस्य । कस्मात् । पदेनासंयोगात् । चतुस्त्रिंशत्पदेन ऋचः संयोगो न स्यात् । विना तस्मात्पदान्नैव ऋक्शेषो वङ्क्रिगणनं कुर्यात् । अथ षड्विंश-

---

वाशब्दात्पक्षान्तरम् । आम्नाता हि ऋगप्रतिषिद्धा चेति । ननु प्रतिषिद्धा वाक्येन । उच्यते । पदविकारं वक्ष्यामः* । तस्यां तु वचनादैरवत् । ननु श्रुत्या षड्विंशतिविधानेऽनेकार्थविधानादिदोषः स्यात् । उच्यते । ऐरवत्प्रतिषेधः कार्यप्राप्तिप्रदर्शनाय भविष्यति । अस्य+ 'षड्विंशतिर्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य' इति ॥ १९ ॥ २० ॥

---

ऐरवादिति विषम उपन्यासः । यत्राऽऽद्यपदं गृह्यते, तत्र ऋचं लक्षयति सर्वां, संबन्धेनाऽऽद्यत्वादेव 'अयं सहस्रमानवः' इतिवत् । यत्र त्वनाद्यं गृह्यते, तन्न शक्नोति पराणि लक्षयितुम्, अर्थेनासंबन्धात् । तथा पूर्वाण्यपि पर्यावृत्ति-

---

* वक्ष्याम इति—अनन्तरसूत्रेणेति शेषः । + चतुस्त्रिंशत्पदमात्रप्रतिषेध इति पूर्वपक्षेऽनुष्ठानविशेषं दर्शयति—अस्येत्यादिना ।

तिपदेन संबध्येत, तथाऽपि नाश्ववङ्क्रिसंख्यां ब्रूयात्। तत्र दृष्टोऽर्थो नावकल्पेत। ऊनं च वाक्यमर्थं न साधयेत्। ऊने च वाक्ये दोषश्रवणात् मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधादिति। चतुस्त्रिंशत्पदं चेहानर्थकं स्यात्। तस्मात्समस्य वचनं कर्तव्यम्। ऋचश्च विध्यन्तरेण विहितत्वाद्वैशेषिकं× वचनमिति ॥ २१ ॥

( अध्रिगुप्रैषगतोरूकशब्देन वपाभिधानाधिकरणम् ॥ ३ ॥ )

[ ३ ] वनिष्ठुसंनिधानादुरूकेण वपाभिधानम् ॥ २२ ॥ सि०

ज्योतिष्टोमेऽग्नीषोमीये पशावध्रिगौ वचनं, वनिष्ठुमस्य मा राविष्टोरूकं मन्यमाना इति। तत्रोरूकशब्दं प्रति विचारः। किं वनिष्ठुमस्य मा राविष्टोलूकसदृशं मन्यमानाः, उतोरूकं वपां मन्यमाना वनिष्ठुं मा राविष्टेति। किं प्राप्तम्। वनिष्ठुमुलूकं मन्यमाना इति। कथमुरूकशब्द उलूकवचनः। रलयोः समानवृत्तित्वात्। पर्यङ्कः पल्यङ्कः, रोमाणि लोमानि, अङ्गुरिः अङ्गुलिः। उलूकसदृशत्वाच्च वनिष्ठोः, वपायां चाप्रसिद्धेः।

एवं प्राप्ते, ब्रूमः। उरूकशब्देन वपाभिधानं स्यात्। वपां मन्यमाना वनिष्ठुं मा राविष्टेत्येषा बुद्धिः क्रियमाणा दृष्टार्था। भवति हि वनिष्ठुसंनिधानाद्व्यामोहेन वनिष्टोर्लवनप्रसङ्गः। तं च निवर्तयन्नेष शब्दो दृष्टप्रयोजनो भवति। न हि वनिष्ठुर्न लवितव्य एव। वपोद्धरणकाले वपां मन्यमानैर्न लवितव्यः। इतरस्मिन् पक्षे, वनिष्ठुं मा राविष्टेति लवितव्ये वनिष्ठावनर्थकः प्रतिषेधः। उलूकसदृशवचनं चादृष्टार्थम्। कथं पुनर्वपायामप्रयुक्तो वपां प्रत्याययिष्यत्युरूकशब्द इति। उच्यते। अवयवप्रसिद्ध्या, उरुशब्दस्तावद्विस्तीर्णवचनो दृष्टः। तद्यथा, उरु राजाङ्गणम्, उरु तैलिकाङ्गणमिति। तथा, उरुं* हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ, इति। तथा उरु विष्णो विक्रमस्व, इति। इहापि स विस्तीर्णवचन एव। तथा, कश-

भयात्स्वयमेव तत्पदं कार्येण प्रयुज्यते। अतश्च 'अश्वस्य चतुस्त्रिंशत्' इति

* ऋ० सं० ( अष्ट० १ अ० २ व० १४ )।

शब्दो मेदसि प्रसिद्धः । यथा, कशवाहिनो रथाः । मेदोवाहिन इति गम्यते । तस्यैकदेशः कशब्दः समुदायप्रत्ययमादधाति× । मेदस्विनी तस्य वपा । न विस्तर्णिं मेदो मन्यमानेन तत्संनिकृष्टो वनिष्ठुर्लवितव्य इति वपावचनता सिद्धा भवति । किं भवति प्रयोजनम् । वनिष्ठुवचनपक्षे, उपमानस्योरूकशब्दस्यानूहः । वपावचनपक्षे, उरुशब्द ऊहितव्यः, कशब्दश्चेति उरुणी के, उरूणि कानि । अथवा, उरूके उरूकाणि, यदि समासाभिप्रायः ॥ २२ ॥

( अध्रिगुभैषगतप्रशसाशब्दस्य बाहुप्रशंसापरत्वाधिकरणम् ॥ ४ ॥ )

[ ४ ] प्रशसाऽस्याभिधानम् ॥ २३ ॥ पू०

तस्मिन्नेवाध्रिगावाम्नायते, प्रशसा बाहू इति । तत्र संदेहः । किं प्रशसा बाहू कृणुतात्, प्रशसेति तृतीयान्तः । प्रशसा बाहू ग्रहीतव्याविति, उत प्रशसेति द्विवचनम्, आकारे विभक्तेः कृते प्रशस्तौ बाहू कर्तव्याविति । किं प्राप्तम् । प्रशसाऽस्याभिधानम् । असौ हि शासशब्दः प्रसिद्धः । तथा हि तमनुवदति । दश प्रयाजानिष्ट्वाऽऽह शासमाहरेति+ । असिं वै शासमाचक्षत इति । अनर्थिका च बाह्वोः स्तुतिः । स्तुतौ बाहू किमप्यदृष्टं कुरुत इति मान्त्रवर्णिकं तयोर्देवतात्वं कल्पितं स्यात् । तच्चायुक्तमन्यस्मिन् पक्षे सति । तथा शौनःशेपे भवति दर्शनम् । अतस्त्वामग्निं शासहस्तं शासेन विशसनत्वान्न द्रष्टुमुत्सहे, इति । तस्मादसिना प्रशसेति गम्यते ॥ २३ ॥

बाहुप्रशंसा वा ॥ २४ ॥

अथवा बाहुप्रशंसैषा । प्रशसा बाहू कृणुतात्—प्रशस्तौ बाहू छेत्तव्याविति । तथा प्रशसाशब्दस्य दृष्टार्थता भविष्यतीति । कात्स्न्र्येन हि बाह्वोः प्रशस्तता । कृत्स्नौ बाहू उद्धरतेत्यर्थः । कृत्स्नौ च बाहू

---

पूर्वपक्षसूत्रं, नियमेन ऋगेव वक्तव्येति । ‘ तत्प्रतिषिध्य ’ इति सिद्धान्तो नियममेव वारयति ॥ २१ ॥ २२ ॥ २३ ॥

---

× समुदाये–पा० । + शासमाहर–पा० ।

उद्धर्तव्याविति । इतरस्मिन् पक्षे स्वाधितिना विशसनं क्रियते, असेश्च वाचकः शब्द उच्चार्यते । यदि वा मान्त्रवर्णिकं द्रव्यं विधीयते, असिना बाहू छेत्तव्याविति । तच्चायुक्तं, विधिविहिते स्वाधितौ सति। न च न प्रशस्तौ बाहू । ताभ्यां पशुर्हि गच्छति । अवनम्य च शमीकरीरं* भक्षयति । तस्माद्बाहुप्रशंसा । किं भवति प्रयोजनम् । अश्वमेधे, शतं राजता हरितत्सरवोऽसयः । तत्रासिपर ऊहो भवति, यथा पूर्वः पक्षः । यथा तर्हि सिद्धान्तः, तथा बाहुपरेणोहेन भवितव्यम् ॥ २४ ॥

( अध्रिगुप्रैषगतश्येनशलाकश्यपादिशब्दानां कात्स्न्र्येनोद्धरणप्रकाशकत्वाधिकरणम् ॥ ५ ॥ )

[ ५ ] श्येनशलाकश्यपकवषस्रेकपर्णेष्वाकृतिवचनं प्रसिद्धसंनिधानात् ॥ २५ ॥ पू०

अस्मिन्नेवाध्रिगाविदमाम्नायते, श्येनमस्य वक्षः कृणुतात्, शला दोषणी, कश्यपेवांसौ, कवषोरू, स्रेकपर्णाऽष्ठीवन्ता इति । एषु संशयः । किमाकृतिवचनमेषु भवति, उत कात्स्न्र्योद्धरणमिति । किं प्राप्तम् । प्रसिद्धसंनिधानादाकृतिवचनम् । इह प्रसिद्धस्य संनिधौ यदभिधीयते किंचिदिदं कर्तव्यमिति, तत्राऽऽकृतिवचनं गम्यते । यथा, अमी पिष्टपिण्डाः सिंहाः क्रियन्तामिति, अर्जुनबदरा मेखलाः क्रियन्तामिति, सिंहाकृतिवचनं मेखलाकृतिवचनं च गम्यते । एवं श्येनाकृतिवक्षः कर्तव्यं, शलाकृती दोषणी, कश्यपाकृती अंसौ, कवषाकृती ऊरू, करवीरपर्णाकृती अष्ठीवन्ताविति ॥ २५ ॥

कात्स्न्र्यं वा स्यात्तथाभावात् ॥ २६ ॥

वाशब्दः पक्षं व्यावर्तयति । न चैतदस्ति, आकृतिवचन इति । किं तर्हि । कृत्स्नोद्धरणं विवक्षितम् । कृत्स्नान्युद्धृतान्येतान्येतदाकृतिकानि भवन्ति । यथा श्येनाद्याकृतिकानि भवन्ति । तथैतानि

---

॥ २४ ॥ २५ ॥

---

* शमीकरीरे—पा० ।

कुरुत, कृत्स्नान्युद्धरतेत्ययमर्थोऽवगम्यते । लक्षणयेदं चोद्यमानं दृष्टार्थं भवति । कृत्स्नोद्धृतैर्हि तैः प्रयोजनम् । तथा हि तदाकृतिकानामवत्तं भवति । इतरथाऽतदाकृतिकानामवद्यात् । तस्मात्कात्स्न्यमवगम्यत इति ॥ २६ ॥

अध्रिगोश्च तदर्थत्वात् ॥ २७ ॥

अध्रिगुश्चाङ्गानामुद्धरणार्थः । अङ्गानां कात्स्न्र्येनोद्धरणं कथं स्यादित्येवमर्थः । कथम् । एवं हि भवति वचनम्, गात्रं गात्रमस्यानूनं कृणुतादिति । तस्मादपि श्येनादिभिः कृत्स्नोद्धरणं गम्यत इति । प्रयोजनं पक्षोक्तम् ॥ २७ ॥

( दर्शपूर्णमासार्थोद्धृताग्निनाशे ज्योतिष्मतीष्टेरननुष्ठानाधिकरणम् ॥६॥ )

[ ६ ] प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थे हि विधीयते ॥ २८ ॥ सि०

अस्त्यग्निहोत्रम् । य एवं विद्वानग्निहोत्रं जुहोतीति । तत्रेदमाम्नायते । अग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपेत्, यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेदिति× । यदि तु दर्शार्थेन पौर्णमासार्थेन वाऽग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेत्×, किं ज्योतिष्मती कर्तव्या, नेति । किं प्राप्तम् । कर्तव्येति । कुतः । उपसंप्राप्तं हि निमित्तम् । भवितव्यं नैमित्तिकेनेति । अग्निरसावुद्धृतोऽहुतेऽग्निहोत्र उद्वातः । एतावच्च निमित्तं ज्योतिष्मत्याः । तस्मात्सा कर्तव्येति । न चात्र शब्दोऽस्ति, अग्निहोत्रार्थमुद्धृत उद्वाते कार्येति । तस्मादपि कर्तव्या ।

---

॥ २६ ॥ २७ ॥

---

दर्शार्थमग्नावुद्धृतेऽनुगते, इष्टिः कार्या न वेति । कुतः संशयः । वाक्यात्पदाद्वा । किमुद्वानमग्निविशिष्टं= निमित्तं, अथवाऽग्निरुद्वानविशिष्ट इति । तत्रोद्वाने निमित्त आश्रीयमाणे सत्तया क्रिया निमित्तं स्यात् । अग्न्येकदेशे वर्तमाना, पटदाहवत् । न च काष्ठावयवेष्वग्नियुक्तेषु कदाचिदुद्वानं नास्तीत्यविशेषणमेव ।

---

× उद्वायात्–पा० । = पदाच्चावद्यथा संशयस्तथा दर्शयति–किमित्यादिना ।

एवं प्राप्ते, ब्रूमः। प्रासङ्गिके—एवं लक्षणकेऽग्नावनुगते प्रायश्चित्तं न कर्तव्यम् । परार्थं हि तदुद्धरणं कृतम्। दर्शपूर्णमासार्थम्। अग्निहोत्रार्थे चोद्धृते व्यापन्ने तदाम्नातम् । तस्मान्न कर्तव्यम्। आह। ननूक्तं, नास्त्यत्र शब्दः, अग्निहोत्रार्थमुद्धृतेऽनुगते प्रायश्चित्तमिति। अत्रोच्यते। यद्यपि नास्त्येवंजातीयकः शब्दस्तथाऽप्यग्निहोत्रार्थमेवोद्धृतेऽनुगते प्रायश्चित्तं गम्यते। कथम्। अग्निहोत्रप्रकरण एतदाम्नातमिति। आह। अग्निहोत्रप्रकरण आम्नानात्तस्योपकारकमिति गम्यते। नाग्निहोत्रविशिष्टमुद्धरणम्। स्वार्थे हि सर्वं क्रियते, न परविशेषणार्थेन।

अत्रोच्यते। अग्निसंबद्धमेतत्प्रायश्चित्तमुच्यते, नोद्वानसंबद्धम्। किमतो यद्येवम्। यद्युद्वानसंबद्धं भवेत्, उद्वानस्यानङ्गत्वान्नैतदुद्वानार्थमिति गम्यते। प्रकृतेनाग्निहोत्रेण प्रयोजनेन संबध्यते। अग्निसंबन्धे पुनर्गुणत्वादग्नेस्तेनैव प्रायश्चित्तस्य प्रयोजनसंबन्धः। तत्रैवमुद्धृतो व्यापन्नो भवति यदि स प्रयोजनं नाभिनिर्वर्तयति। तत्राग्निहोत्रार्थस्योद्धरणस्याग्निहोत्रनिर्वृत्तिः प्रयोजनम्। दर्शपूर्णमासार्थस्य दर्शपूर्णमासनिर्वृत्तिः। उद्धृतं चानुगतं स्वस्मै प्रयोजनायायोग्यं प्रायश्चित्तेन योग्यं क्रियते। तच्च योग्यं कुर्वत् प्रायश्चित्तमग्निहोत्रस्योपकरोति। यत्तूद्धृतो दर्शपूर्णमासप्रयोजनः, तं योग्यं कुर्वन्नाग्निहोत्रस्योपकुर्यात्। यस्त्वग्निहोत्रार्थमुद्धृतः, तं योग्यं कुर्वदग्निहोत्रायोपकरोति*। तस्मादग्निहोत्रार्थमुद्धृते प्रायश्चित्तम्।

कथं पुनर्ज्ञायते, अग्निना प्रायश्चित्तस्य संबन्धो नोद्वानेनेति। अग्निविशिष्टेनोद्वानेन संबन्ध इति श्रुत्या गम्यते। उद्वानपरीतेनाग्निनेति वाक्येन। श्रुतेर्वाक्याद्बलीयस्त्वादुद्वानसंबन्धः प्राप्नोतीति। उच्यते। उद्वानसंबन्धस्यापरिहार्यत्वात्, यस्योद्वार्यादित्यविवक्षितमेव प्राप्नोति। अदृष्टार्थत्वान्न, अनाकाङ्क्षितेन संबन्धः। तदुद्वानपरीतेऽग्नौ प्रायश्चित्तेन संबध्यमाने व्यापत्तौ सत्यामाकाङ्क्षितेन संबन्धो दृष्टार्थता च। तस्मादुद्वानपरीतोऽग्निः प्रायश्चित्तेन संबध्यत इति।

---

* कुर्वन्नाग्नि—पा०।

दर्शपूर्णमासार्थमुद्धृतो यत्रानुगच्छति, तत्राग्निहोत्रस्य परकीयोऽग्निर्व्यापन्नः । परकीयं चोद्धरणमिति । तत्र प्रायश्चित्तं न स्यात् । अपि च लिङ्गं भवति । किमिति । यस्याग्निरुद्धृतोऽग्निहोत्र इत्यनुवादः । विधौ ह्येतस्मिन्न् सति वाक्यभेदप्रसङ्गः । यद्यग्निहोत्रप्रयोजनमुद्धरणं, ततोऽकृतप्रयोजनमिति विवक्षायाम्, अहुतेऽग्निहोत्र इति वचनमनुवदितुमुपपद्यते । तस्मादप्यग्निहोत्रप्रयोजन उद्धृतेऽनुगते प्रायश्चित्तं भवितुमर्हतीति । किं तर्हि तदा कर्तव्यम् । अविशेषविहितमग्नेरुपशमे प्रसज्यादिति ॥ २८ ॥

( धार्याग्निनाशे ज्योतिष्मतीष्टेरननुष्ठानाधिकरणम् ॥ ७ ॥ )

[ ७ ] धारणे च परार्थत्वात् ॥ २९ ॥ सि०

इदमाम्नायते, धार्यो गतश्रिय आहवनीय इति । अस्त्यग्निहोत्रस्यानुगमे प्रायश्चित्तम्, अग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेदिति×। तत्रैषोऽर्थः सांशयिकः । यदा धार्योऽग्निरनुगच्छति, तदा किमिदं प्रायश्चित्तं कर्तव्यं, नेति । किं

---

अग्निस्तु निमित्तं विशेष्यः । क्रियया व्याप्यमान एव, पटो रक्त इतिवन्निमित्तत बिभर्ति, नाव्याप्यमानः । स कदाचिद्व्याप्यमानः ( स कदाचिद्व्याप्यते ) इति युक्ता निमित्तता । वाक्यनापि,* अफलं चेदं कर्म प्रकरणादग्निहोत्रस्योपकुर्वदुद्वानानिमित्तकमारादुपकारकं प्रयाजादिवत्स्यात् । न विशेषणस्याग्नेस्तद्भावितुमर्हति । सामवायिकं वा, स्विष्टकृद्वद्वाक्येनाग्न्यर्थम् । विशेष्यः प्रधानं तदाऽग्निः, शक्यः संबन्धयितुमुद्वानेनेष्ट्या च। एवं संदेहे, उद्वानं निमित्तम्, आरादवृत्तिः।× दर्शार्थेन कर्मवदिति पूर्वः पक्षः । आरादुपकारकेभ्यः सामवायिकानि गरीयांसीति, उद्वानव्याप्तस्याग्निहोत्रार्थस्याऽऽहवनयिस्योत्पत्त्यर्थमिति सिद्धान्तः ॥२८॥

---

पूर्वं पाक्षिकस्योपकारलक्षणं तादर्थ्यमिति कृत्वा प्रत्येकसमुदायसंबन्धाभिप्रायः, देवदत्तयज्ञदत्तभोजनवत् । यद्धि तैः संवद्धं तदन्यतमेनापि । यच्च समु-

---

× उद्वायात्–पा० । * वाक्येनापीति—प्रशंस्य इति शेषः । + आराद्वृत्तिरिति–नैमित्तिकं च कर्म, आराद्वृत्तिः–आरादुपकारकमित्यर्थः ।

प्राप्तम् । कर्तव्यमिति । उपसंप्राप्तं हि निमित्तम् । एतावदिह निमित्तम् । अग्निरग्निहोत्रार्थमुद्धृतोऽकृतप्रयोजन उद्वातीति । तच्चेह सर्वं प्राप्तम् । तस्मात्कर्तव्यं प्रायश्चितमिति ।

ननु सर्वकर्मार्थमेतत्, न केवलायाग्निहोत्राय । उच्यते यद्धि* सर्वकर्मसमुदायार्थं तत्केवलस्यार्थे न भवतीत्युच्यते । यत्त्वेकैकस्मा इत्येवं सर्वार्थं, तत्सर्वेभ्योऽपि प्रयुक्तमग्निहोत्राय प्रयुक्तं भवति । न चेदं सर्वकर्मसमुदायार्थम् । समुदायस्याचोदितत्वात्साधनानि प्रत्याकाङ्क्षाभावः । एकैकं तत्र कर्मोद्धरणमाकाङ्क्षति । तस्मात्सवार्थमपि सदग्निहोत्रार्थं भवति । एवं चेदनुगमनप्रायश्चित्तं प्राप्नोतीति । यथा, पर्युक्षणं परिसमूहनं तृणापचय इत्येवमादयः पदार्था धार्येऽग्नावहन्यहनि क्रियन्ते, एवं प्रायश्चित्तमपि क्रियेत ।

एवं प्राप्ते, ब्रूमः । धारणे च, गतश्रियोऽनुगमन इदं प्रायश्चित्तं न कर्तव्यम् । कुतः । परार्थत्वात् । न हि तदाऽग्निहोत्रार्थमुद्धरणं, यस्मिन् काले भवत्यसौ गतश्रीः । तत्रान्यार्थमुद्धृतोऽग्निः सर्वार्थं धार्यते । उद्धरणं तु तदेकस्मा एव प्रयोजनाय । धारणं तु सर्वकर्मार्थम् । न च धारणेऽग्निहोत्रार्थेऽनुगमने प्रायश्चित्तं विहितम् । किं तर्हि । उद्धरणे । परकीयं चात्रोद्धरणं, परार्थमुद्धरणम् । यदर्थमुद्धदायार्थं, पर्वेद्धोजनमिव तदन्यतरार्थमिति न शक्यते वदितुम् । न चासौ विधीयते । तस्मात्प्रत्येकं समुदायाग्निहोत्रार्थं तदुद्धरणमिति ।

सिद्धान्तस्तु—श्रुत्यादिलक्षणं तादर्थ्यं, गतश्रीश्च नोद्धरणं प्रयोजयति । धारणं हि तस्य नैमित्तिकम् । तत्तावत्प्रतीक्षते, यावत्कर्मण उद्देशेनोद्धरणं कृतम् । तदर्थमेव भवतु, प्रसङ्गादन्यस्योपकरोति । तस्मान्नान्यार्थं उद्धृतेऽग्निहोत्रार्थं प्रायश्चित्तमिति ।

यदि पुनः सायमग्निहोत्रार्थमुद्धृते गतश्रियो धारणं भवति । प्रातरग्निहोत्रकाले चोद्वानं, ततः किं प्रायश्चित्तं भवति न वा । भवतीति ब्रूमः । सकलनिमित्तभावात् । न× वा । न त्वसावग्निहोत्रमात्रायोद्धृतः । किं तर्हि । व्यक्त्य-

* यदि सर्वकर्मार्थं, समुदायार्थं तत्, न केवलस्यार्थेन भवतीत्युच्यते—पा० । × नवा—भवतीति शेषः ।

रणं तदर्थमुद्धृतेऽपि तत्प्रायश्चित्तम् । तस्मान्न तत्रेदं प्रायश्चित्तमिति ॥ २९ ॥

क्रियार्थत्वादितरेषु कर्म स्यात् ॥ ३० ॥

अथ यदुक्तं, परिसमूहनं, पर्युक्षणमित्येवमादयः पदार्था धार्येऽपि क्रियन्ते, एवं प्रायश्चित्तमपीति । अत्रोच्यते । युक्तं तत्परिसमूहनादीनि क्रियन्ते । चोदितानि हि तानि संस्कारार्थत्वेन, शक्यानि च, अकृतप्रयोजनानि च । उद्धरणं तु कृतप्रयोजनत्वान्निवृत्तम् । नियतदेशकालत्वाच्चाशक्यम् । तस्मादिदमतुल्यं प्रायश्चित्तेन ॥ ३० ॥

( दर्शपूर्णमासार्थोद्धरणकालेऽग्निहोत्रार्थोद्धरणाङ्गमन्त्राननुष्ठानाधिकरणम् ॥ ८ ॥ )

[ ८ ] न तूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात् ॥ ३१ ॥ सि०

अस्त्यग्निहोत्रे, उद्धरणमन्त्रः, वाचा त्वा होत्रा प्राणेनोद्गात्रा, इत्येवमादिः । तत्रायमर्थः सांशयिकः । यद्दर्शपूर्णमासार्थेनोद्धरणं क्रियते, किं तत्रैष मन्त्रः कर्तव्यो नेति । किं प्राप्तम् । दर्शपूर्णमासार्थमप्युद्धृतेऽग्नावग्निहोत्रं हूयत एव । तत्र चेन्मन्त्रो न क्रियते, अमन्त्रोद्धृतेऽग्निहोत्रं प्रवर्तते । तस्मान्मन्त्रेण तदुद्धरणं कर्तव्यम् । अथोच्येत । कालाभावे विगुणत्वादुद्धरणं नाग्निहोत्रस्येति । तन्न । कालमात्रं ह्यपगतम् । उद्धरणं तु विगुणमप्यग्निहोत्रस्य भविष्यतीति । एवं चेत्समन्त्रकं कर्तव्यमिति ।

एवं प्राप्ते, ब्रूमः । परार्थमुत्पन्नेऽग्नौ यस्याग्निहोत्रं प्रवर्तते । चोदनेति कर्म ब्रूमः । न तत्र मन्त्रः कर्तव्य इति । न तदग्निहोत्रस्योद्धरणम् । अतः परकीय उद्धरणे न कर्तव्यमिति । उच्यते । ननूक्तं, विगुणमुद्धरणमग्निहोत्रस्यैव भविष्यति, न गुणाभावे प्रधानाभावोऽपीति । अत्रोच्यते । न गुणः कालः । निमित्तमसौ भवतीत्येतदुक्तम् ।

पेक्षया । यां व्यक्तिमाश्रित्योद्धृतोऽसौ, सा समाप्तैव । प्रातः प्रयोगः प्रसङ्गात्तत्रेति । न चैतत्कर्मार्थं धारणं, पुरुषधर्मोऽयम् । गतश्रीयोगात् ॥२९॥३०॥

अतो निमित्ताभावे क्रियमाणमश्रुतं कृतं भवति। तस्मान्न तदुद्धरणमग्निहोत्रस्येति। न चेदुद्धरणमग्निहोत्रस्य, तस्मादत्र मन्त्रो न कर्तव्यः। कृतोऽपि ह्यसावनर्थक इति ॥ ३१ ॥

( प्रायणीयेष्टौ पयसि प्रदेयधर्माननुष्ठानाधिकरणम् ॥ ९ ॥ )

[ ९ ] प्रदानदर्शनं श्रपणे तद्धर्मभोजनार्थत्वात्संसर्गाच्च मधूदकवत् ॥ ३२ ॥ पू०

ज्योतिष्टोमे समाम्नायते, आदित्यः प्रायणीयः पयसि चरुरिति। तत्र संदेहः। किं प्रदानार्थाः पयोधर्माः पयसि कर्तव्या उत नेति। यदि प्रदानार्थमेतत्पयः, ततः कर्तव्याः। अथ श्रपणार्थं, न कर्तव्याः। कथं संशयः। सप्तमीनिर्देशाच्छ्रपणार्थं पय इति, गम्यते। देवतासंबद्धस्य तु चरोरधिकरणे पयसि श्रूयमाणे वाक्यभेदाशङ्का। अतः संशयः।

किं तावत्प्राप्तम्। प्रदानार्थमिति। कथम्। आदित्यश्चरुर्भवति। स च पयसीत्येवमनेकार्थविधाने वाक्यं भिद्येत। द्वावपि चेमावर्थावतो× वाक्यादवगम्येते। यद्यन्यतरदेतयोर्विधीयते, तदाऽन्यतरदविधीयमानं गम्यते। अतो न वाक्यभेदः। यथा च न वाक्यभेदस्तथाऽऽश्रयितव्यम्। तत्राधिकरणसंबन्धे विधीयमाने देवतासंबन्धावगतिर्नावकल्पेत, प्रमाणान्तरेणाप्राप्तत्वात्। देवतासंबन्धे विधीयमाने हि ये निर्दिश्येते चरुपयसी, तयोर्निर्देशसामर्थ्याद्वाक्येन संसृष्टं गम्यते। तच्च देवतया संबध्यते। तत्रार्थात्पय आधारश्चरुर्भवति।

आह। वाक्येन द्वे चरुपयसी गम्येते। न तयोः संसर्गः। उच्यते। यदा द्वे गम्येते, तदा प्रयोगवचनेन यौगपद्यमेतयोर्गम्यते। तत्रार्थात्संसर्गः। एकत्वाच्च वाक्यस्य समुच्चयः। तेनात्र निर्देश एव विवक्षितो नाधिकरणसंबन्धो गम्यमानोऽपि विधीयते। एवं नु निर्देशः क्रियते, संसृष्टे चरुपयसी कथं गम्येयातामिति। तत्र चरु-

---

॥ ३१ ॥

---

× चेहार्थौ—पा०।

संसृष्टं पयश्चरौ त्यज्यमाने नियतं त्यज्यते । तदस्य प्रदानदर्शनं भवति । पयसा श्रप्यमाणस्य तस्य प्रदानं कथं स्यादिति सप्तमी निर्दिश्यते । तस्माद्भोजनार्थं यागार्थमेतत्पयः । भोजनमिति सारूप्याद्यागमाह । तस्माच्च पयः प्रदानार्थं पयोधर्मैः संबध्यते ।

आह । न त्यागमात्रं यागः । देवतामुद्दिश्य यस्त्यागः स यागो भवति । उच्यते । अयमप्यदितिदेवतामुद्दिश्य त्यागः क्रियत इति । आह । न पयसोऽदितिर्देवता । न ह्युद्देशमात्रेण देवता भवति । या यस्य श्रूयते सा तस्य देवतेति । चरोश्चैषा श्रूयते, न पयसः । उच्यते । उभयस्य निर्देशात् । उभयेन देवता संबध्यते संसृष्टेन, मधूदकवत् । यथा, दधि मधु घृतं धाना उदकं तत्संसृष्टं प्राजापत्यमिति भवति । एवमेवेदं द्रष्टव्यम् । यद्यपि सप्तमीनिर्दिष्टं, सप्तम्यर्थस्याविधित्सितत्वान्निर्देशमात्रस्य विवक्षितत्वात् । यथौदने दधि दत्त्वाऽभ्यवहर्तव्यमिति, ओदनस्य निर्देशमात्रं विवक्ष्यते, नाधिकरणत्वम् । एवमिहापि द्रष्टव्यम् । तस्मात्प्रदानार्थं पयः । प्रदानार्थाश्च पयोधर्माः कर्तव्या इति ॥ ३२ ॥

संस्कारप्रतिषेधश्च तद्वत् ॥ ३३ ॥

एवं च कृत्वा प्रदेयसंस्काराणां केषांचित्प्रतिषेध उपपन्नो भवति । अयजुषा वत्सानपाकरोति, अपवित्रवति गां दोहयतीति । प्राप्ते हि प्रतिषेधो न्याय्य इति ॥ ३३ ॥

तत्प्रतिषेधे च तथाभूतस्य वर्जनात् ॥ ३४ ॥

तत्प्रतिषेधे–पयःप्रतिषेधे, तथाभूतमपि लोके वर्ज्यते । पयसा सिक्तं, पयः शृतं च । न चैष श्रपणार्थस्य× द्रव्यस्य धर्मः । यथा श्रपणार्थं* पानीयम् । तत्प्रतिषेधे, तैले पीते पानीयं न पातव्यमिति

---

॥ ३२ ॥ ३३ ॥

---

× श्रयणार्थस्य–पा० । * श्रयणार्थं–पा० ।

विलेप्यं यवागूश्च पीयते । न च यथाभूतस्य वर्जनात्पयो लोक एवं भवति । भोजनार्थं हि तत् । तथा हि लोके पयः, तद्वदिहापि भवितु-मर्हतीति सामान्यतो दृष्टं व्यपदिष्टम् ॥ ३४ ॥

अधर्मत्वमप्रदानात्प्रणीतार्थे विधानादतुल्य-
त्वादसंसर्गः ॥ ३५ ॥ सि०

अधर्मत्वं× तु पयसः । नास्य प्रदेयपयोधर्मा= भवेयुरित्यर्थः । कुतः । अप्रदानात् । न हीदं प्रदीयते । ननु चरौ प्रदीयमाने प्रदायिष्यत इत्येवमर्थं पयसि श्रपणमुच्यते* । नेत्याह । शृतश्चरुः कथं स्यादित्येवमर्थं हि तज्ज्ञायते । शृतैस्तण्डुलैः प्रयोजनमस्ति । न ह्यन्यथा चरुर्भवतीति । न तु प्रत्तेन पयसा नैतद्दातव्यं श्रूयते । कथम् । प्रणीतार्थे विधानात् । ननु वाक्यभेद एवं भवतीति परिहापित एष पक्षः । संसृष्टमत्र हविर्भवतीत्युक्तम् । उच्यते । अतुल्यत्वादसंसर्गः । अतुल्ये चरुपयसी । प्रत्यक्षतोऽधिकरणत्वेन पयः श्रूयते । प्रदेयत्वेन चरुः । पयसो यद्वाक्येन प्रदेयत्वं गम्यते, तदधिकरणश्रुत्या बाध्यते । यत्तु वाक्यभेदप्रसङ्ग इति । तन्न । न हि पयसि चरुरिति संबन्धो भविष्यति । कथं तर्हि । पयसि आदित्य इति । उभावादित्यशब्देन संभन्त्स्येते । आदित्यः पयसि, आदित्यश्चरुरित्युभौ चरुपयःशब्दावादित्यप्रधानावित्येकं वाक्यं भविष्यति, न वाक्यभेदप्रसङ्गः । पयआधार आदित्यो भविष्यति । तस्मान्न पयसि प्रदेयधर्मा भवितुमर्हन्ति ॥ ३५ ॥

परो नित्यानुवादः स्यात् ॥ ३६ ॥

अथ यल्लिङ्गमुक्तम्, अयजुषा वत्सानपाकरोति, अपवित्रवति गां दोहयतीति । नैतदेवं सति+, अस्यार्थस्य साधकं भवति । किं

---

॥ ३४ ॥ ३५ ॥

---

× अधर्मकं तु पयः—पा० । = प्रदेयधर्मा—पा० । * श्रपणं—पा० । + सत्यस्यार्थस्य—पा० ।

तर्हि । एतन्नित्यानुवादकम् । नित्यमेतमर्थं सन्तमनुवदति । नैवाप्रदेयत्वाद्यजुषा वत्सा अपाक्रियन्ते । न पवित्रवति गौर्दुह्यते । ननु नित्यानुवादोऽनर्थकः । उच्यते । न वयं प्रयोजनवत्तामप्रयोजनवत्तां वा विचारयामः । किमेतस्माद्वाक्याद्गम्यत इति परीक्षामहे । अस्माच्च वाक्यादिदं गम्यते, न यजुषा वत्सा अपाक्रियन्ते, न पवित्रवति गौर्दुह्यत इति । तच्चास्याप्रदेयत्वादप्राप्तं यजुः पवित्रं चेति ॥ ३६ ॥

विहितप्रतिषेधो वा ॥ ३७ ॥

अथवा, विहितस्यैव प्रतिषेधो द्रष्टव्यः । विहितं केषांचित्, यजुषा वत्सानपाकरोति, पवित्रवति गां दोग्धीति । तस्य प्रतिषेधोऽर्थवानेव भवतीति ॥ ३७ ॥

वर्जने गुणभावित्वात्तदुक्तप्रतिषेधात्स्यात्कारणात्केवलाशनम् ॥ ३८ ॥

अथ यदुक्तं, पयःप्रतिषेधे, पयसा सिक्तं, पयसा संसृष्टं च वर्ज्यत इति । तत्र ब्रूमः। युक्तं हि लोके यत्संसृष्टस्य वर्जनं, तदेव हि तत्र प्रतिषिध्यते । नित्यं ह्युपसर्जनीभूतं भोजने पयः प्रचरति। यच्च प्रचरति, तत्प्रतिषेधोऽर्थवान् । यन्न प्रचरति, तस्य ह्यप्रसङ्गात्प्रतिषेधोऽनर्थकः । ननु केवलमपि लोके पय उपभुज्यते । उच्यते । कारणात्केवलाशनं, व्रतमौषधं वा यस्य स केवलमुपयुङ्क्ते । न त्वेतत्प्रचुरम् । तस्मात्प्रायेण गुणभूतत्वात्पयसः पयोयुक्तमेव न भक्षयितव्यमित्येवमर्थः पयःप्रतिषेध उच्यते ॥ ३८ ॥

व्रतधर्माच्च लेपवत् ॥ ३९ ॥

अथ कस्मान्नायमन्यः परिहार उच्यते। व्रतवदेतद्द्रष्टव्यमिति। यथा, ब्रह्मचारिणा मांसं न भक्षयितव्यमित्युक्ते दर्विगतमपि लेपं वर्जयन्ति, एवमिहापि पयो न पातव्यमित्युक्ते पयसा सिक्तं पयसा संसृष्टं वर्जयिष्यन्तीति ॥ ३९ ॥

रसप्रतिषेधो वा पुरुषधर्मत्वात् ॥ ४० ॥

---

॥ ३७ ॥ ३८ ॥ ३९ ॥

—

न वैष परिहारः । परिहारान्तरनिवृत्त्यर्थो वाशब्दः । कुतः । पुरुषधर्मत्वाद्व्रतस्य । अदृष्टार्थं ब्रह्मचारिणो मांसाभक्षणम् । तत्र तावदपि यो भक्षयति, यावति मांसरसमात्रं* विदितं भवति तस्यापि दोषः, न श्लेष्मप्रकोपादि किंचिद्दृष्टमपेक्षते । न तु पयःप्रतिषेधे तथा । तस्मात्पूर्व एव परिहार इति ॥ ४० ॥

[ अभ्युदितेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम् ॥ १० ॥ ]

[ १० ] अभ्युदये दोहापनयः स्वधर्मा स्यात्प्रवृत्तत्वात् ॥ ४१ ॥ सि०

इदं समाम्नायते, वि वा एनं प्रजया पशुभिरर्धयति, वर्धयत्यस्य भ्रातृव्यं, यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति, स त्रेधा तण्डुलान् विभजेद्ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं, येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमिति । शृते चरुं, दधंश्चरुमित्येतदुदाहरणम् । तत्रैषोऽर्थः सांशयिकः । किं शृते दधनि चेज्यार्थाः पयोधर्माः कर्तव्या

---

एते द्वे सूत्रे× तुशब्दवाशब्दरहिते पूर्वपक्षे धर्मवती दधिपयसी प्रतिपादयतः । उत्तरे= द्वे सूत्रे वाशब्देनैतं पक्षं व्यावर्तनप्रदानधर्मैर्युज्येते÷ दधिपयसी इति स्थापयतः ।

एवं सूत्रकारप्रस्थानमपास्य वृत्तिकारः षष्ठाविरोधिनीं व्याख्यां चकार । तत्र ह्युक्तं तदेवेदमामावास्यं कर्म, केवलं तद्द्रव्यं देवतातोऽपनीतं* देवतान्तरेण युज्यते, अनपनीतयागार्थत्वमेव सत्तस्य कथं यागधर्मा न स्युरिति । अतः पूर्वाधिकरणसिद्धान्तेन पूर्वपक्षस्य कृतस्यैते सिद्धान्तसूत्रे । उत्तरे अप्येवमेव । एवं

---

॥ ४० ॥

---

* मांसमात्रं–पा० । × द्वे सूत्रे इति–' अभ्युदये दोहापनयः स्वधर्मा स्यात्प्रवृत्तत्वात् ' ' श्रुतोपदेशाच्च ' इत्येते इत्यर्थः । = उत्तरे इति—' अपनयो वाऽर्थान्तरे विधानाच्चरुपयोवत् ' ' लक्षणार्था शृतश्रुतिः ' इति द्वे सूत्रे इत्यर्थः । ÷ व्यावर्तनेति व्यावर्तनपूर्वकेत्यर्थः । * देवतातः—पूर्वदेवतातः ।

उत नेति। किं प्राप्तम्। न कर्तव्या इति। कुतः अप्रदानार्थत्वात्। प्रणीतार्थे विधानादतुल्यत्वाच्च चरुणा न संसर्ग इति।

एवं, प्राप्ते ब्रूमः। अभ्युदये निमित्ते योऽयं दोहो देवताया अपनीतः स स्वधर्मा स्यात्। इज्यार्थाश्च तत्र पयोदधिधर्माः कर्तव्याः। कुतः। इज्यार्थमेव हि तत्पयो दधि च प्रवृत्तम्। यतश्चेज्यार्थम्, अतोऽस्येज्यार्थाः प्रवृत्ता एव धर्माः। तद्धर्माणां प्रवृत्तावस्ति कारणं, निवृत्तौ नास्ति। ननु प्रणीतार्थे दधिपयसी विधीयेते। नेत्याह। वाक्यं हि तदा भिद्येत। चरौ देवतार्थे, चर्वर्थयोश्च दधिपयसोः।

आह। ननु चरोरपि देवतासंबन्धो दधिपयसोरपि तथा। न भविष्यति वाक्यभेद इति। नैवं शक्यम्। विभागः कर्तव्य इति पूर्ववाक्यं वृत्तम्, त्रेधा तण्डुलान् विभजेदिति। तदनन्तरं विभागविशेषपरमिदं भवति वाक्यम्। ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं, येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमिति। अत्राविशेषाद्दधिपयसोरपि विभागो वक्तव्यः। यदि च दधिपयसी विभक्तव्ये सति प्रणीतार्थे अप्युच्येयातां, ततो भिद्येत वाक्यम्। अतो नैतयोः प्रणीतार्थे विधानम्।

अविधीयमाने च सप्तम्यर्थे प्रातिपदिकार्थो देवतया संभन्त्स्यते। वाक्यसामर्थ्यादुभे च दधिपयसी देवतया संभन्त्स्येते चरुणा सह। दधनि चरुरेको भाग इन्द्राय प्रदात्रे भवतीति। यथा विभज्यमानेषु नानाद्रव्येषूच्येत, रुक्मपात्र्यां= समाहार्या मणयः। एको भागो देवदत्तस्य। रजतपात्र्यां सुवर्णं निहितम्। अपरो भागो विष्णुमित्रस्येति, सह पात्रीभ्यां द्वौ भागौ गम्येते। विभागविशेषपरत्वाद्वाक्यस्य। पात्र्योश्च विभक्तत्वादनुवादश्च* सप्तम्यर्थो गम्यते। एवमिहापि विभागपरत्वादेव वाक्यस्य, विभक्तत्वाच्च दधिपयसोरेको भाग इति गम्यते। अर्थप्राप्तत्वाच्च सप्तम्यर्थोऽनुवादो भविष्यति। तस्मात्प्रदानार्थे दधिपयसी। प्रदानार्थाश्च दधिपयसोर्धर्माः क-

= ऋक्मपात्र्यां महामणयः—पा०। * तदनुवादश्च—पा०।

र्तव्याः ॥ ४१ ॥

शृतोपदेशाच्च ॥ ४२ ॥

इतश्च प्रदानार्थे दधिन पयसि चेज्यार्था धर्माः कर्तव्या इति। कुतः। सिद्धवच्छृतोपदेशो भवति । शृते चरुं, दधंश्चरुमिति। स सत्सु धर्मेषूपपद्यते। इतरथा श्रपणं+ न क्रियेतेति। तत्र सिद्धवच्छृतोपदेशो नावकल्पेत। तस्मादपि पश्याम इज्यार्था दधिपयसोर्धर्माः कर्तव्या इति ॥ ४२ ॥

( पशुकामेष्टौ दधिशृतयोः प्रदेयधर्माननुष्ठानाधिकरणम् ॥ ११ ॥ )

[ ११ ] अपनयो वाऽर्थान्तरे विधानाच्चरुपयोवत् ॥ ४३ ॥ सि०

अस्ति पशुकामेष्टिः, यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानप कुर्यात्। ये क्षोदिष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेत्, ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुं, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुमिति। शृते चरुं, दधंश्चरुमित्येतदुदाहरणम्। अत्र संदेहः। किं शृते दधनि चेज्यार्था दधिपयोधर्माः कर्तव्या उत नेति। किं प्राप्तम् । पूर्वेणाधिकरणेन कर्तव्या इति। समाना हि श्रुतिर्भवतीति । सिद्धवच्च शृतोपदेशः सत्सु प्रदानार्थेषु धर्मेषूपपद्यते।

एवं प्राप्ते, ब्रूमः। अपनयो वा धर्माणां भवेत्। अर्थान्तरे ह्येतत्पयो विधीयते दधि च, श्रपणार्थे न प्रदानार्थे। सप्तमीसंयोगात्।

---

पूर्वस्य पूर्वस्य न्यायस्यापवादतया चोत्तरोत्तरमधिकरणमिति युक्ततर आरम्भः। इतरथाऽभ्युदयोदाहरणं हेयमेव स्यात्। न्यायस्तु स÷ एवेति ॥ ४१ ॥ ४२ ॥

---

+ श्रयणं—पा०। ÷ स एवेति—य एव षष्ठे 'अपनयो वा विद्यमानत्वात्' इति सूत्रेण सिद्धान्त कथितः, स एव 'अभ्युदये दोहापनयः-' इत्यादिसूत्रद्वयेन, एतत्पूर्वाधिकणसिद्धान्तजनिताशङ्कस्य बुद्धिं व्यावर्तयितुं स्पष्टीक्रियते। 'अपनयो वाऽर्थान्तरे' इत्याहिसूत्रद्वयं त्वधिकरणान्तरमित्यर्थः।

चरुपयोवत् । यथा प्रायणीये चरौ पयसि प्रदेयधर्मा न क्रियन्ते, सप्तमीसंयोगात् । एवमिहापि ॥ ४३ ॥

लक्षणार्था शृतश्रुतिः ॥ ४४ ॥

अथ यदुक्तं सिद्धवच्छृतोपदेशो भवतीति । नैष दोषः । श्रयणेन द्रव्यं लक्षयिष्यति । अर्थप्राप्तं हि चरौ श्रयणं, तत्संबद्धं लक्ष्यते । श्रयणवति द्रव्ये चरुरिति । तस्मात्प्रदेयधर्मा न भवेयुरिति ॥ ४४ ॥

( ज्योतिष्टोमे श्रयणार्थेषु पयआदिषु प्रदेयधर्माननुष्ठानाधिकरणम् ॥ १२ ॥ )

[ १२ ] श्रयणानां त्वपूर्वत्वात्प्रदानार्थे विधानं स्यात् ॥ ४५ ॥ पू०

ज्योतिष्टोमे श्रूयते, पयसा मैत्रावरुणं श्रीणाति, सक्तुभिर्मन्थिनं, धानाभिर्हारियोजनं, हिरण्येन शुक्रम् , आज्येन पात्नीवतम् । तत्र संशयः । किं श्रयणानां प्रदेयधर्मा भवन्ति, उत नेति । कुतः संशयः । यदि प्रदेयानि श्रयणानि, तत एषु प्रदेयधर्मा भवन्ति, अथ न प्रदेयानि, न भवन्तीति । किं प्राप्तम् । प्रदेयानि,* प्रदेयधर्मैः संबध्येरन्निति । श्रयणाद्धि द्रव्यं जायते । पयोमिश्रश्च सोमो भवति । संमिश्रे च हूयमाने पयोऽपि होमेन संबध्यते । यदि पयोमिश्रश्च सोमो भवति, तत्र सोमस्य पयसा मिश्र्यमाणस्य न कंचिदुपकारं पश्यामः । यागस्य तूपकारो भवति निर्वृत्तिर्नाम । यदि होमेन संभन्त्स्यत इति मिश्रणाभिप्रायः । ततु उपकारकं मिश्रणं दृष्टेनोपकारेण । श्रुतो हि गुणवान् यागः प्रत्यक्षः पयसा निर्वर्त्यत इति । सोमोपकारः कल्प्यः स्यात् । तस्मात्पयसा सोमो मिश्र्यते । स मिश्रितः प्रयागवचनेन कथं संबध्यत इति । न च प्राकृतं मिश्रणं केनाचिद्द्रव्येण प्राप्तम् । यत्रेदं द्रव्यान्तरं पयो विधीयत इति । अपूर्वत्वात्सोमस्य । तस्मात्प्र-

॥ ४३ ॥ ४४ ॥

---

* प्रदेयानि श्रयणानि—पा० ।

दानार्थस्य पयसो विधानं स्यात् । प्रदेयपयोधर्माश्चात्र कर्तव्या इति ॥ ४५ ॥

गुणो वा श्रयणार्थत्वात् ॥ ४६ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । गुणभूतं पयः स्यात्सोमस्य, न प्रदेयद्रव्यम् । प्रदेयत्वेनाश्रवणात् । सोमार्थेन च श्रुतत्वात् ॥ ४६ ॥

अनिर्देशाच्च ॥ ४७ ॥

न होमेन प्रयोगवचनेन वाऽस्य संबन्धः । अनिर्देशः परार्थत्वात् । न च प्रत्यक्षेणापि पयस्त्यागे यागनिर्वृत्तिः पयसा । प्रत्यक्षदेवतासंबद्धो हि त्यागो यागः । न चात्र पयसो देवतासंबन्धः । मैत्रावरुणं गृहं गृह्णातीति वचनं, न मैत्रावरुणं पय इति । तस्माद्दृष्टोपकाराभावाददृष्टः सोममिश्रणे सोमसंस्कारोऽभ्युपगम्यते । तस्मान्न प्रदेयधर्मैः संबध्यत इति ॥ ४७ ॥

श्रुतेश्च तत्प्रधानत्वात् ॥ ४८ ॥

इतश्च सोमार्थं पयः । कुतः श्रुतिर्हि सोमप्रधाना भवति । द्वितीयाविभक्तिः श्रूयते । तस्माच्छ्रयणेन सोम एवेप्स्यत इति ॥ ४८ ॥

अर्थवादश्च तदर्थवत् ॥ ४९ ॥

अर्थवादश्च श्रयणश्च सोमार्थस्य भवति । स मित्रोऽब्रवीत्, पयसैव मे सोमं श्रीणन्निति । न हि भवति पयो मे दद्युरिति । कथं तर्हि । सोमं पयसा संस्कुर्युरिति । तस्मादपि सोमार्थं श्रयणम् ॥४९॥

संस्कारं प्रति भावाच्च तस्मादप्यप्रधानं स्यात् ॥ ५० ॥

संस्कारं प्रति श्रयणवचनं भवति । यत्र संस्काराः श्रूयन्ते तत्रेदं श्रूयते, पयसा मैत्रावरुणं श्रीणातीत्येवमादि । तस्मात्संस्कारप्राये श्रवणादयमपि संस्कार एवेति गम्यते । भवति हि प्रायोवृत्त्या तद्बुद्धिः । यथाऽग्न्यप्राये लिखितोऽग्न्य इति गम्यते । तस्मात्प्रदेयधर्मैर्न संबध्यत इति ॥ ५० ॥

---

॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥

---

[ परस्वद्यागे पर्यग्निकरणान्ताङ्गरीतिविधानेन तदुत्तराङ्गप्रतिषेधाधिकरणम् ॥ १३ ॥

[ १३ ] पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ ५१ ॥ पू०

अश्वमेधे समामनन्ति, ईशानाय परस्वत आलभेतेति । तत्प्रकृत्य श्रूयते, पर्यग्निकृतानारण्यानुत्सृजन्तीति । तत्र संशयः । किमारण्यानामालम्भ उत्सर्गार्थ× एव, द्रव्योत्सर्गश्चायं, किं कर्मशेषप्रतिषेधः, पर्यग्निकरणान्तैः संस्कृता उत्स्रष्टव्या इति । किं प्राप्तम् । द्रव्योत्सर्गोऽयम्, आलम्भश्चोत्सगार्थं एवेति । कुतः । एवमुत्सर्गमप्राप्तं विदधत्तस्य सत्तां ब्रुवन् श्रुत्या वक्ष्यति । इतरथा, उत्सर्गं प्राप्तमनुवदेत् । वाक्यार्थस्य प्रतिषेधस्य सत्तां ब्रूयात्प्रत्ययः । श्रुतिश्च वाक्याद्बलीयसी । एवं च सति देवतासंबन्धो ग्रहणे । ईशानमुद्दिश्य परस्वन्त आलब्धव्याः । पर्यग्निकरणं कृत्वा त्यक्तव्या इति । उपधानवत् । यथा, एतत्खलु साक्षादन्नं, य एष चरुर्य एनं चरुमुपदधातीत्युपधानार्थमेव चरोरुपादानम् । एवमिहाप्युत्सर्गार्थं एवाऽऽलम्भो भविष्यति ॥ ५१ ॥

शेषप्रतिषेधो वाऽर्थाभावादिडान्तवत् ॥ ५२ ॥ सि०

कर्मशेषप्रतिषेधो वाऽस्मिन् वाक्य उच्यते । कुतः । अर्थाभावात् । ईशानाय परस्वत आलभेत, इत्यस्य वाक्यस्य न कश्चिदर्थो भवेत्, यद्युत्सर्गार्थं आलम्भः स्यात् । कथम् । आलम्भकाल एवाध्वर्युर्जानीयात्, नेम ईशानाय दास्यन्त इति । तस्यैवं जानतो नैवं संकल्पो भवति, ईशानाय दातुं ग्रहीतव्या* इति । अशक्यार्थत्वादनर्थकमिदं वाक्यं भवति । स एष संकल्प एवमवकल्पते, यदीशानाय दातव्याः । तस्मादालम्भवचनेन शब्देन दानमेव विधीयत इति गम्यते । यदा च दानं विधीयते, तदा—पर्यग्निकृतानुत्सृजन्तीति, उत्सर्गमनूद्य, एवमुत्सृजन्तीति विशेषविधानार्थं भवति शास्त्रम् ।

---

पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ ५१ ॥

—

---

× उत्सर्गार्थः, एवं । * गृह्णामीति—पा० ।

कथं पुनरत्र विशेषो विधीयते, किं कालः पर्यग्निकरणे । एतस्मिन् काल उत्सृजन्तीति । नेत्याह । नात्र कालवचनः शब्दः श्रूयते । काले च विधीयमाने कालान्तरं प्रतिषिध्यते, नाङ्गान्तराणि । अथ किं पर्यग्निकरणवदुत्स्रष्टव्यामिति । तदपि नास्ति । न ह्यत्र पर्यग्निकरणभावना कीर्त्यते । तस्यां च सत्यां पर्यग्निकरणात्प्राञ्चः पराञ्चश्च पदार्थाः सर्वे प्रतिषिध्येरन् । कथं तर्हि निर्वृत्ते पर्यग्निकरण उत्स्रष्टव्य इति । किमेतस्यामवस्थायामिति । नेत्याह । चोदकादेवैतत्प्राप्तम् । एतदवस्थः पशुरुत्सर्जनीय इति । अवस्थान्तरप्रतिषेधस्य च नायं शब्दो वाचकः । चोदकप्राप्ते हि काल उत्सृज्यमाने कृतपर्यग्निकरण एवासौ भवति । यदि त्ववस्थायाः प्रतिषेधः स्यात्, पर्यग्निकरणादूर्ध्वमुत्सर्गात्प्राक् पदार्थाः प्रतिषिध्येरन्, न पराञ्चः ।

कस्तर्ह्यर्थः । पर्यग्निकरणे कृते यादृशो भवति तादृशस्त्याज्य इति । ननु चोदकेनैव तदङ्गोऽसौ प्राप्तः । उच्यते । पुनरस्यैतदङ्गवत्ता श्रूयते, अङ्गान्तरपरिसंख्यार्थम् एतैरेवाङ्गैरङ्गवानुत्स्रष्टव्यः । एवं चोदकप्राप्तानि परिसंख्यायन्ते, नान्यान्यङ्गानि भवन्तीति । कथमेष शब्द एवं परिसंख्यातुं शक्नोतीति चेत् । शक्नोतीति ब्रूमः । कथम् । प्रत्यक्षेण वाक्येन तैरङ्गैर्निराकाङ्क्षीकृते प्रधाने शेषैरङ्गैः सह चोदकेन परोक्षा सत्येकवाक्यता न भविष्यतीति । तस्मात्कर्मशेषप्रतिषेध इति ॥ ५२ ॥

पूर्ववत्त्वाच्च शब्दस्य संस्थापयतीति चाप्रवृत्ते नोपपद्यते ॥ ५३ ॥

पूर्ववांश्च भवति शब्दो यागप्रवृत्तिपूर्वकः । आज्येन शेषं संस्थापयतीति । यदि याग एष प्रारब्धस्ततः संस्थापयतीति समाप्तिसादृश्यादुपपद्यते । यागस्य हीदं यागान्तरं समाप्त्या सदृशम् । यदि हि पूर्वो न यागः प्रवृत्तः स्यादुत्सर्गमात्रं, न तस्य यागः समाप्त्या सदृशः । तत्र संस्थापयतीति नोपपद्यते । तस्मादपि शेषकर्मप्रतिषेधः ॥ ५३ ॥

---

* पराञ्चश्चार्थाः–पा० ।

प्रवृत्तेर्यज्ञहेतुत्वात्प्रतिषेधे संस्काराणामकर्म स्यात्तत्कारित्वाद्यथा प्रयाजप्रतिषेधे ग्रहणमाज्यस्य ॥ ५४ ॥

इदं प्रयोजनसूत्रम्। यदि द्रव्योत्सर्गो विधीयते ततः संस्काराणामकर्म स्यात्। कुतः। संस्कारप्रवृत्तेर्यज्ञहेतुत्वात् तत्प्रतिषेधे यज्ञाभावे, किमिति संस्काराः क्रियेरन्। यज्ञकारिता हि ते। यथा प्रयाजाभावे तदर्थमाज्यं न गृह्यते, ग्रहणमाज्यस्य न क्रियते। अप्रयाजास्ता अननुयाजा इति यत्र श्रूयते, तत्र प्रयाजाभावे तदर्थमाज्यं न गृह्यते। एवमिहापि संस्कारा न कर्तव्या इति ॥ ५४ ॥

---

'शेषं संस्थापयति' इति लिङ्गदर्शनमेतदुपरितनाधिकरणव्याख्यानेन शुध्यति। तत्कथमिति। आरण्योत्सर्गसमानश्रुतिकं त्वन्यत्पात्नीवतं कर्म। तत्रैतच्छ्रुतम् 'आज्येन शेषं स्थापयति' इति। तत्र, × परिसमाप्तत्वात्त्वाष्ट्रकर्मणः शेषशब्दोऽनुपपन्नः। तदभावाच्च संस्थापयतिरप्यनुपपन्नार्थ एव धातुः। प्रत्ययस्तु शुद्धोऽवशिष्यते। शेषसंस्थयोरभावात्करणार्थोऽप्यनुपपन्नार्थ एव 'आज्येन' इति। परिशिष्टमाज्येति=। एतयोः संबन्धे कर्तव्यतावचनेन स्पृश्यमानमाज्यमीप्सिततमं भवति, आज्यं कुर्यादिति। न चैतत्केवलाज्योत्पत्तिविधायकम्। आनर्थक्यात्। अतः प्रयोगवचन उपपदान्तराभिलाषी संनिहितेन पर्यग्निकरणवाक्यगतेन पात्नीवतपदेन संबध्यते। तदेवं संजातं पात्नीवतमाज्यं कुर्यादिति। द्रव्यदेवतासंयोगाच्च यागः। स चाऽऽरम्भवान् समाप्तिमांश्चेत्यर्थात्तदङ्गभावेनाव्यभिचारसंस्थाधातुरुपादीयते। निर्वपतिवत्सौर्ये। स पशुयागादल्पेतिकर्तव्यतावांस्तदनन्तरं च क्रियमाणस्तच्छेष इवेति शेषशब्दोऽर्थवान्। तत्संबन्धात्तृतीया युक्तैव। शेषसंस्थोपमा+ युक्ता। यदि पूर्वोऽपि याग एव। अथ द्रव्योत्सर्गस्ततो न युज्यते। तद्वच्चाऽऽरण्येष्वपीति सिद्धम् ॥ ५३ ॥ [ ५४ ॥

---

× लिङ्गशुद्ध्यर्थमुत्तराधिकरणमादौ व्याख्यास्यति—तत्रेत्यादिना। = आज्येति—आज्यप्रातिपदिकमात्रमित्यर्थः। + एवमुत्तराधिकरणविचारं परिसमाप्याधुना पूर्वाधिकरणस्थं लिङ्गदर्शनमनुसंधत्ते—शेषेत्यादिना।

क्रिया वा स्यादवच्छेदादकर्म सर्वहानं स्यात् ॥५५॥

यदा तु कर्मशेषप्रतिषेधपक्षस्तदाऽपि किं न कर्तव्याः संस्कारा इति । नैतदेवम् । क्रिया स्यादवच्छेदपक्षे । यागो हि तदा भवति । तस्मात्सर्वे यागपदार्थाः कर्तव्याः । यदि न यागो भवेत्ततोऽकर्म । संस्काराणां सर्वहानं स्यात् । यागस्तु तदा भवति । तस्मात्कर्मशेषप्रतिषेधपक्षे सर्वं कर्तव्यमिति ॥ ५५ ॥

( आज्येन शेषं संस्थापयतीति वाक्ये कर्मान्तरविधानाधिकरणम् ॥ १४ ॥ )

[ १४ ] आज्यसंस्था प्रतिनिधिः स्याद्द्रव्योत्सर्गात् ॥ ५६ ॥ पू०

पर्यग्निकृतं पात्नीवतमुत्सृजति, इति प्रकृत्य श्रूयते । आज्येन शेषं संस्थापयतीति । तत्र संदेहः किमाज्यं पूर्वस्मिन् प्रतिनिधीभूतम्, अथवाऽऽज्यद्रव्यकं पूर्वस्मात्कर्मान्तरं विधीयत इति । किं प्राप्तम् । प्रतिनिधिरिति । कुतः । पात्नीवतमिति द्रव्यमुच्यते । उत्सृजतीति तत्रैवोत्सर्गः श्रूयते । शेषमित्युपयुक्तेतरद्विद्यमानं गम्यते । तत्, आज्येन संस्थापयतीति पशोः कार्यं आज्यं श्रुतं भवतीति । ननु पूर्वकर्म परिसमाप्तमित्युक्तम् । अत्रोच्यते । द्रव्योत्सर्गवचने प्रत्यक्षे, शेषशब्दे वाऽपरिहृते पुनरसमाप्तं पूर्वकर्मेत्याङ्क्यते । तस्मात्प्रतिनिधीयत आज्यमित्याशङ्कामहे । संस्थापयतीति चापूर्वे नोपपद्यते ॥५६॥

इतश्चाऽऽशङ्कामहे–

समाप्तिवचनात् ॥ ५७ ॥

समाप्तिवचनमिदं भवति, संस्थापयतीति । तेन मन्यामहे, यत्पूर्वं पशुनाऽऽरब्धं तदुत्सृष्टे पशावाज्येन परिसमाप्यत इति । अपूर्वस्यात्र कर्मण उच्यमानस्याऽऽरम्भ एव वक्तव्यो भवति । यतस्त्वनभिधायाऽऽरम्भं परिसमाप्तिरेवोच्यते, ततोऽवगच्छामः पूर्वस्यैव परिसमाप्तिः, नापूर्वकर्म चोद्यत इति ॥ ५७ ॥

---

॥ ५५ ॥ ५६ ॥ ५७ ॥

———

चोदना वा कर्मोत्सर्गादन्यैः स्यादविशिष्टत्वात्
॥ ५८ ॥ सि०

कर्मान्तरचोदना वा। कुतः। पूर्वस्य कर्मणः परिसमाप्तत्वात्। ननूक्तं द्रव्योत्सर्गे शेषवचने वाऽपरिहृते पूर्वकर्मणोऽसमाप्तिराशङ्किता भवति। अत्रोच्यते । इदं द्वयमपि परिहियते। संस्थापयतीति प्रकृतेन पात्नीवतशब्देन संबध्यते। तत्रायमर्थः। पात्नीवतं संस्थापयतीति। स एष यागो विधीयते । संपूर्वश्च स्थापयतिः प्रयुज्यते। अवश्यं कश्चिद्धातुः पूर्वो× भावनावचनस्य प्रयोक्तव्य इति, तत्राविरुद्धो भावनायामुच्यमानायामर्थप्राप्तः संस्थापयतिरालभतिरिव प्रयुज्यते शेषशब्दैश्चैवं सादृश्यात्प्रयुज्यते। द्रव्योत्सर्गश्चाविरुद्ध एव याग उच्यमाने। तस्माद्यथाऽन्ये निर्वपत्यादयः कर्मान्तरविधाने भवन्ति, एवं तैरविशिष्टत्वात्संस्थापयतिरपि भवितुमर्हतीति ॥ ५८ ॥

अनिज्यां च वनस्पतेः प्रसिद्धां तेन दर्शयति ॥ ५९ ॥

प्रसिद्धां वनस्पतेरनिज्यामत एव दर्शयति=। कथम्। यत्त्वष्टारं च वनस्पतिमावाहयसि। अथ वैतौ यक्ष्यसि। त्वाष्ट्री नवमी प्रयाजेज्या, वानस्पत्या दशमी। अत्रैवैताविष्टौ विद्यात्, इत्यङ्गान्तरेणानुग्रहं ब्रुवन् वनस्पतीज्याया अभावं दर्शयति। शेषपरिसमाप्तौ सत्यां, वनस्पतिं जुहोतीति वनस्पतीज्या क्रियते। अथ परिसमाप्तं पूर्वं कर्म, ततो लुप्ता स्यात्। तत्राभावदर्शनमुपपद्यते। तस्मात्पूर्वकर्म परिसमाप्तम्। इदमपि कर्मान्तरमिति ॥ ५९ ॥

संस्था तद्देवतत्वात्स्यात् ॥ ६० ॥

अथ यदुक्तं, संस्थापयतीति चापूर्वे नोपपद्यत इति। तत्परिहर्तव्यम्। अत्रोच्यते। असंस्थायां संस्थावचनमेतत्--तदपि पूर्वं पात्नीवतमिति समानदेवतत्वात्समाप्तिसादृश्यं ज्ञायते। तत्र तत्पात्नवितमा-

॥ ५८ ॥ ५९ ॥

---

× संपूर्वो भाववचनश्च—पा०। = पठति—पा०।

रब्धामिह परिसमाप्तामिति+। स एष सादृश्यात्संस्थापयतीति शब्दोऽवकल्पत इति ॥ ६० ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये नवमस्याध्यायस्य चतुर्थः पादः ॥

संपूर्णश्च नवमोऽध्यायः ॥

॥ ६० ॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां नवमाध्यायस्य चतुर्थः पादः ॥

समाप्तश्च नवमोऽध्यायः ॥

+ परिसमाप्तामिति, सादृश्यात्स-पा०।

अथ दशमेऽध्याये प्रथमः पादः ।

( विकृतौ लुप्तार्थकानां प्राकृतानामङ्गानां बाधाधिकरणम् ॥ १ ॥ )

[ १ ] विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥ पू०

ऊहो वृत्तः । बाधाभ्युच्चयमिदानीं वर्तयिष्यामः । बाधो नाम यदेवेदमिति निश्चितं विज्ञानं कारणान्तरेण मिथ्येति कल्प्यते = । तथा, अभ्युच्चयो यदिदमिह भवतीति विज्ञातेऽपरमपि भवतीति विज्ञानम् । तत्रायमर्थः प्रथमं परीक्ष्यते । किं सर्वं प्राकृतं विकृतौ कर्तव्यमुत किंचिद्बाध्यत इति । किं तावत्प्राप्तम् । विधेः प्राकृतस्य प्रकरणान्तरे विकृतौ यतो भवत्यविशेषेणातिदेशः, अतो यच्च यावच्च प्राकृतं धर्मजातं तत्सर्वं विकृतौ कर्तव्यं, यदप्यर्थलुप्तम् । कुतः वचनेन हीदं सर्वं प्राप्यते । न च वचनस्यातिभारोऽस्ति प्रापयतः । कथं वचनमिति गम्यते । सर्वास्वेव वैकृतीषु देशनासु प्राकृतं धर्मजातमपेक्ष्यते वाक्यशेषत्वेन । तद्यथैव प्राकृत्यां देशनायामनुपज्यते, एवं वैकृत्यामपि । न कश्चिद्विशेषोऽस्ति । तत्र यथा, कृष्णलानां पाकोऽप्राकृतार्थोऽपि वचनप्रामाण्यात्क्रियते, एवमवहन्त्याद्यप्राकृतार्थमपि सर्वं कर्तव्यमिति ॥ १ ॥

अपि वाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत
तादर्थ्यात् ॥ २ ॥ सि०

अपि वेति पक्षव्यावृत्तिः । नैतदस्ति । सर्वं प्राकृतं विकृतौ कर्त-

---

सप्तमेनातिदेशसत्ता व्याख्याता । दशमेदानीं किमतिदिश्यत इति व्याख्यायते । यत्प्रकृतौ विद्यते तदतिदिश्यते । तस्यां च शास्त्रपदार्थोपकारा विद्यन्ते । अतस्तेऽतिदिश्यन्ते । तस्माल्लुप्तार्थमपि प्रवर्तते ॥ १ ॥

---

अर्थलुप्तं न प्रवर्तते । कथंभावोऽयं लौकिको वैदिकश्चोपकारमेवापेक्षते । उपकारद्वारेणोपकारकप्रवृत्तिः । तस्माल्लुप्तार्थस्य निवृत्तिः ।

---

= कथ्यते–पा० । * उपकारमपेक्षते–पा० ।

व्यमिति । क्वचिदाभिधानसंस्कारद्रव्यं निवर्तितुमर्हति यल्लुप्तार्थम्। कुत एतत् । अभिधानसंस्कारद्रव्यं हि प्रयोजने सति क्रियते, नाप्रयोजनम् । अन्यस्मै प्रयोजनाय तदाम्नायते, न स्वार्थम् । ननु चोक्तं लुप्तार्थमपि क्रियते, वचनप्रामाण्यात् । यथा कृष्णले पाकः । नेत्याह । नास्ति लुप्तार्थस्य देशकं वचनम् । न वैकृतं कर्म प्राकृतैरङ्गपदार्थैः सहैकवाक्यतां याति नैवं विज्ञायते, यागेन फलं कुर्यात्, कथम् , प्राकृतैरङ्गैरिति । कथं तर्हि । यथा प्राकृतेन यागेन फलं साधितमभूत्तथेति ।

कुत एतत् । यागगतो हि व्यापारविशेषस्तेनापेक्ष्यते, न व्यापारमात्रम् । यागगतश्च व्यापारः प्राकृते यागे प्रयोगवचनेन कल्पितः, संगृहीतश्च विद्यते । स शक्योऽपेक्षितुम् । स चाऽऽकाङ्क्षितो निराकाङ्क्षं* शक्नोति कर्तुमिति । अङ्गेष्वप्यपेक्ष्यमाणेषु न यागगतो दिकृतौ व्यापारविशेषः कल्प्यः स्यात् । इतरथा लक्षणा स्यात् । यथा, दण्डेन युध्यत इति वचने न दण्डिरूपं शब्देनाभिहितम् । यदि तु तेन लक्षितेन प्रयोजनं स्यात् , शक्यते तेन लक्षयितुम् । एवमिहाप्यङ्गवत्त्वं यागगतो विशेषो नाङ्गेष्वपेक्ष्यमाणेषु शब्दाभिहितो भवति । लक्षणया तु कल्प्यते । लक्षणायां च शब्दो बाध्येत ।

अथ शब्दो मा बाधीति यागगतो विशेषो नैवापेक्ष्येत, अङ्गान्येवापेक्ष्येरन् । ततः, कथमिति – इतिकर्तव्यताविशेषं प्रति वैकृतस्य कर्मणश्चोदकशब्दोऽनिवृत्ताकाङ्क्ष एवावतिष्ठेत । अङ्गैरपि

---

ननूक्तं प्रकृतौ शास्त्रपदार्थोपकारा विद्यन्त इति । तत्र कथमुपकारोऽतिदिश्यते। उच्यते। सौर्य उपमानेनाऽऽग्नेयविध्यन्तं×+ गृह्णाति आग्नेये चोपकारा अनन्तराः । व्यवहिताः पदार्थाः । व्यवहिततराणि शास्त्राणि । अतः कथंभावोऽनन्तरानुपकारान् प्रत्याति । तांश्च गृह्णाति । पदार्था उपकारैर्व्यवहिताः । न चापेक्षिताः । ननु प्रकृतौ पदार्था एवान्तराः, शाब्दत्वात् । प्रथमं ते गृह्यन्ते ।

---

* निराकाङ्क्षं च–पा० । × उपमानेनेति–तादृश्यकल्पितातिदेशेनेत्यर्थः । + आग्नेयविध्यन्तमिति–आग्नेयाङ्गकलापमित्यर्थः ।

चापरेतिकर्तव्यताऽऽकाङ्क्षेत । गम्यमाना च प्राकृतयागेतिकर्तव्यतोत्सृज्येत । प्राकृतानां चाङ्गानां प्रकरणेऽर्थवतां दुर्लभो वैकृतेन कर्मणैकवाक्यभावोऽप्युपगम्येत । सर्वं चैतदन्याय्यम् । तस्मादेवमभिसंबन्धः क्रियते । यथा प्राकृतेन यागेन फलं साध्यते, तथैवैतेनापीति । किमतो यद्येवम् । एतदतो भवति । प्राकृतान्यङ्गानि यस्मै प्रयोजनाय प्रकृतौ भवन्ति, नासति तस्मिन् प्रयोजने विकृतौ चोदितानि भवन्ति । तस्माल्लुप्तप्राकृतप्रयोजनं न चोदकश्चोदयतीति ॥ २ ॥

तेषामप्रत्यक्षशिष्टत्वात् * ॥ ३ ॥

अथ यदुक्तं, यथा कृष्णलेषु लुप्तप्राकृतप्रयोजनोऽपि पाको वचनप्रामाण्यात्क्रियते, एवमन्यदपि क्रियेतेति । तन्न । न हि कृष्णलेषु पाकश्चोदकेन प्राप्नोति । प्रत्यक्षं हि तत्र वचनम्, घृते श्रपयतीति । न तत्प्राकृतप्रयोजनं पाकमाह । तत्र वचनप्रामाण्याददृष्टार्थः पाकः । यदि च तत्र प्रत्यक्षवचनं नाभविष्यत्, तेषामप्रत्यक्षशिष्टत्वात्पाकोऽपि नाभविष्यदेव । तस्मादनुपवर्णनं पाकवदिति ।

किं भवति प्रयोजनम् । कतरद्वा वैकृतमुदाह्रियत इति । क्वचिच्छ्रूयते, स्वयं= दितं बर्हिर्भवतीति । तत्र प्राकृतं द्रव्यं निवर्तते । स्वयं कृता वेदिर्भवतीति । उद्धननखननपरिलेखनानि निवर्तन्ते । स्वयं शीर्णा शाखा भवतीति, असिद्रव्यं निवर्तते । मन्त्राश्चैतेषु निवर्तन्ते ॥ ३ ॥

( अथवा—कृष्णलवरावघातबाधाधिकरणम् ॥ १ ॥ )

एवं वा -

---

पश्चात्तूपकाराः कल्पिताः । विकृतावपि तथैव युक्तमिति । सत्यम् । प्रकृतौ पदार्था गृह्यन्ते, न तु पदार्थापेक्षया । किंतूपकारापेक्षया । स एष कथंभावः श्रुत्योपकारान् गृह्णाति, लक्षणया पदार्थान् । श्रुतिश्च लक्षणाया गरीयसी ॥ २ ॥ [ ३ ]

---

* 'तेषामप्रत्यक्षविशिष्टत्वात्' इति मुद्रितपुस्तकेषु पाठः । = स्वयं कृतं—पा० ।

[ १ ] विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥ पू०

अस्ति प्राजापत्यश्चरुः प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्काम इति । तत्रैतद्विशिष्टमुदाहरणमङ्गीकृत्यैतदेव सर्वं चिन्त्यते । किं कृष्णलेष्ववहन्तिः कर्तव्यो नेति । विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यादिति पूर्वः पक्षः । कर्तव्यः, यथा तेषामेव पाक इति ॥ १ ॥

अपि वाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत
तादर्थ्यात् ॥ २ ॥ सि०

इति सिद्धान्तः, न कर्तव्य इति ॥ २ ॥

तेषामप्रत्यक्षशिष्टत्वात् ॥ ३ ॥

इत्युपवर्णनापरिहारः ॥ ३ ॥

( अथवा—वैश्वदेवीयदेवतावाहनकाले विष्णोरुरुक्रमस्याऽऽवाहनानुष्ठानाधिकरणम् ॥ १ ॥ )

एवं वा—

विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥ पू०

वैश्वदेवं चरुं निर्वपेद्भ्रातृव्यवान् । तं बर्हिषदं कृत्वा शम्यया स्फ्येन व्यूहेत्, इदमहममुं चामुं च व्यूहामीति । यं द्विष्यात्तं ध्यायेत् । यदघोऽवमृद्येत्, यच्च स्फ्य आश्लिष्येत्, तद्विष्णव उरुक्रमायावद्येदिति । तत्र संशयः । किं विष्णुरुरुक्रम आवाहयितव्य उत नेति । किं प्राप्तम् । विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ।

आवाहयितव्यः । ननु स्फ्ये कदाचिन्नाऽऽश्लिष्येदपि, न वाऽधोऽवमृद्येत । तत्राऽऽवाहनं कृतमनर्थकं स्यात् । न च वचनबलादाश्लेषयितव्यमवमर्दयितव्यं वा । न ह्युपादेयत्वेनाऽऽश्लिष्टमवमृदितं वा श्रूयते । न च विष्णोरुरुक्रमस्य यागोऽर्थकर्म । किं तर्हि । आश्लेषणेनावमर्दनेन च लक्षितमनेन प्रकारेणाऽऽहवनीये प्रतिपाद्यते । तथा हि दृष्टमपनयने तस्य प्रयोजनं भवति स्फ्यादिसंशोधनम् । इतरथा हि यागाददृष्टं कल्प्येत ।

ननु यागाददृष्टमवश्यं कल्पनीयम् । सत्यं कल्पनीयम् । द्रव्यप्रतिपादनद्वारं तत् । अत्रोच्यते । लुप्तार्थमपि कर्तव्यम् । यथा कृष्णले चरौ पाकः । अपि च, कदाचिद्वाश्लिष्येत्, अधश्चावमृद्येत । तत्रान्तरित आवाहने वैगुण्यमापद्येत । तत्राप्रमाद्याद्भिरावाहयितव्या देवता, यदि स्फ्य आश्लेक्ष्यते, अधश्चावमर्दिष्यते । नाऽऽवाहनमङ्गमन्तरेष्यते । स्वकाले ह्यावाहनेन देवता स्मर्यमाणा साध्वी भवतीति, न स्वकालोत्तरकाले । तत्र ह्यर्थप्राप्तममन्त्रकं स्मरणम् ।

अथ स्फ्येनोपश्लेक्ष्यते, न वाऽधोऽवमर्दिष्यते तदा कृतेऽप्यावाहने न किंचिद्दुष्यति । नैवं मन्तव्यम् । यथा राजा, अमात्यो वा, ब्राह्मणो वा परिचरितुं निमन्त्रित आहूतोऽपरिचर्यमाणोऽवमानितमात्मानं मन्यमानोऽपचरिष्यतीत्याशङ्क्यते । एवं देवताऽपीति । न तत्र देवताऽऽहूयते। आहूता सती हविरुपयोक्ष्यते, तप्स्यति च । तृप्ता प्रसेत्स्यति । प्रसन्ना सती फलेन संयोक्ष्यतीति । तदेतन्नवमे सिद्धम् । तस्मान्न दोष आवाहितायामनिज्यमानायाम् ॥ १ ॥

अपि वाऽभिदानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥ सि०

अपि वेति पक्षव्यावृत्तिः । एषोऽभिधानसंस्कारो निवर्तते । कुतः । अभिधानसंस्कारो द्रव्यं वा, सति प्रयोजने क्रियते, नान्यथा । तद्वर्णितम् । यदप्युक्तं, कदाचित् श्लिष्येत, अवमृद्येत वा । तत्राऽऽवाहनं नान्तरेष्यत इति । नैष दोषः । अन्तरितमेतदनन्तरितेनैव तुल्यम् । यदा, आवाहनस्य कालो न तदोरुक्रमयागस्य निमित्तमापतितम् । आपतिते हि निमित्ते तस्य प्रयोगो भविष्यति । न ह्यनाश्लिष्टम्, अनवमृदितं वा तत्र प्रतिपादयितव्यम् । न चाऽऽरब्धे प्रयोगे कृतमुपकारकं भवति । तस्माद्विष्णुरुरुक्रमो नाऽऽवाहयितव्य इति ॥ २ ॥

तेषामप्रत्यक्षशिष्टत्वात् ॥ ३ ॥

इत्युपवर्णनापरिहार उक्तः ॥ ३ ॥

( ज्योतिष्टोमाद्यङ्गभूतदक्षिणीयादिविकृतावन्वारम्भणीयाया बाधाधिकरणम् ॥ २ ॥ )

[ २ ] इष्टिरारम्भसंयोगादङ्गभूतान्निवर्तेताऽऽरम्भस्य प्रधानसंयोगात् ॥ ४ ॥ सि०

अस्ति ज्योतिष्टोमः, ज्योतिष्टोमेन स्वर्गकामो यजेतेति । तत्र दर्शपूर्णमासप्रकृतिकानि कर्माणि दीक्षणीयादीनि, आग्नावैष्णवमेकादशकपालं निर्वपेदित्येवमादीनि । अस्ति तु प्रकृतावारम्भणीयेष्टिः, आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमाणः, सरस्वत्यै चरुं, सरस्वते द्वादशकपालम् , अग्नये भगिनेऽष्टाकपालं निर्वपेत्, यः कामयेतान्नाद* स्यामिति । नित्यवदेके भगिनमामनन्ति । तत्र संदेहः । किं दीक्षणीयादिष्वारम्भणीया कर्तव्या, उत नेति । किं प्राप्तम् । सर्वं प्राकृतं विकृतौ कर्तव्यम् । विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्मस्यादिति ।

एवं प्राप्ते, ब्रूमः । इष्टिरारम्भणीया ज्योतिष्टोमाङ्गभूताद्दर्शपूर्णमास प्रकृतिकाद्दीक्षणीयादेः कर्मराशेर्निवर्तते । किं कारणम् । योऽत्राऽऽरम्भः स ज्योतिष्टोमस्य, न दीक्षणीयादेः। कुतः आरम्भो हि प्रथमः पदार्थः स्यात् । प्रथमं वा पुरुषस्य प्रवर्तनम् । यदि प्रथमः पदार्थः, स ऋत्विगानमनं देवयजनजोषणं वा । तदिह ज्योतिष्टोमस्याङ्गं क्रतोरर्थेन कृतं सद्दीक्षणीयादीनामर्थं साधयति, न पुनस्तेषां कर्तव्यम् । लुप्तमेव तत् । तस्मिन् लुप्त आरम्भे तत्सिद्ध्यर्थो धर्म आरम्भणीयाख्यो = लुप्येत । अथ प्रथमप्रवर्तनमारम्भः । औदा-

संकल्पो ज्योतिष्टोमस्यैव, न दीक्षणीयादीनाम् । अथौदासीन्यप्रच्युतिः, साऽपि तस्यैव । अथ प्रथमः पदार्थ आरम्भः, सोऽपि तस्यैव, प्रसङ्गेन दीक्षणीयादीनाम् । नन्वग्न्यन्वाधानं प्रथमः पदार्थो भविष्यति ।

उच्यते । तदपि तस्यैव । प्रसङ्गेन दीक्षणीयादीनाम् । यथा प्रासङ्गिकेषु न+

* भाग्यन्नादः-पा० । = आरम्भणीया-पा० । + न ज्योतिष्मतीति-यथैव 'प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थे हि विधीयते' ( अ० ९ पा० ४ अ० ३ सू० २८ ) इत्यधिकरणे दर्शाद्यर्थं प्रणीतस्याग्नेरग्निहोत्रकाल उद्वाने ज्योतिष्मतीष्टिरूपं प्रायश्चित्तं न भवतीत्युक्तं, तद्वत्प्रकृतेऽपीत्यर्थः ।

सीन्यव्द्ध्यावृत्तिः । पुरुषस्य व्यापृतता । तदा ज्योतिष्टोमं साङ्गं कर्तुमसावौदासीन्याद्व्यावृत्तो ज्यौतिष्टोमिकेन प्रथमेन पदार्थेन । स ततः प्रभृति आ साङ्गज्योतिष्टोमसमाप्तेर्व्यापृत एव न पुनरुदासीनो भवति । यतो व्यावृत्तो भवति । साङ्गज्योतिष्टोमारम्भेणैव प्रवृत्तो दीक्षणीयादिष्विति लुप्यत एवैषामारम्भः । तस्मिन् लुप्ते, आरम्भणीयापदार्थ आरम्भसिद्ध्यर्थो लुप्येत ।

नन्वङ्गभूतस्य दीक्षणीयादेरन्य आरम्भो जातः । नेत्याह । ऋत्विगानमनं देवयजनजोषणादि वा, प्रथमं पुरुषस्य प्रवर्तनप्रारम्भः । प्रथमं प्रवृत्तोऽसौ ज्योतिष्टोमार्थमेव अथायमन्यः प्रथमः पदार्थो दीक्षणीयादेर्जात इत्युच्यते । तथाऽपि न तस्याऽऽरम्भणीया प्रकृतानुक्तेति । तस्मादङ्गभूतात्पदार्थादारम्भणीया निवर्तेत । अपि च दीक्षणीययैव ज्योतिष्टोमे, आरम्भार्थः सिध्यति । एवं हि श्रूयते । आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः, अग्निः सर्वा देवता विष्णुर्यज्ञः, देवताश्चैव× यज्ञं चाऽऽरभते । अग्निः प्रथमो देवतानां विष्णुः परमः, यदाग्नावैष्णवमेकादशकपालं निर्वपति देवताश्चैव यज्ञं चोभयतः परिगृह्यावरुन्ध इति ॥ ४ ॥

---

ज्योतिष्मती, एवमारम्भणीयाऽपि । न च प्रकृतावग्न्यन्वाधानं प्रथमं, पाठेनैव तत्प्रथमम् । पूर्वं क्रियमाणं कर्मान्तरमस्याः प्रथमः पदार्थः प्रणयनम् । तस्य प्रकृतौ नेयमङ्गभावेन दृष्टा । अलुप्तोपकाराश्च पदार्था प्राप्यन्ते । यथा यूपायाञ्जन आज्यसंस्कारा न क्रियन्ते । एवं दीक्षणीयादिष्वारम्भणीया ।

अपि च दीक्षणीययैव ज्योतिष्टोम आरम्भार्थः सिध्यतीति—अयुक्तोऽयं ग्रन्थः । पुरुषसंस्कारद्वारेणोपकरोति दीक्षणीया । नाऽऽरम्भार्थतया न चास्या वचनमस्त्यारम्भणीया कार्ये वर्तेत दीक्षणीयेति । दीक्षासंजननमस्या उत्पत्तिवाक्येनैवावगम्यते । तस्मादाग्नावैष्णवस्तुत्यर्थोऽयमर्थवादः ॥ ४ ॥

———

× देवताश्चैवं—पा० ।

( राजसूयान्तर्गतानुमत्यादीष्टावन्वारम्भणीयाया बाधाधिकरणम् ॥३॥ )

[ ३ ] प्रधानाच्चान्यसंयुक्तात्सर्वारम्भान्निवर्तेतानङ्गत्वात् ॥ ५ ॥ सि०

अस्ति राजसूयाः, राजसूयेन स्वाराज्यकामो यजेतेति । तत्रेष्टिपशुसोमदर्विहोमाः प्रधानभूताः । ऐष्टिकेष्वनुमत्यादिषु संशयः । किमारम्भणीया कर्तव्या, नेति । किं प्राप्तम् । कर्तव्या । विधेः कारणान्तरेऽतिदेशात्सर्वकर्म स्यादिति ।

एवं प्राप्ते, ब्रूमः । प्रधानाच्चापरप्रधानसंयुक्तान्निवर्तितुमर्हति । कुतः । सर्वारम्भार्थेन तत्र ज्योतिष्टोमः समाम्नायते । अग्निष्टोमं प्रथममाहरतीति । स प्रकृतानां * प्रधानानामेकैकस्य तन्त्रेण समाम्नातो भवितुमर्हति । एकैकस्य ह्यत्र प्रधानस्य तन्त्रेण साधारणं प्रकरणम् । तेनानुमत्यादीनामारम्भार्थे सिद्धे, नाऽऽरम्भणीया भवितुमर्हतीति ॥ ५ ॥

( आरम्भणीययामारम्भणीयाया अननुष्ठानाधिकरणम् ॥ ४ ॥ )

[ ४ ] तस्यां तु स्यात्प्रयाजवत् ॥ ६ ॥ पू०

अस्त्यारम्भणीयेष्टिः, आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमाणः, सरस्वत्यै चरुम्, सरस्वते द्वादशकपालम्, अग्नये भगिनेऽष्टाकपालं यः कामयेत भगवन्नादः स्यामिति । नित्यवदेके भगिनमामनन्ति । तत्रैषोऽर्थः सांशयिकः । किमारम्भणीयाया-

---

सर्वारम्भार्थेन तत्र ज्योतिष्टोमः समाम्नायत इत्युक्तम् । कथम् । ज्योतिष्टोमः श्रुत्या फलेन संबध्यते । न चोभयार्थता युक्ता, विना वचनेन । अनुमानाद्यपि कार्यापत्तिप्रमाणं न विद्यते । तस्मादयुक्तं प्रत्याम्नानाभिधानम् । अर्थलोप एव वक्तव्यः ।

ननु ऋत्विग्वरणं सर्वप्रधानार्थम् । तत्र प्रधानत्वादिष्टीनामारम्भणीया भविष्यति । उच्यते । तथाऽपि त्वप्राकृतकार्यत्वान्निवृत्तिः । यथा यूपावटबर्हिषि प्रोक्षणस्य निवृत्तिः ॥ ५ ॥

---

* प्राकृतानां–पा० ।

मारम्भणीया कर्तव्या, उत नेति । किं प्राप्तम् । तस्यां तु स्यात्प्रयाजवत् । संशयनिवृत्त्यर्थं तुशब्दः । न खलु संशयोऽस्ति । आरम्भणीयायामारम्भणीया भवितुमर्हति । कुतः । विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यादिति । यथा, प्रयाजा एवमारम्भणीयाऽपीति । आह । ननु तस्या अप्यर्थेऽन्याऽऽरम्भणीया, तस्या अप्यर्थेऽन्याऽऽरम्भणीया, तस्या अप्यर्थेऽन्येत्येवमारम्भणीया न व्यवतिष्ठेत । व्यवस्थितेन च शास्त्रार्थेन भवितव्यम् । अत्रोच्यते । सर्वास्वेवानवस्थासु सामर्थ्येन व्यवस्था भविष्यति ॥ ६ ॥

न वाऽङ्गभूतत्वात् ॥ ७ ॥ सि०

न वेति पक्षः प्रतिषिध्यते । न स्यादारम्भणीयायामारम्भणीयेति । कुतः । अङ्गभूता हि सा दर्शपूर्णमासयोः । अङ्गभूतस्य च प्रधानारम्भेणैव सिद्धिरित्युक्तम् । आरम्भणीयाप्रवृत्तेन दर्शपूर्णमासौ कर्तव्यौ । अतः प्रकृतिवदारम्भणीयाऽप्यारम्भणीयाप्रवृत्तेन कर्तव्येति । तस्मात्किलाऽऽरम्भणीयायामारम्भणीया स्यात् । तच्च नैवम् । अकृत्वाऽप्यन्यामारम्भणीयामारम्भणीयां कुर्वन्नारम्भणीयाप्रवृत्त एव करोतीति गम्यते । तस्मान्नारम्भणीयायामारम्भणीया स्यात् । अपि च जलबुद्बुदवदव्यवस्थाऽऽरम्भणीयायां वाक्येन गम्यमाना सामर्थ्येन बाध्येत । अस्मत्पक्षे नाव्यवस्था, न बाधः । तस्मान्नाऽऽरम्भणीयायामारम्भणीयेति ॥ ७ ॥

---

समानेऽहनीति× सामर्थ्यम् ॥ ६ ॥

---

अङ्गभूता हि सा दर्शपूर्णमासयोः । अङ्गभूतस्य च प्रधानारम्भेणैव सिद्धिः । यद्येवं दीक्षणीयादिवन्मन्यसे । तन्न । कस्मात् । दर्शपूर्णमासप्रयोगाद्बहिरारम्भणीया क्रियते । न तु तया दीक्षणीयादि । तस्मादयुक्तमेतत् । अङ्गं चेयं कथंभावपरिपूर्णारम्भणीया विधीयते । सा च दर्शपूर्णमासधर्मानाकाङ्क्षति तौ च प्राग्विधानादारम्भणीयाशून्यौ ॥ ७ ॥

---

× समानं हन्त सामर्थ्यम्—इति मुद्रितपुस्तके पाठः ।

एकवाक्यत्वाच्च ॥ ८ ॥

इतश्च पश्यामः, एवमेवेति । कुतः । एकं हीदं वाक्यं, यदाऽऽरम्भणीयां विदधाति, तदा नासौ दर्शपूर्णमासयोर्विहिता । तामविहितामिव दर्शपूर्णमासयोर्विदध्यात् । विहितामिव चाऽऽरम्भणीयायामतिदिशेत् । नैतत्कर्तुमलं भवति सकृदुच्चरितम् । तस्मादन्यारम्भणीयायामारम्भणीया नास्ति ॥ ८ ॥

( खलेवाल्यां यूपाहुतेरननुष्ठानाधिकरणम् ॥ ५ ॥ )

[ ५ ] कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्तेत तादर्थ्यं श्रुतिसंयोगात् ॥ ९ ॥ सि०

तस्मिन्नेव ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभत इति । तत्रेदमाम्नायते, यूपमच्छेष्यता होतव्यम् । न हि दीक्षितस्याग्नौ जुहोति । आज्यं चारणिं चाऽऽदाय यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोतीति । साद्यस्क्रे श्रूयते, खलेवाली यूपो भवतीति । तत्रैषोऽर्थः सांशयिकः। किं साद्यस्क्रे खलेवाल्यां यूपाहुतिः कर्तव्या, नेति । किं प्राप्तम् । कर्तव्या । विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यादिति ।

एवं प्राप्ते, ब्रूमः । कर्म चैतद्द्रव्यसंयोगार्थं–यूप एवमादिभिः संस्कारैर्भविष्यतीति क्रियते । यूपं प्राप्तुमेष्यत एतच्छ्रूयते । तेनास्य संस्कारस्य श्रुतिसंयोगेन यूपार्थता । अच्छशब्दो हि, आप्तुमित्यस्यार्थे वर्तते । न चात्र यूपेन प्रयोजनम् । अयूपे हि खलेवाल्यां पशुर्बध्यते । तस्मात्तत्र यूपकरणार्था यूपाहुत्यादयः संस्कारा अर्थलोपान्निवर्तितुमर्हन्तीति । तस्मान्नास्ति खलेवाल्यां यूपाहुतिरिति ॥ ९ ॥

[ साद्यस्क्रे स्थाण्वाहुतेरननुष्ठानाधिकरणम् ॥ ६ ॥ ]

[ ६ ] स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत ॥ १० ॥ पू०

तस्मिन्नेवाग्नीषोमीये पशौ श्रूयते, स्थाणौ स्थाण्वाहुतिं जुहोतीति ।

---

॥ ८ ॥ ९ ॥

ततः साद्यस्क्रेऽयमर्थः सांशयिको भवति । किं साद्यस्क्रे स्थाण्वाहुतिः कर्तव्या, नेति । तत्रैतत्तावन्नः परीक्ष्यम् । किमाराडुपकारकं कर्म स्थाण्वाहुतिः, उत यूपसंस्कार इति । यद्याराडुपकारकं कर्म तदा कर्तव्या । अथ यूपसंस्कारः, निवर्तेतेति । कथमाराडुपकारकं कर्म स्यात् , कथं वा यूपसंस्कार इति । यद्येवमभिसंबन्धः क्रियते, यूपमच्छेष्यता स्थाण्वाहुतिः कर्तव्येति, ततो यूपमच्छेष्यते प्रकृतेन न संबध्येत, तदाऽऽराडुपकारकं कर्मेति । किं तावत्प्राप्तम् । आराडुपकारकं कर्मेति । एतद्विज्ञातं कर्मणां प्रयोजनम् । भूतं हि तावद्भव्यार्थमिति ।

अपि च निवृत्तप्रयोजनेन स्थाणुना संबध्यमानाऽऽहुतिः किमिव यूपस्योपकरिष्यति । संबद्धे हि क्रियमाणं संबन्धिन्युपकुर्यात् । व्यावृत्तो हि यूपात्स्थाणुः । अपि च तन्त्रमेकादशिन्यां यूपाहुतिर्भविष्यति, यद्यराडुपकारकं कर्म स्यात् । तथा हि नाश्रुतोऽभ्यासः कल्पयिष्यते । अपि च, अविशिष्टेन वाक्येन स्थाणौ स्थाण्वाहुतिः श्रूयते । सा च प्रकरणेन यूपव्रश्चनस्थाणुविशेषे कल्प्येत । तस्मादाराडुपकारकं कर्म स्थाण्वाहुतिः, साद्यस्क्रे च कर्तव्या चोदकानुग्रहायेति । एवं प्राप्तम् ॥ १० ॥

एवं प्राप्ते, ब्रूमः—

अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत ॥ ११ ॥ सि०

अपि वेति पक्षव्यावृत्तिः । यूपसंस्कारः प्रतीयेत। कुतः । प्रकरणविशेषाद्यूपमच्छेष्यतः स्थाण्वाहुतिर्विधीयत इति गम्यते । या हि मन्यतेऽविशिष्टेन वाक्येन स्थाणुदेशमात्रे विधीयत इति । फलं तस्य कल्पनीयं भवति । योऽपि मन्यते प्रकरणादाराडुपकारकमग्नीषोमीयस्य भवतीति । तस्यापि प्रकरणसामान्यं प्रकरणविशेषेण बाध्येत । कर्मशेषभूतश्च यूपः, प्रयोजनवत्त्वात्तेन संबध्यमानाऽदृष्टार्थाऽपि आराडुपकारिका सती कल्प्यप्रयोजना स्यात् । अतः प्रसिद्धिर्न्यायेन बा-

॥ १० ॥

ध्येत। यथा, अश्वकर्ण इति। निवृत्तप्रयोजने चापि स्थाणौ यूपाद्व्यावृत्ते च यूपीयोऽसावीति कृत्वा तत्र क्रियमाणा यूपाहुतिर्यूपसंबद्धा कृता भवतीति तदाव्रश्चने क्रियते। यथा शिरसा धारितायाः स्रजः शिरसोऽवतारिताया देवदत्तीयाऽसावीति कृत्वा शुचिदेशनिधानादिः संस्कार एषितव्यो भवति। एवं स्थाण्वाहुतिरपि। एकादशिन्यां चान्तिकदेशस्याविवक्षितत्वात्तन्त्रं यूपाहुतिर्भविष्यत्येव तस्मात्संस्कारपक्ष एव ज्यायान्॥ ११॥

समाख्यानं च तद्वत्॥ १२॥

स्थाण्वाहुतिरिति च समाख्यानं स्थाणुप्रधानाया इवाऽऽहुतेर्भवतीति। कथम्। षष्ठीसमासोऽयम्। कर्मणि षष्ठी। ईप्सिततमं च कर्म। सप्तमीसमासो लक्षणापेत इति कृत्वा नाऽऽदर्तव्यो भवति॥ १२॥

मन्त्रवर्णश्च तद्वत्॥ १३॥

इतश्च पश्यामः संस्कारकर्मेति। यतो मन्त्रवर्णोऽपि तद्वद्भवति। अतस्त्वं देववनस्पते शतवल्शो विरोह, इति। यस्त्वं मया वृक्त*, सोऽत आव्रश्चनाद्बहुप्रकारो विरोहेति यूपमिवाऽऽद्रियमाणो मन्त्रवर्णो भवति। तस्मादपि संस्कारकर्म खलेवाल्यां न कर्तव्यमिति॥ १३॥

॥ ११॥

---

'स्थाण्वाहुतिः' इति षष्ठीसमासोऽयं, सप्तमीसमासानुपपत्तेः। कथम्। सप्तम्यन्तस्य शौण्डादिभिः सह समासः। ननु, संज्ञायामिति समासो भविष्यति उच्यते। तत्रालुक् प्राप्नोति। यथा, अरण्येतिलका इति। नैतदेवम्। हलदन्तात्स उच्यते। उकारान्तं चेदम्। तस्माल्लुगेव। एवं तर्ह्यन्यथा नियमः। अर्थप्रयुक्तो हि समासः। सप्तमीसमासेऽधिकरणप्रधानो निर्देशः। तत्राऽऽहुतिरारादुपकारिका। षष्ठीसमासे संबन्धः प्रधानम्। तत्राऽऽहुतिः संस्कारिका। आरादुपकारकाच्च सामवायिकं गरीयः। ननूभयथाप्यदृष्टार्था। किमत्र गरीयस्त्वम्। उच्यते। सत्यमदृष्टार्था। किंतु×, समवायसंबन्धः क्लृप्तः। आरादुपकारकत्वे कल्प्यः संबन्धः। तत्र प्रकरणेनैकवाक्यता॥ १२॥ [१३॥]

---

* वृक्णः—पा०। × किंतु सामवायिकत्वे संबन्धः क्लृप्त इति पाठ उचित इति भाति।

( उत्तमप्रयाजस्य संस्कारकर्मत्वाधिकरणम् ॥ ७ ॥ )

[ ७ ] प्रयाजे च तन्न्यायत्वात् ॥ १४ ॥ सि०

दर्शपूर्णमासयोराम्नात उत्तमः प्रयाजः, स्वाहाकारं यजतीति । तत्र संशयः । किमुत्तमः प्रयाज आराढुपकारकं कर्म, उत संस्कारकर्मेति । तत एतत्तावत्परीक्ष्यते । किमाज्यभागादिषु या देवता यष्टव्यास्ता एवात्र देवताः, उतान्यास्ताभ्यो देवताभ्य इति । कथमन्या देवताः, कथं वा प्रकृताः स्युरिति । यदि स्वाहाकारं यजतीति देवताविधानं, ततोऽन्या प्रकृताभ्यो देवता । अथ, ये यजामहे स्वाहाऽग्निमिति निगदेन मान्त्रवर्णिको देवताविधिस्ततः प्रकृता देवता इति ।

किं प्राप्तम् । आराढुपकारकं कर्मेति । तदेतद्वर्ण्यते । अन्या देवता, स्वाहाकारं यजतीत्यनेन विधीयते । एवं वचनप्राप्ता भविष्यति । इतरथा मान्त्रवर्णिकी कल्पयितव्या भवेत् । नन्वन्याऽन्यादिशब्दैर्न शक्यते वदितुम् । तत्रायं, ये यजामहे स्वाहाऽग्निमिति मन्त्रवर्णोऽपि विप्रतिषिध्येत । अत्रोच्यते । नैतद्विप्रतिषिद्धम् । अनेकस्याप्येकः शब्दो भवति वाचकः । तद्यथा, मातेति मातरमपि वदति, मातारमपि । माता च परमं दैवतं, समा च पुत्रेष्वित्येतैरुपबध्यमानो जननीवचनोऽवगम्यते । माता समः, क्षिप्रश्चेत्येभिरप्यनुबध्यमानो धान्यस्य मातुर्वाचकः । एवं मन्त्रेऽप्यग्न्यादयः स्वाहाकारदेवताके यागे प्रयुज्यमानास्तद्वाचिनोऽवगम्येरन् । तथा सति प्रज्ञातं यागस्य कार्यमनुगृहीतम्, आराढुपक्रिया । तस्मादाराढुपकारकं कर्मोत्तमः प्रयाज इति ।

---

ननु पूर्वपक्षेऽपि संस्कारकर्मैव । अन्यत्र स्वाहाकारो विहितः । तस्य स्मारको भविष्यति । नारिष्टहोमादिषु । न शब्दपदार्थनिर्देशात् । शब्दो ह्यर्थस्य स्मारको न शब्दस्य । स च स्वाहाकारमन्त्रेणैव चोद्यते । वाचनिकोऽयं देवताविधिः । करणेन मन्त्रेण देवताऽवगम्यते +। यथा 'सूक्तवाकेन प्रस्तरम्' इति । न चायं करणनिर्दिष्टः ।

---

+ देवता गम्यते—पा० ।

एवं प्राप्ते, ब्रूमः । प्रयाजे च तन्न्यायत्वात् । उक्तमधस्तात्स्थाण्वाहुतिः संस्कारकर्मेति, इहापि चशब्देनान्वादिश्यते, उत्तमः प्रयाजः संस्कारकर्मेति । तत* एतत्तावद्वर्णयन्ति । या आज्यभागादिषु देवता यष्टव्यास्ता एवेह देवता इति । कुतः । स्वाहाकारस्य देवतासंयोगाभावात् । तद्धितेन वा देवतासंयोगो विज्ञायते, चतुर्थ्यन्तेन वा । न चेह तद्धितो न चतुर्थी । अतो न देवताविधिः । यागसामानाधिकरण्यं च द्वितीयया गम्यते । तस्माद्यागवचनः स्वाहाकारशब्दो यथा समिदादय इति ।

आह । यदि द्वितीयया संयोगात्तं यागवचनं मन्यसे, आरादुपकारकस्तर्हि यागः । ईप्सिततमे हि द्वितीया विभक्तिर्भवतीति । अत्रोच्यते । एवमेव प्राप्ते वदामः । तन्न्यायत्वादिति । स एव न्याय इह यः स्थाण्वाहुतौ । अपि× वा शेषभूतत्वात्तत्संस्कारः प्रतीयेतेति । शेषभूताश्चाऽऽज्यभागादिष्वग्न्यादयः । तदर्थो यागः सन् प्रयोजनवान् भवति । इतरस्मिन् पक्षे यागो निष्प्रयोजनः स्यात् । तदर्थं देवताभिधानमपि निष्प्रयोजनं स्यात् । सत्यां च देवतासंस्कारशङ्कायां यागप्रयोजनं कल्पयितुं न शक्यते । तथाऽग्न्यादीनां संभवति स्वार्थेऽदृष्टा स्वाहाकारवचनता न शक्या कल्पयितुम् । तस्माद्देवतासंस्कारार्थमुत्तमः प्रयाजः । देवतास्मरणसंस्कारद्वारं चादृष्टमपि तस्माद्यागाद्भवतीति ॥ १४ ॥

लिङ्गदर्शनाच्च ॥ १५ ॥

लिङ्गमप्यस्मिन्नर्थे भवति । किं लिङ्गम् । संप्रतिपन्नदेवताक-

---

ननु चाग्निशब्दः स्वाहाकारं न शक्नोति वक्तुम् । उच्यते । शक्ष्यति, द्व्यर्थत्वान्मातृवदिति । अत्राभिधीयते न हि द्वितीयान्तेन शब्देन देवतोद्दिष्यते=, प्रमाणाभावात् । अपि च स्वाहाकारः शब्दपदार्थको न शक्नोति देवतां वक्तुम् । तस्मान्मान्त्रवर्णिको देवताविधिः । प्रकरणात्क्रमसहितात्करणभावोऽवगम्यते स्मरणं च प्रधानदेवतयाऽपेक्षितम् । अतस्तेनैवांशेन संबध्यते ॥ १४॥ (१५) ॥

---

* तत्र—पा० । × ( अ० १० पा० १ अ० ६ सू० ११ ) । = देवता बोध्यते—पा० ।

श्चातुर्मास्येषूत्तमप्रयाजस्य निगदो दृश्यते । स्वाहाऽग्निं स्वाहा सोमं स्वाहा सवितारं स्वाहा सरस्वतीं स्वाहा पूषणमित्येवंलक्षणकः । स देवतासंस्कार उत्तमः प्रयाजः स्यात् । प्रयोजनं विप्रतिपन्नदेवताकेषु सौर्यादिकर्मसु प्राकृतानि देवतापदानि न निवर्तन्ते पूर्वपक्षे । सिद्धान्ते तु निवर्तन्ते ॥ १५ ॥

[ आग्नेयाज्यभागस्याऽऽरादुपकारकत्वाधिकरणम् ॥ ८ ॥ ]

[ ८ ] तथाऽऽज्यभागाग्निरपीति चेत् ॥ १६ ॥ पू०

दर्शपूर्णमासौ स्तो दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । तत्रेदमाम्नायते । आज्यभागौ यजतीति । इदं चापरं श्रूयते । तौ होचतुः किमावयोस्ततः स्यादिति । यस्यै कस्यैचिद्देवतायै हविर्निर्वपँस्तद्वान् पुरस्तादाज्यस्य यजन्निति । तस्माद्यस्यै कस्यैचिद्देवतायै हविर्निर्वपन्ति ते पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति, तौ न सौम्येऽध्वरे न पशौ, इति । तत्रैतत्संदिह्यते । यदाज्यभागयोरग्नीषोमाविज्येते, किं तत्राग्नियागो देवतासंस्कारार्थ उताऽऽरादुपकारक इति । किं प्राप्तम् । इति चेत्संदेहं पश्यसि, तथा, आज्यभागाग्निरपि स्यात् । यथोत्तमः प्रयाजः । अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेतेति ॥ १६ ॥

व्यपदेशाद्देवतान्तरम् ॥ १७ ॥ सि०

न चैतदस्ति, देवतासंस्कार आज्यभागयोरिति । किं तर्हि । आरादुपक्रिया । कुतः । व्यपदेशादवगम्यते । प्रधानाग्नेर्देवतान्तरमिहेज्यत* इति । कोऽसौ व्यपदेशः । अग्निमग्न आवह, सोममावह, अग्निमावह, इति । कथमस्मिन्नावाहन एतावत्यश्च देवता इज्येरान्निति । एवमावाहनेन देवतास्वव्यामोहार्थं परिगण्यमानासु द्विरग्निशब्देन परिगणनं कृतम् । तद्देवतान्तरेऽवकल्पते । इतरथा हि संख्यावृद्ध्या व्यामुह्येत । गणनं चोभयोरपि पक्षयोस्तुल्यम् । अपि च त्वत्पक्षे सोमव्यवधानाद्गणने क्रमो बाध्येत । अपि च, असकृद्वचनं शब्देनानुब-

॥ १६ ॥ १७ ॥

---

* देवतान्तरमिज्यते–पा० ।

च्यमानमन्यमिव व्यपदिशति। यथा, ब्राह्मण आगतो वृषल आगतो ब्राह्मण आगत इति द्वयोरिव ब्राह्मणयोर्भवति गणनावादः। एवमिहापि द्वयोरिवाग्न्योर्भवति वादः । स एष व्यपदेशो भवति लिङ्गम् ॥ १७ ॥

प्राप्तिस्तु वक्तव्या। सोच्यते–

समत्वाच्च ॥ १८ ॥

इयं प्राप्तिः । समोऽत्र देवतया यागः देवताऽदि श्रुता प्रधानयागे। यागोऽपि वाक्यान्तरे। आज्यभागौ यजतीति । तदिहोभयोर्यागदेवतयोः प्रयोजनवतोर्देवताया यागार्थता न्याय्या। प्रज्ञातं ह्याराद्उपकारकत्वं यागस्येति। न हि देवतां विना यागो भवति। तेन स देवतामाकाङ्क्षति, न तु प्रधानदेवता यागान्तरमाकाङ्क्षति । यच्च येनाऽऽकाङ्क्ष्यते तत्तदर्थं भवति। तस्माद्देवता यागार्था । अपि च, आरादुपकारकैः कर्मभिः साम्यं भवति । कथम्। अभीषू वा एतौ यज्ञस्य यदाघारौ, चक्षुषी वा एतौ यदाज्यभागौ, यत्प्रयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्यस्याभिभूत्यै, इति ॥ १८ ॥

---

आज्यभागो देवतामपेक्षते, ( प्रधानयागो= देवतास्मारकम् । ) तत्र यागो देवताया विना न भवतीति। न तु प्रधानदेवताऽऽज्यभागं स्मारकमपेक्षते। तस्माददृष्टार्थ आज्यभागः। अस्मिन्व्याख्याने* स्वाहाकारोऽप्येवमेवापद्यते । यदि कश्चिद्ब्रूयात्, तस्मिन् मन्त्रे वक्ष्यमाणा देवता विद्यन्ते। तस्मात्तत्संस्कारकोयं, न त्वाज्यभागे। सत्यं विद्यते, निर्वर्त्यांशेनैव यागो गुणभूतां देवतामाकाङ्क्षति। तस्मादाज्यभागस्वाहकारयोस्तुल्यत्वात्कथं स्वाहाकाराधिकरणम्।

उच्यते। यागो हि निर्वृत्तः सन्विपरिवृत्य देवताप्रकाशनद्वारेणैवोपकरोति। तस्याः प्रकाशनमपूर्वेणैवापेक्ष्यते। तदस्य दृष्टमेव प्रयोजनं न त्वाज्यभागेऽपीदृशमेव प्राप्नोति। सत्यं विधानात्तादृशमपूर्वेण× नापेक्षते। आज्यभागाविति च द्विसंख्या श्रूयते। सा च केनचित्समानयोगेन प्रवर्तते। तत्र सोमस्तावदारादुपकारकः । यद्यपरोऽप्यारादुपकारक एवं द्विसंख्या युज्यते, नान्यथा ॥ १८ ॥

---

= कुण्डलितः पाठो लिखितपुस्तकेषु नास्ति। * तस्मिन्–पा०। × विषमात्तादृशमेवापूर्वेण–पा०।

( पशुपुरोडाशयागस्य पशुयागीयदेवतासंस्कारकत्वाधिकरणम् ॥ ९ ॥ )

[ ९ ] पशावपीति चेत् ॥ १९ ॥ पू०

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । आ सोमं वहन्त्यग्निना प्रति तिष्ठन्ति तौ संभवन्तौ यजमानमभिसंभवतो वरुणपाशाभ्यां वा एषोऽभिधीयते, यो दीक्षितो यदग्नीषोमीयं पशुमालभते, वरुणपाशाभ्यामेव मुच्यत इति । तत्रेदं समामनन्ति । अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपतीति । तत्र संदेहः । किं पुरोडाशयाग आरादुपकारक उत देवतासंस्कारार्थ इति ।

किं तावत्प्राप्तम् । ततः प्रयाजाधिकरणे पराजितोऽपि हेतुः केनचिदपरेण विशेषेण पुनरनुप्राण्यत इति पुनरुपादिश्यते, पशावपीति चेत् । इति चेत्पश्यसि, किमारादुपकारको देवतासंस्कार इति । पशावप्यारादुपकारकः स्यात् । एतद्धि कर्मणां प्रसिद्धं कार्यम् । अग्नीषोमीयमिति च गुणभूतदेवताकस्तद्धितशब्दो भवति । पशावपि तद्धित× एव शब्दो वाक्यशेषेण बलवता ज्वलनवचनो व्यपदिश्यते, न नियोगतस्तद्वचनः पशुपुरोडाशे । अतः प्रसिद्धेराराद्रुपकारकत्वम् ॥ १९ ॥

न तद्भूतवचनात् ॥ २० ॥ सि०

नेति प्रतिषेधकः शब्दः । आ सोमं वहन्त्यग्निना प्रतितिष्ठन्तीत्यर्थवादवचन एषः । यद्यर्थवादवचनादन्या पशौ देवता, अन्या पुरोडाशयाग इति गम्यते । अर्थवादवचनादेव सैवेत्यवगन्तव्या । एवं ह्याह । यद्देवत्यः पशुस्तद्देवत्यः पशुपुरोडाश इति । तस्मादर्थवादसाम्ये देवतासंस्कार इति गम्यते ॥ २० ॥

लिङ्गदर्शनाच्च ॥ २१ ॥

इतश्च पश्यामः संस्कारकर्म पशुपुरोडाश इति । कुतः । लि-

---

॥ १९ ॥ २० ॥

---

× तद्धित एव—पा० ।

ङ्गमप्येतमर्थं दर्शयति । इन्द्राय वज्रिणे वृषभमालभेतेत्यस्य पशोः पुरोडाशस्य क्रमे संप्रतिपन्नदेवताकं याज्यानुवाक्याद्वयं समाम्नातम्। इन्द्रं स्तुहि वज्रिणं स्तोमपृष्ठं, स्तुहि शूरं वज्रिणं सुप्रततिमिति च। तत्संस्कारपक्षेऽवकल्पते, नान्यथा । तस्मात्पशुदेवतासंस्कारार्थः पुरोडाशयाग इति ॥ २१ ॥

गुणो वा स्यात्कपालवद्गुणभूतविकाराच्च ॥ २२ ॥

विशेषविवक्षया पुनस्तमेव हेतुं व्यपदिशति । वाशब्देन पक्षं व्यावर्तयति । गुणः स्याद्देवता । एवमाराडुपकारकत्वप्रसिद्धिरनुग्रहीष्यते । अनेकगुणभावश्च कपालवद्भविष्यति । यथा कपालं श्रपणेऽपि तुषोपवपनेऽपि । एवमग्नीषोमावप्यभिन्नौ पशुयागे पुरोडाशयागे च गुणभूतौ भविष्यतः। एवं च सति दार्शपौर्णमासिकयोरग्नीषोमयोर्गुणभावेन यागे द्वारभूतयोर्धर्म आम्नातः। इह गुणभूतयोरेवाविरोधेन भविष्यति । इतरथा प्रधानभूतयोरन्यकार्ययोर्न प्राप्नुयात्। दृश्यते च, अनिरुक्तः स्विष्टकृदिति । तस्मादप्याराडुपक्रिया । अपि च सौत्रामण्यामाश्विनसारस्वतसुत्रामदेवताकेषु पशुषु, ऐन्द्रवरुणसावित्राः पुरोडाशाः पशुप्रकरणान्नोत्कृष्यन्ते। संस्कारपक्ष उत्कृष्येरन् । छिद्रापिधानार्थतायाश्चोक्तमर्थवादत्वम् । तस्मादप्याराडुपक्रिया ॥ २२ ॥

अपि वा शेषभूतत्वात्तसंस्कारः प्रतीयेत स्वाहाकारवदङ्गानामर्थसंयोगात् ॥ २३ ॥

अपि वेति पक्षव्यावृत्तिः । नाऽऽराडुपकारकं कर्म । तत्संस्कारः प्रतीयेत, देवतासंस्कार इति । कुतः । शेषभूतत्वादेवतायाः प्रयोजनवत्त्वम् । तस्माद्यथा स्वाहाकारयजिर्निष्प्रयोजन इति देवतासंस्कारः

---

अपि च यस्य प्रधानभूता देवता तस्य धर्मा एव न प्राप्नुवन्ति । तत्र 'अनिरुक्तः स्विष्टकृत्' इति दर्शनं नोपपद्यते । कथं धर्मा न प्राप्नुवन्ति । उच्यते । विकृतौ सादृश्येन धर्मप्राप्तिः । (विसदृशयोस्त्वग्नीषोमयोः) प्रकृतौ गुणभूतयोरग्नीषोमयोर्धर्मा विहिताः, विकृतौ प्रधानभूतयोरित्येतद्वैसादृश्यम् । अयमाभिप्राय परिचोदयतः ॥ २१ ॥ २२ ॥

प्रतीयते, एवमिहापि। अङ्गानामर्थसंयोगात्। अर्थेन-प्रयोजनेन संयोग इह गम्यते वाक्येन। तेन नाऽऽरादुपकारकम्, आरादुपकारकेभ्यः सामवायिकान्यङ्गानि वरीयांसि भवन्तीति। यदुक्तम्। गुणभूतदेवताकेन ताद्धितशब्देन निर्देश इति। प्रधानभूतदेवताकेनाप्येवंजातीयकेन शब्देन संबन्धे विधीयमाने निर्देशोभवति। अपि च, दृष्टकार्यमदृष्टाद्बलीयः। तस्मात्संस्कारकर्मेति ॥ २३ ॥

व्यृद्धवचनं च विप्रतिपत्तौ तदर्थत्वात् ॥ २४ ॥

इतश्च संस्कारकर्मेति। सौत्रामण्यां पशुपुरोडाशदेवताविप्रतिपत्तौ व्यृद्धवचनं देवतासंस्कार एवावकल्पते। यद्वै सौत्रामण्यां व्यृद्धं तदस्याः समृद्धं, यदन्यदेवत्याः पशुपुरोडाशा भवन्ति, अन्यदेवत्याः पशव इति ॥ २४ ॥

गुणेऽपीति चेत् ॥ २५ ॥

एवं चेत्पश्यसि, संस्कारपक्षे व्यृद्धवचनमवकल्पत इति। तन्न। संस्कारपक्षेऽपि व्यृद्धवचनं नावकल्पते। न हि तत्र किंचिद्व्यृद्धं, विप्रतिपन्नदेवताकैरेव पुरोडाशैस्तत्कर्म समृद्धतरं भवति। एवं ह्याह। यदन्यदेवत्याः पुरोडाशा भवन्ति, अन्यदेवत्याः पशव इति, तदस्यां समृद्धं भवतीति। यश्चोभयोः पक्षयोर्दोषः, न तमेकश्चोद्यो भवति। यथैव हि संस्कारपक्षे व्यृद्धवचनमर्थवाद एवमितरस्मिन्नपि पक्षेऽर्थवादो भविष्यति ॥ २५ ॥

नासंहानात्कपालवत् ॥ २६ ॥

नैतदेवं, भवदीये पक्षे न किंचिदपि हीनम्। यथैवैकेन कपालेन तुषषूप्यमानेष्वन्येषां कपालानां न किंचिद्धीयते। एवमन्यया देवतया पशुपुरोडाशयागे निर्वर्त्यमाने न किंचित्पशुदेवतायां हीयते। तत्राव्यृद्ध एव व्यृद्धवचनं भवति। मदीये तु पक्षे देवताप्रकाशनमङ्गभूतं हीयते। अन्यदेतदुच्यते, यद्व्यृद्धमपि समृद्धं भवतीति। अहीने तु व्यृद्धशब्द उच्चरिते न शब्दार्थो गृहीत इति ॥ २६ ॥

---

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

ग्रहाणां च संप्रतिपत्तौ तद्वचनं तदर्थत्वात् ॥ २७ ॥

इतश्च संस्कारकर्मेति । सौत्रामण्यां संप्रतिपन्नदेवताकेषु ग्रहेषु तद्वचनं भवति । पुरोडाशवचनम् । नैतेषां पशूनां पुरोडाशा विद्यन्ते, ग्रहपुरोडाशा ह्येते पशव इति न तावन्न विद्यन्ते । विप्रतिपन्नदेवताकैस्तु संस्काराभावमालोच्यैवमुच्यते । ग्रहा एषां पुरोडाशाः, ग्रहपुरोडाशा ह्येते, इति । किं तेषां पुरोडाशैः सामान्यम् । यदेते देवतासंस्कारार्थाः । यदि पुरोडाशा अपि देवतासंस्कारार्था एवमेतदवकल्पते । तस्मात्संस्कारपक्ष एव श्रेयान् ॥ २७ ॥

ग्रहाभावे च तद्वचनम् ॥ २८ ॥

एवं श्रूयते, नैतस्य पशोर्ग्रहं गृह्णन्ति, पुरोडाशवानेष पशुरिति । पशुपुरोडाशवत्ताहेतुकं ग्रहाभावं ब्रुवन् गृहपुरोडाशयोरेकार्थतां दर्शयति । तत्र ग्रहस्य देवतासंस्कारार्थता विज्ञाता, यदि पुरोडाशोऽपि देवतासंस्कारार्थः, एवमेतदवकल्पते ॥ २८ ॥

देवतायाश्च हेतुत्वं प्रसिद्धं तेन दर्शयति ॥ २९ ॥

इतश्च पश्यामः संस्कारकर्मेति । एवं ह्याम्नायते, अग्निभ्यः कामेभ्यः पशव आलभ्यन्ते, कामा वा अग्नयः, आग्नेयाः पुरोडाशा भवन्ति, आग्नेया हि पशव इति । पशुदेवताहेतुकान् पुरोडाशान् ब्रुवन् देवतासंस्कारार्थतां पुरोडाशानां दर्शयति ॥ २९ ॥

अविरुद्धोपपत्तिरर्थापत्तेः शृतवद्गुणभूतविकारः स्यात् ॥ ३० ॥

अथ यदुक्तं, गुणभूतयोर्धर्मः प्रधानभूतयोरग्नीषोमयोर्न स्यादिति । उच्यते । अविरुद्धा प्रधानभूतयोरप्यग्नीषोमयोर्धर्माणामुपपत्तिः । कुतः । अर्थापत्तेः प्रधानभूतावपि प्राकृतं कार्यं यागनिर्वृत्तिं कुर्वाणौ द्वारभूताविति धर्मैर्योक्ष्येते, शृतवत् । यथा, शृते चरुं, दधंश्चरुमिति प्रदानार्थे दाधिशृते प्रणीताकार्यं कुर्वाते इति धर्मैर्युज्येते । न च दोषो भवति ॥ ३० ॥

---

॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

स द्व्यर्थः स्यादुभयोः श्रुतिभूतत्वाद्विप्रतिपत्तौ ताद-
र्थ्याद्विकारत्वमुक्तं तस्यार्थवादत्वम् ॥ ३१ ॥

अथ यदुक्तम्; ऐन्द्रवारुणसावित्राणां परोडाशानां सौत्रामणीप्रकरणादुत्कर्षः प्राप्नोति । तत्रेदमुच्यते । स द्व्यर्थो यागो देवतासंस्कारार्थश्छिद्रापिधानार्थश्च । उभयोरर्थयोः श्रुतिभूतत्वात् । अतो विप्रतिपन्नदेवताकेषु छिद्रापिधानार्थतया प्रकरणादुत्कर्षो न भविष्यति । तत्प्रकरणगत एवायं विकारो भविष्यतीति ॥ ३१ ॥

तस्याप्युक्तमर्थवादत्वमिति यदुक्तं, तत्रेदमुच्यते—

विप्रतिपत्तौ तासामाख्याविकारः स्यात् ॥ ३२ ॥

एवं तर्ह्यनेन प्रकारेण प्रकरणादनुत्कर्षः । देवतासंस्कारस्तावत्प्रकरणादुत्कर्षेण न शक्यते बाधितुम् । तत्र सौत्रामण्यां संप्रतिपन्नदेवताका एव चोदकेन पुरोडाशाः प्राप्ताः । तत्रेन्द्रादयः शब्दाः पशुदेवतानामेव वाचकाः । कथम् । एकदेशा हि तेषामिमे वर्णान्तरसाहिता उच्चारिता इति गम्यते । शक्नुवन्ति ह्येकदेशाः समुदायिनः समुदायं प्रत्याय्य समुदायार्थान् गमयितुम् । यथा गाव्यादयः । यथा च, सरस्वतीदेवताके निगदे, सरस्वति= देवनिदो निबर्हय प्रजा विश्वस्य बृसयस्य मायिन इति, बृसयशब्दो× बृहच्छब्दार्थं गमयति । किमर्थं पुनरेवं कल्प्यते । यतो देवतान्तराणि पशुदेवतासंस्कारार्थेषु यागेषु प्रत्याय्यमानान्यनर्थकानि भवेयुः । तस्मात्पशुदेवतानामाख्याविकाराः पुरोडाशदेवताशब्दा इति ॥ ३२ ॥

अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवत्यः ॥ ३३ ॥

संस्कारपक्ष एव वाशब्दो युक्तिं व्यावर्तयति, न पक्षम् । न वाऽऽख्याविकारः । संस्कारपक्षेऽन्यथानुपपद्यमान आख्याविकारा

॥ ३१ ॥ ३२ ॥

—

= ऋ० सं० ( अष्ट० ४ अ० ८ व० ३० ) । × बृसयशब्द इति—वेदभाष्ये परं, बृसय इति त्वष्टुर्नामधेयम् ' इति विद्यारण्यस्वामिनः ।

भवन्ति। अनाख्याविकारेष्वपि संस्कारपक्षोऽवकल्पत एव। कथम्। अभ्यास एव पुरोडाशयागस्य भविष्यति । तत्र हि चोदकेन पशुदेवता च प्राप्नोति, पुरोडाशश्च । पशुदेवताया अन्यद्द्रव्यं विधीयते ग्रहः। पुरोडाशस्यान्या देवता । यागस्त्वविकृत एव तिष्ठति। स पशुदेवतासंबद्धश्चैव कर्तव्यो ग्रहसंबद्धश्च। तदुभयमप्यनभ्यस्ते यागे न संभवतीत्यर्थादभ्यस्यते यागः । तस्यैकदेशोऽन्यदेवत्यः, प्रयाजवत्। तद्यथा पशौ पञ्चानां प्रयाजानां चोदकेन प्राप्तानामेकादशसंख्या विधीयते। सा चान्तरेणाभ्यासं नावकल्पत इत्यभ्यस्यन्ते प्रयाजाः। तेषामभ्यस्यमानानामेकदेशेऽन्या देवताः, दुरउषासानक्तेत्येवमादयः।

---

अस्यां चोदकेन पशुदेवता प्राप्नोति, पशुपुरोडाशश्च । तत्र पशुदेवतायां द्रव्यान्तरं विधीयते। पशुपुरोडाशस्य च देवतान्तरम् यागस्त्वविकृत एवावतिष्ठते। यथाऽभ्युदितेष्ट्यां सोऽभ्यस्यते। यथा सोमयाग इति।

इमे सूत्रभाष्ये अयुक्ते । अस्यां सौत्रामण्यां पशुयागा आम्नायन्ते। देवतासंस्कारद्वारेण च पशुपुरोडाशाः प्राप्नुवन्ति। तत्र वाचनिकोऽयं देवताविधिः। तस्मादप्राकृतकार्याः पुरोडाशयागाः। वचनसामर्थ्यात्। यो ग्रहो देवतासंबद्धः, स पशुपुरोडाशयागेन न संबध्यते। कथम्। अविपरिवर्तमानत्वात्। कथं न विपरिवर्तते। अविधानात्। कथमविधानम्। अत्रोपकारा अतिदिश्यन्ते। यत्र प्रकरणं तत्र विपरिवृत्तिः। एतच्च प्रकृतौ।

अभ्युपेत्य ब्रूमः। अस्ति प्रकरणं, विपरिवृत्तिश्च। तथाऽपि न संबध्यते। नैतत्सोमयजिना तुल्यम्। तत्र 'सोमेन यजेत्' इति सोमविशिष्टो यागो विधीयते। ऐन्द्रवायवादीनि ग्रहणानि सोमयागद्रव्यस्यैव संस्कारकाणि। तानि च ग्रहणानि प्रकरणेन गृह्यन्ते। अर्थात्तत्र यागाभ्यासः। इह पशुपुरोडाशयागद्रव्यस्य ग्रहदेवतया × न कश्चित्संकारः क्रियते। तस्माद्यागान्तरम्। नन्वभ्युदितेष्टिवद्भविष्यति। नैतदभ्युदितेष्ट्या तुल्यम्। तत्र निमित्ते सति विभागो विधीयते। यागस्तु विद्यत एव। न त्विह तथा विभागवचनं, येनाभ्युदयेष्ट्या तुल्यं स्यात्।

---

× ग्रहदेवताया वा—पा०।

एवमिहाप्यभ्यासः पुरोडाशयागस्य । तस्मादनुत्कर्षः संस्कारपक्षेऽपीति ॥ ३३ ॥

( सौर्ययागे चरुशब्दवाच्यौदनेन प्राकृतहविर्बाधाधिकरणम् ॥ १० ॥ )

[ १० ] चरुर्हविर्विकारः स्यादिज्यासंयोगात् ॥ ३४ ॥ सि०

चरुः श्रूयते । सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इति । सौर्य आग्नेयविकार इत्येतत्समधिगतम् । ऐकार्थ्याद्वा× = नियम्येत पूर्ववत्त्वाद्विकारो हि, इति । तत्रैषोऽर्थः सांशयिकः । किं चरुः कपालविकारः हविर्विकार इति । यदा हविर्विकारस्तदा किं स्थाल्या हविर्विक्रियत उतौदनेनेति । किं तावत्प्राप्तम् । हविर्विकारः स्यादिति । कुतः । इज्यासंयोगात् । तद्धितार्थो विधीयते चरोः, सौर्यं चरुं निर्वपेदिति । एवमिज्यार्थश्चरुः । तस्माद्धविर्विकार इति ॥ ३४ ॥

---

ननु प्रत्यक्षः पशुपुरोडाशयागः । आनुमानिकस्तु देवतासंबध्येन यागः । तस्मान्न यागान्तरम् । नैतदेवम् । यद्यस्मिन्यागे येन केनचित्प्रकारेण+ निवेशः स्यात् । तद्यदि यागान्तरं न लभ्येत । यदि च प्रत्यक्षे यागे सत्यानुमानिको न लभ्येत, तदा दक्षिणीयादीनि सर्वाण्यकर्मान्तराणि भवेयुः । यदि चैको यागस्तदैक एव विध्यन्तः प्राप्नोति । द्वितीयस्य द्रव्यस्य चोदकवत्प्राप्नोति । एकेन प्रधानं भवतु । द्वितीयस्य तु प्रोक्षणादिविष्टार्थत्वेन प्राप्नोति । देवतयोस्तु यदि निवेशः स्यात् । प्रयाजानुवादेन तु संख्या विधीयते । तत्र यागान्तराशङ्कैव नास्ति ॥ ३३ ॥

---

चरुशब्दस्योभयत्र प्रयोगः । स्थाल्यामोदने च प्रयोगमात्रेणैव शब्दार्थो भवति । अशब्दार्थे हि प्रयोगो दृश्यते । कथं खलु नियमः । ओदने च संस्मरणं, न स्थाल्याम् ॥ ३४ ॥

---

× ( अ० ८ पा० १ सू० २८ ) । = सामान्याद्वा नियम्येत—पा० । + प्रकरणे—पा० ।

प्रसिद्धि ग्रहणत्वाच्च ॥ ३५ ॥ पू०

एवं स्थिते विशेष उच्यते । हविर्विकारः । प्रसिद्धग्रहणत्वाच्च स्थाल्या हाविर्विकारः क्रियते । प्रसिद्धस्य ग्रहणं न्याय्यम् । प्रासिद्धश्च स्थाल्यां चरुशब्दः, आ हिमवतः आ च कुमारीभ्यः प्रयुज्यमानो दृष्टः । तस्मात्स्थाल्या हविर्विक्रियत इति ॥ ३५ ॥

ओदनो वाऽन्नसंयोगात् ॥ ३६ ॥ सि०

ओदनेऽपि चरुशब्दः प्रयुज्यते । तत्रौदनस्यैव ग्रहणं न्याय्यं, न स्थाल्याः । कुतः । अदनीयसंयोगात् । अदनीयेन हि द्रव्येण देवतायागमाचरन्ति शिष्टाः, नानदनीयेन । तत्रभवतामाचारात्तेषां स्मृतिरनुमीयते । स्मृतेः श्रुतिः । तस्मादोदनेन हविर्विक्रियत इति ॥ ३६ ॥

न द्व्यर्थत्वात् ॥ ३७ ॥

न ओदनस्य वाचकश्चरुशब्दः । कुतः । द्व्यर्थ एवं स भवेत् । स्थाल्यां हि स प्रसिद्धः समधिगतः । तस्मादोदने लक्षणाशब्दस्तत्संयोगादित्येवं मन्तव्यम् । अन्यायो ह्येवंजातीयकेष्वनेकार्थभावः । तस्मात्स्थाल्या हविर्विक्रियत इति । यदुक्तम्, अदनीयेन शिष्टा देवतायागमाचरन्तीति ध्रुवमेषां स्मृतिरिति । उच्यते । अनुमानमेतत्प्रत्यक्षेण वचनेन बाध्यते । वचनादवगम्यते स्थाल्या यागः कर्तव्य इति । कथम् । तस्या हि चरुशब्दः प्रसिद्धः । नासावाचारानुरोधेन लक्षणाशब्दः कल्पनीयः । कल्प्यमाने वाऽऽचारेण शब्दो बाध्येत । न चैतन्न्याय्यम् । शब्दानुरोधेन हि व्यामोहादाचार इति कल्पयितुं न्याय्यम् । यथा, शूलैश्च मासरेण चावभृथमभ्यवयन्तीति । प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्काम इति च ॥ ३७ ॥

कपालविकारो वा विशयेऽर्थोपपत्तिभ्याम् ॥ ३८ ॥

हविर्विकारपक्षो न सिध्यति । स्थाल्या विकारे स्मृतिर्हेतुराचाराच्छ्रुतिराशङ्क्यते । ओदनेन विकारे स्थालीसंयोगाल्लक्षणाशब्द आशङ्क्यः । अस्ति चान्या गतिः । कपालविकारो भवेदिति ।

---

॥ ३५ ॥ ३६ ॥ ३७ ॥

तस्माद्वाशब्देन पक्षं व्यावर्त्य कपालविकारश्चरुरिति ब्रूमः। कपालविकारोऽप्यर्थः सूर्यस्य। तेन सौर्य इति शक्यते व्यपदेष्टुम्। उपपत्तिश्चास्ति। शक्यते स्थाल्यां श्रपयितुम्। तस्माद्धविर्विकारपक्षे संशये कपालविकार आश्रयणीयः॥ ३८॥

गुणमुख्यविशेषाच्च॥ ३९॥

अस्ति च गुणमुख्ययोर्विशेषः। गुणो बाधितव्यो न्याय्यो न मुख्यः। तदुक्तम्, अङ्गगुणविरोधे* च तादर्थ्यादिति॥ ३९॥

तच्छ्रुतौ चान्यहविष्ट्वात्॥ ४०॥

चरुश्रुतौ चान्यद्धविर्दर्शयति। प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम इति। शतकृष्णलानि हविः। चरुरेषां संबन्धी। चत्वारि चत्वारि कृष्णलान्यवद्यतीति कृष्णलानां हविष्ट्वम्॥ ४०॥

लिङ्गदर्शनाच्च॥ ४१॥

एवं ह्याह। मारुतं चरुं निर्वपेत्पृश्नीनां दुग्धे प्रैयङ्गवं ग्रामकाम इति। मृण्मयो हि चरुर्न प्रियङ्गुविकारः। तस्मादन्यद्धविः। चरुरपि कपालविकार इति॥ ४१॥

ओदनो वा प्रयुक्तत्वात्॥ ४२॥

हविर्विकार एवात्र चरुस्तद्धितसंयोगादवगम्यते। सौर्यश्चरुः कर्तव्य इति। यदि पुरोडाश उत्सृज्येत, चरुरुत्स्रष्टव्योऽवगम्यमानो बाध्येत। सूर्यसंबद्धो हि चरुः कर्तव्यः। तस्मिन्नशक्ये सौर्यसंबद्धः क्रियेत, न शक्ये। यदा च हविर्विक्रियते, तदौदनेन। ओदने हि चरुशब्दः प्रसिद्धः, आ हिमवतः, आ च कुमारीभ्यः। तत्रादनीयसंयोगो युक्तो भविष्यति।

यत्तु, द्व्यर्थत्वमन्याय्यमिति। अन्याय्यमेव द्व्यर्थत्वम्। तत्र कुत एतत्स्थालीसंयोगेनौदने भविष्यतीति, न पुनरोदनसंयोगात्स्थाल्यां

॥ ३८॥ ३९॥ ४०॥ ४१॥

---

*(अ० १२ पा० २ अ० ९ सू० २७)।

स्यात्। स्मरन्ति च पाके चरुशब्दम् । अनवस्रावितान्तरूष्मपक्को विशदसिद्ध ओदनश्चरुरिति । तदुक्तं, न= पक्तिनामत्वादिति । आचाराच्च स्मृतिर्बलीयसी । तस्मादोदने चरुशब्दः । ओदनेन हविर्विक्रियत इति । तत्रायमप्यर्थोऽदनीयेन यागो भविष्यतीति । अपि च सूर्यस्यान्यद्द्रव्यं नैवास्ति, येन चरुः संबध्येत । चोदकप्राप्तः पुरोडाश इति चेत् । नैतदेवम् । कर्मचोदनायां हि निष्पन्नायां चोदको भवति । प्राक् चरुशब्दवचनान्न यजतिचोदना । द्रव्यदेवतासंबन्धो हि यज्यर्थः । तेन चोदनाविधिशेषश्चरुशब्दो न पुरोडाशविशेषणं भवति । जघन्यत्वाच्चोदकस्येति ॥ ४२ ॥

अपूर्वव्यपदेशाच्च ॥ ४३ ॥

इतश्च पश्यामः, ओदनेन हविर्विक्रियत इति । कुतः । अपूर्वव्यपदेशो भवति । एवं ह्याह, पुरोडाशेन वै देवा अस्मिँल्लोक आर्ध्नुवंश्चरुणाऽमुष्मिँल्लोक इति। पुरोडाशेनाऽऽध्नोति, चरुणाऽमुष्मिन्निति। यदि स्थाल्यां चरुशब्दः, कपालविकारश्चरुः । ततो यस्मिन्नेव पक्षे पुरोडाशस्तस्मिन्नेव पक्षे चरुः । पुरोडाशेन वै देवा अस्मिँल्लोक आर्ध्नुवन्निति चरुणाऽस्मिँल्लोक इति गम्यते । तत्र, चरुणाऽमुष्मिन्नित्यन्यवद्व्यपदेशो नावकल्पते । तस्मादप्योदनेन हविर्विक्रियत इति ॥ ४३ ॥

तथा च लिङ्गदर्शनम् ॥ ४४ ॥

एवं च कृत्वा लिङ्गदर्शनमप्युपपन्नं भविष्यति । कथम् । आदित्यः प्रायणीयश्चरुः, आदित्य उदयनीय इति । तत्रैतच्छ्रूयते । आज्यस्यैव चरुमभिपूर्य चतुर आज्यभागान् यजति । पथ्यां स्वस्तिमिष्ट्वाऽग्नीषोमौ यजति । अग्नीषोमाविष्ट्वा सवितारं यजति । आदितिमोदनेनेति । चतुर्षु आज्यभागेषु विधिः । अदितेः, आदित्यश्चरुरिति प्राप्तत्वादनुवादः । तत्र चरुमोदनशब्देन ब्रुवन् ओदनेन हविर्विक्रियत

॥ ४२ ॥ ४३ ॥ ४४ ॥

—

=( अ० २ पा० २ अ० १४ सू० २८)।

इति दर्शयति । तथा, इदमपरं लिङ्गं भवति । यदि तण्डुलो विद्यत आमं तद्धविः स्यादिति । तण्डुले हविःशब्दं ब्रुवन्नोदनेन हविर्विक्रियत इति दर्शयति ॥ ४४ ॥

( सौर्यचरौ स्थाल्यामेव पाकाधिकरणम् ॥ ११ ॥ )

[ ११ ] स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात् ॥ ४५ ॥ पू०

अस्ति चरुः, सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इति । अत्रैषोऽर्थः समधिगतः । ओदनेन हविर्विक्रियत इति । स इदानीमोदनः क्व पक्तव्य इति भवति संशयः । किं तावत्प्राप्तम् । न नियमः स्यात्कपालेष्वेवेति । अर्थप्राप्ते यस्मिन् कस्मिंश्चिद्द्रव्ये पच्येत । यदि हि कपालं चोदकेन प्राप्येत, कपालवच्चोदकेन संख्याऽपि प्राप्येत । न हि प्रकृतौ कपालेषु श्रपयितव्यमित्येवं चोदना । किं तर्हि । अष्टाकपालो भवतीति । संख्यायां प्राप्यमाणायामष्टाकपलताऽस्य* चोदिता भवति, नान्यथा । न चैवं संख्या प्राप्यते । न हि बहुषु कपालेषु पुरोडाशवदोदनः पक्तुं शक्यः । केवले च कपाले प्राप्यमाणे याऽसावष्टाकपालता चोदिता सा नैव प्राप्येत । अतो यस्मिन् कस्मिंश्चिदर्थप्राप्ते द्रव्ये पक्तव्यश्चरुरिति ।

एवं प्राप्ते, ब्रूमः । स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात्। स एष चरुः कपाल एव स्यात् । एवं प्रकृतिवच्छब्दोऽनुगृहीतो भवति । न चान्यत्किंचिद्द्रव्यमाम्नायते । तस्मान्नियमः ॥ ४५ ॥

संख्या चापि कपालवदिति यदुक्तं, तत्परिहर्तव्यम् ।

एकस्मिन् वा विप्रतिषेधात् ॥ ४६ ॥

यदि बहुषु कपालेषु न शक्यते चरुः पक्तुं, विप्रतिषेधादेकस्मिन् पक्तव्यः । यदेतदुच्यते, अष्टाकपालो भवतीत्येतदुक्तं भवति—

---

॥ ४४ ॥ ४५ ॥

---

* अष्टाकपालता भवति–पा० ।

अष्टसु कपालेषु श्रपयितव्य इति । तन्न । यद्यष्टत्वं विरोधान्न प्राप्यते, तत्कपालमविरोधात्प्राप्येत ॥ ४६ ॥

न वाऽर्थान्तरसंयोगादपूपे पाकसंयुक्तं धारणार्थं
चरौ भवति तत्रार्थात्पात्रलाभः स्याद-
नियमोऽविशेषात् ॥ ४७ ॥

न वा कपालेषु पक्तव्यः । कुतः । अर्थान्तरसंयोगात् । अपूपपाके यत्कपालमुपादीयते, तद्गतेनोष्मणाऽपूपस्य निर्वर्तकः पाको यथा स्यादिति । तत्र कपालं चरोरुपादीयमानमुदकधारणार्थं भवति । यदूष्मणोदकगतेनौदनपाको निर्वर्त्यते, स ओदनपाको न कपालगतेनोष्मणा निर्वर्तते । तत्रोदकधारणार्थं कपालमुपादीयमानं न प्राकृतकार्यं स्यादिति चोदको नैवानुगृह्यते । तस्मादर्थात्पात्रलाभः स्यादिति । तदविशेषान्न नियम्येत, किं तदिति ॥ ४७ ॥

चरौ वा लिङ्गदर्शनात् ॥ ४८ ॥ सि०

स्थाल्यां वा श्रपणं क्रियेत । लिङ्गं हि भवति । यासु स्थालीषु सोमा स्युस्ते चरवः स्युरिति । सोमस्थालीषु चरुं पक्तव्यं ब्रुवन्नविशेषेण स्थालीं चारुसाधनार्थां× दर्शयति । आह, दर्शनमिदं व्यपदिश्यते प्राप्तिरुच्यतामिति । अत्रोच्यते । स्थाल्यां स चरुसंज्ञकः पाको निर्वर्त्यते, न कटाहे, कपाले वा । तस्मात्स्थाल्यां चरुः पक्तव्य इति ।

किं भवति प्रयोजनं, यदि कपालविकारश्चरुर्यदि वौदनेन हविर्विक्रियत इति । यदि कपालविकारः, तास्मिन् पेषणमनर्थलोपात्कर्तव्यम् । अथ, ओदनेन हविर्विक्रियते, अक्रिया पेषणस्य, अपूपहेतुत्वात् । पिण्डार्थत्वाच्च संयवनं पूर्वपक्षे कर्तव्यं, न सिद्धान्ते । संवपनमप्येवम् । संतापनं चाधस्ताच्छ्रपणार्थं पूर्वपक्षे कर्तव्यं, न सिद्धान्ते । उपधानं चैवमेव पृथुश्लक्ष्णे च पूर्वपक्षे कर्तव्ये न सिद्धान्ते ।

---

॥ ४६ ॥ ४७ ॥

---

× चरुस्थापनार्थां—पा० ।

अध्यूहश्चाङ्गाराणां पूर्वपक्षे कर्तव्यो न सिद्धान्ते उपरिपाकार्थत्वात्। अवज्वलनमप्येवमेव। व्युद्धृत्याऽऽसादनं पूर्वपक्षेऽर्थात्कर्तव्यम्। अर्थो नास्तीति न सिद्धान्ते। अर्थात्कृतं हि व्युद्धृत्याऽऽसादनं न शब्दप्राप्तम्। अर्थाच्च कृतं न चोदकः प्रापयति ॥ ४८ ॥

[ सौर्यचरौ पेषणबाधाधिकरणम् ॥ १२ ॥ ]

एवं वा।

[ १२ ] तस्मिन् पेषणमनर्थलोपात्स्यात् ॥ ४९ ॥ पू०

पृथगधिकरणानि पेषणादीनि। अस्ति चरुः, सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इति। ओदनेन हविर्विक्रियत इत्येतत्समधिगतम्। तत्रैतत्संदिह्यते। किं चरौ पेषणं कर्तव्यं, नेति। किं प्राप्तम्। तस्मिन् पेषणमनर्थलोपात्स्यात्। शक्यते हि तण्डुलेषु पेषणं कर्तुम् ॥ ४९ ॥

अक्रिया वाऽपूपहेतुत्वात् ॥ ५० ॥ सि०

यद्यपि शक्यते, तथाऽपि न क्रियते। अपूपः पेषणेन विना न निर्वर्तते। ओदनस्तु विनैव पेषणेन भवति। कामं पेषणेन व्याहन्यते। पिष्टकं यवागूर्वा स्यात्खलिर्वा। तस्माच्चरोः पेषणं निवर्तेत ॥५०॥

( सौर्यचरौ संयवनबाधाधिकरणम् ॥ १३ ॥ )

[ १३ ] पिण्डार्थत्वाच्च संयवनम् ॥ ५१ ॥ सि०

चरुरेवोदाहरणम्। प्रकृतौ श्रूयते, प्रणीताभिर्हवींषि संयौतीति। तदिह चरौ संयवनं कर्तव्यं, नेति। कर्तव्यम्। शक्यते हि कर्तुमिति। एवं प्राप्ते, ब्रूमः। शक्यमपि न क्रियते। पिण्डार्थं हि तत्। पिण्डेन चापूपस्य प्रयोजनं, न चरोः ॥ ५१ ॥

[ सौर्यचरौ संवपनबाधाधिकरणम् ॥ १४ ॥ ]

[ १४ ] संवपनं च तादर्थ्यात् ॥ ५२ ॥ सि०

सौर्य एव चरुरुदाहरणम्। प्रकृतौ श्रूयते, सवितृप्रसूत इत्येवैनं देवताभिः संवपतीति। इह चरौ संदेहः। संवपनं कर्तव्यं, नेति।

---

॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥

किं प्राप्तम् । शक्यत्वाच्चोदकानुग्रहाय कर्तव्यमिति । एवं प्राप्ते, ब्रूमः। संयावितुं हि तत्प्रकृतौ क्रियते, न चरोः संवप्तव्येन प्रयोजनम् ॥ ५२ ॥

[ सौर्यचरौ संतापनबाधाधिकरणम् ॥ १५ ॥ ]

[ १५ ] संतापनमधः श्रपणात् ॥ ५३ ॥ सि०

चरावेव च संदेहः । प्रकृतौ संतापनं कपालानामस्ति, वसूनां रुद्राणामादित्यानां भृगूणामङ्गिरसा धर्मस्य तपसा तप्यध्वमिति । चरौ संतापनं कर्तव्यं, नेति संदेहः । प्रकृतिवद्वचनात्कर्तव्यमिति प्राप्तम् । अधःपाकार्थं हि तत् । तस्मान्न चरौ चोदकः प्रापयति ॥ ५३ ॥

[ सौर्यचरावुपधानबाधाधिकरणम् ॥ १६ ॥ ]

[ १६ ] उपधानं च तादर्थ्यात् ॥ ५४ ॥ सि०

चरावेव कपालोपधानं प्रति संदेहः । कर्तव्यं, नेति । प्रकृतिवद्वचनात्प्राप्तम् । अधःपाकार्थत्वान्निवर्तत इति ॥ ५४ ॥

( सौर्यचरौ प्रथनश्लक्ष्णीकरणयोर्बाधाधिकरणम् ॥ १७ ॥ )

[ १७ ] पृथुश्लक्ष्णे वाऽनपूपत्वात् ॥ ५५ ॥ सि०

पृथुश्लक्ष्णे च प्रति चरोरेव संदेहः । प्रकृतौ श्रूयते, उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति । सं ते तन्वा तनूः सृज्यतामिति त्रिः परिमार्ष्टि । तदुभयं चरौ कर्तव्यं, नेति। चोदकानुग्रहाय कर्तव्यमिति प्राप्ते, अनपूपत्वात्तन्निवर्तते ॥ ५५ ॥

[ सौर्यचरौ भस्माङ्गराध्यारोपबाधाधिकरणम् ॥ १८ ॥ ]

[ १८ ] अभ्यूहश्चोपरिपाकार्थत्वात् ॥ ५६ ॥ सि०

प्रकृतौ श्रूयते, वेदेन भस्मनाऽङ्गारानभ्यूहतीति । तत्सौर्ये चरौ कर्तव्यं, नेति संदेहः । प्रकृतिवद्वचनात्कर्तव्यमिति प्राप्ते, ब्रूमः । उपरि पाकार्थं हि तत्पुरोडाशस्यावकल्पते, न चरोरिति, निवर्तते ॥ ५६ ॥

---

॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५॥५६॥

( सौर्यचरावबज्वलनबाधाधिकरणम् ॥ १९ ॥ )

[ १९ ] तथाऽवज्वलनम् ॥ ५७ ॥ सि०

दर्शपूर्णमासयोः श्रूयते, दर्भपिञ्जूलैरवज्वलयतीति । सौर्ये चरौ संदेहः । किं तत्कर्तव्यं, नेति । किं प्राप्तम् । प्रकृतिवद्वचनात्कर्तव्यम् । उपरिपाकार्थत्वान्निवर्तत इति ॥ ५७ ॥

[ सौर्यचरौ व्युद्धरणबाधाधिकरणम् ॥ २० ॥ ]

[ २० ] व्युद्धृत्याऽऽसादनं च प्रकृतावश्रुतित्वात् ॥ ५८ ॥ सि०

प्रकृतौ श्रूयते, अन्तर्वेद्यां हवींष्यासादयतीति । तत्प्रकृतौ कपालेभ्यो व्युद्धृत्याऽऽसादनं क्रियते । सौर्ये चरौ संदेहः । किं स्थाल्या व्युत्थाप्य चरुरासादयितव्य उत व्युत्थानं न कर्तव्यमिति । प्रकृतौ कृतत्वाच्चरावपि कर्तव्यमिति प्राप्तम् । तदुच्यते । व्युद्धृत्याऽऽसादनं च प्रकृतावश्रुतित्वात् । प्रकृतौ न श्रूयते । कपालेभ्यो व्युद्धृत्याऽऽसादयितव्यः पुरोडाश इति । अर्थात्स व्युद्ध्रियते । यच्चार्थात्कृतं न स चोदनार्थः । तस्माच्चरौ व्युद्धरणं न कर्तव्यम् । अपि चोद्धरणे क्रियमाणे कपित्थवत्परिशेष्योद्ध्रियेत* । तत्र पात्रभेदः स्यात् । तस्माद्व्युद्धृत्याऽऽसादनं चरौ न कर्तव्यमिति ॥ ५८ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये दशमस्याध्यायस्य प्रथमः पादः ॥

---

॥ ५७ ॥ ५८ ॥

---

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां दशमाध्यायस्य प्रथमः पादः ॥

---

* परिशोष्य—पा० ।

अथ दशमेऽध्याये द्वितीय : पादः ॥

( कृष्णलचरौ पाकानुष्ठानाधिकरणम् ॥ १ ॥

[ १ ] कृष्णलेष्वर्थलोपादपाकः स्यात् ॥ १ ॥ पू०

प्राजापत्यं चरुं निर्वपेद्घृते शतकृष्णलमायुष्काम इति । तत्र संदेहः । किं चोदकेन पाकः प्राप्यते कर्तव्यश्च, उत न प्राप्यते, न कर्तव्य इति । किं तावत्प्राप्तम् । कृष्णलेषु पाको न स्यात् । प्रकृतौ हि पुरोडाशार्थः पाकः । इहान्तरेणापि पाकं कृष्णलानि कृष्णलान्येव भवन्ति । तस्मान्न प्राप्यते । अतो न कर्तव्य इति ॥ १ ॥

स्याद्वा प्रत्यक्षशिष्टत्वात्प्रदानवत् ॥ २ ॥

स्याद्वा पाकः । चोदकेन तु न प्राप्यते । प्रत्यक्षं त्वस्य शासनं, घृते श्रपयतीति । प्राकृतस्य कार्यस्यार्थं न भवति, वचनप्रामाण्याददृष्टार्थो भवति । यथा तेषामेवानदनीयानां प्रत्यक्षशासनात्प्रदानम् । एवं पाकोऽपीति ॥ २ ॥

( कृष्णलचरावुपस्तरणाभिघारणयोर्लोपाधिकरणम् ॥ २ ॥ )

[ २ ] उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात् ॥ ३ ॥ सि०

कृष्णलचरावेव संदेहः । य प्रकृतावुपस्तरणाभिघारणे, यदुपस्तृणाति, अभिघारयति, अमृताह्नुतिमेवैनां करोतीति । ते उपस्तरणाभिघारणे कृष्णलचरौ कर्तव्ये, नेति, एष संशयः । किं प्राप्तम् । उपस्तरणाभिघारणयोर्न क्रिया । कुतः । अमृतार्थत्वात् । अमृतार्थत्वेन हि ते क्रियेते । यदुपस्तृणात्यभिघारयति, अमृताह्नुतिमेवैनां करोतीति, अमृतेनोपमिमानः स्वादुभावार्थतां तयोर्दर्शयति । न च कृष्णलेषु स्वादुभावः संभवति । तस्मादक्रियेति ॥ ३ ॥

क्रियेत वाऽर्थवादत्वात्तयोः संसर्गहेतुत्वात् ॥ ४ ॥

क्रियेत वा, उपस्तरणमभिघारणं च । विधेः× प्रकरणान्तरेऽ-

॥ १ ॥ २ ॥ ३ ॥

---

×( अ० १० पा० १ अ० १ सू० १ )।

तिदेशात्सर्वकर्म स्यादिति। यदुक्तं, स्वादुत्वाय ते क्रियेते इति। न स्वादुतार्थः प्रकृतौ श्रुतः। स्वादुः कर्तव्य इति। तस्मादर्थवादः, अमृताहुतिमेवैनां करोतीति। संसर्गमात्रमाज्यस्य क्रियते हविषश्च। तच्च कृष्णलेष्वपि शक्यं कर्तुम्। तस्मादनिवृत्तिः॥ ४॥

अकर्म वा चतुर्भिराप्तिवचनात्सह पूर्णं पुनश्चतुरवत्तम्॥ ५॥

वाशब्दः पक्षं व्यावर्तयति। अक्रिया तयोरिति। कुतः। चतुर्भिराप्तिवचनात्। चत्वारि कृष्णलान्यवद्यतीति। कोऽभिप्रायः। चत्वारि कृष्णलानि, चत्वार्यवदानानि। एकैकं कृष्णलमेकैकस्यावदानस्य स्थाने। तेनोपस्तरणाभिघारणयोर्निवृत्तिः। तथा चाऽऽप्तिवचनं भवति। चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याऽऽप्त्यै, इति। अविद्यमानस्यार्थान्तरेणानुग्रहो भवति। तस्मान्निवृत्तिरेतयोः। सह पुनरुपस्तरणाभिघारणाभ्यां पूर्णं चतुरवत्तमेव स्यात्। तत्राऽऽप्तिवचनं व्याहन्येत॥ ५॥

क्रिया वा मुख्यावदानपरिमाणात्सामान्यात्तद्गुणत्वम्॥ ६॥

क्रिया वा तयोश्चोदकानुग्रहाय। मुख्यावदानस्य हि प्रकृतौ परिमाणमुक्तम्। अङ्गुष्ठपर्वमात्रं देवतानामवद्यतीति। इहापि कृष्णलशब्दः परिमाणवचनः श्रूयते। स चतुःसंख्ययाऽनुबध्यते, चत्वारि कृष्णलान्यवद्यतीति। न यानि चत्वार्यवदनानि तानि कृष्णलपरिमाणानि भवन्तीति। हिरण्यपरिमाणवचन एष कृष्णलशब्दो नाऽऽज्यस्य परिमाणं वदितुमुत्सहते। तच्च परिमाणं न द्रव्यं निवर्तयति। न हि द्रव्यकार्येषु गुणो वर्तितुमर्हति। परिमाणं यत्प्राकृतं तस्य कार्ये वर्तमानं तन्निवर्तयेत्। यथा, इदं दधि घृतं शाकमिमे शालयः, देवदत्तो भोज्यतां, देवदत्तवद्यज्ञदत्तस्तैलेनेति। तैलं हि भोजने स्नेहनेनोपकरोति, तत्स्नेहनार्थं प्राकृतं निवर्तयितुमर्हति घृतं, न शाकं दधि

॥ ४॥ ५॥ ६॥

चौदनं वा । एवमिहापि परिमाणं मुख्यावदानं परिमिमीते, न द्रव्यं निवर्तयेत् । प्रकरणात्तु मुख्यपरिमाणं× स्यात्, नोपस्तरणाभिघारणयोः । तस्मात्तयोरनिवृत्तिरिति ॥ ६ ॥

तेषां चैकावदानत्वात् ॥ ७ ॥

चतुर्णां चैकावदानतां दर्शयति । चत्वारि कृष्णलान्येकमवदानमिति । इतरथा चत्वार्यवदानान्यभविष्यन् । तत्रैकावदानवचनमुपरोत्स्यते । तस्मादप्यनिवृत्तिरिति ॥ ७ ॥

आप्तिः संख्यासमानत्वात् ॥ ८ ॥

अथ यदुक्तमाप्तिवचनं भवतीति । चतुःसंख्यासंस्तुतिरेषा । एवं चतुःसंख्याया माहात्म्यं यदेकस्मिन्नवदाने चत्वार्यवदानानि भवन्तीति । यथा, यद्वैश्वदेवः प्रातःसवने गृह्यते, प्रातःसवने वा एतद्वैश्वदेवयज्ञं संस्थापयतीति, वैश्वदेवसंस्तुतिर्नान्यसवननिवृत्तिः एवमिहापि चतुःसंख्यासंस्तवो नोपस्तरणाभिघारणयोर्निवृत्तिरिति ॥ ८ ॥

सतोस्त्वाप्तिवचनं व्यर्थम् ॥ ९ ॥

तुशब्द एनं चतुःसंख्यासंस्तवं व्यावर्तयति । न हि विद्यमानयोरुपस्तरणाभिघारणयोस्तदाप्तिवचनेन कश्चित्संस्तवोऽस्ति । यद्यविद्यमानमापयतीत्युच्यते, ततो गुणवानित्युक्तो भवति । तत्र संस्तूयते । अथ विद्यमानमापयतीति, अनर्थको भवतीत्युक्तं भवति, न संस्तवः । तस्माद्विद्यमानयोरुपस्तरणाभिघारणयोराप्तिवचनं व्यर्थमेव । अन्यः परिहारो वक्तव्यः ॥ ९ ॥

विकल्पस्त्वेकावदानत्वात् ॥ १० ॥

तुशब्द आप्तिवचनान्निवृत्तिरुपस्तरणाभिघारणयोरित्येतान्निवर्तयति । यथा भवान् ब्रूते, आप्तिवचनाल्लिङ्गान्निवृत्तिरेतयोरिति, एवमेकावदानवचनाल्लिङ्गादनिवृत्तिरेतयोरिति लिङ्गविकल्पः । लिङ्गविकल्पाच्च नैकान्ततो निवृत्तिमाप्तिवचनं कर्तुमर्हति ॥ १० ॥

---

॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

---

× मुख्यपरिमाणमिति—मुख्यस्य हविरवदानस्य चतुःसंख्यकृष्णलपरिमाणं स्यादित्यर्थः।

सर्वविकारे त्वभ्यासानर्थक्यं हविषो ह्यतरस्य स्यादपि वा स्विष्टकृतः स्यादितरस्यान्याय्यत्वात् ॥११॥

तुशब्द आप्तिवचनं बाधते। आप्तिवचने बाधिते सति चतुर्षु कृष्णलेषु सर्वावदानविकारेष्वभ्यासोऽनर्थकः स्यात्। चत्वारि चत्वारि कृष्णलान्यवद्यति समृद्ध्यै, इति। अस्मत्पक्षे= पुनरितरद्धविर्द्वितीयमवदानमपेक्ष्याभ्यासोऽवकल्पिष्यते। अथ मतम्, एतन्ममापि स्विष्टकृतमपेक्ष्याभ्यासो भवतीति। तन्नैवम्। इतरस्य स्विष्टकृतोऽपेक्षणमन्याय्यम्। प्रकरणात्प्रधानमभिसंबध्यते वचनेन। न च स्विष्टकृतः प्रकरणम्। चोदकेन हि स प्राप्यते। तस्मात्त्वत्पक्षेऽभ्यासोऽनर्थक एव। उपस्तरणाभिघारणे कर्तव्ये एव ॥ ११ ॥

अकर्म वा संसर्गार्थनिवृत्तित्वात्तस्मादाप्तिसमर्थत्वम् ॥ १२ ॥

अक्रिया, उपस्तरणाभिघारणयोः। कुतः। संसर्गः स्रुचि पुरोडाशचूर्णानां सूक्ष्माणां मा भूदिति, उपस्तरणेन स्रुक् स्निग्धी क्रियते, अभिघारणेन हविः स्रुच्यसंयुक्तं कृत्स्नं यथाऽग्नौ पतेदिति। न तु विशदस्य कृष्णलस्य स्रुचि संयोगो भवति, यन्निमित्तमुपस्तरणमभिघारणं च स्नेहनार्थं सुवर्णस्य क्रियेत। तस्मात्प्राकृतस्य प्रयोजनस्य निवृत्तत्वात्कृष्णलेषूपस्तरणाभिघारणे निवर्तितुमर्हतः। एवं चाऽऽप्तिवचनमुपपन्नं भविष्यति। चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याऽऽप्त्यै, इति ॥ १२ ॥

[ कृष्णलचरौ भक्षणकर्तव्यत्वाधिकरणम् ॥ ३ ॥ ]

[ ३ ] भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यात् ॥ १३ ॥ पू०

शतकृष्णलश्चरुरुदाहरणम्। सन्ति प्रकृतौ भक्षाः, इडाप्राशित्रचतुर्धाकरणशंयुवाककालाः। तेषु संशयः। कृष्णलचरौ ते भक्षाः कर्तव्या उत नेति। किं प्राप्तम्। न कर्तव्याः। प्रीत्यर्थं हि प्रकृतौ

॥ ११ ॥ १२ ॥

= अस्मिन्पक्षे—पा०।

ते कृताः, सामर्थ्यं जनयिष्यन्तीति । न तु हिरण्यं प्रीतिमुत्पादयति भक्ष्यमाणम् । अतो न कर्तव्याः ॥ १३ ॥

स्याद्वा निर्धानदर्शनात् ॥ १४ ॥ सि०

स्याद्वा हिरण्यस्य भक्षः । भक्षणविशेषदर्शनात् । निरवधयन्तो भक्षयन्ति चुच्छुषाकारं* भक्षयन्तीति, प्राप्ते भक्षे केवलं भक्षोपायं विधास्यति शब्द इति । इतरथा भक्षोपायं भक्षणं च विकृतौ विदध्यात् । तत्र वाक्यं भिद्येत । तस्माच्चोदकेन प्राप्यते भक्ष इति ॥ १४ ॥

वचनं वाऽऽज्यभक्षस्य प्रकृतौ स्यादभागित्वात् ॥ १५ ॥

न त्वेतदस्ति, प्राप्यन्ते भक्षा इति अर्थलोपादेषां निवृत्तिः । यत्तु भक्षणे विशेषवचनं भवतीति । वचनादेतदाज्यस्य भविष्यति । निरवधयन्तो× भक्षयन्त्याज्यामिति, चुच्छुषाकारं भक्षयन्त्याज्यामिति । निर्धानं चुच्छुषाकारं चार्थप्राप्तं भक्ष्यमाणस्यानूद्यत इति न वाक्यभेदः ॥ १५ ॥

वचनं वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात् ॥ १६ ॥

सत्यम् । वचनमेतद्धिरण्यस्य, न त्वाज्यस्य । कुतः । भक्षयन्तीत्येतावच्छ्रूयते । नेदं वा तद्वेति । तत्र यन्निर्दिष्टं प्रकृतं, तस्य तेन संबन्धो भवतीति । हिरण्यं चात्र निर्दिश्यते, नाऽऽज्यम् । कथम् । प्राजापत्यं चरुं निर्वपेद्घृते शतकृष्णलमिति, शतकृष्णलश्चरुरत्र कार्यसंबन्धार्थमुच्यते । तद्विशेषणार्थेन घृतं, न स्वनिर्देशार्थेन । तस्माच्चरुरेव

---

'भक्षाणां तु' इत्यादिकेयं चतुःसूत्री कर्तृसंस्कारार्था भक्षा इत्येतमर्थं प्रतिपादयति तेन कृष्णलचरौ न प्राप्नुवन्ति । असंस्कारकत्वात्+। तस्मादप्राप्तो भक्षो वचनाद्विधीयते हिरण्यस्य ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

---

---

* चुश्चुषाकारं–इति शास्त्रदीपिकादिधृतः पाठः । × निरवधयन्त इति–दन्तेन पीडनमकुर्वन्त इत्यर्थः । + असंस्कारकत्वादिति–कृष्णलानामनदनीयत्वेन प्रीत्याख्य कर्तृसंस्कारायोग्यत्वादित्यर्थः ।

शब्दान्तरैः संबध्यते, न घृतम्। तद्यथा, एष दण्ड इष्टकाकूटे तिष्ठति; प्रहरानेनेति; दण्डेनेति गम्यते, नेष्टकाकूटेनेति। एवमिहापि चरुर्भक्षणवचनेन संबध्यते, न घृतम्। तस्माच्चरोर्भक्षणं, प्रदानवत्। यथा तेषामेव कृष्णलानामनदनीयानां प्रदानं क्रियते, एवमत्रापि द्रष्टव्यमिति॥ १६॥

[ कृष्णलचरौ ब्रह्मभक्षाणां युगपत्परिहरणीयत्वाधिकरणम्॥ ४॥ ]

[ ४ ] एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहितत्वात्॥ १७॥ सि०

तत्रैव श्रूयते, एकधा ब्रह्मणे परिहरतीति। तत्र संदेहः। किमेतत्सहत्वमुत सकृत्त्वमिति। किं प्राप्तम्। सकृत्त्वं वा, सहत्वं वा, अनियम इति। कुतः। एकप्रकारवचन एकधेति शब्दः। सकृत्त्वमप्येक प्रकारः; सहत्वमपि। तद्यथा, यः सकृद् गाः प्रापयति, स एकधा प्रापयतीत्युच्यते। योऽपि सह प्रापयति सोऽप्येकधा प्रापयतीति। तस्मात्सकृत्त्वं सहत्वं वा कर्तव्यमिति।

एवं प्राप्ते, ब्रूमः। एकधा ब्रह्मणे परिहरतीति, सहेति गम्यते। एवं ब्रह्मभक्षस्याब्रह्मभक्षस्यापि परिहारः कृतो भविष्यति। इतरास्मिन्पक्षे कस्यचिद्ब्रह्मभक्षस्य परिहारो न क्रियते। तत्र प्राकृतः प्रयोगवचनो बाध्येत। विहृताश्चामी भक्षाः प्रकृतौ। त इह चोदकेन विहृता एव प्राप्ताः। तत्र सहत्ववचन एकधाशब्दोऽवकल्पते। ननु वाचनिक इह भक्षोऽप्राकृतः, न प्राकृता विहृताः प्राप्तुमर्हन्तीति। उच्यते पुरुषसंस्कारार्थत्वेन न प्राप्नुवन्ति, द्रव्यसंस्कारार्थत्वेन तु प्राप्नुवन्तीति, यदि प्राप्नुवन्ति, किमर्थं तर्हि वचनमिति भक्षोपायविधानार्थम्। ननु

---

ननु वाचनिक इह भक्षोऽप्राकृतः। न प्राकृता विहिताः प्राप्नुवन्तीति—कोऽभिप्रायो ग्रन्थस्य। नैते कर्तृसंस्कारकाः। भक्षणकर्ता तु गुणभूतः। प्रधानभूता भक्षाः। कथम्। प्राशित्रमिडामिति द्वितीयान्तो भक्षः क्रियां प्रति प्रधानभूतः, ग्रहवत्। कर्ता क्रियायां गुणभूत उपादीयते। न कर्तुः कृत्स्नस्य संस्कारः। दृष्टार्थो च कृतप्रयोजनस्य द्रव्यस्य प्रतिपत्तिः।

निर्धानं चुच्छुषाकरणं वाऽर्थप्राप्तम् । अर्थप्राप्तत्वादनुवादः। उच्यते । न नियमेन प्राप्यते । नियमार्थश्च विधीयत इति ॥ १७॥

( कृष्णलचरौ सर्वभक्षाणां पुरुषान्तरेभ्योऽपनीय ब्रह्मणः परिहाराधिकरणम् ॥ ५ ॥ )

[ ५ ] सर्वत्वं च तेषामधिकारात्स्यात् ॥ १८ ॥ पू०

कृष्णलचरुरेवोदाहरणम् । तत्र श्रूयते, सर्वं ब्रह्मणे परिहरतीति । तत्र संदेहः । किं ब्रह्मभक्षणामेवैष परिहार उत पुरुषेभ्यः शेषापनय इति । कथं ब्रह्मभक्षाणां परिहारः, कथं वा शेषापनय इति । यदि, ब्रह्मणे परिहरतीत्यनूद्य सर्वमिति विधीयते, ब्रह्मणे सर्वमिति वाऽनूद्य परिहरतीति विधीयते, ततो ब्रह्मभक्षाणां परिहारः । अथ, सर्वमिति लक्षयित्वा ब्रह्मणे परिहरतीति विधीयते, परिहरतीति वा लक्षयित्वा सर्वं ब्राह्मण इति, ततः शेषापनयः। किं प्राप्तम् । सर्वत्वं ब्रह्मभक्षाणां स्यात् । कुतः । ब्रह्मणे परिहरतीति प्राप्तमेव, न विधीयते । सर्वपरिहारस्त्वप्राप्तः । तस्य विधानं भवितुमर्हति ।

अथवा, अस्त्येव ब्रह्मणे सर्वो भागः । तत्र कस्यचिद्भागस्य परिहारः प्राप्तः, कस्यचिन्न प्राप्तः । यस्य च न प्राप्तस्तस्य परिहारो विधीयते । तस्मादधिकृतानां ब्रह्मभक्षणामेष× वाद इति ॥ १८ ॥

---

ननु कर्तृसंस्कारेऽपि दृष्टं प्रयोजनम् । सत्यम् । उक्तं तु द्रव्यस्य कृत्स्नस्य संस्कारो न कर्तव्यः । अपि च सोम उपकारो नास्ति । अपकारस्तु कदाचित्स्यात् । अपि च कृतप्रयोजनं द्रव्यं प्रतिपत्तिमपेक्षते । तच्च कर्तृषु प्रतिपाद्यते । तस्य यदि कर्तृसंस्कारोऽपि प्रयोजनमनुनिष्पादि भवेत्तथा सत्यविरोध एव । न तु स विवक्षितः । या चासौ चतुःसूत्री* साऽनेन न्यायेन विरुद्धा प्रत्याख्यातव्यैव ॥ १७॥ १८॥

---

× भक्षाणामेषः—पा० । * चतुःसूत्रीति—‘ भक्षाणां तु प्रीत्यर्थत्वात् ’ इत्यादिकेत्यर्थः ।

पुरुषापनयो वा तेषामवाच्यत्वात् ॥ १९ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । पुरुषापनयः स्यात् । यद्येवमुच्येत, यद्ब्रह्मणे परिहरति, तत्सर्वमिति । सर्वमेव हि तद्विधानमनर्थकं स्यात् । अथ, यद्ब्रह्मणे, तत्सर्वं परिहरतीति । विशेष्यस्यानिर्देशान्न ब्रह्मशब्दो विशेषणम् । अथ यद्ब्रह्मणे सर्वं तत्परिहरतीति । एवमपि विशेष्यो नैव निर्दिष्टः स्यात् । यत्सर्वं तत्परिहरतीति, नैवं वचनमर्हति । सर्वं हि सर्वम् । ततश्च विशेषयितव्यम् । तस्मात् , सर्वं परिहरतीति, ब्रह्मसंबन्धः सर्वस्य विधीयते चरोः । एवं न किंचिदनर्थकम् । तस्मात्पुरुषेभ्यः शेषापनय इति ॥ १९ ॥

( कृष्णलचरौ युगपदुपस्हृतानां सर्वेषां भक्षाणां स्वस्वकाले भक्षणाधिकरणम् ॥ ६ ॥

[ ६ ] पुरुषापनयात्स्वकालत्वम् ॥ २० ॥ सि०

तत्रैव संदेहः । समधिगते शेषापनये किमेकस्मिन् काले सर्वे भक्षा भक्षयितव्या उत स्वस्मिन् स्वस्मिन् काल इति । किं प्राप्तम् । भक्षयितुं तत्परिहरणं क्रियते । अतो यद्भक्षणाय परिहृतं तदनन्तरं भक्षयितव्यमेव ।

एवं प्राप्ते, ब्रूमः, पुरुषापनयात्स्वकालत्वमिति । पुरुषापनयं कृत्वाकृतार्थः शब्दः स्वकालतां भक्षणानां न निवारयति । तस्माद्यथाकालमेव भक्षयितव्या इति ॥ २० ॥

कृष्णलचरौ चतुर्धाकरणादीनामननुष्ठानाधिकरणम् ॥ ७ ॥

[ ७ ] एकार्थत्वादविभागः स्यात् ॥ २१ ॥ सि०

तत्रैवेदं चिन्त्यते । प्रकृतौ व्यादेश आम्नातः, इदं ब्रह्मण इदं होतुरिदमध्वर्योरिदमग्नीध इति । स इह कर्तव्यो न कर्तव्य इति संशयः । चोदकप्राप्त्या कर्तव्य इति यस्य बुद्धिः स्यात्तस्य निवृत्त्यर्थं सूत्रम् । प्रकृतौ बहूनां संबन्धः कर्तव्यः । स विभागमन्तरेण न सिध्यतीति विभागो बहुसंबन्धाय क्रियते । इह तु सर्वं ब्रह्मणे परिहरतीत्येकस्मै सर्वश्चरुः । तत्र विभागेन न प्रयोजनम् । क्रियमाऽणो-

ऽपि न प्राकृतार्थः स्यात् । अदृष्टार्थमेव क्रियेत । तस्मात्कृष्णलचरौ न व्यादेश इति ॥ २१ ॥

[ ज्योतिष्टोमादौ दक्षिणादानस्य ऋत्विगानत्यर्थत्वाधिकरणम् ॥८॥]

[ ८ ] ऋत्विग्दानं धर्ममात्रार्थं स्याद्ददातिसामर्थ्यात् ॥ २२ ॥ पू०

अस्ति ज्योतिष्टोमः, ज्योतिष्टोमेन स्वर्गकामो यजेतेति । तत्रेदं समामनन्ति, गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा । इदं चापरं श्रूयते, ऋत्विग्भ्यो दक्षिणां ददातीति । तत्र संशयः । किं दानं धर्ममात्रमुत ऋत्विगानमनमिति । किं प्राप्तम् । ऋत्विग्दानं धर्ममात्रं स्यात् । तस्य हि कर्तव्यता श्रूयते । ददातिकर्तव्यताऽस्माच्छब्दाद्गम्यते । ऋत्विगानमनं कर्तव्यं वाक्याद्गम्यते । श्रुतिश्च वाक्याद्बलीयसी । लोकेऽप्यदृष्टार्थतैव ददातेर्गम्यत इति सामर्थ्यादेव नाऽऽनमनादि ।

अपि च कर्मानुरूपमपि दाक्षिण्यं क्वचिच्छ्रूयते, त्रैधातवीयायां,+ सहस्रमृतपेये सोमचमसः । अपि च यत्रोच्चनीचपण्यपणः× क्रियते स परिक्रयो भवति, न यत्र नियतपरिमाणं दानम् । तस्माद्धर्ममात्रं दानम् । अपि च नियमवन्मन्त्रवच्च क्रियते । तददृष्टार्थत्वेनावकल्प्यते । क्वचिच्च श्रूयते । दण्डः, उपानहौ, शुष्का दृतिः; सा हि दक्षिणा, इति । को हि दण्डेनाऽऽनमेत् । तस्माद्धर्ममात्रं दानमिति ॥ २२ ॥

---

यदि ब्रह्मशब्दोऽनुवादः 'सर्वम्' इति विधीयते, तथा सति न ज्ञायते किं सर्वमिति । अथ यदि ब्रह्मपरिहारशब्दावनूद्येते, तथाऽपि 'सर्वम्' इति न विधीयते । यदा कस्यचिद्भागस्य परिहारः प्राप्तः, कस्यचिन्न, तदा विधानमुपपद्यते । सर्वेषां तु ब्रह्मभागानां परिहारः प्राप्त एव । अथ 'ब्रह्मणे सर्वम्' इत्यनूद्य परिहारो विधीयते, तथाऽपि प्रथमपक्षे यो दोषः स तृतीये । तस्मात्सिद्धान्ते ब्रह्मपदं * विधीयते ॥ १९ ॥ [ २० ॥ २१ ॥२२॥

---

+ त्रैधातव्यायां-पा० । × पणीपणः-पा० । * ब्रह्मपदं विधीयत इति-'सर्वं ब्रह्मणे परिहरति' इत्यत्र सर्वोद्देशेन ब्रह्मसंबन्धः परिहारमाश्रित्य विधीयते । अथवा पूर्वप्रवृत्त्या परिहारोद्देशेन ब्रह्मसंबन्धो विधीयते । तत्फलं चावच्छेदकावच्छेदेन ब्रह्मसंबन्धविधानाद्भागान्तरे पुरुषान्तरव्यावृत्तिः । तथाच सर्वपदमनुवाद इत्यर्थः ।

परिक्रयार्थं वा कर्मसंयोगाल्लोकवत् ॥ २३ ॥ सि०

परिक्रयार्थं वा दानम् । कुतः । कर्मसंयोगात् । कर्मसंयुक्तेभ्यः श्रूयते, ऋत्विग्भ्यो दक्षिणां ददातीति । तत्र दृष्टं प्रयोजनमुत्सृज्य न शक्यमदृष्टं कल्पयितुम् । यदपि नियमाददृष्टं, तदपि दृष्टद्वारमेव । अनेन नियतेन नियतगुणकेन दानेनाऽऽनम्यमाना ऋत्विजोऽभ्युदयकारिणो भवन्ति । कथम् । आनमने गुणभूतस्त्यागश्चोद्यते, न प्रधानभूतः । वाक्यार्थश्चावश्यं ग्रहीतव्यः । इतरथा ऋत्विग्भ्य इत्येतदेव पदमनर्थकं स्यात् । अगृह्यमाणे सुतरां श्रुतिर्बाध्येत। यच्च न कर्मानुरूपं दाक्षिण्यमिति । नैतावता दृष्टोऽर्थः समपह्नूयेत । नियमाद्दृष्टद्वारमदृष्टमित्युक्तमेव । वचनप्रामाण्याच्च दण्डोऽवगम्यते । अपि च भवति तत्र या च यावती चाऽऽनमनमात्रा । लोकेऽपि हि काष्ठवाहप्रभृतिभ्यो यद्दीयते, तदसंकीर्तितेऽपि परिक्रये, आनमनार्थमेव भवति । तस्मात्परिक्रयार्थं दक्षिणादानमिति ॥ २३ ॥

दक्षिणायुक्तवचनाच्च ॥ २४ ॥

दक्षिणायुक्तवचनाच्च लिङ्गात्परिक्रयार्थं दानमिति पश्यामः । दक्षिणायुक्ता वहन्ति ऋत्विज इति ॥ २४ ॥

न चान्येनाऽऽनम्येत परिक्रयात्कर्मणः
परार्थत्वात् ॥ २५ ॥

इतश्च परिक्रयार्थं दानमिति । कुतः । नान्तरेण परिक्रयं परार्थे परः प्रवर्तते । ननु सामादयोऽपि प्रवर्तनोपायाः । न ब्रूमो न प्रवर्तनोपाया इति । किं तर्हि । परिक्रयः प्रत्यक्षमाम्नात इति । अतस्तेनैव परिक्रेतव्या नान्येनेति ॥ २५ ॥

परिक्रीतवचनाच्च ॥ २६ ॥

परिक्रीतवचनं भवति, तेनायमर्थो द्योत्यते । दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयन्तीति । तस्मादपि परिक्रयार्थं दानमिति ॥ २६ ॥

---

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

सनिवन्ये* च भृतिवचनात् ॥ २७ ॥

सनिवनिप्राप्तं सनिवन्यं, याञ्चाप्राप्तमित्यर्थः। तस्मिन्न भृतिवचनं भवति। यज्ञो वै देवतानां न समभवत्, तं भृत्या समभावयन्। यद्भृतिं वनुते, यज्ञस्य भृत्यै द्वादशरात्रीर्दीक्षितो भृतिं वन्वीतेति। यज्ञार्थं यद्दीक्षितं ऋत्विजः परिक्रेतुम्, अन्यच्च यज्ञार्थं साधयितुं, तस्मिन्नेव भृतिवचनम्। भृतिश्च कर्मकरेभ्य आनत्यर्थं यद्दीयते। तस्मादपि परिक्रयार्थमृत्विग्भ्यो दानमिति ॥ २७ ॥

नैष्कर्तृकेण संस्तवाच्च ॥ २८ ॥

नैष्कर्तृकेण च संस्तवो भवति। यथा वै दारुहारो नैष्कर्तृको निष्कर्तनभृतः कर्मयोगे वर्तते, एवं वा एते यज्ञस्य ऋत्विज इति। नैष्कर्तृको दारुहारः। यथाऽसौ, एवमृत्विज इति ब्रुवन् परिक्रयार्थं दानं दर्शयति ॥ २८ ॥

[ शेषभक्षाणां शेषप्रतिपत्त्यर्थत्वाधिकरणम् ॥ ९ ॥ ]

[ ९ ] शेषभक्षाश्च तद्वत् ॥ २९ ॥ पू०

सन्ति शेषभक्षा ज्योतिष्टोमे, दर्शपूर्णमासयोश्च। यथा, वषट्कारनिमित्ता होमाभिषवनिमित्ताश्च। तथा, इडाप्राशित्रचतुर्धाकरणशंयुवाककालाः। तेषु संशयः। किं ते परिक्रयार्था उत नेति। किं प्राप्तम्। शेषभक्षाश्च तद्वद्भवितुमर्हन्ति, यद्वद्दक्षिणादानम्। प्रीतिं हि करोति भक्षणं, प्रीतया चाऽऽनमन्ति। तस्मात्परिक्रयार्था शेषभक्षा इति ॥ २९ ॥

संस्कारो वा द्रव्यस्य परार्थत्वात् ॥ ३० ॥ सि०

वाशब्दः पक्षं व्यावर्तयति, न परिक्रयार्थं भक्षणम्। द्रव्यसंस्कारार्थमिति। कुतः। यज्ञार्थेन हि द्रव्यमुत्पन्नं प्रयोजनवत्। यदि तस्य संस्कारार्थं भक्षणं, ततस्तदपि प्रयोजनवत्। दक्षिणार्धान्मध्याच्चावद्यतीत्येवमादि चैकदेशवचनं प्रकृतशेषापेक्षं भवति, न द्रव्य-

॥ २७ ॥ २८ ॥ २९ ॥

---

* सनिवन्येव—इति मुद्रितपुस्तकेषु सर्वत्र पाठः।

स्योत्पादकम् । तस्माद्द्रव्यस्य भक्षणमुच्यते, न भक्षणार्थं द्रव्यमुपादीयते । प्रकृतस्य च भक्षणम् । तस्मात्संस्कारार्थमिति गम्यते ॥ ३० ॥

शेषे च समत्वात् ॥ ३१ ॥

अपि च यच्छेषं द्रव्यं, तद्देवतायै संकल्पितं यजमानेन न स्वयमुपयोक्तव्यमिति । तस्मान्न तस्योपयोक्तुमृत्विज ईशते, नो खल्वपि यजमानः । साम्यमत्र यजमानस्य ऋत्विग्भिः । परिक्रीणानश्च स्वीकुर्याद्द्रव्यम् । तत्रास्य देवतार्थः संकल्प एव नावकल्पते । तस्मादपि न परिक्रयार्थं भक्षणमिति ॥ ३१ ॥

स्वामिनि च दर्शनात्तत्सामान्यादितरेषां तथात्वम् ॥ ३२ ॥

स्वामिनि च भक्षणं दृश्यते । यजमानपञ्चमाः समुपहूता इडां भक्षयन्तीति । यजमानस्यासंशयमपरिक्रयः । तत्सामान्यादितरेषामपि न परिक्रयः । कथम् । एवं सति नैव विज्ञायते, इडाभक्षणेन यजमानपञ्चमाः परिक्रीयन्त इति । किं तत्सामान्यम् । द्वितीया विभक्तिः। तस्मादपि न परिक्रयार्थं भक्षणमिति ॥ ३२ ॥

तथा चान्यार्थदर्शनम् ॥ ३३ ॥

एवमन्यार्थदर्शनमिदमुपपन्नं भवति । कुण्डपायिनामयने, अत्सरुकैश्चमसैः सोमान् भक्षयन्तीति, प्राप्ते भक्षे विशेषः श्रूयते—अत्सरुकैरिति । एवं सत्रेषु भक्षणं दृश्यते । तत्परिक्रयार्थत्वे नावकल्पते । तस्मादपि न परिकरयार्थं भक्षणमिति ॥ ३३ ॥

[ सत्रे वरणाननुष्ठानाधिकरणम् ॥ १० ॥ ]

[ १० ] वरणमृत्विजामानमनार्थत्वात्सत्रे न स्यात्स्वकर्मत्वात् ॥ ३४ ॥ सि०

सन्ति द्वादशाहप्रभृतीनि सत्राणि, द्वादशाहमृद्धिकामा उपेयुरित्येवमादीनि । अस्ति च प्रकृतौ ज्योतिष्टोमे वरणम् । अग्निर्मे होता

॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

———

स मे होता होतस्त्वं मे होताऽसीति होतारमित्येवमादिभिः *। तत्सत्रेषु संदिह्यते। किं कर्तव्यं, नेति। तत= एतावन्नः परीक्ष्यम्। किं प्रकृतौ धर्ममात्रं वरणमुत परिक्रयार्थमिति। यदि धर्ममात्रं प्रकृतौ, सत्रेषु कर्तव्यम्। अथ परिक्रयार्थं, न कर्तव्यमिति। किं प्राप्तम्। मन्त्रवन्नियमवच्चेति कृत्वा धर्ममात्रम्। तस्मात्सत्रेषु कर्तव्यमिति।

एवं प्राप्ते, ब्रूमः। वरणमृत्विजां सत्रेषु न स्यात्। न कर्तव्यमिति। स्वार्थं हि तेषां कर्म। न च कश्चिदात्मानं वृणीते। प्रकृतौ चाऽऽनमनार्थं वरणं दृष्टप्रयोजनमिति न शक्यमदृष्टं कल्पयितुम्। तस्मात्सत्रेषु वरणं न स्यादिति ॥ ३४ ॥

( सत्रे परिक्रयाननुष्ठानाधिकरणम् ॥ ११ ॥ )

[ ११ ] परिक्रयश्च तादर्थ्यात् ॥ ३५ ॥ सि०

परिक्रयश्च प्रकृतौ ज्योतिष्टोमे आम्नातः गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा, इति। तद्दाक्षिण्यं+ सत्रे चोदकेन प्राप्तं किं कर्तव्यं निवृत्तं वेति संशयः। किं प्राप्तम्। कर्तव्यः परिक्रयः चोदकानुग्रहाय। अपि च तत्र गवादयः प्रतिषिध्यन्ते, न ह्यत्र गौर्दीयते, न वासो न हिरण्यमिति। तत्सति परिक्रयेऽवकल्पते।

एवं प्राप्ते ब्रूमः। परिक्रयश्च तादर्थ्यादिति। परिक्रयश्च न कर्तव्यः। उक्तमधस्ताद्वरणं सत्रेषु न कर्तव्यमिति। परिक्रयश्चेति चशब्देनान्वादेशः क्रियते, न कर्तव्यः परिक्रयः। कुतः। आत्मार्थत्वात्। न कश्चिदात्मानं परिक्रीणीत इति ॥ ३५ ॥

प्रतिषेधश्च कर्मवत् ॥ ३६ ॥

प्राप्तौ सत्यां प्रतिषेधोऽवकल्पत इति यदुक्तं, तत्परिहर्तव्यम् ॥ ३६ ॥

---

॥ ३४ ॥ ३५ ॥ ३६ ॥

---

* इत्येवमादीति—पा०। = तत एतत्तावन्नः-पा०। + तत्र दाक्षिण्यं-पा०।

स्याद्वा प्रासर्पिकस्य धर्ममात्रत्वात् ॥ ३७ ॥

प्रतिषेध उपपद्यत इत्यर्थः। कस्यः। प्रासर्पिकस्य दानस्येति। धर्ममात्रं हि तत्सत्रेषु चोदकप्राप्तं, तन्निवर्तते। तस्मादुपपन्नः प्रतिषेध इति ॥ ३७ ॥

न दक्षिणाशब्दात्तस्मान्नित्यानुवादः स्यात् ॥ ३८ ॥

नायं प्रासर्पिकस्य प्रतिषेधः। दक्षिणाशब्दात्। दक्षिणाशब्दो ह्यत्र भवति। अदक्षिणानि सत्राण्याहुः। न ह्यत्र गौर्दीयते, न वासो न हिरण्यमिति। दक्षिणाशब्दश्च परिक्रयार्थो भवति। तत्र हि श्रूयते। गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा, इति। ऋत्विग्दानं दक्षिणा, न प्रासर्पिकम्। तस्यैवासौ प्रतिषेधो न प्रासर्पिकस्य। तस्मान्नित्यप्राप्तस्यैवानुवादोऽसौ न सत्रेषु दक्षिणेति ॥ ३८ ॥

( उदवसानीयस्य सत्रानङ्गत्वाद्दक्षिणादानस्य ऋत्विक्परिक्रयार्थत्वाधिकरणम् ॥ १२ ॥ )

[ १२ ] उदवसानीयः सत्रधर्मा स्यात्तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥ ३९ ॥ पू०

अस्त्युदवसानीयः। सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्निति। तत्रैषोऽर्थः सांशयिकः। दक्षिणादानं धर्ममात्रमुत परिक्रयार्थमिति। तथेदमपरं द्वैतम्। किं सत्राङ्गमुदवसानीयः, नेति। यदि सत्राङ्गं, धर्ममात्रं दानम्। अथ न सत्राङ्गं, परिक्रयार्थमिति। किं प्राप्तम्। सत्राङ्गमिति। कुतः। सत्रप्रकरणात्। सत्रं परिसमाप्य कर्तव्यमिति श्रूयते। सत्रप्रकरणात्सत्रं लक्षयित्वेति गम्यते। उदवसानीयश्च सत्रस्य विधीयत इति। सत्रस्य च फलार्थत्वान्नोदवसानीयार्थता गम्यते। न च सत्रोदवसानकाल उदवसानीयः। लक्षणा हि तथा स्यात्। अनङ्गत्वे च फलं कल्पयितव्यम्। तस्मादानन्तर्यादेकवाक्यतासंबन्धाच्च सत्राङ्गमुदवसानीयः। सत्रं यथोक्तं

---

॥ ३७ ॥ ३८ ॥

परिसमाप्य न संतोष्टव्यम् । न तावत्कृत्वा कृतिता मन्तव्या । इदमपरं तस्याङ्गं कर्तव्यमुदवसानीय इत्येवमभिसंबन्धः क्रियते । यथा, अग्निं चित्वा सौत्रामण्या यजेत, वाजपेयेनेष्ट्वा बृहस्पतिसवनेन यजेतेति । तस्मात्सत्राङ्गम् । एवं चेत्साङ्गस्य सत्रस्य स्वयं कर्तृकत्वाद्धर्ममात्रं तत्र दानम् । सत्रधर्मा उदवसानीय इति ॥ ३९ ॥

न त्वेतत्प्रकृतित्वाद्विभक्तचोदितत्वाच्च ॥ ४० ॥ सि०

तुशब्दः पक्षं व्यावर्तयति । नैतदेवं, धर्ममात्रमत्र दानमिति । किं तर्हि । परिक्रयार्थमिति । कुतः । नैतत्सत्राङ्गम् । विभक्तचोदितत्वात् । नैतद्बृहस्पतिसवेन सौत्रामण्या च तुल्यम् । तत्रैवं श्रूयते । यथोक्ताङ्गं कृत्वा नैव संतोष्टव्यम्, इदमपरं तस्य कर्तव्यमिति । इह पुनः सत्रमुत्सृज्य, उदवसानीयः कर्तव्य इति । सत्रादुदवसाय—उत्थायेत्यर्थः । तत्रान्योऽर्थः क्त्वाशब्दस्य । यथोदितं निर्वर्त्य न प्रहातव्यम् । उत्पूर्वस्यावपूर्वस्य स्यतेः प्रहायेत्यर्थः । प्रहाण इह क्त्वाशब्दः । तत्र पुनरनुष्ठानानन्तर्यं । तस्माद्विभक्तचोदितत्वान्न सत्राङ्गं, न च सत्रप्रकृतिकम् । तस्मादत्र दानं परिक्रयार्थमिति ॥ ४० ॥

---

'न च सत्रस्योदवसानीयाङ्गत्वम्' लक्षणा हि तथा स्यादिति—कोऽभिप्रायः । न सत्रमस्मिन्वाक्ये विधीयते । न च ( सत्रं क्वचिन्न ) सत्रे किंचिदिति, सत्रं परार्थमुच्चार्यते । तत्रैषा लक्षणा स्यादित्ययमभिप्रायः । 'वाजपेयेनेष्ट्वा सत्रादुदवसाय' इति च तुल्यं मत्वा पूर्वपक्षं करोति । उत्तरः पक्षः, नैतयोस्तुल्यता वाक्ययोः । वाजपेयेनेष्ट्वेति निर्वर्त्य पूर्वक्रियामन्यक्रियान्तरं विधीयते। तदङ्गतया लक्षणया तु पूर्वक्रियापरित्यागोऽवगम्यते, न तु क्त्वाशब्देनोच्यते । क्रियाविशेषार्थैतेषामारम्भानुष्ठानपरिसमाप्तयः । तस्मान्न त्यागः शब्देनोच्यते । उत्पूर्वोऽवस्यतिः श्रुत्यैव परित्यागं ब्रवीति । कर्मण्यन्यत्र यदन्यद्विधीयते तस्याङ्गता नास्ति । पूर्वकर्मणो निःसमाप्तत्वात् । यद्युदवसायशब्दोऽनुगृह्यते, कथमङ्गत्वम् । अथाङ्गत्वमुदवसायेति बाध्यते ॥ ३९ ॥ ४० ॥

( पृष्ठशमनीयस्य ऋत्विगन्तरसंपादनेन प्रत्येककर्तृक-
त्वाधिकरणम् ॥ १३ ॥ )

[ १३ ] तेषां तु वचनाद्द्वियज्ञवत्सहप्रयोगः
स्यात् ॥ ४१ ॥ पू०

इदमेवोदाहरणं, सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्निति । तत्रैषोऽर्थः समधिगतः । न सत्राङ्गं पृष्ठशमनीय इति । अथेदानीमिदं संदिह्यते । किं संहत्य तैस्तत्कर्तव्यमुतैकैकेनेति । किं प्राप्तम् । संहत्येति । कुतः । उपादेयत्वेन याग चोद्यमानस्य बहुत्वस्य श्रवणात् । स चेदेकेन क्रियेत, बहुत्वसंयुक्तः प्रयोगो न स्यात् , द्वियज्ञवत् । यथा, एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामिति । यद्यपि राजपुरोहितौ लक्षणत्वेन श्रूयेते, एवमपि यजेयातामिति याग उपादेयत्वेन । यागे चैतत्कर्तृद्वित्वं श्रूयते, यजेयातामिति । तद्वत् , पृष्ठशमनीयेन यजेरन्निति । तस्मात्संहत्य पृष्ठशमनीयं प्रयुञ्जीरन्निति ॥ ४१ ॥

( पृष्ठशमनीये सत्रिभ्योऽन्येषामृत्विक्त्वाधिकरणम् ॥ १४ ॥ )

एवं स्थितं तावदपर्यवसितमन्तरा चिन्तान्तरस्य सूत्रं तावद्वर्णयिष्यामः —

[ १४ ] तत्रान्यानृत्विजो वृणीरन् ॥ ४२ ॥ सि०

---

'यजेरन्' इत्युपादेयत्वे श्रुतत्वाद्वचनस्य विवक्षा । नन्वितरेतरानिरपेक्षास्तथाऽपि यागे सापेक्षा द्वियज्ञवत् । यथा राजपुरोहितौ फले प्रति प्रधानभूतौ, यागं प्रति गुणभूतौ । कथम् । यागो विधीयमानः कर्तारमाक्षिपति । तत्र संख्या श्रूयते 'सायुज्यकामौ यजेयाताम्' इति, सैव विधीयते । कर्तृगामिनि क्रियाफले क्रियामकुर्वन्क्रियाफलेन न संबध्यत इत्यर्थात्कारिष्यति । अस्यामवस्थायां द्विवचनं विवक्ष्यते । यदि च राजपुहितौ द्विवचनविशेषणार्थमुच्चार्येयातां, तथा सति यागं प्रधानभूतं न कश्चित्कुर्यात् । तयोर्यागो विधीयते । सापेक्षाश्च कर्तारः । तस्माद्विवक्षितं बहुवचनम् ॥ ४१ ॥

---

अस्मिन्नेवोदाहरण एषोऽर्थः सांशयिकः। किं त एव सत्रिण ऋत्विज उतान्ये वा वरीतव्या इति। किं प्राप्तम्। त एव कुतः। समानकर्तृकता हि गम्यते, उद्वसाय यजेरन्निति। य एवोद्वसातारस्त एव यष्टार भवति प्रत्ययः। यथैव वचनप्रामाण्याच्चोदकप्राप्तामेककर्तृकतां बाधित्वा बहुकर्तृकता भवति, एवं चोदकप्राप्तानन्यानृत्विजो बाधित्वा वचनप्रामाण्यात्त एव भवितुमर्हन्तीति।

एवं प्राप्ते, ब्रूमः। तत्रान्यानृत्विजो वृणीरन्निति। न हि पृष्ठशमनीये ये सत्रादुद्वसातारस्ते कर्तारो विधीयन्ते। न तेषामुपादेयत्वेन चोदनेत्युक्तम्। न चाविहितमङ्गं भवति। न चानङ्गे हीने विगुणता काचिद्भवति। सन्ति च चोदकप्राप्ता अन्ये ऋत्विजः। अपि चात्र यावति कर्त्रभिप्रायं क्रियाफलं, तावति त एव कर्तारः। तदेतदुपग्रहविशेषादवगम्यते। न च ऋत्विजः प्रति यागस्य कर्त्रभिप्रायं क्रियाफलम्। तस्मान्नाऽऽर्त्विज्ये त एव कर्तारः। प्रधानयागे तावत्कर्तॄनवगच्छामः। ऋत्विजः पुनरन्ये वरीतव्या इति ॥ ४२ ॥

एकैकशस्त्वविप्रतिषेधात्प्रकृतेश्चैकसंयोगात् ॥ ४३ ॥

सि० [ अ० १३ ॥ ]

स्थितादुत्तरम्। तुशब्दः पक्षं व्यावर्तयति। न पृष्ठशमनीयं संहत्य प्रयुञ्जीरन्। किं तर्हि। एकैकशः। कुतः। अविप्रतिषेधात्। उद्वसानेन हि पुरुषा लक्ष्यन्ते। ये सत्रादुद्वस्यन्तीति। तत्र चैकोऽप्युद्वसाता भवति। ये चोद्वसानलक्षितास्तेषां याग इत्येकैकस्यापि यागो विहितो भवति। न च केनचित्प्रतिषिध्यते। तस्मादेकैकोऽपि

॥ ४२ ॥

---

इतरेतरनिरपेक्षा उद्वसाने कर्तारः। कुतः। अर्थप्राप्तत्वात्। उद्वसानस्य × भाव्यमानत्वाद्यादृशाश्चोद्वसोन, तादृशा एव पृष्ठशमनीये। तस्मादविवक्षितं बहुवचनम्।

× उद्वसानस्याभाव्यमानत्वात्—इति पा०।

यजेत। ननु बहूनां प्रयोग उच्यते। तेनैकैकस्य न भवति। नैष दोषः। एकैकस्यापि न वार्यते। तेन चोदकसामर्थ्यादेकैकश्च एव यजेतेति।

आह। बहुसंयुक्तः प्रयोग एकैकेन न शक्यते कर्तुमिति। एवमपि न दोषः। नात्र बहुवचनं विधीयते। ये सत्रादुदवसातारस्तेषामेव यागः। ते च बहवः। तेषां बहूनामत्र प्राप्तानामयमनुवादः। एकैकश्येनापि च त उदवसातारः। तस्मात्तेषां तथैव यागो भविष्यति। यथैवोदवसाने तेषामसंहतानां बहुवचनम्, एवं यागेऽप्यसंहतानामेव भविष्यति। अत्रोच्यते। न बहुवचनमनुवादः। अप्राप्तत्वात्। न हि बहुवचनं यागे प्राप्तं, यदनूद्येत। नन्विदानीमेवोक्तमुदवसातॄणा यागः। ते च बहव इति। उच्यते। बहुत्वं तेषामुदवसाने, न यागे।

ननु वाक्यसामर्थ्याद्यागेऽपि भविष्यति। नेत्याह। परिपूर्णं हि पदं पदान्तरमाकाङ्क्षति। ततो वाक्यं भवति। अयं च यागः। प्रागेव बहुवचनेन संबद्धः। न तस्यामवस्थायां वाक्येनोदवसातारः प्राप्ताः। उपादत्ते तु तदा बहुत्वम्। ततो बहुवचनसंयुक्तः पदान्तरगतानुदवसातॄनपेक्षते। तस्माद्बहुत्वसंयुक्तः प्रयोगः कर्तव्यः। यथा द्वियज्ञे सत्रेषु चेति। आह। नैतदेवम्। यत्र केनचित्प्रकारेणानुवादः संभवति तत्रानुवादो वा स्यात्, विधिर्वेति। यद्यप्यपूर्वत्वादन्यत्र विधिर्ज्यायाननुवादात्। तथाऽप्यत्रानुवाद एव बहुत्वस्य भवितुमर्हति। तथा हि यागसंबन्धो बहूनां न कुतो भवति। तत्र दृष्टमेव प्रयोजनं, इतरस्मिन् पक्षे बहुत्वस्य यागसंबन्धे दृष्टं कल्पनीयं स्यात्। तस्मादनुवाद इति।

---

ननु राजपुरोहितवदित्युक्तम्। यजेरन्निति श्रुत्यैव बहुत्वं गम्यते। सत्यं गम्यते, न तु विधीयते। कथम्। प्राप्तत्वात्। कुतः प्राप्तिः। क्त्वाप्रत्ययश्रवणाद्द्वौ प्रयोगौ गम्येते। ये च पूर्वस्मिन्प्रयोगे कर्तारस्त एवोत्तरस्मिन्। पूर्वस्मिंश्चेतरेतरनिरपेक्षास्तादृशा एवोत्तरस्मिन्। प्रयोगतः क्रियाविशेषाद्वाऽप्राप्तः

आह । द्वियज्ञेऽपि तर्ह्येवमेव प्राप्नोति, सत्रेषु चेति । अत्रोच्यते । अस्त्यत्र विशेषः । उदवसाय यजेरन्निति । राजपुरोहितौ यजेयाताम्, ऋद्धिकामाः सत्रमासीरन्निति । यत्र क्त्वान्तः शब्दो भवति, तत्र द्वौ प्रयोगौ गम्येते । समानाश्च कर्तारः श्रवणादेव तत्रोत्तरप्रयोगवचनेन केवलो धात्वर्थो विधीयते । तदाश्रयः प्रयोगः, कर्तारश्च, तद्गता च संख्या, एवं सर्वमेतद्धात्वर्थे विधीयमाने प्राप्तमेवानूद्यते ।

द्वियज्ञे सत्रेषु च धात्वर्थो विधीयते, प्रयोगोऽपि, कर्तारः, तद्गता च संख्येति, सर्वमेव तत्राप्राप्तम् । न हि राजपुरोहिताविय्येष शक्नोति प्रयोगं वदितुम्, तत्र च कर्तृत्वं तद्गतां संख्याम् । तथा ऋद्धिकामा इति । तस्मादेवंजातीयकेषु संख्योपादेयत्वेन श्रूयते । अतो द्वियज्ञादिषु नानुवादः । तेषु बहुत्वसंयुक्तः प्रयोगः कर्तव्यः इह तु न तथा । तस्मादेकैकः पृष्ठशमनीयेन यजेतेति ॥ ४३ ॥

( कामेष्टौ दानस्यादृष्टार्थत्वाधिकरणम् ॥ १५ ॥

[ १५ ] कामेष्टौ च दानशब्दात् ॥ ४४ ॥ पू०

अस्ति सारस्वते सत्रे कामेष्टिः, प्लाक्षं प्रस्रवणं प्राप्याग्नये कामायाष्टाकपालं पुरोडाशं, निर्वपन्ति, तस्यामश्वां पुरुषीं च धेनुके दत्त्वा प्रति यमुनामवभृथमभ्यवयन्तीन्ति । तत्र संशयः । किं परिक्रयार्थं दानमुत धर्ममात्रमिति । पृष्ठशमनीये च सत्रस्यानङ्गभूते परिक्रयार्थं

---

स विधीयते । तस्मादृत्विजो य एवोदवसाने कर्तारस्त एव पृष्ठशमनीये विधीयन्ते । कुतः । सामानाधिकरण्यात् । उदवसाय यजेरन्निति । यद्वाऽन्यकर्तारः पृष्ठशमनीये भवेयुः । सामानाधिकरण्यमुपपद्यते च ॥ ४३ ॥

---

ननु नैवात्र दानं परिक्रयार्थं, दक्षिणाशब्दाश्रवणात् । पृष्ठशमनीये तु विद्यते दक्षिणाशब्दः । कथमेतत् । उच्यते । 'भक्षाश्रवणाद्दानशब्दः= परिक्रये' इत्यत्र दानं परिक्रयार्थं न्यायेन स्थापितं पूर्वपक्षे । स चात्रापि न्यायः । तथा च भाष्यंदानशब्दश्च कर्मकरेषु सत्सु परिक्रयार्थ इत्युक्तमिति ।

---

=( अ० ३ पा० ४ अ० १७ सू० ४८ ) ।

दानमित्युक्तम्। अथेदानीमङ्गभूतायां कामेष्टौ चिन्त्यते। तत्र किं तावत्प्राप्तम्। यथा पृष्ठशमनीये परिक्रयार्थम्, एवमिहापीति चशब्देनान्वादिश्यते। कुतः। दानशब्दात्। दानशब्दो भवति। तस्यामश्वां पुरुषीं च धेनुके दत्त्वा, इति। दानशब्दः कर्मकरेषु सत्सु परिक्रयार्थं इत्युक्तम्। न चैतत्सत्रम्। सत्रस्याङ्गभूतमेतत्। प्रकरणाच्च सत्रस्य स्वयंकर्तृकता, नाङ्गानाम्। तच्चोदकप्राप्तैर्ऋत्विग्भिः सगुणं सत्सत्रस्योपकारकं भवति। अन्यैर्ऋत्विग्भिर्विना विगुणं सत्रस्य नोपकुर्यात्। तस्मादत्र दानं परिक्रयार्थमिति ॥ ४४ ॥

वचनं वा सत्रत्वात् ॥ ४५ ॥ सि०

वाशब्दात्पक्षो व्यावर्त्यते। नात्र परिक्रयार्थं दानं, धर्ममात्रमिति। कुतः। सत्रत्वात्। सत्रेष्वानतिर्निवृत्ता। आह। नैतत्सत्रं, सत्राङ्गमित्युक्तम्। उच्यते। न सत्रम्। सत्राङ्गं तु सत्रमध्यपतितम्। सत्रस्य च साङ्गस्य स्वयं कर्तृकता। तस्यां क्रियमाणायां सिद्धा

---

अत्र ग्रन्थः। न चैतत्सत्रमिति। कोऽभिप्रायः। अस्मिन् सारस्वते सत्रे, श्रावश्च ते गो अयुभी यजमाना पयोरहूनोः शिष्टिः स्वाहा सदर्शपूर्णमासौ, एतत्सारस्वतं सत्रं नात्र कामोऽस्याश्चोदकेन, तस्मादङ्गं तदेतत्सत्रमिति।

इतरो ब्रवीति, सत्रस्याङ्गं भवति। साङ्गं च सत्रं कर्तव्यम्। तत्र द्वादशाह प्रकरणाच्च सत्रस्य साङ्गस्य, नाङ्गानामिति। कोऽभिप्रायः। द्वादशाहे, आर्त्विज्येषु यजमानाः कर्तारो विधीयन्ते। तेष्वेतत्स्वयं कर्तृकता प्रकरणात्सत्रस्य साङ्गस्य प्रकृतौ येषु कर्तृतोक्ता, इह चोदकेन तेष्वेवाङ्गेषु स्वयं कर्तृकता प्राप्नोति। कामेष्टिरपूर्वमङ्गम्। न च प्राकृतस्य कार्ये वर्तते। यो यूपावटस्तरणन्यायः स इहापि। न त्वनेन न्यायेन यूपावटस्तरणेऽध्वर्युः कर्ता न प्राप्नोति।

उच्यते। सोमे साङ्गे प्रत्यक्षेण कर्तारो विधीयन्ते। यत्र चोदकेन, तत्र नियतेष्वेव पदार्थेषु नाधिकेषु ॥ ४४ ॥

---

प्रकृता एव यजमानाः कामेष्टिं करिष्यन्ति, लाघवात्। कामेष्टौ प्रत्य-

अस्या इष्टेः कर्तारः। तत्राऽऽनत्या न प्रयोजनम्। श्रूयमाणं तु दानं धर्ममात्रं भवितुमर्हतीति ॥ ४५ ॥

[ वैश्वानरेष्टौ द्वेष्यसंप्रदानकदानस्यादृष्टार्थत्वाधिकरणम् ॥ १६ ॥ ]

[ १६ ] द्वेष्ये चाचोदनाद्दक्षिणापनयः स्यात्
॥ ४६ ॥ सि०

दर्शपूर्णमासयोरिदमाम्नायते, यदि पत्नीः संयाजयन् कपालमभिजुहुयात्, वैश्वानरं द्वादशकपालं निर्वपेत्। तस्यैकहायनो गौर्दक्षिणा। तं स द्वेष्याय दद्यादिति' तत्र संशयः। किं परिक्रयार्थमेकहायनस्य दानमुत धर्ममात्रमिति। किं प्राप्तम्। दक्षिणाशब्दात्परिक्रयार्थमिति। परिक्रयार्थे हि दक्षिणाशब्दो भवति।

एवं प्राप्ते, ब्रूमः। द्वेष्ये च धर्ममात्रं दानमिति चच्छब्देनान्वादिश्यते। कुतः। अचोदनाद्द्वेष्यस्य ऋत्विजः। न हि द्वेष्य ऋत्विग् भवति। ऋत्विगाचार्यौ नातिचारितव्याविति। यदा परिक्रेतव्येनैव कर्त्रा प्रयोजनं नास्ति, तदा किं दक्षिणाशब्दः करिष्यति। अपि च, परिक्रयार्थे सति दक्षिणापनयः स्यात्। चोदकप्राप्तोऽन्वाहार्योऽपनीयेत। तत्र चोदको बाध्येत। तस्माद्धर्ममात्रमेकहायनस्य दानमनृत्विजे दातव्यमिति ॥ ४६ ॥

---

क्षेण वचनेन कर्तारो न प्राप्नुवन्ति। चोदकेनापि न, प्रसङ्गेनात्र प्राप्नुवन्ति ॥ ४५ ॥

—

अपि च परिक्रियार्थे सति दक्षिणाशब्दः स्यात्। चोदकप्राप्तोऽन्वाहार्योऽपनीयेत। तत्र चोदको बाध्येत। इत्ययुक्तोऽयं ग्रन्थः। कथम्। पत्नीसंयाजवेलायामन्वाहार्यो दत्तः। यद्यपि निमित्त इयमिष्टिर्विधीयते तथाऽपि प्रसङ्गेनैव निर्वृतत्वान्नैवान्वाहार्यः प्राप्नोति ॥ ४६ ॥

—

( अस्थियज्ञस्य जीवदधिकारिकत्वाधिकरणम् ॥ १७ ॥ )

[ १७ ] अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद्विप्रतिषेधादस्थ्नाम् ॥ ४७ ॥ सि०

इदमाम्नायते, यदि सत्राय संदीक्षितानां प्रमीयेत, तं दग्ध्वा कृष्णाजिनेऽस्थीन्युपनह्य योऽस्य नेदिष्ठस्तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् । ततः संवत्सरेऽस्थीनि याजयेयुरिति । योऽयं संवत्सरे यज्ञः, स संदिह्यते, किमस्थ्नामुत जीवतामिति । किं तावत्प्राप्तम् । सामानाधिकरण्यादस्थ्नामिति । किं सामानाधिकरण्यम् । याजयतेरस्थीनि कर्मभूतानि ।

नन्वस्थीन्यचेतनानि न शक्नुवन्ति स्वयं तन्त्रयितुं, कथं तानि क्रियायां कर्तॄणि भवेयुरिति । उच्यते । प्रयोज्यता तेषां श्रूयते । ततोऽन्ये प्रयोजयितारः । त एतानि क्रियां कारयिष्यन्तीति । आह । न ह्यकुर्वति कारयतीति भवति । कर्तुर्हि प्रयोजको हेतुः । न चैतानि कार्त्स्न्येन क्रियामुपसंहर्तुं शक्नुवन्तीति । उच्यते । वचनप्रामाण्याद्यावद्याजमानं कारयितुं शक्यन्ते तावत्कारयिष्यन्ते, औदुम्बरीसंमानं शुकरान्वारम्भणमित्येवमादीनि ।

आह प्रधानमेव न शक्नुवन्ति, नाङ्गानि कुर्वन्ति यजमानानि= भवन्तीति । अत्रोच्यते । वचनसामर्थ्यात्तच्छवद्द्रव्यमृत्विजः प्रतिग्रहीष्यन्ति । तद्दक्षिणापरिक्रीतास्तत्त्यक्ष्यन्ति× । ईदृशो द्रव्यत्यागो वाचनिको भविष्यतीति । आह । एवं वर्ण्यमाने याजयितॄणामेव कर्तृत्वमुपदिष्टं भवति, नास्थ्नामिति । उच्यते । यष्टॄणामेवैतेन प्रकारेण कर्तृत्वमुपदिश्यते । न ह्यकर्तरि कारयतीति भवति । हेतुकर्तृत्वं चास्थ्नां यागे सति प्राप्तमेवानूद्यते । यथा, ग्रामकामं संयाजयेदिति ग्रामकामो यजेतेति विधीयते । हेतुत्वं च प्राप्तानुवादमात्रम् । तच्च दर्शयति, स्तोत्रेऽस्थिकुम्भमुपदधातीति । अस्थ्नामेव यजमानत्वं दृश्यते । तस्मादस्थ्नां यज्ञो न जीवताम् ।

इति प्राप्ते, ब्रूमः । अस्थियज्ञ इतरेषां जीवतां स्यात् । तेषाम-

= याजमानानि—पा० । × तद्दक्षिणास्तत्परिक्रीताः—पा० ।

विप्रतिषिद्धो यज्ञः। अस्थ्नां विप्रतिषिध्यते। त्यागो नाम मनसा क्रियते, न चास्थ्नामस्ति मनः। यदुक्तम्, ऋत्विजः शवद्रव्यं दक्षिणां प्रतिगृह्य तत्परिक्रीतास्त्यागं कुर्वन्तीति। ईदृशो वाचनिकस्त्यागो भवतीति। नैतदेवम् न हि यजेतेत्युक्ते, अशक्नुवत्सु वचनप्रामाण्यादन्यो यज्यर्थो भवति। यागं कुर्वीतेति हि तद्वचनं, नान्यो यज्यर्थ इति। न च वचनप्रामाण्यादेतद्भवति, यच्छवद्रव्यं तद्गृह्यते। न हि तदास्थिभिर्दत्तं भवति। न चासति दाने परिक्रयः। न च गौणोऽर्थो विधिशब्दादवगम्यते। अन्येन हि प्रमाणेन परिच्छिन्नेऽर्थे गौणः शब्दः संबध्यते। यथा, गौरनुबन्ध्य इति गोजातिविशिष्टः पशुरनुबध्यते, न वाहीकः। गौरयं वाहीक इति तु संवादे वाहीके गौण शब्दः प्रवर्तते। तस्मान्न त्यागविधानेऽन्यो यज्यर्थः स्यात्। न चास्थ्नां द्रव्यं स्वं संभवति। यदृत्विजो गृहीत्वा वयमनेन परिक्रीता इति मन्येरन्। तस्मान्न कथंचनास्थीनि यष्टृणि भवन्ति। अतो न विवक्षितं सामानाधिकरण्यमिति।

आह। असंबद्धवचनादनर्थकं तर्हीदं वाक्यम्। नेति ब्रूमः। न हि गम्यमानेऽर्थेऽनर्थकं भवति। ततः संवत्सरे याजयेयुः, इत्येतावतो वाक्यात्कश्चिदर्थोऽवगम्यते स इह विवक्षितः। अस्थीनि याजयेयुरित्येष संबन्धो न विधीयते। आह। किमस्थीनीति प्रमादपाठः। न च प्रमादपाठ इति ब्रूमः। न हि स एवाप्रमादपाठो यो विधानार्थो मुख्यार्थश्च। अनुवदन्नप्यर्थं लक्षणयाऽपि ब्रुवन् वाक्ये समवायं गच्छति। न च प्रमादपाठो भवति। तत्र, अस्थीनीत्येष शब्दो विदधत्स्वमर्थं मुख्यया वृत्त्या ब्रुवन् वाक्ये न समवैति। अनुवदंस्तु लक्षणया समवेष्यति। ततः संवत्सरे याजयेयुरिति× जीवतः प्रकृतान् वक्ष्यति। तत्रास्थिशब्दो वर्तिष्यते लक्षणया। ततः संवत्सरेऽस्थिमतो याजयेयुरिति। के तेऽस्थिमन्तः। ये तेन सह यष्टुं प्रक्रान्ताः। तस्माद्यस्य तान्यस्थीनि, तैरास्थिभिः स शक्यते लक्षयितुम्। तस्माज्जीवतां यज्ञ इति॥ ४७॥

× याजयेत्—पा०।

यावदुक्तमुपयोगः स्यात् ॥ ४८ ॥

अथ यदुक्तमस्थ्नां याजमानं दर्शयति, स्तोत्रेऽस्थिकुम्भमुपदधातीति । नैतद्याजमानम् । न ह्यस्थीनि यजन्त इत्युक्तम् । अतो वचनप्रामाण्यादेतत्कर्म यजमानसरूपं भवति । यावति वचनं तावत्येवतद्भवितुमर्हति, न तत्सर्वं यजमानं शक्नोति लक्षयितुम् । तस्माज्जीवतामेव यज्ञ इति ॥ ४८ ॥

( अस्थियज्ञस्य मृताधिकारित्वपक्षे जपसंस्कारेष्टीनां लोपाधिकरणम् ॥ १८ ॥ )

[ १८ ] यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं सेष्टि तदर्थत्वात् ॥ ४९ ॥ सि०

इह जपसंस्कारमिष्टिश्च चिन्त्यते । तत्र सूत्रेतरार्धेन जपसंस्कारं चिन्त्यते, शेषेणापीष्टिः । जपाः, यत्र जपतीति चोदनाः संस्काराः, केशश्मश्रु वपतीत्येवमादयः । किमस्थ्नां जपसंस्कारं कर्तव्यं, नेति संशयः । ननु नैवास्थ्नां यज्ञो, जीवतामसावित्युक्तम् । अत्रोच्यते । कृत्वा चिन्तैषा । अस्थ्नामिति कृत्वा चिन्त्यते । अनेन प्रकारेण पूर्वाधिकरणस्य प्रयोजनं विचार्यते । यद्यस्थ्नां यज्ञः स्यात् , किं जपसंस्कारं क्रियते, नेति । किं तावत्प्राप्तम् । विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म× स्यादित्यनेन न्यायेन कर्तव्यमिति ।

एवं प्राप्ते, ब्रूमः । यदि तु वचनात्तेषामस्थ्नां यज्ञः स्यात् । तेषां जपसंस्कारं लुप्तार्थं निवर्तेत । न तैः शक्यं जपितुं, नापि केशश्मश्रु वप्तुम् । अशक्यं च चोदको न प्रापयति । अथ सूत्रोत्तरार्धं, सेष्टि तदर्थत्वादिति । दीक्षणीयेष्टिः कर्तव्या, नेति विचारः । किं प्राप्तम् । चोदकानुग्रहाय कर्तव्या ।

---

यदि स्पर्शोऽभिधीयेताद्दष्टं कल्पितं, यजन्तं याजयितुं किमपि भवतीति, न च कश्चिद्यष्टुमिच्छेत् । अतो ण्यर्थोऽनुवादः+ ॥ ४७ ॥ [ ४८ ॥

---

×( अ० १० पा० १ अ० १ सू० १ )। +ण्यर्थ इति—' ततोऽस्थीनि याजयेयुः ' इत्यत्रास्थिपदेनास्थ्युपनहनकर्तृत्वसंबन्धेन जीवतामेव लक्षणयाऽभिधानात्तेषामेव संवत्सरान्ते विधीयमानो यागोऽव्यक्तत्वसाद्दश्याज्ज्योतिष्टोमविकार इति ततोऽतिदेशाद्दत्विक्प्राप्तेर्ण्यन्ता थोऽनुवाद इत्यर्थः ।

एवं प्राप्ते, ब्रूमः । सहेष्ट्या जपसंस्कारं न कर्तव्यम् । इष्टिर्लुप्येतेति । कुतः । तदर्था हि सा । यजमानो दीक्षां ग्रहीष्यतीति । दीक्षा च व्रतानि । नियमाश्च मानसं कर्म । न चैषां मनोऽस्ति । दीक्षाग्रहणार्था चेष्टिः संयोगाज्ज्ञायते, आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण इति । तस्मादिष्टिरपि निवर्तेतेति । क्रत्वर्थं तु क्रियेत गुणभूतत्वात् ॥ ४९ ॥

( अस्थियज्ञस्य मृताधिकारिकत्वपक्षे क्रत्वर्थानामनुष्ठानाधिकरणम् ॥ १९ ॥

[ १९ ] क्रत्वर्थं तु क्रियेत गुणभूतत्वात् ॥ ५० ॥ सि०

अस्थियज्ञ एवेदं संदिह्यते । यजमानेन संमितौदुम्बरी भवति । तथा, शुक्रं यजमानोऽन्वारभत इति । अस्थ्नां यागे सति किमेवंजातियकं कर्तव्यं, नेति । किं प्राप्तम् । अचेतनानामस्थ्नां सर्वक्रियासु स्वातन्त्र्यं नास्ति । तस्मादौदुम्बरीसंमाने शुक्रान्वारम्भणे च नास्थीनि कर्तॄणि भवेयुरिति ।

एवं प्राप्ते, ब्रूमः । करत्वर्थं तु क्रियेत गुणभूतत्वात् । यत्क्रत्वर्थमेवंजातियकं तत्क्रियेत । गुणभूतत्वात् । गुणभूतस्तत्र यजमानः । यजमानपरिमाणसंमितयौदुम्बर्या प्रयोजनम् । यजमानान्वारब्धेन च शुक्रेण । अचेतनेनैव च परिमीयते । शुक्रश्चान्वारभ्यते । तस्मादेवंजातीयकं कर्तव्यमिति ॥ ५० ॥

[ अस्थियज्ञस्य मृताधिकारिकत्वपक्षे गुणकामानामननुष्ठानाधिकरणम् ॥ २० ॥ ]

[ २० ] काम्यानि तु न विद्यन्ते कामाज्ञानाद्यथेतरस्यानुच्यमानानि ॥ ५१ ॥ सि०

अस्ति ज्योतिष्टोमः तत्र श्रूयते। यदि कामयेत वर्षेत्पर्जन्य इति,

---

क्रत्वर्थं तु क्रियेत गुणभूतत्वात् ॥ ५० ॥

---

ननु काम्यानामतिदेश एव नास्ति । सत्यम् । 'अस्थीनि यजेरन्' इति

नीचैः सदो मिनुयादित्येवमादि। तदिह चोदकेन प्राप्तं काम्यं कर्तव्यं, नेति संदिह्यते। चोदकानुग्रहाय, कर्तव्यमिति। नन्वस्थीनि न किंचित्कामयन्ते। यजमानकामनिमित्तकाश्चैवंजातीयकाः पदार्थाः। अत्रोच्यते। नात्र यजमानेन कामयमानेन प्रयोजनम्। एषोऽत्रार्थो नीचैः सदसि मीयमाने वृष्टिर्भवति। तद्यदि वृष्ट्या प्रयोजनं, नीचैः सदो मातव्यं, वृष्टिः प्रयोजनवती भविष्यतीति।

एवं प्राप्ते, ब्रूमः। काम्यान्येवंजातीयकानि न कर्तव्यानि। कुतः। यदि यजमानो वृष्टिं कामयेत नीचैः सदसि मीयमाने वृष्टिर्भवति। यजमानफलदं ह्युपग्रहविशेषात्साङ्गं कर्म, नान्येषां कामयितॄणां दातुमर्हतीति। न च वृष्टिर्यजमानस्य फलमिति विज्ञायते। यथेतरस्य जीवतो यजमानस्य विद्यमानोऽपि कामोऽनुच्यमानो न भवति। किमङ्ग पुनरस्थ्नां, येषां काम एव नास्ति। तस्मात्काम्यानि न कर्तव्यानीति॥ ५१॥

(अस्थियज्ञस्य मृताधिकारिकत्वपक्षे सूक्तवाकान्तर्गतायुरादिफलप्रकाशकभागाननुष्ठानाधिकरणम्॥ २१॥)

[२१] ईहार्थाश्चाभावात्सूक्तवाकवत्॥ ५२॥ सि०

सन्ति, अस्थियज्ञे दर्शपूर्णमासप्रकृतिकानि चोदकप्राप्तानि प्रायणीयादीनि, तेषु चोदकप्राप्तः सूक्तवाकः। तत्रेमानि, अयं यजमान आयुराशास्ते सुप्रजास्त्वमाशास्ते—विश्वं प्रियमाशास्ते यदनेन हविषाऽऽशास्ते तदश्यात्तदृध्यात्तदस्मै देवा रासन्तामिति। किमिमानि कर्तव्यानि, न कर्तव्यानीत्येषोऽर्थः संदिह्यते। किं तावत्प्राप्तम्। ईहार्था ये कामाः सूक्तवाके श्रूयन्ते, तेऽपि न स्युः। किं कारणम्। अभावात्कामयितुः। न ह्यस्थीनि कामयन्त इत्येतदुक्तम्। तस्मान्न कर्तव्यानि। सूक्तवाके, इति सूत्रयितव्ये, सूक्तवाकवदिति सूत्रितम्। कथमेवं वर्ण्यत इति। उच्यते। ईहार्थाः सूक्तवाकार्हाः अर्हे वतिर्द्रष्टव्यः। यथा, छन्दोव्यतिक्रमाद्व्यूढे* भक्षपवमानपरिधि-

---

श्रूयते। तत्र कः पुनर्याग इति स्तोत्र इति लिङ्गत्सोमयागः, नैष्टिकः। स च

---

*(ण० १० पा० ५ अ० २६ सू० ८८)।

कपालस्य मन्त्राणां यथोत्पत्तिवचनमूहवत्स्यादिति । तस्मान्न सूत्रोपालम्भः ॥ ५२ ॥

स्युर्वाऽर्थवादत्वात् ॥ ५३ ॥

न चैतदस्ति, यदुक्तं भवताऽस्थ्नामीहार्थाः कामा न कर्तव्या इति । स्युर्वाऽर्थवादत्वात् । स्युर्वा एते कामाः । कस्मात् । अर्थवादत्वात् । अर्थवादा एते, आयुराशास्ते सुप्रजास्त्वमाशास्त इति । नैते विधयः, अर्थवादा एते । अर्थवादत्वाच्च तेषां क्रियां चोदकः प्रापयति । एवं चोदकानुग्रहो भवति । तस्मात्पश्याम ईहार्थाः कामाः कर्तव्या इति ॥ ५३ ॥

नेच्छाभिधानात्तदभावादितरास्मिन् ॥ ५४ ॥

न चैतदास्ति, यदुक्तं भवता, ईहार्थाः कामाः कर्तव्या इति । कस्मात् । इच्छाभिधानात् । इच्छाभिधाना एते कामाः । आयुराशास्ते सुप्रजास्त्वमाशास्ते दिव्यं धामाऽऽशास्ते, इति । इच्छायामुत्पन्नायां प्रयुज्यन्ते । य एतान् कामानिच्छेत्स चेह यजमानो नास्ति । अचेतनावन्त्येतान्यस्थीनि । अस्थ्नामिच्छा न विद्यते । तदभावात्–अस्थ्नामिच्छाया अभावात्, इतरस्मिन्–जीवति, एते कामा भविष्यन्ति, नास्थिषु । तस्मात्पश्यामोऽस्थ्नामीहार्थाः कामा न कर्तव्या इति । नन्वेतेऽर्थवादा इत्युक्तम् । अत्रोच्यते । नैतेऽर्थवादाः । विधय एते । एवं चेत्परिहृतमेतद्भवति । तस्माद्यदुक्तं भवता, अस्थ्नामीहार्थाः कामाः कर्तव्या इति । नैतदेवम् । न कर्तव्याः । नेच्छाभिधानात्तदभावादितरास्मिन् ॥ ५४ ॥

( अस्थियज्ञे मृताधिकारपक्षे होतृकामनयाऽनुष्ठीयमानानां गुणकामानामननुष्ठानाधिकरणम् ॥ २२ ॥ )

[ २२ ] स्युर्वा होतृकामाः ॥ ५५ पू०

द्वादशाहप्रभृतीनि सत्राण्युदाहरणम् । तानि प्रकृत्य श्रूयते ।

---

सोमयाग उपदेशेनैतस्य, चिन्ता घटते । अथवा कृत्वा चिन्ता ॥ ५१ ॥५२॥ ॥ ५३ ॥ ५४ ॥

ततः संवत्सरेऽस्थीनि याजयेयुरिति=। चोदकप्रापाणि दीक्षाप्रभृतीनि कर्माणि श्रूयन्ते। सन्ति च प्रकृतौ होतृकामाः। यं कामयेतापशुमान् स्यादिति, पराचीं तस्येडामुपह्वयेत, अपशुमानेव भवति। यं कामयेत प्रमायुकः स्यादीति, तस्योच्चैस्तरां वषट् कुर्यात्। यं कामयेत पापीयान् स्यादिति, नीचैस्तरां तस्य याज्यया वषट् कुर्यात्। यं कामयेत वर्षीयान् स्यादिति, उच्चैस्तरां तस्य याज्यया वषट् कुर्यादिति। एवं तत्र संशयः क्रियते। किमस्थ्नां होतृकामाः कर्तव्याः, अथवा न कर्तव्या इति। ननु जीवतां यज्ञ इत्युक्तम्। अत्रोच्यते। अस्थ्नां यज्ञ इत्येवं कृत्वा चिन्ता प्रवर्तते। तत्र सूत्रेणैवोपक्रमः क्रियते। स्युर्होतृकामाः। एतेऽस्न्थां कर्तव्याः स्युः। कस्मात्। चोदकः प्रापयति। एवं चोदकानुग्रहो भविष्यति। तस्मात्पश्यामो होतृकामाः कर्तव्या इति ॥ ५५ ॥

न तदाशीष्ट्वात् ॥ ५६ ॥ सि०

न चैतदस्ति, यदुक्तं भवता होतृकामाः कर्तव्या इति। न कर्तव्याः। कस्मात्। तदाशीष्ट्वात्। तदाशीरेषा भवति। यजमानाशीरेषा। यां वै कांचन यज्ञ ऋत्विज आशिषमाशासते सा सर्वा यजमानस्य, इति यजमानविषयतामाशिषो दर्शयति। स चेह यजमानो नास्ति। अचेतनान्यस्थीनि। अस्थ्नां सामर्थ्यं नास्ति। अर्थी समर्थश्चाधिक्रियत इत्युक्तम्। कर्तुर्वा* श्रुतिसंयोगाद्विधिः कात्स्न्र्येन गम्यत इति। तस्मात्पश्यामोऽस्थ्नां होतृकामा न कर्तव्या इति। क्षीणा कृत्वा चिन्ता। प्रयोजनं नोच्यते। [ न तदाशीष्ट्वात् ] ॥ ५६ ॥

[ यजमानमरणोत्तरमपि सर्वस्वारस्य समापनाधिकरणम् ॥ २३ ॥ ]

[ २३ ] सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात् ॥ ५७ ॥ पू०

---

॥ ५५ ॥ ५६ ॥

---

= याजयेदिति—पा०। * ( अ० ६ पा० १ अ० २ सू० ५ )।

अस्ति सर्वस्वारः क्रतुः, शुनःकर्णोऽग्निष्टोमः+। मरणकामो ह्येतेन यजेत, यः कामयेतानामयः स्वर्गं लोकमियामिति। तत्र संशयः। किं दिष्टगते यजमाने तदन्तं कर्मोत्स्रष्टव्यमुत परिसमापयितव्यमिति। किं तावत्प्राप्तम्। सर्वस्वारे दिष्टगतौ यजमानस्य सत्यां तदन्तं कर्मोत्स्रष्टव्यम्। कर्मणो जीवसंयोगात्। जीवता हि शक्यं, नाजीवता। तस्मादिदमर्थादापद्यते, सर्वस्वारेण दिष्टगत्यन्तं यजेतेति ॥ ५७ ॥

स्याद्वोभयोः प्रत्यक्षशिष्टत्वात् ॥ ५८ ॥ सि०

स्याद्वा तस्य परिसमाप्तिः। उभयं हि प्रत्यक्षशिष्टम्। क्रतुः, परिसमाप्तिश्च। मरणकामो ह्येतेन यजेतेति—आरभ्य परिसमापयितव्यामित्याख्यातार्थः। तेन समाप्तिराख्यातेनैवोक्ता भवति। अपि चेदमाम्नायते, आर्भवे प्रस्तूयमान औदुम्बरीं सदशेन वाससा परिवेष्ट्य ब्राह्मणाः परिसमापयत मे यज्ञमिति संप्रेष्याग्निं विशतीति। यदि प्रैषमात्रं स्यात्, अदृष्टार्थं भवेत्। तस्मात्संप्रेषणद्वारलक्षणया परिसमाप्तिरेव विधीयते। यथा, यदि सोममपहरेयुः, विधावतेच्छतेति ब्रूयादिति। अथ यदुक्तं, जीवन्न कर्ता भवति, न मृत इति। नेत्युच्यते। जीवता वचनं प्रोक्तम्। आरब्धं परिसमापयतेति। अतस्तत्कृतैवासौ परिसमाप्तिः। अत्राऽऽह। यदाऽसौ प्रयुक्तवांस्तदा तावत्परिसमाप्तिस्तेन न कृता। यदा परिसमाप्तिस्तदाऽसौ नास्ति। कः परिसमाप्तेः कर्तेति।

अत्रोच्यते। मुक्तसंशयेनैतत्तुल्यम्। यद्भवान् मुक्तसंशयं जीवन्तं कर्तारं मन्यते तेनैतत्तुल्यम्। योऽपि, परिसमापयतेति प्रेष्य परिसमाप्तिकाले जीवति, तस्यापि जीवनं परिसमापनकालेऽनुपकारकं, पूर्वप्रैषादेवास्य कर्तृत्वमुपपद्यत इति। स च पूर्वप्रैषो जीवतोऽजीवतश्च तुल्यः। तस्माज्जीवन्निवायमपि कर्तेति। अथोच्येत। जीवतः सत्त्वा-

॥ ५७ ॥

———

+ कर्णस्तोमः—पा०। शुनः करणस्तोमः—इति सोमनाथीये पाठो दृश्यते।

त्कर्तृत्वमुपपद्यत इति । एतदपि तुल्यमेव । जीवतोऽपि, पुरुषः कर्ता, न शरीरम् । स च पतितेऽपि शरीरे पुरुषोऽस्ति। तस्मात्स एव परिसमाप्तौ कर्तेति । अथोच्येत । यजमानासंभवादशक्यं हि दिष्टगतावुत्तरं तन्त्रं कर्तुम् । अतस्तच्चोदको न प्रापयतीति । नैतदेवम् । याजमानवर्जं प्रापयिष्यति सः । तस्माददोषः । अथवा, प्रत्यक्षमेव परिसमाप्तेर्वचनं, ब्राह्मणाः संस्थापयत मे यज्ञमिति। तत्सामर्थ्यादेव याजमानं भविष्यति ॥ ५८ ॥

[ मृताधिकारपक्षेऽस्थियज्ञ इव, सर्वस्वारेऽपि बाध्याबाध्यविवेकाधिकरणम् ॥ २४ ॥ ]

[ २४ ] गते कर्मास्थियज्ञवत् ॥ ५९ ॥ सि०

अस्ति सर्वस्वारः क्रतुः, शुनःकर्णोऽग्निष्टोमः । मरणकामो ह्येतेन यजेत, यः कामयेतानामयः स्वर्गं लोकमियामिति । तत्र दिष्टगतौ यजमानस्य सत्यां किं कर्तव्यमिति प्रश्नः । भवति चादर्शयित्वाऽपि द्वौपक्षौ, प्रश्नेनोपक्रमः। पक्षद्वयेऽपि प्रतिभाति, भवति संशयः। सर्वाप्रसिद्धावपि भवति । यथा, को नामायं पर्वतः । का नामेयं नदी । किमिदं फलमिति । तदभिधीयते । गते कर्मास्थियज्ञवत् । दिष्टां गतिं गते यजमाने, अस्थियज्ञवत्कर्म भविष्यति। यथा, अस्थियज्ञे क्रत्वर्थं क्रियते, नान्यदस्थिभिः। एवं दिष्टामपि गतिं गते क्रत्वर्थं शवेन कारयितव्यम् । नान्यत् । यथा, शुक्रं यजमानोऽन्वारभते, यजमानेन संमितौदुम्बरी भवतीति ॥ ५९ ॥

( सर्वस्वारे जीवद्दशायां क्रियमाणप्रायणीयादौ सूक्तवाकान्तर्गतायुराशासनादेरनुष्ठानाधिकरणम् ॥ २५ ॥ )

[ २५ ] जीवत्यवचनमायुराशिषस्तदर्थत्वात् ॥ ६० ॥ पू०

सर्वस्वार एव जीवति यजमाने भवत्येवं संशयः । आशास्ते यजमान इति किमायुराशीर्वक्तव्या, उत नेति । किं प्राप्तम् । जीवत्यवचनमायुराशिषः । कुतः । तदर्थत्वात् । यत्राऽऽयुराशास्ते यजमा-

---

॥ ५८ ॥ ५९ ॥

नस्तत्र प्रस्तरं प्रयच्छत एव, एवंकामो यजमान इत्यावेदयितव्यं भवति, तद्यजमानः कथं प्राप्नुयादिति । स चायमत्र यजमानो विपरीतकामः-मरणकामः । तस्मादायुराशीस्तत्र न वक्तव्या ॥ ६० ॥

वचनं वा भागित्वात्प्राग्यथोक्तात् ॥ ६१ ॥ सि०

उच्यते । वक्तव्याऽऽयुराशीः । भागी ह्यायुराशीर्वादः । आर्भवे प्रस्तूयमाने यजमानस्य दिष्टा गतिः प्रार्थयितव्या भवति । प्रागार्भवकालादायुराशास्ते यजमानः, आर्भवकालं यावज्जीव्यासमिति । चोदकश्चैवमनुग्रहीष्यते । तस्मादत्राप्यायुराशीर्वक्तव्येति ॥ ६१ ॥

( सत्रे, अदृष्टार्थयोर्ऋतुयाज्यावरणाहिरण्यदानयोरनुष्ठानाधिकरणम् ॥ २६ ॥ )

अस्ति द्वादशाहः । द्वादशाहमृद्धिकामा उपेयुरिति । अस्ति तत्र चोदकप्राप्तं धर्ममात्रं किंचित् । यथा, ऋतुयाज्यावरणम्, आत्रेयहिरण्यदानं च । तत्र संशयः । किं धर्ममात्रं कार्यं, नेति । किं प्राप्तम् । स्वयं कर्तृकत्वात्सत्रस्य, वरणं दानं च निवर्तत इत्युक्तम् । न चान्यद्वचनमस्ति कर्तव्यमिति । यावानेव श्रुतस्योत्सर्गे दोषस्तावानश्रुतकल्पनायाम् । तस्मान्न कर्तव्यमिति ।

एवं प्राप्ते, ब्रूमः । क्रिया स्याद्धर्ममात्राणाम् । यद्धि वरणं दानं वा, न भवत्यानर्थ्यं, तत्स्वयं कर्तृकेऽपि न विरोधमुपैति । तस्माच्चोदकानुग्रहाय क्रिया स्यादिति ॥ ६२ ॥

[ पवमानेष्टिष्वग्निहोत्रहवणीलोपेऽपि निर्वापानुष्ठानाधिकरणम् ॥ २७ ॥ ]

[ २७ ] गुणलोपे च मुख्यस्य ॥ ६३ ॥ सि०

सन्ति, अग्न्याधाने पवमानेष्टयः । अग्नये पवमानाय पुरोडाश-

---

॥ ६० ॥ ६१ ॥ ६२ ॥

---

ननु समाख्या त्रिकालविषया । सत्यम् । तत्र वर्तमानस्तावत्कालो न संभवति । भूतो न विद्यते । भविष्यत्कालत्वं तु गृह्णीमो निर्वापस्य सगुणत्वाय । उच्यते । भविष्यत्कालतायास्तु भूतकालतान्याय्या । कथम् । अनित्यः संबन्धः ।

मष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये, इति। तत्र चोदकेन प्राप्तम्, अग्निहोत्रहवण्या हवींषि निर्वपेदिति। तत्र तावदग्निहोत्रस्य कालः। तस्मादग्निहोत्रहवणी नास्ति पवमानेष्टिषु। तदभावे किं निर्वापोऽपि न कर्तव्य उत कर्तव्य इति। किं प्राप्तम्। यथाश्रुतोऽसौ न शक्यते कर्तुम्। न चायथाश्रुतेन कृतेन किंचिदस्ति प्रयोजनम्। तस्माद्द्विगुणत्वान्न कर्तव्य इति।

एवं प्राप्ते, ब्रूमः। गुणलोपे च मुख्यस्य क्रिया स्यादिति गुणोऽग्निहोत्रहवणी। प्रधानं निर्वापः। यदि निर्वापो न संभवेत्, ततस्तदसंभवादग्निहोत्रहवण्यपि न संभवतीति निवर्तेत। न तु गुणलोपे मुख्यं न संभवतीति। तस्मान्निर्वापः कर्तव्यः। अग्निहोत्रहवणीसाधनता+ च तस्य न संभवतीति निवर्तते ॥ ६३ ॥

( सप्तदशशरावे चरौ मुष्टिलोपेन चतुःसंख्यानुग्रहाधिकरणम् ॥ २८ ॥

[ २८ ] मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वात्स्यात् ॥ ६४ ॥

अस्ति वाजपेयः। शरदि वाजपेयेन स्वाराज्यकामो यजेतेति। तत्र श्रूयते। नैवारः सप्तदशशरावः क्षीरे चरुर्भवतीति। अस्ति तु प्रकृतौ संख्या मुष्टयश्च, चतुरो मुष्टीन्निर्वपतीति। उभयं चोदकेन प्राप्तम्। तत्र संशयः किं संख्यानुग्रहो मुष्टिलोपः, उत मुष्ट्यनुग्रहः संख्यालोपः, अथवा किं संख्याया मुष्टीनां च लोपः, अथवाऽन्यतर-

---

भविष्यति काले कदाचिदस्याभावात्। पुरोडाशकपाले तु भूतस्य कालस्याभाव एव। अग्निहोत्रहवण्यपि न भूतकाला पवमानेष्टिषु। प्रकृतावग्निहोत्रहवणी वचनाद्भवति। सा च भूतकालसंबद्धा, इह चोदकेन तथाभूता प्राप्नोति। न च प्राक्पवमानहविष्यग्निहोत्रं संभवति। तस्मान्नास्त्यग्निहोत्रहवणी। यच्च पूर्णाहुत्यन्तेऽग्निहोत्रं सोऽपूर्व एव होमः ॥ ६३ ॥

---

+ साधनता त्वस्य न-पा०।

लोप इति । किं प्राप्तम् । अन्यतरलोप इति । यदि वा मुष्टिषु, यदि वा संख्यायाम् । कुतः । नियमकारिणः शब्दस्याभावादनियम इति ।

एवं प्राप्ते, ब्रूमः । मुष्टिलोपः स्यात्, संख्यानुग्रहश्चेति । कुतः । मुख्यत्वात्संख्यायाः । पूर्वं हि संख्या निपतति । सा पूर्वमेवावगम्यते, न तदवगमकाले संख्याविज्ञानस्य परिपन्थि किंचिद्विज्ञानमस्ति । तस्मिन्निष्प्रतिद्वंद्वे संख्याविज्ञाने प्राप्ते मुष्टिविज्ञानमापतति । तत्संख्याविज्ञानपरिपन्थितां नाऽऽचरितुमर्हति । तस्माज्जघन्यत्वान्मुष्टीनां लोपः । मुख्यत्वात्संख्यानुग्रहः= । तदुक्तं, मुख्यं÷ वा पूर्वचोदनाल्लोकवदिति ।

एवं प्राप्ते, ब्रूमः । मुष्टिलोपेन संख्या लोपमर्हतीति । कुतः । तद्गुणत्वात् । मुष्टिगुणो हि संख्या श्रूयते । चतुरो मुष्टीनिति । चतुःसंख्याविशिष्टा मुष्टयः कथं भवेयुरिति संख्योच्चार्यते, न स्वार्थे । तस्मात्संख्या पूर्वनिर्दिष्टाऽनिर्दिष्टेव । सा हि परविशेषणार्थमेवोच्चार्यते । तेन नैव तस्या अनुग्रहः कार्यः । मुष्टिलोपे सति तदधिकरणा संख्याऽधिकरणाभावान्निवर्तते । अन्याधिकरणायां क्रियमाणायां न न प्रकृतिवत्कृता स्यात् । संख्यालोपे पुनर्मुष्टयो निर्वापाधिकरणाः श्रूयमाणा अधिकरणानिवृत्त्या न निवर्त्स्यन्ति । तस्मान्मुष्टिगुणत्वात्संख्या निवर्तेत, न मुष्टयः । तदुक्तम्, अङ्गगुणविरोधे च तादर्थ्यादिति ॥ ६४ ॥

न निर्वापशेषत्वात् ॥ ६५ ॥ सि०

नैतदेवम् । न संख्या मुष्टिषु श्रूयते । यदि मुष्टिषु श्रूयेत, तद्गुणत्वान्निवर्तेत । क्व तर्हि श्रूयते । निर्वापे । कथम् । नैवमभिसंबन्धः क्रियते, चतुरो मुष्टीनिति । कथं तर्हि । चतुरो निर्वपतीति । मुष्टिगुणः संख्यागुणश्च निर्वापो निर्दिश्यते । क्रियासंबन्धे हि द्वितीया

---

॥ ६४ ॥

---

= मुख्यार्थत्वात्—पा० । ÷ ( अ० १२ पा० २ अ० ८ सू० २५ ) । * ( अ० १२ पा० २ अ० ९ सू० २७ ) ।

विभक्तिर्भवति । कथम् । कारकविभक्तिर्हि सा । कारकं क्रियाया एव भवति, न द्रव्यस्य । अतश्चतुःसंख्या श्रुत्याऽवगता निर्वापस्य, वाक्येन मुष्टीनाम् । वाक्याच्च श्रुतिर्बलीयसी । तस्मान्मुख्यानुग्रहान्मुष्टिलोप एवेति ॥ ६५ ॥

संख्या तु चोदनां प्रति सामान्यात्तद्विकारः
संयोगाच्च परं मुष्टेः ॥ ६६ ॥ पू०

तुशब्द एनं पक्षं व्यावर्तयति, न संख्यानुग्रहो मुष्टिलोप इति । किं तर्हि । संख्यया संख्या निवर्तते, शरावैश्च मुष्टयः । कथम् । सामान्यात् । निर्वापसाधनं द्रव्यं प्रकृतौ मुष्टयः । तासां परिच्छेदिका चतुः संख्या । इह सप्तदशसंख्याकः शरावद्रव्यकश्चरुर्भवतीति श्रूयते। तत्र मापनार्थं मुष्टिद्रव्यं मापनार्थैः शरावैर्निवर्त्यते । तत्परिच्छेदनार्था चतुःसंख्या परिच्छेदार्थया सप्तदशसंख्यया निवर्त्यते । तद्यथा, इदं दधि घृतं शाकमिमे शालयः, देवदत्तो भोजयितव्यः, देवदत्तवद्यज्ञदत्तस्तैलेनेति, भोजने यद्घृतेन शक्यते कर्तुं तत्तैलेन क्रियते । तस्माद्यद्यपि न श्रूयते तैलेन स्नेहयितव्यामिति, तथाऽपि समानकार्यत्वात्तैलं घृतस्य विनिवर्तकं भवति । एवं संख्या परिच्छेदं कुर्वती परिच्छेदिकाया एव संख्याया निवर्तिका भवितुमर्हति । परं च शरावद्रव्यं मुष्टेर्निवर्तकं, संयोगात् । तस्मात्प्राकृती संख्या प्राकृतं च द्रव्यं निवर्तते ॥ ६६ ॥

न चोदनाभिसंबन्धात्प्रकृतौ संस्कारयोगात्
॥ ६७ ॥ सि०

नैतदेवम् । चोदनेति यागं ब्रूमः । यागसंबद्धा हि सप्तदशसंख्या, शरावद्रव्यं च । प्रकृतौ निर्वापसंस्कारसंबद्धा चतुःसंख्या मुष्टिद्रव्यं च । न चान्यत्र क्रियमाणं समानकार्यमप्यन्यत्र निवर्तकं भवति । यस्य हि प्रत्यक्षश्रुतेन चोदकप्राप्तस्य कार्यमभिनिर्वर्त्यते,

॥ ६५ ॥ ६६ ॥ ६७ ॥

लोप इति। किं प्राप्तम्। अन्यतरलोप इति। यदि वा मुष्टिषु, यदि वा संख्यायाम्। कुतः। नियमकारिणः शब्दस्याभावादनियम इति।

एवं प्राप्ते, ब्रूमः। मुष्टिलोपः स्यात्, संख्यानुग्रहश्चेति। कुतः। मुख्यत्वात्संख्यायाः। पूर्वं हि संख्या निपतति। सा पूर्वमेवावगम्यते, न तदवगमकाले संख्याविज्ञानस्य परिपन्थि किंचिद्विज्ञानमस्ति। तस्मिन्निष्प्रतिद्वन्द्वे संख्याविज्ञाने प्राप्ते मुष्टिविज्ञानमापतति। तत्संख्याविज्ञानपरिपन्थितां नाऽऽचरितुमर्हति। तस्माज्जघन्यत्वान्मुष्टीनां लोपः। मुख्यत्वात्संख्यानुग्रहः=। तदुक्तं, मुख्यं÷ वा पूर्वचोदनाल्लोकवदिति।

एवं प्राप्ते, ब्रूमः। मुष्टिलोपेन संख्या लोपमर्हतीति। कुतः। तद्गुणत्वात्। मुष्टिगुणो हि संख्या श्रूयते। चतुरो मुष्टीनिति। चतुःसंख्याविशिष्टा मुष्टयः कथं भवेयुरिति संख्योच्चार्यते, न स्वार्थे। तस्मात्संख्या पूर्वनिर्दिष्टाऽनिर्दिष्टेव। सा हि परविशेषणार्थमेवोच्चार्यते। तेन नैव तस्या अनुग्रहः कार्यः। मुष्टिलोपे सति तदधिकरणा संख्याऽधिकरणाभावान्निवर्तते। अन्याधिकरणायां क्रियमाणायां न न प्रकृतिवत्कृता स्यात्। संख्यालोपे पुनर्मुष्टयो निर्वापाधिकरणाः श्रूयमाणा अधिकरणानिवृत्त्या न निवर्त्स्यन्ति। तस्मान्मुष्टिगुणत्वात्संख्या निवर्तेत, न मुष्टयः। तदुक्तम्, अङ्गगुणविरोधे च तादर्थ्यादिति॥ ६४॥

न निर्वापशेषत्वात्॥ ६५॥ सि०

नैतदेवम्। न संख्या मुष्टिषु श्रूयते। यदि मुष्टिषु श्रूयेत, तद्गुणत्वान्निवर्तेत। क्व तर्हि श्रूयते। निर्वापे। कथम्। नैवमभिसंबन्धः क्रियते, चतुरो मुष्टीनिति। कथं तर्हि। चतुरो निर्वपतीति। मुष्टिगुणः संख्यागुणश्च निर्वापो निर्दिश्यते। क्रियासंबन्धे हि द्वितीया

॥ ६४॥

—

= मुख्यार्थत्वात्–पा०। ÷ (अ० १२ पा० २ अ० ८ सू० २५)। * (अ० १२ पा० २ अ० ९ सू० २७)।

विभक्तिर्भवति । कथम् । कारकविभक्तिर्हि सा । कारकं क्रियाया एव भवति, न द्रव्यस्य । अतश्चतुःसंख्या श्रुत्याऽवगता निर्वापस्य, वाक्येन मुष्टीनाम् । वाक्याच्च श्रुतिर्बलीयसी । तस्मान्मुख्यानुग्रहान्मुष्टिलोप एवेति ॥ ६५ ॥

संख्या तु चोदनां प्रति सामान्यात्तद्विकारः
संयोगाच्च परं मुष्टेः ॥ ६६ ॥ पू०

तुशब्द एनं पक्षं व्यावर्तयति, न संख्यानुग्रहो मुष्टिलोप इति । किं तर्हि । संख्यया संख्या निवर्तते, शरावैश्च मुष्टयः । कथम् । सामान्यात् । निर्वापसाधनं द्रव्यं प्रकृतौ मुष्टयः । तासां परिच्छेदिका चतुः संख्या । इह सप्तदशसंख्याकः शरावद्रव्यकश्चरुर्भवतीति श्रूयते। तत्र मापनार्थं मुष्टिद्रव्यं मापनार्थैः शरावैर्निवर्त्यते । तत्परिच्छेदनार्था चतुःसंख्या परिच्छेदार्थया सप्तदशसंख्यया निवर्त्यते । तद्यथा, इदं दधि घृतं शाकमिमे शालयः, देवदत्तो भोजयितव्यः, देवदत्तवद्यज्ञदत्तस्तैलेनेति, भोजने यद्घृतेन शक्यते कर्तुं तत्तैलेन क्रियते । तस्माद्यद्यपि न श्रूयते तैलेन स्नेहयितव्यमिति, तथाऽपि समानकार्यत्वात्तैलं घृतस्य विनिवर्तकं भवति । एवं संख्या परिच्छेदं कुर्वती परिच्छेदिकाया एव संख्याया निवर्तिका भवितुमर्हति । परं च शरावद्रव्यं मुष्टेर्निवर्तकं, संयोगात् । तस्मात्प्राकृती संख्या प्राकृतं च द्रव्यं निवर्तते ॥ ६६ ॥

न चोदनाभिसंबन्धात्प्रकृतौ संस्कारयोगात्
॥ ६७ ॥ सि०

नैतदेवम् । चोदनेति यागं ब्रूमः । यागसंबद्धा हि सप्तदशसंख्या, शरावद्रव्यं च । प्रकृतौ निर्वापसंस्कारसंबद्धा चतुःसंख्या मुष्टिद्रव्यं च । न चान्यत्र क्रियमाणं समानकार्यमप्यन्यत्र निवर्तकं भवति । यस्य हि प्रत्यक्षश्रुतेन चोदकप्राप्तस्य कार्यमभिनिर्वर्त्यते,

---

॥ ६५ ॥ ६६ ॥ ६७ ॥

तत्तेन निवर्त्यताम् । न च यागे क्रियमाणे निर्वापकार्यं निवर्त्यते । तस्मान्निर्वापप्राप्तं किंचिदन्यनेन न निवर्त्यत इति । विरोधात्तु चतुर्भिर्मुष्टिभिर्निरुप्यमाणं द्रव्यं न सप्तदशशरावं भवति। तस्माद्विरोधादन्यतरन्निवर्त्यते, द्रव्यं संख्या वा । तत्र चतुःसंख्यानुग्रहान्मुष्टिलोपो न्याय्यतर इति ॥ ६७ ॥

[ द्यावापृथिव्यादौ प्रत्यक्षधेन्वादिशब्दोपदिष्टगोद्रव्येण प्राकृताजद्रव्यस्य बाधाधिकरणम् ॥ २९ ॥ ]

[ २९ ] औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्यत्वात् ॥ ६८ ॥ सि०

क्वचिच्छ्रूयते, द्यावापृथिव्यां धेनुमालभेत, मारुतं वत्सम्, ऐन्द्रमृषभमिति । तदत्र संशयः । किमजा धेनुवत्सर्षभा उत गाव इति । किं प्राप्तम् । चोदकानुग्रहाय, अजा इति । गुणनिमित्तास्ते शब्दाः । स गुणश्चोदकेन प्राप्ते प्राकृते* द्रव्य आवेशयितव्यः । ननु गवि गुणमाहुरेते शब्दाः । सत्यं गव्याहुः । न तु गौरत्र प्रत्यक्षेण वचनेन चोदकेन वा । स एष गुणवचनो यद्यपि श्रुत्या गोधिष्ठानं गुणं वदति, वाक्येनाऽऽलम्भद्रव्यमास्कन्दति, तथाऽपि गोद्रव्यस्याभावादालभतिवाक्यमेव गृह्यते, न श्रुतिः ।

अपि च धानवयोवचना एते शब्दाः । गुणाश्चामूर्तत्वान्न क्रियया संबध्यन्ते । द्रव्येणैषां संबन्धो भवति । चोदकप्राप्तं च द्रव्यम् । तेनैषां सामानाधिकरण्यम् । यथा, अवी द्वे धेनू ददाति । तस्य पुरुषी धेनुर्दक्षिणा । तथा, अजर्षभस्याजिनमवस्तृणातीति । धानवयोवचनः शब्दस्तदेकवाक्यगतेनैव द्रव्येण संबध्यते । एवमिहापि चोदकप्राप्तेन द्रव्येण संभन्त्स्यत इति । तस्मादजा धेनुवत्सऋषभा इति ।

---

धेन्वादयः शब्दा उभयोरसाधारणवचना एव । शोणादय इवानपेक्ष्य च पदान्तरमेते पदावस्थायामेवासाधारणमर्थं प्रतिपादयन्ति । केचित्पदान्तरमपेक्ष्यं साधारणं प्रतिपादयन्ति । यथा शुक्लः पट इति । कथं तर्हि पूर्वः पक्षः । श्रुत्या धेनुरिति शब्दो धान एव वर्तते । गोद्रव्यं त्वस्य न शब्देन, नापि चोदकेन ।

---

* प्राकृतद्रव्ये–पा० ।

एवं प्राप्ते, ब्रूमः। औत्पत्तिक एतस्मिन्नुत्पत्त्यैव जातिविशिष्टे गुणशब्दे द्रव्यतो विकारः स्यात्। द्रव्यमपि विकुर्यात्, न गुणमात्रम्। यदेतज्जातिविशिष्टं धानं वयश्च, न तदजपशुषु शक्यं कर्तुम्। गोपशुष्वेव तद्भवति। नन्वत्र यदपि स्याच्छक्यमावेशयितुं, तदावेशयिष्यते। यन्न शक्यं, तत्प्रमादिष्यते। यथा, अजा धेनुवत्सर्षभा इति। उच्यते। विस्पष्टस्तत्राजशब्देन धेन्वादीनामेकवाक्यभावः। इह चोदकेनाजद्रव्यम्। चोदकश्च विरोधे सति नाजद्रव्यं प्रापयति। न च धेन्वादीनां द्रव्येण संबन्धः। कारकविभक्तिरेषा, आलम्भेन संबन्धं करोति। गवि सा च श्रुतिः। द्रव्यसंबन्धो वाक्येन स्यात्। तच्च दुर्बलं श्रुतेः। तस्मिंश्च जातिविशिष्टे गुण आलम्भसंयुक्ते सति न शक्यमजाद्रव्येण भवितुम्। न च चोदकापेक्षया प्रत्यक्षा जातिरुत्स्रष्टुं शक्यते। तस्माद्गावो धेन्वादयो भविष्यन्तीति ॥ ६८ ॥

[ वायव्यपशावुपदिष्टश्वेतगुणेन प्राकृताजद्रव्यस्याबाधाधिकरणम् ॥ ३० ॥]

[ ३० ] नैमित्तिके तु कार्यत्वात्प्रकृतेः स्यात्तदापत्तेः ॥ ६९ ॥ सि०

इदमामनन्ति, वायव्यं श्वेतमालभेत भूतिकाम इति। अत्र संशयः। किमिहापि नाजः पशुः कर्तव्य उताजः पशुरिति। उच्यते। औत्पत्तिकोऽयं श्वेतगुणसंबन्धे श्वेतशब्दः। अतो यः कश्चिच्छ्वेतगुणसंबद्धः, स आलभ्यः। न हि श्वेतशब्दः प्रत्यक्षः सन्न् कुतश्चिच्छ्वेतद्रव्याच्चोदकेनाऽऽनुमानिकेन निवर्तयितव्यः। तस्मादजो गौरन्यो वा श्वेत आलब्धव्य इति।

एवं प्राप्ते, ब्रूमः। नैमित्तिक एतस्मिञ्छ्वेतगुणनिमित्तके द्रव्ये श्वेतशब्दे सति गुणमात्रं विक्रियते। न ह्यत्र जातिविशिष्टं द्रव्यं प्रतीयते। यदेवाऽऽलम्भसाधनभूतं तदेव परिच्छेत्तव्यमित्येतद्वाक्यादवगम्यते। यच्चास्य चोदकप्राप्तं द्रव्यं साधनमविरुध्यमानं श्रुत्या प्रा-

---

अजाद्रव्यं त्वस्य चोदकेन प्राप्नोति। तत्र चानुमानिकः शब्दो विद्यते। एवं पूर्वः पक्षः।

सिद्धान्तस्तु—असाधारणगुणवचनोऽयमधिष्ठानमन्तरेणैव गुणः संपादितो

प्नोति, तदर्थं श्वेतशब्दः परिच्छेत्स्यति । नन्वजादन्यान्यपि द्रव्याणि परिच्छेत्तुमयं शक्नोति । न ब्रूमो न शक्नोतीति । न तेन परिच्छिन्नेन प्रयोजनमस्ति । तस्मात्प्रत्यक्षोऽपि श्वेतशब्दश्छागमेव परिच्छिन्द्यान्नान्यं पशुमिति ॥ ६९ ॥

[ साद्यस्के खलेवाल्यां प्राकृतखादिरत्वनियमस्य, चित्रेष्टौ तण्डुलेषु प्राकृतव्रीहियवान्यतरानियमस्य चाभावाधिकरणम् ॥३१॥ ]

[ ३१ ] विप्रतिषेधे तद्वचनात्प्राकृतगुणलोपः स्यात्तेन च कर्मसंयोगात् ॥ ७० ॥ सि०

साद्यस्के श्रूयते, खलेवाली यूपो भवतीति । तत्र संदेहः । किं खादिरश्चोदकेन प्राप्यते, स खलेवाली कर्तव्यः अथ न प्राप्यते, खादिर्यखादिरि वा खलेवाली स्यादिति । तथा चित्रायां श्रूयते । दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यं भवतीति । तत्रापि संदेहः । किं व्रीहयश्चोदकेन प्राप्यन्ते, व्रैहास्तण्डुलाः कर्तव्या उत न प्राप्यन्ते, व्रैहा अव्रैहा वा तण्डुला उपादातव्या इति ।

किं तावत्प्राप्तम् । खादिरादिः खलेवाली कर्तव्या, व्रैहास्तण्डुलाः कर्तव्याः । चोदकेन खादिरादयो व्रीहयश्च प्राप्नुवन्ति । एवं चोदकानुग्रहो भविष्यति । तेषां प्राप्तानां खलेवालीत्वं विधीयते । यो यूपः स खलेवाली कर्तव्य इति । शक्यते हि यूपः खलेवाली कर्तुं, न खलेवाली केनचित्प्रकारेण यूपो भवति । खादिरादीनां हि काष्ठानां संस्कारैर्यूपः क्रियते छेदनादिभिः, न त्वन्येषाम् । तत्र, यूपो भवतीति यूपकार्ये भवतीत्युक्तं स्यात् । तथा लक्षणाशब्दो भवेत् । व्रीहीणामपि तण्डुलाश्चोदकेन प्राप्ता एव । तेषां तद्भूतानां पिष्टभावं प्रत्या-

---

भवति । तस्माच्चोदकबाधः । उत्तरमधिकरणमस्यैव प्रत्युदाहरणम् । यत्र साधारणगुणवचनस्तत्र चोदको न बाध्यते ॥ ६८ ॥ [ ६९ ॥ ]

---

न यूपस्य खलेवालीत्वम् । तथाऽव्यवहितेन भवतिना संबन्धात्प्रत्यक्षं वाक्यम् । इतरथा व्यवहितेन भवतिना परोक्षं स्यात्—इत्ययुक्तमिदं पूर्वपक्षनिराकरणम् । कथम् । शब्दस्य धर्मोऽयं क्रमः । अर्थं प्रति शब्दो गुणभूतः ।

ख्याय देवतासंबन्धः क्रियते। तस्मात्खादिरादयः खलेवालीत्वमापादयितव्याः। व्रीहयश्च तण्डुलभावमापादयितव्या इति।

एवं प्राप्ते, ब्रूमः। विप्रतिषेध एतस्मिन्, प्राकृतस्य गुणस्य लोपः स्यात्। कथं विप्रतिषेधः। तद्वचनात्। खलेवाल्या यूपता विधीयते, न यूपस्य खलेवालीता। तथा, अव्यवहितेन भवतिना संबन्धात्प्रत्यक्षं वाक्यम्। इतरथा, व्यवहितेन परोक्षं स्यात्। खलेवालीशब्दश्च यः खले वारणे प्रवर्तते तस्य वाचकः। तथाभूतश्च यूपकार्ये विनियुज्यते। या खलेवाली स यूप इति। शक्यते च यूपकार्ये विनियोक्तुम्। यत्तु यूपशब्दः कार्यलक्षणार्थ इति। व्यवधानाल्लक्षणाऽपि ज्यायसी। प्रत्यक्षं हि लक्षणायां, परोक्षं व्यवधाने वाक्यम्। तस्माद्यज्जातीयस्य वृक्षस्य खलेवाली कृता, तज्जातीयस्य यूपकार्ये विनियोक्तव्या। नैनां चोदको विशेषेऽवस्थापयितुं शक्नोति। प्रत्यक्षा= श्रुतिस्तथा चोदकेन बाधिता स्यात्। तस्मान्न खादिरादिनियम इति॥ ७०॥

( खलेवाल्यां तक्षणादीनामननुष्ठानाधिकरणम्॥ ३१॥ )

[ ३१ ] परेषां प्रतिषेधः स्यात्॥ ७१॥ सि०

खलेवाल्यामेव संशयः। किं तक्षणं जोषणमुच्छ्रयणमित्येवमादयः पदार्थाः कर्तव्याः, नेति। किं प्राप्तम्। चोदकानुग्रहाय कर्तव्या इति।

एवं प्राप्ते, ब्रूमः। परेषां प्रतिषेधः स्यादिति। तथाभूतस्य हि यूपकार्ये विनियोगः। खलेवालीभूतस्य हि यूपकार्ये विनियोगे कृते कृतः शास्त्रार्थो भवति। कृते शास्त्रार्थे नापरस्मै गुणाय यतितव्यम्। अपि च तक्षणादीनि यूपकारणानि। न चात्र यूपेन प्रयोजनम्। अयूपो हि यूपकार्ये विनियोजयितव्यः। तस्मात्तक्षणादयो न कर्तव्या इति॥ ७१॥

---

॥ ७० ॥ ७१ ॥

---

= प्रत्यक्षा हि श्रुतिः। तथा—पा०।

प्रतिषेधाच्च ॥ ७२ ॥

इतश्च न कर्तव्याः । विप्रतिषेधः कृतो भवेत्, क्रियमाणेषु तस्याः खलेवाल्याः । यत्काष्ठं खले वारणप्रवृत्तं, सा खलेवाली । तादृश्येवोपादातव्या तक्षणे क्रियमाणे सा विनश्येत्, द्रव्यान्तरं जायेत । यन्न खले वारणे प्रवृत्तम् । जोषणं तु अदृष्टावसरमेव । जोषितं तदन्यार्थेनैव । वृक्षाणां हि जोषणं, न तु विकारस्य । उच्छ्रयणं चोच्छ्रिताया अशक्यमेव । तस्मात्तक्षणादयो न कर्तव्या इति ॥७२॥

( खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानाधिकरणम् ॥ ३२ ॥

[ ३२ ] अर्थाभावे संस्कारत्वं स्यात् ॥ ७३ ॥ सि०

खलेवाल्यामेव संदेहः । किं मैत्रावरुणदण्डेन भूमेः समक्रिया, अद्भिरवसेचनं बलवदवधानमञ्जनमित्येवमादयः पदार्थाः कर्तव्याः, उत नेति । किं प्राप्तम् । न कर्तव्या इति । परेषां प्रतिषेधः स्यादित्युक्तम् । यादृशः खले वारणे वर्तते, तादृश एव यूपकार्ये विनियोक्तव्योऽयूपः । यूपार्थाश्च चोदकप्राप्ताः संस्कारास्तास्मान्निवर्तेरन्निति ।

एवं प्राप्ते, ब्रूमः । अर्थाभावे कार्याभावे, यदि खलेवाल्यास्तैः संस्कारैः कार्यं न भवति, ततो यूपत्वमेव तेषां निमित्तं स्यात्, खलेवाल्यां न भवेयुः । इह पुनर्भूमेः समक्रियया, अद्भिरवसेचनेन, बलदवधानेन च कार्यमस्ति दार्ढ्यम् । शिथिला हि सा खले वारणेन भवति । न च खलेवालीत्वमुपघ्नन्ति । तस्मात्कर्तव्याः । अञ्जनमप्यनुपघातकं चोदकप्राप्तं क्रियमाणमधिकाय गुणाय स्यात्, न दोषाय । तस्मात्तदपि कर्तव्यमिति ॥ ७३ ॥

---

तस्माद्वाक्य एव शब्दस्य योऽर्थः स ग्रहीतव्यः । क्रमस्तु शब्दधर्मत्वादुपेक्ष्यः । तस्मात्पूर्वपक्षनिराकरणमिदमकल्प्यमित्यन्यथा वर्ण्यते । यूपानुवादेन खलेवालीत्वे विधीयमानेऽदृष्टार्थता प्राप्नोति । खलेवाल्या यूपकार्ये विधीयमानाया दृष्टमेव पश्वनपक्रमणं प्रयोजनम् । तस्माद्यथाश्रुतमेव वाक्यम् । न तु विहितकल्पनाप्रसङ्गः । कथं तर्हि प्रसङ्गः । उपचयत्वेन । अयं चापरो गुणः । अव्यहितेन भवतिना संबध्यत इति ॥ ७२ ॥ ७३ ॥

---

[ महापितृयज्ञे धानास्ववघातानुष्ठानाधिकरणम् ॥ ३३ ॥ ]

[ ३३ ] अर्थेन च विपर्यासे तादर्थ्यात्तत्त्वमेव स्यात् ॥ ७४ ॥ सि०

अस्ति महापितृयज्ञः, सोमाय पितृमते षट्कपालं, पितृभ्यो बर्हिषद्भ्यो धानाः, पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थमिति । धाना इत्यत्र संदेहः । किं धानासु हन्तिः कर्तव्य उत नेति । किं प्राप्तम् । न कर्तव्य इति । कुतः । विघातात् । क्रियमाणे हन्तौ धानात्वं विहन्येत, सक्तवो हि भवेयुः । तस्मान्न कर्तव्या इति ।

एवं प्राप्ते, ब्रूमः उक्तमविघातकमाधिकाय गुणाय कर्तव्यम्, अञ्जनवदिति । आह । अञ्जनमविघातकं, हन्तिस्तु धानात्वं विहन्तीति । अत्रोच्यते । यथा न विघातकं भवति, तथा करिष्यते । विपर्यासिष्यते तथा, न विहनिष्यते । विपर्यासे क्रममात्रं न कृतं भवति, पदार्थस्तु न निवर्तते । तदुक्तं×, गुणलोपे च मुख्यक्रिया भवतीति ।

---

धाना इत्येतदनुदाहरणम् । द्वेधाऽप्यनुपपद्यमानत्वात् । कथमनुपपत्तिः । चोदकेनापि विपर्यास एव प्राप्यते । पूर्वमवघातः, ततः श्रपणम् । अथ श्रपणादुत्तरकालमवघातः प्राप्यते, तथाऽपि तथैवानुष्ठेयः । तत्र 'अर्थेन विपर्यासे' इत्ययुक्तम् । अथोभयत्रावघातः प्राप्नोति, तथाऽऽव्यत्वेन विद्यते । विपर्यासो न युक्तः । अथैवमुच्यते, निष्पन्नायां यागचोदनायां चोदक इति धानासु निष्पन्नासु ततश्चोदकोऽवघातं श्रपणं च प्रापयति । एवमनुष्ठाने प्राप्ते 'अर्थेन विपर्यासे' इत्युक्तं, तदप्यनुपपन्नम् । यदि निष्पन्नरूपं द्रव्यं गृह्यते खलेवालीवत्, तदा च धानादीनामक्रियाच्छेदनादीनामिव तद्विपर्यासशङ्कैव नास्ति । अथ नैव निष्पन्नानां ग्रहणं, तत्रापि यथाप्राप्तमेवानुष्ठानं, न विपर्यासः ।

किं तर्ह्युदाहरणम् तत्रैव मन्थः* । तस्य श्रवणादुत्तरं पेषणं प्राप्नोति । तत्र धर्मा भवन्ति न भवन्तीति पूर्वपक्षे पेषणान्तरं, व्युत्क्रमादित्यतोऽधर्ममेव पेषणम् । सिद्धान्ते च तदेव पेषणं प्राकृतकार्यत्वात् । क्रममात्रमन्यत् । अर्थकृते विपर्यये धर्मा भवन्त्येव कृष्णलेषु पाकधर्मा भवन्तीति । यद्यपूर्वोयं पाकस्ततः

---

× तदुक्तमिति–( अ० १० पा० २ अ० २६ सू० ६३ ) इत्यत्रेति शेषः । * मन्थ इति–दुग्धमिश्राः सक्तवो मन्थाः । धानापिष्टानि सक्तवः । भर्जितयवा धानाः ।

तस्मात्पूर्वं हन्तिं कृत्वा पाकः कार्यः । तत्र हि हन्तिः पाकार्थो भविष्यति, न धानात्वं विहनिष्यत इति ॥ ७४ ॥

इति श्रीशबरस्वामिविरचिते मीमांसाभाष्ये दशमाध्यायस्य द्वितीयः पादः ॥

---

पाकधर्मा न भवन्ति । अथ प्राकृतस्य प्रतिप्रसवस्ततो धर्माः सन्ति । प्रतिप्रसवोऽयम् । कथम् । चोदकेन प्राप्ताः पाकधर्मा अर्थलोपान्निवृत्ताः श्रपणाविधानात्प्रतिप्रसूयन्ते ।

ननु प्रतिप्रसवे श्रपणमात्रमेव विधातव्यम् । घृते विधीयमाने वाक्यं भिद्यते । यद्यपूर्वविधानं तथा सति विशिष्टविधानान्न दोषः । अप्राप्तत्वात् । उच्यते । अस्मिन्वाक्ये घृतं न विधीयते । कुतः प्राप्तिर्घृतस्य । उत्पत्तिवाक्ये घृतमेवाऽधारत्वेन श्रूयते । 'प्राजापत्यं घृते चरुम्' इति सप्तमीविभक्तिसंयोगात्, चरुशब्दसामर्थ्याच्च । यथाऽऽदित्यपयोधिकरणे÷ तथेहाप्युत्पत्तिवाक्ये । तस्माद्गुणवाक्ये घृतमनुवादः ॥ ७४ ॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां दशमाध्यायस्य द्वितीयः पादः ॥

---

÷( अ० ९ पा० ४ अ० ९ ) ।

## अथ दशमाध्यायस्य तृतीयः पादः ॥

( पश्वादिविकृतावुपदिष्टैरेकादशप्रयाजादिभिरङ्गैः प्राकृताङ्गान्तराबाधाधिकरणम् ॥ १ ॥ )

**[ १ ] विकृतौ शब्दवत्त्वात्प्रधानस्य गुणानामधिकोत्पत्तिः संनिधानात् ॥ १ ॥ पू०**

अस्ति सोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभत इति । तत्रेदं समाम्नायते । एकादश प्रयाजान् यजति, एकदशानुयाजान् यजतीति । तथा चातुर्मास्यानि, चातुर्मास्यैः स्वर्गकामो यजेतेति । तत्राप्याम्नायते, नव प्रयाजान् यजति, नवानुयाजानिति । तथा, वायव्यं श्वेतमालभेत भूतिकाम इति । तत्राप्याम्नायते, हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयति । तथाऽवभृथे श्रूयते, अप्सु तृणं प्रास्याऽऽघारमाघारयतीति । तदेतेषु संशयः । किं प्राकृतेतिकर्तव्यता न प्राप्यते, अप्राप्तायां कर्मान्तराण्येतानि चोद्यन्ते, अथवा प्राप्यते, प्राप्तायां गुणविधय इति । किं प्राप्तम् । न प्राप्यत इति । विकृतौ तस्यां तस्यां शब्दवत्प्रधानं, नाङ्गानि । तस्मादग्नीषोमीयादिषु

---

अवभृथस्तावदनुदाहरणम् । अपूर्वत्वात् ÷ । शिष्टानां च विध्यन्तेन धर्मा प्राप्नुवन्ति । कथं संशयः । उच्यते । यत्प्राकृतमङ्गं विकृतौ श्रूयते तदेव विकृतिर्निराकाङ्क्षत्वात्स्वी करोति । यथा गृहमेधीय आज्यभागश्रवणम् + ।

---

÷ अपूर्वत्वादिति–ज्योतिष्टोमे ‘ वारुणेनैककपालेनावभृथं यन्ति ’, इत्यनेनावभृथसंज्ञकेष्टिं विधाय पश्चाच्छ्रूयते ‘ अप्सुमन्तावाज्यभागौ यजति ’ इति । तथा चानेन क्लृप्तोपकारकयोः प्राकृतयोरेवाऽऽज्यभागयोर्विधानेन ताभ्यामेव नैराकाङ्क्ष्यादातिदेशाकल्पनेन प्रकृतिराहित्यरूपापूर्वत्वस्यावभृथे सिद्धान्तेऽपीष्यमाणत्वान्नोदाहरणं प्रकृताधिकरणस्येत्याशयः । + आज्यभागश्रवणामिति––चातुर्मास्यान्तर्गते साकमेधाख्ये तृतीय पर्वाणि ‘ आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः ’ इत्यनेन दीक्षणीयेष्टिं विधाय पश्चाच्छ्रूयते ‘ आज्यभागौ यजति ’ इति । ताभ्यामेव गृहमेधीयस्य नैरकाङ्क्ष्यमित्यर्थः ।

गुणकर्मणामधिकानामुत्पत्तिः। यजति, आघारमाघारयतीति च कर्मान्तराण्येतानि विधीयन्ते। तथा हि श्रुतिरनुगृहीता भवति। तैरेव च तानि साङ्गानि जायन्ते। तस्मात्प्राकृतीतिकर्तव्यता न प्राप्यते। संनिहिता हि सा प्रकृतौ, न प्रकृतिं संनिहितामतिक्रमिष्यतीति ॥ १॥]

प्रकृतिवत्त्वस्य× चानुपरोधः ॥ २ ॥

एवं च नोपरोधो भविष्यति। क उपरोधः। प्रकृतिवादिति कल्पना। स चोदकशब्दो न दूरे सतीमिमामनेकवाक्यव्यवहितां प्रकृतिमपेक्षिष्यते। तस्मात्कर्मान्तराणि चोद्यन्ते। प्रयाजयागान् करोति, नव करोति, आघारं करोति, हिरण्यगर्भः समवर्तताग्र इति करोतीति ॥ २ ॥

चोदनाप्रभुत्वाच्च ॥ ३ ॥

इदं परिचोदनोत्तरं सूत्रम्। नन्वेषां कर्म चोदयितुं सामर्थ्यं नास्ति। कथमिति। नैतस्माद्वाक्यादिदमवगम्यते यागं करोतीति। कथं तर्हि। याग एकादशसंख्यां करोतीति। यागे गुणसत्तां भावयतीति गुणशब्दश्रवणात्। यागसत्तायां भाव्यमानायां गुणशब्दश्रवणमनर्थकं स्यात्। तस्माद्गुणविधिसरूपा एते शब्दा इति।

अत्रोच्यते। अस्त्येतेषां चोदनाप्रभुत्वे सामर्थ्यम्। प्रभवन्त्येते कर्म चोदयितुम्। कुतः। आख्यातशब्दा ह्येते। आख्यातशब्दाश्च कर्मणश्चोदकाः समधिगताः, भावार्थाः= कर्मशब्दा इति। त एते सगुणं कर्म चोदयिष्यन्ति। यागः कर्तव्यः, एकादशसंख्या चेति। एवं सर्वत्र। तस्मात्कर्मणश्चोदका एते शब्दाः। इतिकर्तव्यता न प्राप्नोतीति ॥ ३ ॥

---

श्रूयते चात्र प्राकृतमङ्गं, 'नव प्रयाजाः' इति। तस्मात्तेनैवास्य निराकाङ्क्षत्वं गृहमेधीयवत्। अधिकानामुत्पत्तिरितिप्राकृतानां निवृत्तिरित्यभिप्रायः पक्षयोस्तुल्यः ॥ १ ॥ २ ॥ ३ ॥

---

× प्रकृतिवत्तस्य चानुपरोधः—इति मुद्रितपुस्तकेषु पाठः। = (अ० २ पा० १ अ० १ सू० १)।

प्रधानं त्वङ्गसंयुक्तं तथाभूतमपूर्वं स्यात्तस्य विध्युपलक्षणात्सर्वो हि पूर्ववान् विधिरविशेषात्प्रवर्तितः ॥ ४ ॥ सि०

न त्वेतदस्ति, इतिकर्तव्यता न प्राप्यते, कर्मान्तराणीति। प्रधानं प्राकृतमङ्गसंयुक्तं, तथाभूतमपूर्वमपि वैकृतं स्यात्। उक्तमेतत्, विध्यन्तो+ वा प्रकृतिवच्चोदनायां प्रवर्तते तथा हि लिङ्गदर्शनमिति। तस्यप्राकृतस्य कर्मणो विधिर्वैकृतेषु कर्मसु केषुचिदुपलक्ष्यते। तस्मात्सर्वो वैकृतो विधिः, पूर्ववान्–प्रकृतिपूर्वकः। अविशेषात्प्रवर्तितश्चोदकादवगम्यते। तस्मादिहापि प्राकृतीतिकर्तव्यता प्राप्यते। यदुच्यते, प्रयाजादिभिर्निराकाङ्क्षत्वात्प्राकृतीतिकर्तव्यता न प्राप्यत इति। स्यादेतदेवं, यदि यागो विधीयते। यागे हि विधीयमाने, एकादश, नव, हिरण्यगर्भः समवर्तताग्रे, इत्येतानि पदान्यनर्थकानि भवेयुः। न च शक्यते वदितुमेकादशादीन्यनूद्यन्त इति। अपूर्वाणि हि तान्यवश्यं विधातव्यानि। तानि च वाक्येन यागे। अथ यागो विधीयते, यागे च संख्या, तथा वाक्यं भिद्येत। तस्मादितिकर्तव्यतायां प्राप्तायां गुणविधय एत इति ॥ ४ ॥

न चाङ्गविधिरनङ्गे स्यात् ॥ ५ ॥

इतश्च गुणविधय इति। न ह्यनङ्गे कर्मण्यङ्गस्य विशेषविधिः स्यात्। भवति च विशेषविधिः, आश्ववालः प्रस्तर इति। न ह्यसति प्रस्तरे प्रस्तरविशेषः शिष्येत। यथा, यस्य नास्ति पुत्रो न तस्य पुत्रस्य क्रीडनकानि क्रियन्ते। एवमिहापि प्रस्तरस्याऽऽश्ववालता न विधीयेत। तस्माद्गुणविधय इति ॥ ५ ॥

कर्मणश्चैकशब्द्यात्संनिधाने विधेराख्यासंयोगो गुणेन तद्विकारः स्याच्छब्दस्य विधिगामित्वाद्गुणस्य चोपदेश्यत्वात् ॥ ६ ॥

॥ ४ ॥ ५ ॥

+ ( अ० ७ पा० ४ अ० १ सू० १० ) ।

अथं त्वपरो विशेषः, प्रधानकर्मणो गुणकर्मणश्चैकशब्द्यात् । प्रयोगवचनेन ह्येकेन शब्देनाङ्गप्रधानान्युच्यन्ते । तस्मात्प्रधानवचनेन संनिहितान्यङ्गानि । तेषु संनिहितेषु गुणविधेर्नाभि गृहीत्वाऽभिसंबन्धो भवति । यः प्रयाजसंज्ञको यागः, तत्र गुण इति । एवं सर्वत्र यागे गुणेन तद्विकारः स्यात् । संख्यया मन्त्रेण च संख्यान्तरं मन्त्रान्तरं च विक्रियेत । प्रयाजादिविधिगामी हि शब्दः । गुणश्चोपदेष्टव्यः । नानर्थकं पुनर्वचनम् । तस्मादितिकर्तव्यता प्राप्यते । प्राप्तायां गुणविधय इति ॥ ६ ॥

अकार्थत्वाच्च नाम्नः ॥ ७ ॥

न च शक्यते वदितुं, नामनामिसंबन्धोऽयं विधीयत इति । अन्या हि वचनव्यक्तिः शब्दार्थसंबन्धे विधीयमाने भवति । एकादश यागान् करोति । ते च प्रयाजानुयाजसंज्ञका भवन्तीति । वाक्यं ह्यस्यां वचनव्यक्तौ भिद्येत । अथ पुनरेषां प्रसिद्धनामकानामुच्चारणं, गुणविधानार्थम् । तस्मादपीतिकर्तव्यता प्राप्यते, गुणविधयश्चैत इति ॥ ७ ॥

तुल्या च प्रभुता गुणे ॥ ८ ॥

इदं पदेभ्यः केभ्यश्चिदुत्तरं सूत्रम् । कानि तानि पदानि । यदुक्तं प्रयाजानुयाजा असंनिहिताः, न शक्यते तेषां गुणो विधातुमिति । तत्परिहर्तव्यम् । अत्रोच्यते । तुल्या ह्येषा प्रभुता गुणान् प्रति चोदकस्य प्राकृतान् गुणानिह प्रापयिष्यति । ते च प्राप्ता गुणविधानपरे वाक्य इह संकीर्त्यन्ते । यद्वा, उत्पाद्य प्रापयिष्यति । ते गुणवचनेन संभन्त्स्यन्त इति । तत्रोत्पन्नानां प्राप्तिर्लघीयसी । प्राकृतान् प्राप्य कृतार्थः शब्दो नापूर्वानुत्पादयितुं शक्नोति । इदमधुनातनं वचनमुत्पादकमिति चेत् । नैतदेवम् । गुणसंबन्धार्थमेव तत् । गुणवचनस्य श्रवणात् । तस्मादपि प्राप्तेषु गुणविधय इति ।

अथ यदुक्तम्, आख्यातशब्दा एते कर्मणो विधायकाः,

---

॥ ६ ॥ ७ ॥

भावार्थाः* कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत, इति । तुल्यैषां प्रभुताऽऽख्यातशब्दानाम् । ये हि शक्नुवन्ति गुणवचनसहिता गुणं कर्म च विधातुं, शक्नुवन्तितरां ते केवलं गुणं विधातुम् । यो हि पाषाणान् भक्षयति, ईषत्करास्तस्य मुद्गशष्कुल्य इति । तस्मादपि गुणविधय इति ॥ ८ ॥

सर्वमेवं प्रधानमिति चेत् ॥ ९ ॥

इति चेत्पश्यासि=, आख्यातशब्दोऽयं गुणं विधास्यतीति । एवं सति सर्वं प्रधानम् । आख्यातशब्दवाच्यत्वादिति ॥ ९ ॥

तथाभूतेन संयोगाद्यथार्थविधयः+ स्युः ॥ १० ॥

न ह्याख्यातशब्दाभिधानेन प्रधानभूतो गुणभूतो वाऽर्थो भवति । यः स्वभावतो गुणभूतोऽर्थः, नासावाख्यातशब्दाभिधानेन प्रधानभूतो भवति । तथाभूतेन संयोगे× सति, आख्यातशब्दभूतेन यथार्थविधयो भवेयुः । यत्प्रधानं तत्प्रधानमेव । यद्गुणभूतं तद्गुणभूतमेवेति ॥१०॥

विधित्वं चाविशिष्टमेवं प्राकृतानां वैकृतैः कर्मणा
योगात्तस्मात्सर्वं प्रधानार्थम् ॥ ११ ॥

इतश्च पश्यामो गुणविधय इति । कुतः । विधित्वं चाविशिष्टम् । प्राकृतानां वैकृतैरर्थवादकर्मणा योगो न विशिष्यते । अग्निं स्विष्टकृतं यजति, यज्ञस्य प्रतिष्ठित्यै, इति प्रकृतौ य एव, स एव विकृतावर्थवादो भवति । अग्निं स्विष्टकृतं यजति, यज्ञमेव प्रतिष्ठापयतीति । तथा, चक्षुषी वा एते यज्ञस्य यदाज्यभागौ, इति प्रकृतौ । आज्यभागौ यजति, चक्षुषी एव नान्तरेति विकृतौ । तस्मात्सर्वमेवंजातीयकं प्रधानार्थं विकृतौ गुणभूतमिति ॥ ११ ॥

समत्वाच्च तदुत्पत्तेः संस्कारैरधिकारः स्यात् ॥ १२ ॥

इतश्च पश्यामो न सर्वं प्रधानं, प्रधानार्थमपि किंचिदस्तीति ।

---

॥ ८ ॥ ९ ॥ १० ॥११॥

---

* ( अ० २ पा० १ अ० १ सू० १ ) । = पश्यति—पा० । + योगात्—पा० । × योगे सति—पा० ।

समा ह्युत्पत्तिक्रमता प्रयाजानुयाजानाम् । येनैव क्रमेण प्रकृतौ प्रयाजानुयाजानां संस्काराणामधिकारस्तेनैव क्रमेण विकृतौ दृश्यते । कथम् । प्रजापतिर्यज्ञमसृजत, स आज्यं पुरस्तादसृजत, पशुं मध्यतः, पृषदाज्यं पश्चादिति । तस्मादाज्येन पुरस्तात्प्रयाजा वर्तन्ते, पशुना मध्यतः, पृषदाज्येन पश्चादनुयाजा वर्तन्त इति प्रयाजानुयाजानां स्वक्रमाणां दर्शनं प्रधानार्थत्वे सत्युपपद्यते, न प्रधानत्वे । तस्मान्न सर्वं प्रधानं प्रधानार्थमपि किंचिदस्तीति ॥ १२ ॥

( वायव्यपशौ हिरण्यगर्भमन्त्रस्यौत्तराघारे निवेशाधिकरणम् ॥ २ ॥ )

[ २ ] हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् ॥ १३ ॥ पू०

अस्ति वायव्यः पशुः, वायव्यं श्वेतमालभेत भूतिकाम इति । तत्र श्रूयते । हिरण्यगर्भः समवर्तताग्र इत्यघारमाघारयतीति । तत्रायमर्थः समधिगतः, प्राप्त एवाऽऽघारे गुणविधिरयमिति । इदं तु चिन्त्यते । किं पूर्वस्मिन्नाघारे गुणविधिरुतोत्तरस्मिन्निति । किं प्राप्तम् । हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् । पूर्वस्याऽऽघारस्य गुणविधिरयम् । कुतः । मन्त्रलिङ्गात् । एवं मन्त्रार्थो भवति । हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयतीत्यत्र मन्त्रे, इदमस्ति वचनं, भूतस्य* जातः पतिरेक आसीदिति । एक इति च प्रजापतेरभिधानमिति । स हि प्रजोत्पत्तिसंभवात्प्राक्, प्रजोत्पत्तेरेकसंख्यायुक्त इति गम्यते । स एष मन्त्रः प्रजापतिमभिवदितुं शक्नोति । प्राजापत्यश्च पूर्व आघारः। तत्रायं समर्थः कार्यं निर्वर्तयितुं, नोत्तरस्मिन् । अतः पूर्वस्य गुणविधिरिति ॥ १३ ॥

प्रकृत्यनुपरोधाच्च ॥ १४ ॥

प्रकृतिवदिति चोदकस्यानुपरोधो भविष्यति । उत्तरस्याऽऽघारस्य मन्त्रानपनयात् । इतरथा, अपनीयेत, ऊर्ध्वोऽध्वर इति मन्त्रः । तस्मादपि पूर्वस्य गुणविधिरिति ॥ १४ ॥

॥ १२ ॥ १३ ॥ १४ ॥

— —

* ऋ० सं० ( अष्ट० ८ अ० ७ व० ३ )।

उत्तरस्य वा मन्त्रार्थित्वात् ॥ १५ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । न पूर्वस्य गुणविधिरिति । किं तर्हि । उत्तरस्य गुणो विधीयते । तस्य मन्त्रेणार्थो, न पूर्वस्य । कथम् । एवमाम्नायते । हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयतीति । कोऽर्थः । आघार एतामृचमुच्चारयतीति । सोच्चारिता विशिष्टं श्रौतं विज्ञानमङ्गभूतं करोति । कस्मै देवाय हविषा विधेम, इति । एकस्मै देवायेत्यर्थः। एकारलोपेनैतच्छब्दाविज्ञानादेतदर्थप्रत्ययो भवति, एकस्मै देवाय हविर्दातव्यमिति । न च पूर्वस्मिन्नाघारे श्रौतं विज्ञानमङ्गभूतमस्ति । तत्र कल्पयितव्यं स्यात् । श्रौतं विज्ञानमङ्गभूतं भवतीति । तच्च, हिरण्यगर्भः समवर्तताग्रे इत्येतेन कर्तव्यमिति। कल्पनायां न प्रमाणमस्ति । इदं हि वाक्यं मन्त्रकार्यविशेषस्य विधायकं, न मन्त्रकार्यसामान्यस्य नियामकम् । सामान्यं मन्त्रकार्यं पाक्षिकम् । तस्मिन् पाक्षिके मन्त्रकार्ये विशेषविधानमिति चेत् । आनर्थक्यम् , अस्मत्पक्षपरिग्रहश्च, उपदेशस्य चार्थवत्त्वम् । जौहवाघारविषयत्वात् । तस्मादुत्तरस्य गुणविधिरिति ।

यदुक्तं, प्रजापतिवचनोऽयं मन्त्र इन्द्रमभिवदितुमशक्तो भविष्यतीति । नैतदेवम् । यथा हि प्रजापतिरेक इति संस्तुतः, प्रजापतिशब्दत्वात् । एकोऽसौ प्राक् प्रजोत्पत्तेरिति प्रजापतिरेक आसीदित्युच्यते । एवमिन्द्रोऽपि, ऐश्वर्यवचनत्वादिन्द्रशब्दस्य, सर्वमुत्पादयितुमयमलमिति संस्तूयते । क× ईंस्तवत्कः पृणात्को यजाते यदुग्रमिन्मघवा विश्वहावेत् । पादाविव प्रहरन्नन्यमन्यं कृणोति पूर्वमपरं शचीभिः, इति । तथा, क= उ नु ते महिमनः समस्यास्मत्पूर्व ऋषयोऽ-

---

वाक्यं च लिङ्गवचनप्रमाणेन न्यायेन तुल्यमेव । ततः किम् । प्रकृतपदार्थस्य स्मरणे सर्वत्रोपायचतुष्टयं प्रसक्तम् । ब्राह्मणपदमन्त्रसूत्रोपद्रष्टारः । तत उत्तरस्मिन्नाघारे मन्त्राम्नानसामर्थ्यादितरेषां निवृत्तिः । पूर्वस्मिंस्त्वाघारे मन्त्रो नास्ति । अतस्तत एवाभ्युपायाः प्राप्नुवन्ति । विकृतावपि तथैव प्राप्तिपूर्वो

---

× ऋ० सं० ( अष्ट० ४ अ० ७ व० ३२ ) । = ऋ० सं० ( अष्ट० ८ अ० १ व० १५ )।

न्तमापुः। यन्मातरं च पितरं च साकमजनयथास्तन्वः स्वायाः, इति।

क ईस्तवत्कः पृणात्को यजात इति, ऐन्द्रे सूक्ते वचनादैन्द्री ऋक्। क एनं शक्नोति स्तोतुं, को वाऽस्मै ददाति, को वा यजतीति सर्वत्रानवक्लृप्तिः। अयमेव सर्वमिदं करोति। यथा, गच्छन् कश्चित्पूर्वपादमपरं करोति, अपरं च पूर्वम्। एवमयमिदं सर्वं करोतीति। अयं चेत्सर्वं करोतीति, प्राक्करणादेकः। तथा, क उ नु ते महिमनः समस्येति, केऽस्य सकलस्य महिम्नोऽस्मत्पूर्वेऽप्यृषयोऽन्तं प्राप्तुं शक्नुवन्ति, यन्मातापितरावपि स्वस्माच्छरीराज्जनयसीति, मातापितृभ्यामपि पूर्वः, किमुतान्यस्माज्जनादिति सिद्धमेकत्वमस्येति। सोऽपि प्राक्सर्वोत्पत्तेरेक एव। अत इन्द्राभिधायिन्येषा ऋक्। तस्मादविरोधः॥ १५॥

---

मन्त्रक इत्येवं विशेषमात्रं विधायिष्यते। इतरथा पूर्वस्मिन्नाधारे मन्त्रसामान्यं मन्त्रविशेषश्च विधातव्यः। तत्र वाक्यं भिद्येत। तस्मादुत्तरस्य गुणविधिरिति।

अत्र ग्रन्थः। इदं हि वाक्यं मन्त्रकार्ये विशेषविधायकं मन्त्रस्य स्मरणम्। तत्र विशिष्टस्मरणोत्पत्त्यर्थमेवेदं, न मन्त्रकार्यस्य सामान्यस्य नियामकं, नोपायान्तराणां निवर्तकम्। अथोच्येत, विशिष्टमेवेदं स्मरणं विधीयते, न सामान्यम्। सामान्यं च मन्त्रकार्यं पाक्षिकम्। तत्र नियमो युक्तो न विधिः। अस्मिन्पाक्षिके मन्त्रकार्ये विशेषविधानमिति चेत्। यदा मन्त्रप्राप्तिस्तदा विशेष इत्यानर्थक्यं, कदाचिद्भावो मन्त्रस्य कदाचिन्न। अस्मत्पक्षपरिग्रहश्चेति---मयाऽपि सामान्ये प्राप्ते विशेषो विधीयते। तत्र नियमेन मन्त्रस्य प्रयोगो भविष्यति। इतरथा पाक्षिकः स्यात्। उपदेशस्यार्थवत्त्वमिति। यदि नित्यसमाम्नातं न स्यात्ततोऽन्यथानुपपत्त्या पाक्षिकोऽपि कल्प्येत्। अस्ति चोत्तरस्मिन्नित्यसमाम्नानम्। तस्मादुत्तरे मन्त्रः। उत्तरसूत्रे कार्यापत्तिं प्रतिपादयति। विधिस्तु तत्रेति सामान्ये प्राप्ते (विन). मन्त्रस्य प्रयोगो विशेषो विधीयते। तत्र नियमेन मन्त्रप्रयोगः॥ १५॥

विध्यतिदेशात्तच्छ्रुतौ विकारः स्याद्गुणा-
नामुपदेश्यत्वात् ॥ १६ ॥

गुणविधिरयमुपदिश्यत आघारश्रुतौ । स तन्मन्त्रस्य विकारः स्यात् । उपदेश्यो हि मन्त्रविशेषोऽत्रोत्तरस्मिन्नाघारे । अन्यच्छ्रौतं मन्त्रविशेषविज्ञानम् , ऊर्ध्वोऽध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपतेरिन्द्रावान् बृहद्भावी हि मधोर्घृतस्य स्वाहा, इति। तदङ्गभूतमुपकारकस्य विज्ञानस्य साधनमितीन्द्राय हविर्दातव्यम् । इह तु, हिरण्यगर्भ इति विज्ञानं श्रौतं, श्रौतस्य प्राकृतस्य विज्ञानस्य कार्यं विधातुमर्हति, सामर्थ्यात् । इदं दधि घृतं शाकमिमे शालयः, देवदत्तो भोजयितव्यः। देवदत्तवद्यज्ञदत्तस्तैलेनेति भोजने तैलमुपकारकं श्रूयमाणं, यस्य प्राकृतस्य कार्यमभिनिर्वर्तयितुं शक्नोति, तस्य कार्ये विनियुज्यते घृतस्य । सामान्यं ह्यस्य स्नेहनसामर्थ्यं घृतेनेति। इहापि मन्त्र उच्चार्यमाणः प्राकृते श्रौतविज्ञाने विशेषमुत्पादयति । तच्चोत्तरस्मिन्नङ्गभूतं तदर्थविज्ञानस्य साधकं, न पूर्वस्मिन् । तस्मादुत्तरस्य गुणविधिरिति ॥ १६ ॥

पूर्वस्मिंश्चामन्त्रत्वदर्शनात् ॥ १७ ॥

पूर्वस्मिंश्चाऽऽघारेऽमन्त्रत्वमेव दर्शयति, न स्वाहेति करोति, मन्त्रं च नाऽऽहेति । तस्मादप्युत्तरस्य गुणविधिरिति ॥ १७ ॥

[ सौमिकचातुर्मास्येषु प्राकृतासादननियोजनानुवादेन विहिताभ्यामुत्करपरिधिभ्यां प्राकृतयोर्वेदियूपयोर्बाधाधिकरणम् ॥ ३ ॥ ]

[ ३ ] संस्कारे तु क्रियान्तरं तस्य विधायकत्वात्
॥ १८ ॥ पू०

सन्ति चातुर्मास्याः सोमाः । तत्र श्रूयते, उत्करे× वाजिनमा-

---

॥ १६ ॥ १७ ॥

---

×‘ उत्करे वाजिनमासादयति ’ ‘ परिधौ पशुं नियुञ्जति ’ इत्येवं खण्डदेवादिधृतः पाठः ।

सादयन्ति, परिधौ पशुं नियुञ्जन्तीति । तत्रैषोऽर्थः सांशयिकः किमेतदासादनान्तरं, नियोजनान्तरं च, उत प्राकृतयोरासादननियोजनयोर्गुणविधिः, इतरश्चेतरश्चेति । तत्रैतत्तावन्नः+ परीक्ष्यम् । किं धर्ममात्रमासादनं नियोजनं च, उत दृष्टकार्यमिति । यदि धर्ममात्रं, ततः क्रियान्तरम् । अथ दृष्टकार्यं, ततो गुणविधिरिति । तत उभयं संदिग्धमित्युभयं संहृत्य परीक्ष्यते । किं धर्ममात्रमितरच्चेतरच्च क्रियान्तरमुत दृष्टकार्यं गुणविधिरिति ।

किं प्राप्तम् । तुङ्गत्वात्तीक्ष्णाग्रत्वाच्चोत्करस्य दृष्टकार्यमासादनं न शक्यं कर्तुम् । तथा, उपशयत्वात्परिधेर्दृष्टकार्यकं नियोजनमशक्यं कर्तुम् । तस्माद्धर्ममात्रम् । यथा सौत्रामणीप्रकरणे ब्राह्मणस्य मूर्धन्यासादयतीति धर्ममात्रमासादनम् । एवमिहापि धर्ममात्रं चेत्क्रियान्तरम् । तथा च सति, आसादनं नियोजनं च विधायिष्यते । तत्र श्रुत्या विहितं भविष्यति । इतरथा वाक्यं विधायकं स्यात् । अपि च, अस्मत्पक्ष आसादननियोजने गुणविधिलक्षणार्थे न भविष्यतः । भवत्पक्षे तु गुणविधिं लक्षयेयाताम् । तस्मात्क्रियान्तरमितरदितरच्च । तस्य विधायकत्वात् । स्वपदगतस्य भावप्रत्ययस्य पदोत्तरस्य । न यथाऽऽघारे गुणविधिस्तथाऽस्मिन् संस्कार आसादनानियोजनाख्ये ॥ १८ ॥

प्रकृत्यनुपरोधाच्च ॥ १९ ॥

एवं च प्राकृतस्य धर्मस्य प्रापकश्चोदको नोपरोत्स्यते । वेद्यां हवींष्यासादयति, यूपे पशुं नियुञ्जन्तीति । तस्मादपि क्रियान्तरमिति ॥ १९ ॥

---

ननु वाजिने विशिष्टानुवादो वाक्यभेदो वा । उच्यते । 'वाजिनं निषिच्याभिघार्य' इति प्रकृत्यानन्तरः श्रूयते 'वाजिनमुत्करेणाऽऽसादयति' इति । तत्रोत्कर एव विधीयते । वाजिनं तु प्रकरणाल्लभ्यते । यन्नियुजन्वितत्यधा, इति पशुः सामर्थ्याल्लभ्यते ॥ १८ ॥ १९ ॥

---

+ तत एतत्—पा० ।

विधेस्तु तत्र भावात्संदेहे यस्य शब्दस्तदर्थः स्यात् ॥ २० सि०

तुशब्दः पक्षं व्यावर्तयति। नाऽऽसादनान्तरं नियोजनान्तरं चेति। किं तर्हि। प्राकृतयोरासादननियोजनयोर्गुणविधिः। तत्रैतद्वर्ण्यते। दृष्टकार्यके आसादननियोजने इति। कुतः। कार्यस्य दृष्टत्वात्। आसादनं समीपानयनम्। तस्य होमनिर्वृत्तिर्दृष्टं प्रयोजनम्। नियोजनस्यापि पश्वनपगमः। एवं चेत्, तस्माद्गुणविधिरितरश्चेतरश्च। कुतः। विधेस्तत्र भावात्। आसादननियोजनविधेस्तत्र दृष्टत्वात्। चोदकेन तत्र प्राप्तत्वात्। संदेहे तत्र गुणविधिः कर्मान्तरमिति। न कर्मान्तरविधानं युक्तम्। अज्ञातस्य हि ज्ञापनं विधिः। ज्ञाते च चोदकेनाऽऽसादननियोजने। तस्माद्यस्य गुणस्य चोदकः शब्दस्तदर्थतयोच्चारणं स्यात्। तस्माद्गुणविधिरिति। अथ यदुक्तं, श्रुतिरेवं विधायिका, त्वत्पक्षे तु वाक्यमिति। उच्यते। यद्यपि वाक्यं, तथाऽप्यल्पीयस्यदृष्टानुमानकल्पना भविष्यतीति। यावती केवलस्य गुणस्य विधीयमानस्य, न गुणस्य कर्मसहितस्येति ॥ २० ॥

संस्कारसामर्थ्याद्गुणसंयोगाच्च ॥ २१ ॥

अथ यदुक्तं, तीक्ष्णाग्रत्वादुत्करस्य, उपशयत्वाच्च परिधेः, दृष्टकार्ये आसादननियोजने न शक्येते कर्तुमिति। अत्रोच्यते। यथा शक्येते उत्करे च परिधौ चाऽऽसादननियोजने कर्तुं, तथा करिष्येते। पृथ्वग्रमुत्करं करिष्यामः। महान्तं च परिधिम्। अतः पृथ्वग्रतया स्थविम्ना च गुणेन संयोगादासादननियोजनसंस्कारसामर्थ्यं भविष्यति। तस्मान्न कर्मान्तरमिति ॥ २१ ॥

विप्रतिषेधात्क्रिया प्रकरणे स्यात् ॥ २२ ॥

अथ यदुक्तं, यथा सौत्रामणीप्रकरणे धर्ममात्रमासादनम्, एवमिहापीति। तत्परिहर्तव्यम्। अत्रोच्यते। सौत्रामणीप्रकरणे विप्रतिषेधान्न शक्यं दृष्टकार्यकमासादनं कर्तुम्। तस्पात्क्रियामात्रमदृष्ट-

---

॥ २० ॥ २१ ॥

कार्यकं सौत्रामणीप्रकरणे स्यात् । नात्विह दृष्टकार्यकमशक्यम् । तस्माद्गुणविधिः ॥ २२ ॥

[ अग्निचयनप्रकरणे श्रुतानां दीक्षाहुतिमन्त्राणां सौमिकदीक्षाहुतिमन्त्रैः समुच्चयाधिकरणम् ॥ ४ ॥ ]

[ ४ ] षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् ॥ २३ ॥ पू०

अस्त्यग्निः, य एवं विद्वानग्निं चिनुत इति । तत्र दीक्षाहुतयः प्राकृत्यो वैकृत्यश्च । आकूतिमग्निं प्रयुजं स्वाहा, मनो मेधामग्निं प्रयुजं स्वाहा, चित्तं विज्ञातमग्निं प्रयुजं स्वाहा, वाचो विधृतिमग्निं प्रयुजं स्वाहा, प्रजापतये मनवे स्वाहा, अग्नये वैश्वानराय स्वाहा, इति प्राकृत्यः । तथा वैकृत्यः, आकूत्यै प्रयुजेऽग्नये स्वाहा, मेधायै मनसेऽग्नये स्वाहा, दीक्षायै तपसेऽग्नये स्वाहा, सरस्वत्यै पूष्णेऽग्नये स्वाहा, आपो देवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा विधातु स्वाहा, विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा, इति । एताः प्रकृत्य समामनन्ति, षड्भिर्दीक्षयतीति । तत्र संशयः । किं वैकृतीनां प्रयोगः, प्राकृतीनां निवृत्तिः । अथवा समुच्चयः प्राकृतीनां वैकृतीनां चेति । किं प्राप्तम् । षड्भिर्दीक्षयतीति तासां प्राकृतीनामाहुतीनां मन्त्रविकारः स्यात् । वैकृतैर्मन्त्रैः प्राकृता निवर्तेरन् । श्रुतिसंयोगात् । प्रत्यक्षश्रुतिसंयोगो वैकृतीनाम् । षड् वैकृता मन्त्राः षट्शब्देन वैकृता गृह्यन्ते । तस्मात्प्राकृतानां बाधो न समुच्चय इति ॥ २३ ॥

अभ्यासात्तु प्रधानस्य ॥ २४ ॥ सि०

तुशब्दः पक्षं व्यावर्तयति, प्राकृतानां बाध इति । न बाधः । समुच्चयः । कुतः । संभवात् । यत्र हि प्राकृतवैकृतयोर्युगपन्न संभवः, तत्र वैकृतेन प्राकृतं बाध्यते । समुच्चये ह्यावृत्तिः स्यात्प्रधानस्येति । यत्र पुनरावृत्तिः श्रुता कर्तव्यैव, तत्र नैष दोषो भवति, आवृत्तिः प्रा-

---

॥ २२ ॥ २३ ॥

प्नोतीति। इह चाऽऽवृत्तिः श्रूयते प्रधानस्य होमस्य, द्वादश जुहोतीति। अतः संभवात्समुच्चय इति॥ २४॥

आवृत्त्या मन्त्रकर्म स्यात्॥ २५॥

नैतदस्ति, समुच्चय इति। प्रत्यक्षश्रुतैर्वैकृतैश्चोदकप्राप्ताः प्राकृता बाध्येरन्। अथ यदुक्तं, संभवे सति न बाधितव्या इति। अत्रोच्यते। नास्ति संभवः। कथम्। वैकृताः षड् मन्त्रा अग्नौ प्राकृतेषु होमेषु प्रत्यक्षेण श्रवणेन विधीयन्ते। ते चेद्धोमा वैकृतैर्मन्त्रैर्भवितव्यम् *। तस्मादावृत्त्या मन्त्रकर्म स्यात्। अतः प्राकृता बाध्येरन्नेवेति॥ २५॥

अपि वा प्रतिमन्त्रत्वात्प्राकृतानामहानिः स्यादन्यायश्च कृतेऽभ्यासः॥ २६॥

अपि वेति पक्षव्यावृत्तिः। प्रतिमन्त्रमाहुतयो भवन्ति। अभ्यासाच्च द्वादशता। प्राकृता अपि मन्त्राश्चोदकेन प्राप्ताः वैकृता अपि श्रवणेन। सर्वाङ्गग्राही च प्रयोगवचन उभयान् संगृह्णाति। समुच्चयासंभवे च बाधविकल्पौ, न संभवति समुच्चये। बाधे हि चोदकप्राप्तिरपह्नूयेत। न च होमनिवृत्तौ निष्कृष्टा वैकृताः श्रूयन्ते। तेन होमश्चेदापतितस्ततो वैकृताश्च साधका इत्यध्यवसेयम्×। दक्षिणे हि ते वैकृताः श्रूयन्ते, षड्भिर्दीक्षयतीति। होमप्रयोगवचनस्तु प्रदानार्थान् स्वाहाकारान्तान् सामर्थ्येन संनिहितान् गृह्णाति। उभये च प्राकृता वैकृताश्च संनिहिताः। तस्मान्न विनिगमनायां हेतुरस्ति, इमान् गृह्णाति, इमान्नेति। न च प्रधानावृत्तिरिह दोषो भवतीत्युक्तमेव। तस्मात्प्राकृतानां मन्त्राणामहानम्। अपि चान्यायः कृतेऽभ्यासः। सकृद्वैकृता मन्त्राः पठ्यन्ते। तैर्दीक्षितः संपादयितव्य इति। सकृत्संपादिते तैर्दीक्षिते कृतेऽर्थे पुनरभ्यासो न न्याय्यः तस्मादपि प्राकृतानामहानमिति॥ २६॥

---

॥ २४॥ २५॥ २६॥

---

* भवितव्यम्। अभ्यासे सति पुनस्त एव होमा भवन्ति। ते चेद्धोमा वैकृतैरेव भवितव्यम्—इति क्वचिदधिकः पाठः। × इत्यवसेयम्—पा०।

पौर्वापर्यं चाभ्यासे नोपपद्यते नैमित्तिकत्वात् ॥ २७ ॥

अपि च पूर्वापरशब्दौ भवतः । षट् पूर्वाञ्जुहोति षडुत्तराञ्जुहोतीति । न च वैकृतानां केवलानामभ्यस्यमानानां पूर्वापरतोपपद्यते। नैमित्तिकत्वात् । पूर्वनिमित्तो ह्युत्तरशब्दः, उत्तरनिमित्तश्च पूर्वशब्दः । तस्मादपि प्राकृतानामहानामिति ॥ २७ ॥

तत्पृथक्त्वं च दर्शयति ॥ २८ ॥

इतश्च पश्यामो न निवृत्तिः, समुच्चय इति । कुतः । तासामाहुतीनां पृथक्त्वं दर्शयति । उभयीर्जुहोति, आग्निकीश्चाऽऽध्वरिकीश्चेति । यद्युभयेषां मन्त्राणां समुच्चयस्ततस्तेषामाग्निकत्वादाध्वरिकत्वाच्च भवत्येष निर्देशः । इतरथा सर्वा एवाऽऽग्निक्यो भवेयुः । तत्र पृथक्त्वं नोपपद्यते । भवति च पृथक्त्वम् । तस्मादनिवृत्तिः, समुच्चय इति ॥ २८ ॥

न चाविशेषाद्व्यपदेशः स्यात् ॥ २९ ॥

इतश्चानिवृत्तिः, समुच्चय इति । कुतः । व्यपदेशात् । व्यपदेशो भवति । अध्वरस्य पूर्वमथाग्नेः, उपाग्नि ह्येतत्कर्म यदाग्निकर्म, इति । पूर्वमध्वरस्य, अथाग्नेरिति व्यपदेशः समुच्चयेऽवकल्पते, नासति विशेषे । तस्मात्समुच्चय इति ॥ २९ ॥

( नैमित्तिके पुनराधाने श्रुतदक्षिणया सामान्यविहितैकादिदक्षिणाया बाधाधिकरणम् ॥ ५ ॥ )

[ ५ ] अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमाधिकं स्याद्वाक्यसंयोगात् ॥ ३० ॥ पू०

अस्ति पुनराधानं, निमित्ते श्रूयते । भाग्ययशःश्रीकामानां पुनरादधीत । योऽग्नीनाधाय भ्रातृज्यानिं पुत्रज्यानिं वा जीयेत स पुनरादधीतेति । तत्र श्रूयते, पुनरुत्स्यूतं वासो दक्षिणा, पुनरुत्सृष्टोऽनड्वानिति । तथा, आधाने दक्षिणा—एका देया षड् देया द्वादश देयाश्चतुर्विंशतिर्देयाः शतं देयं सहस्रं देयमपरिमितं देयमिति । तत्र

॥ २७ ॥ २८ ॥ २९ ॥

—

संशयः । किं पुनराधानेऽग्न्याधानदक्षिणानामनिवृत्तिः, समुच्चयः । अथाग्न्याधेयदक्षिणानां निवृत्तिरिति । किं प्राप्तम् । अग्न्याधेयस्य नैमित्तिके पुनराधेये दक्षिणादानमधिकं स्यात् । प्राकृतीनामनिवृत्तिः, समुच्चय इति । कुतः । एकस्मिन् वाक्य उभय्यो दृश्यन्ते । उभयीर्ददाति, अग्न्याधेयिकीश्च पुनराधेयिकीश्चेति । तस्मादनिवृत्तिः समुच्चय इति ॥ ३० ॥

शिष्टत्वाच्चेतरासां यथास्थानम् ॥ ३१ ॥

इदं पदोत्तरं सूत्रम् । कथं चोदकप्राप्तस्य प्रत्यक्षश्रुतस्य समुच्चयो भविष्यति । अत्रोच्यते । शिष्टत्वादितरासां, प्राकृतीनां वचनप्रामाण्याद्यथास्थानं समुच्चयो भविष्यतीति । प्रत्यक्षं हीदं शासनम् , आग्न्याधेयिकीर्दत्त्वा पुनराधेयिकीर्ददातीति । तस्मान्न बाधः प्राकृतीनां समुच्चय इति ॥ ३१ ॥

विकारस्त्वप्रकरणे हि काम्यानि ॥ ३२ ॥ सि०

तुशब्दः पक्षं व्यावर्तयति, न समुच्चयः, विकार इति । कुतः । काम्यं ह्येतत्पुनराधेयं श्रूयते । तदसति प्राकृते प्रकरणे, आम्नानमवकल्पते, न सति । यत्तत्रोच्यते वैकृतं, तत्प्राकृतं बाधत इत्यर्थः । काम्यो वा नैमित्तिको वाऽर्थो नित्यमर्थं विकृत्य निविशते । यथा; अक्ष्यामये मुद्गौदनभोजनं निवातशय्या चेति; न यं शय्यासनं भोजनं च विकरोति । प्रत्यक्षं हि वैकृतम् । आनुमानिकं च प्राकृतम् । तस्माद्वैकृतेन बाध्यते । अथ यदुक्तं; वचनप्रामाण्यात्प्राकृत्यो भविष्यन्तीति । अत्रोच्यते । ता उभयीर्ददातीति नात्र विधिविभक्तिरस्ति ।

---

॥ ३० ॥ ३१ ॥

---

प्रकरणे हि ' पुनरुत्सृष्टोऽनड्वान् ' इत्येतस्माद्वाक्यात्समुच्चयो न गम्यते, समुच्चयशब्दाभावात् । ननु ' ता उभयीर्ददाति ' इति समुच्चयः श्रूयते । उच्यते। अर्थवादोऽयम् । ' अप्रकरणे हि काम्यानि ' इत्यस्य सूत्रावयवस्यायं ग्रन्थः। तदसति प्राकृते प्रकरणे पुनरुत्सृष्टाम्नानं यदि भवेत्ततो न बाधेताऽऽधानदक्षिणाम् । प्रकरणान्तराभावाद्दक्षिणान्तराभावाद्दक्षिणान्तरत्वात् । सति त्वाधानप्रक-

वर्तमानापदेशोऽयम् । प्रमाणान्तरमादायायमर्थः प्रापितः । उभयीर्दक्षिणा ददाति; आग्न्याधेयिकीः पौनराधेयिकीश्च × । अग्न्याधेयेऽग्न्याधेयिकीः; पुनराधेये पौनराधेयिकीः । तदेद्भूतानुवादमात्रम् । तस्मात्प्राकृतीनां निवृत्तिरिति ॥ ३२ ॥

शङ्कते च निवृत्तेरुभयत्वं हि श्रूयते ॥ ३३ ॥

इतश्च प्राकृतीनां निवृत्तिः । कुतः । निवृत्त्याशङ्कादर्शनात्, शङ्कते हि निवृत्तेरिति गम्यते । कथम् । उभयत्वं हि श्रूयते । यद्वैकृतीर्ददाति दक्षिणा उभय्योऽपि तेन दक्षिणाः प्रत्ता भवन्ति । ननूभय्योऽपि+ प्रदीयन्ते, यत उभय्योऽपि प्रत्ता भवन्तीत्याह । अग्न्याधेयिकी ह्यग्न्याधेये, पुनराधेयिकयः पुनराधेये । तस्मात्प्राकृतीनां निवृत्तिरिति ॥ ३३ ॥

[ आग्रयणे, उपदिष्टवासोवत्सदक्षिणया प्राकृतान्वाहार्यदक्षिणाया बाधाधिकरणम् ॥ ६ ॥ ]

[ ६ ] वासोवत्सं च सामान्यात् ॥ ३४ ॥

आग्रयणं भवति, हुताद्याय यजमानस्यापराभवाय नवानामैन्द्राग्नः, पुराणानामाग्नेयः, सौम्यः श्यामाकः, वैश्वदेवः पयसि चरुः, द्यावापृथिव्य= एककपाल इति । तत्र श्रूयते, वासो दक्षिणा, वत्सः प्रथमजो दक्षिणा, इति । अस्ति तु प्रकृतौ, अन्वाहार्यो दक्षिणेति । स इह चोदकेन प्राप्यते । तदत्र संशयः । किं वासोवत्समन्वाहार्यस्य निवर्तकमुतानिवर्तकमिति । किं प्राप्तम् । चोदकानुग्रहाद्विरोधाभावाच्चानिवर्तकमिति ।

एवं प्राप्ते, ब्रूमः । वासोवत्सं च सामान्यात् । उक्तमधस्तादाधानदक्षिणानां पुनराधेये निवृत्तिरिति । चशब्देनान्वादेशः क्रियते । अन्वाहार्यस्य निवृत्तिः । कुतः । कार्यसामान्यात् । दक्षिणाकार्येऽन्वा-

---

रणाम्नाने यन्नैमित्तिकं पुनरुत्सृष्टादि विधीयते तत्प्राकृतं बाधमानमेव निविशते काम्याच्चात्मानम् ॥ ३२ ॥ ३३ ॥

———

× पुनराधेयकीश्च—इति खण्डदेवादिधृतः पाठः । + न तूभय्योऽपि—पा० ।
= द्यावापृथिवियः—पा० ।

हार्यः प्रकृतौ । इह वासोवत्सं तस्मिन् कार्ये । दक्षिणाशब्दश्रवणात् । तस्मान्न समुच्चयः । निवृत्तिरिति । प्राप्तिर्वोत्तरविवक्षया क्रियत इति ॥ ३४ ॥

[ आग्रयणे वासोवत्सयोः प्राकृतान्वाहार्यधर्मानुष्ठानाधिकरणम् ॥ ७ ॥ ]

[ ७ ] अर्थापत्तेस्तद्धर्मा स्यान्निमित्ताख्याभिसंयोगात् × ॥ ३५ ॥ सि०

तत्रैव वाससिवत्से च संशयः । अन्वाहार्यधर्माः कर्तव्या उत नेति । किं प्राप्तम् । न तावन्न्याय उच्यते कर्तव्या इति । तेनाकर्तव्या इति मन्यामह इति ।

एवं प्राप्ते, ब्रूमः । अर्थापत्तेस्तद्धर्मा वत्सः स्यात् । तद्धर्मकं च वासः । साधनविशेषनिबन्धना हि ते धर्माः, नान्वाहार्यनिबन्धनाः । तस्मादन्यस्मिन्नपि तत्कार्यापन्ने भवितुमर्हन्तीति । कथं पुनर्वासोवत्सं तत्कार्यापन्नमिति । निमित्ततयाऽऽख्याय परिक्रयेण दक्षिणेति, तयाऽभिसंयोगो भवति । वासो दक्षिणा, वत्सः प्रथमजो दक्षिणा, इति । तस्माद्वासोवत्सावन्वाहार्यधर्मकौ स्यातामिति ॥ ३५ ॥

( आग्रयणे अन्वाहार्यस्थानापन्नेऽपि वत्से पाकाननुष्ठानाधिकरणम् ॥ ८ ॥ )

[ ८ ] दाने पाकोऽर्थलक्षणः ॥ ३६ ॥ सि०

तत्रैव, वत्सः प्रथमजो दक्षिणा, इति । तत्रैतत्समधिगतं, अन्वाहार्यधर्माः कर्तव्या इति । तदत्र संशयः । किं वत्से पाकः कर्तव्य उत नेति । किं प्राप्तम् । चोदकानुग्रहाच्छक्यत्वाच्च कर्तव्य इति ।

एवं प्राप्ते, ब्रूमः । वत्सस्य दाने पाको न कर्तव्यः । अपक्वो हि

---

॥ ३४ ॥ ३५ ॥

---

× निमित्ताख्याभिसंयोगादिति—दक्षिणाकार्यपरिक्रयनिमित्तकदक्षिणाशब्दसंयोगादित्यर्थः ।

वत्सो वत्स एव । वत्सश्च श्रूयते, न मांसम् । परिक्रयाय च श्रूयते, न पुरुषसंस्काराय । तस्माच्चोदकः पाकं न प्रापयति । यदि पाकः क्रियेत, अश्रुतः प्राणिवध आचारविरुद्धोऽनुष्ठीयेत । तस्मात्पाको न कार्यः ॥ ३६ ॥

( आग्रयणे, अन्वाहार्यस्थानापन्ने वासासि पाकाननुष्ठानाधिकरणम् ॥९॥)

[ ९ ] पाकस्य चान्नकारितत्वात् ॥ ३७ ॥ सि०

तत्रैव श्रूयते, वासो दक्षिणा, इति । तत्रायमर्थः समधिगतः । अन्वाहार्यधर्माः कर्तव्या इति । अथ पाकः कर्तव्यो नेति संशयः । अर्थापत्तेः कर्तव्यः ।

इति प्राप्ते, ब्रूमः । न कर्तव्यः । अन्नकारितत्वादिति । अन्नकारितो हि पाकः । न च वासोऽन्नम् । न तत्र पाकः शक्यते कर्तुम् । तस्मात्तत्र पाको न कर्तव्य इति ॥ ३७ ॥

( आग्रयणे वासोवत्सयोरभिधारणाननुष्ठानाधिकरणम् ॥१०॥ )

[ १० ] तथाऽभिघारणस्य ॥ ३८ ॥ सि०

आग्रयणे श्रूयते, वासो दक्षिणा, वत्सः प्रथमजो दक्षिणा, इति। तत्रायमर्थः समधिगतः । अन्वाहार्यधर्मा वाससि वत्से च कर्तव्या इति । अथायमर्थः सांशयिकः । किमभिघारणं कर्तव्यं, नेति । किं तावत्प्राप्तम् । अर्थापत्तेः कर्तव्यमिति ।

एवं प्राप्ते, ब्रूमः । तथाऽभिघारणस्य । किम् । आक्रियेति । अभिघारणं ह्यन्वाहार्ये स्वादिम्ने क्रियते । स्वादिमा ह्योदनस्य परिक्रय उपकरोति । न च वाससि वत्से च स्वादिम्ना प्रयोजनम् । तस्मात्तत्राभिघारणं न स्यादिति ॥ ३८ ॥

( ज्योतिष्टोमे दक्षिणान्तर्गतगोष्वेव द्वादशशतसंख्यानिवेशाधिकरणम् ॥ ११ ॥ )

[ ११ ] द्रव्यविधिसंनिधौ संख्या तेषां गुणत्वात्स्यात् ॥ ३९ ॥ पू०

---

॥ ३६ ॥ ३७ ॥ ३८ ॥

——

दक्षिणाप्रसङ्गेनेदमधिकारणमायातम् । प्रकृतौ निर्णीतायां* विकृतौ दक्षि-

---

* निर्णीतायामिति—दक्षिणायामिति शेषः ।

अस्ति ज्योतिष्टोमः, ज्योतिष्टोमेन स्वर्गकामो यजेतेति । तत्रैव-माम्नायते, गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा, इति । तत्र संशयः । किमेकैकस्य गवादेर्द्रव्यस्य द्वादशशतमुतैकस्य द्रव्यस्य । यदैकस्य, तदा किमनियमो यस्य कस्यचित् , उत माषाणाम् । अथवा, सर्वसंपादनीया संख्या, उतैकजातीयस्य । यदैकजातीयस्य, तदा किमनियमो यस्य कस्यचित् , उत पशूनाम् । यदा पशूनां, तदा किमनियमो येषां केषांचित् , उत गवामित्येते पक्षा भविष्यन्ति ।

किं तावत्प्राप्तम् । द्रव्याणां विधीयमानानां संनिधौ । केषां द्रव्याणाम् । गवादीनाम् । क्व विधीयमानानाम् । दक्षिणासंबन्धे । संख्या समाम्नाता, तस्य द्वादशशतं दक्षिणा, इति । तेषां गवादीनामेकैकस्य संख्या स्यात् । कुतः । गुणतः संख्या विधीयते, गवादीनि प्रधानतः । कथम् । नैवमभिसंबन्धः क्रियते, द्वादशशतं स्यादिति । कथं तर्हि । द्वादशशतं तस्येति । एवं तस्य ग्रहणमर्थवद्भवति । इतरथा तदनर्थकं वाऽनुवादो वा स्यात् । एकवचनमपि प्रकृतापेक्षं लक्षणयाऽनूद्येत । प्रधानसंनिधौ च गुणः शिष्यमाणः प्रतिप्रधानं भिद्येतेति । अस्ति चैतया संख्यया प्रयोजनम् । गवादीनि द्रव्याणि

---

णाविचारः सुखं वर्तिष्यते । ननु ' तस्य नवतिशतं स्तोत्रीयाः ' इत्यस्य वाक्यस्यार्थवादत्वेन शेषभूता गवादयः । कथम् । ' तस्य नवतिशतं स्तोत्रीयाः ' इत्यभिधायाऽऽह—' अशीतिशतं षड्विंशतयो विराजः प्रतितिष्ठन्ति ' इति । विराट्संस्तुतिस्तासां स्तोत्रीयाणाम् । तत्राऽऽह—' अथ पादशो गवात्मना विराट् ' इति । पादशः स्तोत्रीयास्ता गवादिभिः स्तूयन्ते । तस्मादर्थवादत्वादनुदाहरणम् ×। आध्वर्यवेऽपीदृशं वाक्यं दृष्टव्यम् । कृत्वा चिन्ता वा ।

अथवोदाहरणमेवेदं, ' तस्य द्वादशशतम् ' इति । यदि ' तस्य ' इति क्रतुविशेषणं स्यादप्रवृत्तिविशेषकरमनर्थकमेव * स्यात् । गवादयस्तु यद्यप्यर्थवादत्वेनोपयुक्तास्तथाऽपि विपरिवर्तमानास्त एव तस्यशब्देन संबध्यन्ते । तेनैकै-

---

× अनुदाहरणमिति—' गौश्चाश्वश्चाश्वतरश्च ' इत्यादिना भाष्योदाहृतमन्यशेषत्वेन दक्षिणाविधायकत्वासंभवादनुदाहरणमित्यर्थः । * करणम—पा० ।

तत्संख्यानि कर्तव्यानि । तत्र न गम्यते विशेषः । किमेतत्संख्यं कर्तव्यं, किं नेति । यदेव द्रव्यं नैतत्संख्यं स्यात् । तत्प्रति श्रुतिर्बाध्येत। तस्मादेकैकमेतया संबद्धव्यमिति ॥ ३९ ॥

समत्वात्तु गुणानामेकस्य श्रुतिसंयोगात् ॥ ४० ॥

तुशब्दः पक्षं व्यावर्तयति । तस्य तस्य द्वादशशतमिति नैतदेवम् । एकस्य कस्यचिद्द्वादशशतं स्यात् । कुतः । समत्वाद्गुणानाम् । गवादयोऽपि हि दक्षिणासंबद्धाः । संख्याऽपि । न गवादीनां संख्या विधीयते । दक्षिणा तु संख्याविशिष्टा चोद्यते, न गवादयः । कुतः । संख्याया दाक्षिण्येनानभिसंबन्धे सत्यनियतसंख्यानां गवादीनां दक्षिणासंबन्धेनाऽऽनर्थक्यमेव संख्यायाः स्यात् । संख्येयसामानाधिकरण्याच्च तच्छब्दस्य बहुवचनं प्रसज्येत× । गवादिषु, तस्य द्वादशशतमिति चैकवचनं न स्यात् । तस्माद्यस्य कस्यचित्परिक्रियसाधनस्य द्रव्यस्यैतस्यां संख्यायां कृतायामेतत्संख्यः परिक्रयः कृतो भवति । तस्मादेकस्य संख्या, नैकैकस्य । एवमेकवचनश्रवणं युक्तरूपं भविष्यति ।

---

कस्य गवादिद्रव्यस्य संख्यया संबन्धः । कुतः । तच्छब्देन गवादयः परामृश्यन्ते। प्राप्त्या तेषामेव गुणभूता संख्या विधीयते । ननु गवादिभिः संबन्धे 'तेषाम्' इति बहुवचनं प्राप्नोति । उच्यते । गवादयोऽत्र संख्यां प्रति प्रधानभूताः । उद्दिश्यमानस्य च संख्या न विवक्ष्यते ग्रहस्येव= ।

अथवा तन्त्रसंबन्धोऽयं तस्येति । 'तस्य द्वादशशतम्' इत्येवमपि संख्या गुणभूता द्रव्याणि प्रति, तस्यशब्दसामर्थ्यात् ॥ ३९ ॥

---

समत्वाद्गुणानां—संख्या+ द्रव्याणि प्रति । कुतः । वाक्यभेदप्रसङ्गात् । सकृदुच्चरितस्तस्येति शब्दो यदि दक्षिणायां विधीयते, तं प्रति संख्या विधीयते, ततो वाक्यभेदः । अथापि वाक्यभेदमङ्गीकृत्य तच्छब्दस्य संख्या विधीयते, तथाऽपि दक्षिणायाः संख्याऽनवगता, तां प्रति विधीयमानत्वात् ।

---

× प्रसज्येत गवादिषु । तस्य—पा० । = ग्रहस्येवेति-( अ० ३ पा० १ अ० ७) अत्रत्यन्यायेनेति शेषः । + अत्र ग्रन्थस्त्रुटित इति भाति ।

ननु लक्षणत्वात्तस्य शब्दस्याविवक्षितं वचनम् । उच्यते । अविवक्षितेऽपि वचने या संख्याऽनूद्यते, तेन वचनेन भवितव्यम् । यथा लक्षणत्वेनाप्युच्यमाने ब्राह्मणजातीयो न हन्तव्य इति, न द्विवचनान्तेन निर्देशो भवति, ब्राह्मणौ न हन्तव्याविति । आह । जात्याख्यायामेकस्मिन् बहुवचनं भवति । बहुषु वैकवचनं भवति, न त्वेकस्मिन् बहुषु च द्विवचनं भवति । तेनात्र बहुवचनान्तेन निर्देशः, एकवचनान्तेन वा बहुषु निर्देशो भवति । अत्रोच्यते । जात्याख्यायामेतदेवं भवति । न च तच्छब्देन जातिरभिधीयते । संनिहितव्यक्तिवचन एष भवति । तस्मादेकस्य कस्यचित्संख्येति ॥ ४० ॥

यस्य वा संनिधाने स्याद्वाक्यतो ह्यभिसंबन्धः ॥ ४१ ॥

इदं पदोत्तरं सूत्रम् । यदैकस्य संख्यासंबन्धः, तदाऽनियमः, यः कश्चित्, विशेषाश्रवणादिति । एवं प्राप्ते, ब्रूमः । यस्य वा संनिधाने स्यात् । यस्य शब्दस्य संनिधाने संख्याशब्द उच्चरितः, सोऽर्थः संख्याविशिष्टः प्रतीयेत । अनन्तरमुच्चरितेन हि सहैकवाक्यता भवति । कुतः । अनन्तरसंबद्धं हि विशेषणं विज्ञानं विशेष्टुं शक्नोति । न हि व्यवहितम् । व्यवहिताश्च गवादयो माषैः । वाक्यं च प्रकरणाद्बलीयः । तस्मान्माषाः संख्यया संबध्येरन्निति ॥ ४१ ॥

---

तत्रैकत्वमयज्ञाङ्गभूतम्+ ' इति चेत् । तन्त्रसंबन्धेऽपि गवादयः संख्यानुरक्ता न संख्याया दक्षिणा विधीयते ।

अथापि दक्षिणयाऽनुरक्ता गवादयः संख्यया संबध्यन्ते, तत्र वाक्यभेदादयो ये दोषास्त इहापि । तस्माद्गवादयः संख्या तच्छब्दश्चेति त्रयमपि दक्षिणां प्रति विधीयते । तच्छब्दसामर्थ्याच्चैकजातीयस्य द्रव्यस्य परिच्छेदिका संख्या । यस्य कस्यचिदप्यनूद्यमानेऽपि तच्छब्दे तेषामिति वचनं प्राप्नोति । तच्छब्दस्य द्रव्यपरत्वाज्जात्याख्यमिति, तदपि न लभ्यते ॥ ४० ॥

---

यस्य वा संनिधाने-( यस्य कस्यचिदिति ) तत्कुतः । माषा दक्षिणाया अनन्तरं विपरिवर्तन्ते त एव ग्राह्याः गवादयस्तु न विपरिवर्तन्ते । व्यवहितत्वात् ॥ ४१ ॥

---

+( अ० ४ पा० १ अ० ५ सू० ११ )

असंयुक्ता तु तुल्यवदितराभिर्विधीयन्ते तस्मा त्सर्वाधिकारः स्यात् ॥ ४२ ॥

तुशब्दः पक्षं व्यावर्तयति। माषाः संख्यायुक्ता इति, नैतदेवम्। सर्वव्यापिनी संख्या स्यात्। सर्वैर्गवादिभिः संपाद्येत। असंयुक्ता केवलैर्माषैः संख्या। तुल्यवदितराभिर्द्रव्यश्रुतिभिर्माषाः श्रूयन्ते। कथम्। तिलाश्च माषाश्चेति, चशब्देन तिलैः सहिता माषा इति गम्यते। गवादिभिः सहितानां संख्यासंबन्धः। चशब्दश्रुतिरर्थान्तरसंबन्धमेषामाह। चशब्दश्रवणस्यैतत्सामर्थ्यम्। यस्माच्चशब्दः पर उच्चार्यते, तस्यार्थान्तरसंबन्धं श्रुत्यैवाऽऽह, न वाक्येन। यदि हि वाक्येन स्यात्। पुरस्तादप्युच्चार्यमाण एतमर्थं कुर्यात्। संख्या तु वाक्येन संबध्यते। यदि च पूर्वं न चार्थोऽवकल्पेत, चशब्दश्रवणमनर्थकं स्यात्। न ह्यसावुत्तरकाले संबध्यते संख्यासंबन्धेऽभिनिर्वृत्ते। तस्य द्वादशशतं चेति, अन्य एवावगम्येत, द्वादशशतमन्यच्च किंचिदिति। न च तदन्यत्किंचिदुच्चार्यते। तस्मात्पूर्वं चयोगः, पश्चात्संख्यासंबन्धः समर्थतराणि समानविभक्तीनि, दुर्बलो विविभक्तिः।

अपि च, समानविभक्तीनि समर्थतराणि। तेषां ह्याशुतरा वृत्तिः। विलम्बिता विविभक्तीनाम्। स्वार्थे समानविभक्तीनि समर्थतराणि प्रथमान्तानि भवन्ति। परपदार्थं षष्ठ्यन्तो विशिनष्टि। तस्मात्समुच्चितानि वेतरेतरयुक्तानि वा संख्येयानि संख्यया संबध्यन्ते। समाहारो वैषां संख्यया युक्तः। तस्मात्सर्वैः संख्या संपादयितव्या। किमेवं भविष्यति। संख्यासंबन्धे न कश्चिद्वर्जितो भविष्यति। विनि-

---

असंयुक्ता—सर्वसंपादिनी संख्या। कुतः। चशब्दश्रवणात्। चशब्दो माषाणां परः श्रूयमाणो द्रव्यान्तरसहितान्माषान् गमयति। यथा प्रकृतिप्रत्ययार्थयोर्भिन्नार्थयोरपि सतोः पूर्वप्रत्ययोच्चारणं प्रकृतेर्यस्मान्न किंचित्प्रत्यायितं भवेत्, विशिष्टक्रमके तु प्रत्याय्येत। एवमिह चशब्दोऽपि परस्ताच्छ्रूयमाणः श्रुत्यैव स्वार्थमर्थान्तरसंबन्धित्वेन प्रतिपादयति। वाक्यसंबन्धे हि पुरस्तादुच्चार्यमाण एवमर्थं कुर्यात्।

गमनायां हेत्वभावे यमेव संख्यासंबन्धो वर्जयेत् , तत्रैव प्रत्ययो बाध्येत । तस्माद्गवादिराशिः संख्ययैतया संबध्येतेति ॥ ४२ ॥

असंयोगाद्विधिश्रुतावेकजाताधिकारः स्याच्छ्रुत्या-
कोपात्क्रतोः ॥ ४३ ॥

नैतदस्ति, सर्वसंपादनीया संख्येति । असंयोगाद्विधिश्रुतौ, सर्वसंपादने संबन्धो नास्ति । न श्रूयते गवादिराशेः संख्या भवतीति । न गवादिराशिः शब्देन निर्दिश्यते । यः सर्वनाम्ना प्रतिनिर्दिश्येत । गवादयस्तु शब्देनोक्ताः । तेन ते सर्वनाम्ना प्रतिनिर्देशमर्हन्ति । न चात्र गवादीनां प्राधान्यमित्युक्तम् । दाक्षिण्येन हि संख्या संबध्यत इति, संख्याविशेषणं सर्वनामशब्दः संख्यां विशेष्टुमुपादीयते । तत्रैकवचनं विवक्षितमेव । तत्रैषां नानाजातीयानां निर्दिष्टानामन्यतममेकं प्रतिनिर्देशेन संख्याविशेषणमुपादीयते । तस्मान्नानाजातीयानां निर्दिष्टानामेकं स्यात् । स एकजातीय एव भवति । तस्मात्, एकजाताधिकारः इति सूत्रितम् । किमेवं भविष्यति । एवमेकश्रुतिर्न कोपिता भविष्यति । इतरथा वाक्येन द्रव्यस्य भवन्ती प्रवृत्तिविशेषमकुर्वती, अप्रवृत्तिविशेषकरा* प्रकरणवशेन क्रतोः कल्पिता भविष्यति, तस्य क्रतोर्द्वादशशतं दक्षिणा, इति । तस्मादेकजातीयस्य द्वादशशतं दक्षिणेति ॥ ४३ ॥

शब्दार्थश्चापि लोकवत् ॥ ४४ ॥

अपि च लोकवदेतद्द्रष्टव्यम् । लोके हि निर्विशेषिते संख्याशब्द उच्चरिते, एकजातीये प्रत्ययो भवति । कुतः । अन्यथा व्यव-

---

अपि च प्रथमाविभक्तिप्रयुक्तानि गवादीनि स्वार्थ एवोच्चार्यमाणानि सामानाधिकरण्यं प्रतिपद्यन्ते । विभक्तानि तु तस्यशब्दनिर्दिष्टानि व्यधिकरणलक्षणया संबध्येरन् । तस्माच्चशब्दश्रुतेः सामानाधिकरण्याच्च मिथः संयुक्तानां संख्यायोग इति सर्वसंपादिनी ॥ ४२ ॥

---

एकेन द्रव्येण संख्या संबध्यते । कुतः । संख्या दक्षिणां प्रति विधी-

---

* नाप्रवृत्तिविशेष—पा० ।

हारानुपपत्तेः । अपत्येकस्मिन् जातिविशेषे, सर्वत्राऽन्यैः सह परार्ध-संख्या निविष्टा । परार्धस्य चावान्तरसंख्याभिः संव्यवहारः क्रियते । येषामेकेन केनचित्संबन्धस्तेषां तमेकं संबन्धिनमपेक्ष्य संख्या निविशते । स तत्रैकः संबन्धी वक्तव्यः । प्रकृतो वा ग्रहीतव्यः अर्थाद्वा य आपद्येत, स उपादेयः । इह च प्रकृता नानाजातीयाः । तेषामन्यतमः संख्यया संबद्धः स्यादिति । तथा, शतमाभ्यां दीयतामिति, एकजातीयानां शतं, न भिन्नजातीयानाम् । यथा द्रव्यं गुणः कर्मावयव इत्येवमादीनाम् ॥ ४४ ॥

सा पशूनामुत्पत्तितो विभागात् ॥ ४५ ॥

एकजातीयस्य संख्येत्येतत्समधिगतम् । सा पशूनामुत माषाणामिति, अनियमे प्राप्त उच्यते । सा पशूनामिति । कुतः । उत्पत्तितो विभागात् । औत्पत्तिकेन विभागेन पशवः संव्यवहारेषु संख्यायन्ते । पञ्चभिरश्वैः क्रीतः, पञ्चभिर्गोभिः क्रीत इति । न व्रीह्यादीनामौत्पत्तिकेन विभागेन संव्यवहारेषु संख्या संकीर्त्यते । निगदाभिप्राया मानाभिप्राया वा भवति । न हि भवति पञ्चभिर्माषैः क्रीत इति । पञ्चभिर्माषाणामाढकैर्द्रोणैर्वा कुडवैर्वा खारीभिर्वेति भवति । तत्र, आढकादिभिरनुच्चार्यमाणैः साकाङ्क्षमेव वाक्यमपरिपूर्णमप्रमाणमर्थस्य कस्यचित् ।

अथ माषाणामप्यौत्पत्तिकेन विभागेन कस्मादिह परिक्रयो न

---

यते, गवादयस्तच्छब्दश्च । ततः किम् । तस्यशब्देन प्रकृतसंबन्धः । अत एकांजातीयमेकसंख्याविशिष्टं द्रव्यं दाक्षिणां प्रति विधीयते । तेन द्वादशशतविशिष्टमेकजातिविशिष्टमेकसंख्याविशिष्टं च नियमेन ग्रहीतव्यम् । न च गवादीनां वस्त्वन्तरभूतं विद्यते, यत्सर्वनाम्ना प्रतिनिर्दिश्यते । तस्मात्प्रकृतानां गवादीनां परामर्शः ।

ननु विद्यत एव समुदायः । भवत्वसौ वस्तु । तथाऽपि गवादीनां समुदायशब्देनोच्यते । गवादिव्यतिरेके नास्ति शब्दः, यः सर्वनाम्ना प्रतिनिर्दिश्यते ॥ ४३ ॥ ४४ ॥

———

क्रियत इति । अत्रोच्यते । मूल्यस्य सतः परिक्रये विशेष उच्यते, द्वादशशतं दक्षिणेति । न च द्वादशशतं व्रीह्यादिबीजानां भृतित्वेन ऋत्विजामवकल्पते । त्रिभिः प्रकारैर्भृतिर्भवति, व्यापारतः फलतो वचनत इति । व्यापारतस्तावन्न माषबीजानां द्वादशशतं भृतिः। कर्म कुर्वाणा हि कर्मकराः पादिकमप्यहर्लभन्ते । फलानुरूप्यं नैव ज्ञायते । वचनं तु भृतौ सत्यां परिमाणविशेषपरं भवति । यत्र हि पादिकमप्यहर्न लभ्यते, न सा दक्षिणा भवति । न हि सा तस्मिन् कर्मणि दक्षं करोति । स्नेहाद्वाऽन्येन वा प्रकारेण कृत्स्नमहः कर्म कुर्यात्, न व्रीहीणां द्वादशशतेन प्रोत्साहितः ।

आह । यः कश्चित्कस्यां चिदवस्थायां व्रीहीणां द्वादशशतेन प्रोत्साह्यते, तस्य किं सा दक्षिणा भवेत् । नेति ब्रूमः । दक्षकरणी हि दक्षिणा । दक्षश्च बलम् । या नाऽऽशितंभवं करोति, नासौ बलकरणी। तस्माद्या नाऽऽशितंभवा, नासौ दक्षिणा । आशितंभवाया आधिक्यं* वचनस्य विषयः। आह । व्रीहिबीजानामपि द्वादशशतं यां च यावतीं बलमात्रां करोति ।

अत्रोच्यते । आपेक्षिकमिदं बलं नाम। स एव हि पुरुषः कंचित्प्रति बलीयान्, कंचित्प्रत्यबलः । तत्र यावदाशितंभवं नास्ति, तावदबलता । बलवत्तरो ह्याशितेन भवतीत्याशितंभवादूर्ध्वं बलकरणम् । तस्मादाशितंभवं यद्द्रव्यं, सा भृतिः, सा दक्षिणा । ततोऽधिकं दाक्षिणात्वे सिद्धे वचनप्रामाण्याद्भवति । विकृतौ ऋतपेये वचनप्रामाण्यादल्पबलकरणमपि दक्षिणायाः स्थाने विधीयते सोमचमसः । स आश्रयात्सिध्यति । पशवस्तु सर्वे मुख्यबलकरणे समर्थाः । तेषु सत्सु न व्रीह्यादिबीजानि संख्यया संभन्त्स्यन्त इति ॥ ४५ ॥

अनियमोऽविशेषात् ॥ ४६ ॥

यदा पशूनां द्वादशशतं, तदाऽनियमः, गवादीनामन्यतमस्य-

॥ ४५ ॥

———

* आधिकं—पा० ।

कस्यचिद्द्वादशशतम् । एवमनियमे लाघवं भविष्यति । प्रयोगप्राशुभावश्च । तत्राधिकारशास्त्रं महाविषयं भविष्यतीति ॥ ४६ ॥

भागित्वाद्वा गवां स्यात् ॥ ४७ ॥ सि०

वाशब्दोऽनियमं व्यावर्तयति । गवां द्वादशशतं स्यात् । कुतः । भागित्वात् । भागवत्यो हि गावो महाभागाः । महत्युपकारे वर्तन्त इत्यर्थः । एवमृत्विजामुपकारभूयस्त्वं भविष्यति । ऋत्विजां चोपकारः कर्तव्यः । महत्तमे हि त उपकारे वर्तन्ते । उपकुर्वतां चोपकर्तव्यमिति सदाचारः । एवं सदाचारोऽनुगृहीतो भविष्यति, यदि महाभागानां भूयसी संख्या दीयते । गावश्च महाभागाः । तस्मात्तासां द्वादशशतम् । अश्वा उपकारकतरा भवेयुः, यद्येषां दानप्रतिग्रहविक्रया न प्रतिषिध्येरन् । न केसरिणो ददाति, नोभयतोदतः प्रतिगृह्णातीति श्रुतिः । स्मर्यते च, नाश्वं विक्रीणीत* इति । तस्माद्द्वादशशतं, गवां स्यात् ॥ ४७ ॥

प्रत्ययात् ॥ ४८ ॥

अतश्च गवां संख्या । कुतः । प्रत्ययात् । संख्यासंपादनार्थमुपादीयमानेषु प्रकृतेषु ग्रन्थेनोपायेन स्मर्यमाणेषु पूर्वं गावः प्रतीयन्ते । अतस्ताः संख्यया संबध्यन्ते । न च तत्र विरोधः कश्चिदस्ति । गोषु संबद्धासु न पुनरश्वादयः संबध्यन्ते । एकजातीयो हि संबद्धव्यः । स च संबद्ध इति । तस्माद्गवां संख्या ॥ ४८ ॥

लिङ्गदर्शनाच्च ॥ ४९ ॥

लिङ्गं खल्वेतमर्थं दर्शयति । किं लिङ्गं भवति । एवमाह । सहस्रं दक्षिणाः, सहस्रं स्तोत्रीयाः, यावदस्य सहस्रस्योत्तराधरा गौर्गविप्रतिष्ठिता तावदस्माल्लोकादसौ लोक इति, गाः प्राप्ता दर्शयति । तथा, तां वा एतां शबलीं समामनन्ति । इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतिरदिति सरस्वति महि विश्रुति, एता ते अघ्न्ये नामानि देवेभ्यो

॥ ४६ ॥ ४७ ॥ ४८ ॥

---

* विक्रीणीत–पा० ।

मा सुकृतं कृतादिति गवामेतानि नामानि। सहस्रतमीं च दक्षिणा-मेवमाह। एतानि ते नामानीति, यदि सा गौः, एवमेतदवकल्पते। तस्मादपि गवां संख्येति ॥ ४९ ॥

[ ज्योतिष्टोमे द्वादशोत्तरशतगोदक्षिणाया विभज्य दानाधि-करणम् ॥ १२ ॥ ]

[ १२ ] तत्र दानं विभागेन प्रदानानां पृथक्त्वात् ॥ ५० ॥ सि०

ज्योतिष्टोमे गवादयो दक्षिणा। तत्रैषोऽर्थः समधिगतः। गवां संख्येति। अथेदानीमिदं संदिह्यते। किं यस्य यावान् भाग आभजति, स्वयमेव यजमानेन विभज्य तस्य तावान् कल्पयितव्यः, उत परिषदैव विभज्यत इति। किं प्राप्तम्। अनियमः, विभज्याविभज्य वा दातव्यम्। एतावद्धि श्रूयते दातव्यमिति। न विभज्याविभज्य वेति। तस्मादनियम इति।

एवं प्राप्ते, ब्रूमः। विभज्य दातव्यमिति। दातव्यस्यैव तद्रूपं, यत्स्वत्वपरित्यागेन परस्वत्वापादनम्। तच्च यजमानेन स्वयं कर्तव्यम्। तस्मात्स्वयं प्रयोगे स्यादिति। यो यस्यांश आभजति, स तस्मा अनिर्दिष्टो न शक्यते तेन संबन्धयितुम्। तेन यस्तं निर्दिशति स दानमभिनिर्वर्तयति। यजमानेन च दानं निर्वर्तयितव्यम्। तस्माद्यजमानो विभज्य निर्दिशेत्। प्रदानानां पृथक्त्वात्। असति विभागे न शक्यः स्वेन भागेन संबन्धः कर्तुम्। तस्माद्विभज्य दक्षिणा दातव्येति ॥ ५० ॥

---

॥ ४९ ॥ ५० ॥

---

तत्र दानं विभागेन। इदमप्युत्तरविवक्षार्थम्। स्थित एतस्मिन्विभागेऽनियमादयो विचारा भविष्यति। 'ऋत्विग्भ्यो दक्षिणां ददाति' इति सर्वविशेषणविशिष्टो ददातिर्विधीयते। ऋत्विग्भ्य इति चतुर्थ्यन्तः शब्दः। चतुर्थ्यत्र संप्रदाने संप्रदानं च कारकम्। कारकं च क्रियां प्रति गुणभूतम्। तत्राविभज्य दानं प्राप्नोति। विभागस्याचोदितत्वात्।

परिक्रयाच्च लोकवत् ॥ ५१ ॥

अस्ति च परिक्रयार्थं दानं, न धर्ममात्रम्। परिक्रयार्थं च भर्त्रा भृत्येन सह पणितव्यम्। यदि च परिषदं प्रत्युच्येत, परिषच्च विभजेत न स्वामिना सहापणिष्यत। तत्र परिक्रय एव नाभविष्यत्। यथा, लोके काष्ठवाहप्रभृतिभ्यो यद्दीयते, तत्र काष्ठवाहाः स्वामिना सह पणन्ते। तेभ्यः स्वामी विभज्य निर्दिशति, इदं तुभ्यमिदं तुभ्यमिति। तद्वदिहापि द्रष्टव्यम्। तस्माद्विभज्य दक्षिणा दातव्येति ॥ ५१ ॥

विभागं चापि दर्शयति ॥ ५२ ॥

अपि च दर्शयति विभागं, यद्विभागाभिधायिनं मन्त्रमामनन्ति। तुथो वो विश्ववेदा विभजतु, इति। कृष्णाजिनेन विन्नास्य दक्षिणां ददातीति। तथा, अग्नीधेऽग्रे ददाति, अग्निमुखानेव पितॄन् प्रीणाति। ब्रह्मणे ददाति, प्रस्तृतेभ्यो ददाति प्रसृत्यै। होत्रे ददाति नेष्ट्रे ददाति। हविर्धान आसीनेभ्य अध्वर्युभ्यो ददाति। उद्गातृभ्यो ददाति। अन्तःसदस्यासीनेभ्यो यथाश्रद्धं प्रासर्पकेभ्यो ददातीति। एवं विभागदर्शनमुपपद्यते। तस्माद्विभज्य दातव्यमिति ॥ ५२ ॥

( ज्योतिष्टोमे द्वादशशतदक्षिणाया अध्वर्यादिसमाख्यानुरोधेन विभागाधिकरणम् ॥ १३ ॥ )

समंस्यादश्रुतित्वात् ॥ ५३ ॥

ज्योतिष्टोमे समाम्नायते, गौश्चाश्वश्चाश्वतरश्चेति। तत्रायमर्थः समधिगतः। विभज्य दातव्यामिति। इदमिदानीं सांशयिकम्। किं समो विभाग उत कर्मकृतं वैषम्यम्, उत शब्दकृतमिति। किं प्राप्तम्। समो भागः स्यात्, अश्रुतित्वाद्विशेषस्य। यत्र विशेषो न श्रूयते, तत्र समो विभागो भवितुमर्हति। कथमिव। एकस्मै सर्वं दातव्यं प्राप्नोति, यद्यपरस्मै दातव्यं न भवति। तत्र यावत्येकस्मै दीयमाने

---

उच्यते। ददातिरयम्। ददातिश्च स्वस्वत्वनिवृत्तिपरस्वत्वापादनरूपम्। तच्चैकैकं प्रति कर्तव्यम्। यदि समुदायमङ्गीकृत्य परित्यजेत्तथा सति त्याग एव कृतो भवेन्न ददातिः। तस्मात्प्रविभज्य दानम् ॥ ५१ ॥ ५२ ॥

नान्यः संविभज्यते, तावत्तस्मा एकस्मै न दातव्यम् । अविशिष्टं दातव्यम् । एवमेकैकस्मै । तस्माद्विशेषाश्रवणात्समं देयमिति ॥ ५३ ॥

अपि वा कर्मवैषम्यात् ॥ ५४ ॥

अपि वेति पक्षव्यावृत्तिः । न समं स्यात् । कर्मकृतं वैषम्यं भवेत् । यो बहु कर्म करोति, तस्मै बह्वी भृतिर्दीयते । तस्मात्कर्मानुरूप्येण वैषम्यमिति ॥ ५४ ॥

अतुल्याः स्युः परिक्रये विषमाख्या विधिश्रुतौ
परिक्रयान्न कर्मण्युपपद्यते दर्शनाद्विशेषस्य
तथाऽभ्युदये ॥ ५५ ॥ सि०

न चैतदस्ति, कर्मकृतं वैषम्यमिति । किं तर्हि । उपकारकृतम् । स उपकारः श्रुत्या विज्ञायते । तस्माच्छ्रुतिकृतं वैषम्यम् । तेन, अतुल्याः परिक्रये भवेयुः । विषमा ह्येषामाख्या । केचिदर्धिनः, केचित्तृतीयिनः, केचित्पादिनः । येषामर्धं तेऽर्धिनः । कथं च तेषामर्धं भवति । यदि तेभ्योऽर्धं दीयते । एवं, तृतीयिनः, पादिन इति च दीक्षाविधिश्रुतौ समाख्यायन्ते । सा परिक्रयात्कर्मकृते वैषम्ये नोपपद्यते । क्व पुनरयं विशेषो दृश्यते । अभ्युदये । अभ्युदय इति, अभ्युदयफलम् । ऋद्धिफलं द्वादशाहं ब्रूमः ।

अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारं, ततो होतारम् । ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्धिनो दीक्षयति । ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः । ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति । अग्नीधं ब्रह्मणः, प्रतिहर्तारमुद्गातुः, अच्छावाकं होतुः । ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति । पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः ततस्तमन्यो* दीक्षयति, ब्रह्मचारी वाऽऽचार्यप्रेषित इति । अर्धिनः, तृतीयिनः पादिन इति द्वादशाहेऽनुवादः । यदि प्रकृतौ यथासमाख्यममीषामिमे भागास्ततो द्वादशाहे दर्शनमुपपद्यते । तस्माद्ध्वर्यादिभिः समाख्यानात्समाख्याश्रुतिकृतं वैषम्यं भवितुमर्हतीति ॥ ५५ ॥

---

समं स्यादश्रुतत्वादिति-प्रसक्तानुप्रसक्तेन विभागोपोद्बलकं च ॥५३॥ ॥५४॥ ५५ ॥

---

* ततस्तमन्यो ब्राह्मणो दीक्षयति-इति खण्डदेवादिधृतः पाठः ।

( भूसंज्ञकैकाहे, औपदेशिकधेनुदक्षिणयाऽऽतिदेशिककृत्स्नक्रतुदाक्षिणाया बाधाधिकरणम् ॥ १४ ॥ )

[ १४ ] तस्य धेनुरिति गवां प्रकृतौ विभक्तचोदितत्वात्सामान्यात्तद्विकारः स्याद्यथेष्टिर्गुणशब्देन ॥ ५६ ॥ पू०

इदमामनन्ति, अथैष भूर्वैश्वदेवस्त्रिवृदेव सर्वस्तस्य विश्ववत्यस्तोत्रीया धेनुर्दक्षिणा, इति । अत्र संदेहः । किं धेनुर्गवां निवर्तिका, उत कृत्स्नाया दक्षिणाया इति । तत्रेदं तावत्परीक्ष्यम् । किं प्रकृतौ विभक्तं दाक्षिण्यमुत समस्तमिति । तत इदं तच्च संहत्याधिकरणं क्रियते । किं प्रकृतौ विभक्तं दाक्षिण्यं, धेनुर्गवां निवर्तिका, उताविभक्तं, कृत्स्नाया दक्षिणाया निवर्तिकेति । किं प्राप्तम् । तस्य धेनुरिति श्रूयमाणे ब्रूमः । धेनुर्गवां निवर्तिकेति ।

तत एतत्तावद्विचार्यते । प्रकृतौ विभक्तं दाक्षिण्यमिति । किमिदं विभक्तमिति । गवादीनामेकैकं द्रव्यं दक्षिणेति । कथम् । गौश्चाश्वश्चाश्वतरश्च दक्षिणा, इति प्रकृतौ गवादिभिर्दक्षिणाशब्दः प्रत्येकं परिसमाप्यते । निर्दिष्टा हि गवादयो न तेषां समुदायः । चशब्दः समुच्चयार्थो भवति, न तु समुच्चयस्य निर्देशकः । परपदाविशेषणार्थं तु समुच्चयमुपादत्ते । यदि हि निर्दिशेत्, क्रियागुणैः समुच्चयः संबध्येत । समुच्चयः शोभनः, समुच्चयो द्रष्टव्य इति यथा भवति, एवं, च शोभनः, च द्रष्टव्य इति वा भविष्यति ।

---

तस्य धेनुरिति–विकृतिसिद्ध्यर्थं प्रकृतिं तावन्निरूपयामः । यदि गवादयः प्रधानभूतास्तत एकद्रव्यनिवर्तिका धेनुः । अथ दक्षिणा,* कृत्स्नस्य दाक्षिण्यस्य निवर्तिका धेनुः । गवादयोऽत्र प्रधानभूतास्तेऽत्र निर्दिश्यन्ते । दक्षिणा तान्प्रति विधीयते । न च शब्दः समुदायार्थो भवति । न तु समुच्चयनिर्देशक इति–कोऽभिप्रायः ।

शब्दास्तावद्द्विप्रकाराः केचिद्वाच्यं स्वप्रधानमाहुः, नोपसर्जनत्वेन । यथा, वृक्षाविति वृक्षशब्दः स्वार्थप्रधान उच्चार्यते । केचिद्वाच्यमर्थमन्यत्रोपसर्ज-

---

* अथ दक्षिणेति–प्रधानभूता, तत इत्यध्याहारः ।

तथा, यथेह समुच्चेययोः षष्ठी भवति, धवखदिरयोः समुच्चय इति। एवं धवः खदिरश्चेत्यत्राप्यभविष्यत्। न तु भवति। तस्मान्न चशब्दः समुच्चयं निर्दिशति। श्रुत्या निर्दिष्टेन चैकवाक्यता न्याय्या न गवादिलक्षितेन समुदायेन। तस्मात्, गौर्दक्षिणा, अश्वो दक्षिणा, इत्येवं संबन्धः। लक्षयित्वा हि गवादींस्तेषां दक्षिणात्वं विधीयते। तच्च गुणभूतं प्रतिप्रधानं भिद्येत। चशब्दश्चैवं समर्थितो भविष्यति, गौर्दक्षिणा, अश्वश्च दक्षिणा, इति। न गौरश्वादिसहितो गवादीनां वा समाहार इति।

यदा विभक्तं दाक्षिण्यं तदा प्राप्ता गौर्दाक्षिण्ये। पुनर्विशेषार्थमुच्चार्यते, धेनुर्दक्षिणा, इति। याऽसौ गौर्दक्षिणा सा धेनुरिति। अन्यासां दक्षिणानामविकारेण यथाप्रकृतिभावेन चोदकानुग्रहो भविष्यति। शब्देनैव गव्येष गुण उच्यते, धेनुत्वं नाम। गौरेव हि धेनुर्नान्या। यथेष्टिर्गुणशब्देन। सौर्यं निर्वपेदिति सूर्यसंबन्धं कुर्याद्द्रव्यस्येति विवक्षिते निर्वपणाश्रय एव प्रयोगः शब्देन निर्दिश्यत इति, सानिर्वपणकात्प्रयोगादनेन निर्वपणशब्देनैष्टिको विध्यन्तो नियम्यते।

---

नीभूतं ब्रुवते, न स्वप्रधानभूतम्। यथाऽत्रैव वृक्षाविति द्विवचनं प्रातिपदिकोपसर्जनमात्मानं× ब्रवीति। न द्विवचनार्थमेव जहाति। एवं चशब्दः समुच्चयं ब्रुवन्नुपसर्जनत्वेन ब्रवीति, न स्वं प्राधान्येन। तस्माद्यस्योपसर्जनं चशब्दः सोऽत्र क्रियागुणाभ्यां संबध्यते। प्रधाने कार्यसंप्रत्ययात्सिद्धमिति। ते च गवादयः। न च चशब्दः समुच्चयस्य पर्यायवचनः। समुच्चयशब्दः प्राधान्येन निर्दिशति, नान्यत्र गुणभावेन। गवादयः स्वार्थस्य वक्तारो न द्योतकाः। कथम्। शब्दस्तावददृष्टया शक्त्याऽर्थमभिधत्ते, स एव*। नाद्यः। एवं चशब्दः। कथम्। एकशक्तिकल्पनात्। अन्यथा शब्दान्तरस्य तदभिधायिता, चशब्दस्य च द्योतकत्वमिति शक्तिद्वयं स्यात्।

अपि च--वृक्षशब्द उच्चरिते वृक्षार्थ एव मनसि विपरिवर्तते, नान्यसहितः। (प्रकाशशब्दोच्चारणात्)। उच्चरिते तु चशब्द इतरेतरयोगः प्रती-

---

× आत्मानमिति—द्वित्वमित्यर्थः। * 'स एव' इत्यारभ्य कियांश्चिद्ग्रन्थस्त्रुटित इति भाति।

म्यते । एवमिहापि गोर्गुणवचनेन धेनुशब्देन गोदक्षिणाविकारः क्रियते, नान्या× दक्षिणा विक्रियत इति ॥ ५६ ॥

सर्वस्य वा क्रतुसंयोगादेकत्वं दक्षिणार्थस्य गुणानां
कार्यैकत्वादर्थे विकृतौ श्रुतिभूतं स्यात्तस्मा-
त्समवायाद्धि कर्मभिः ॥ ५७ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । सर्वस्य क्रतुदाक्षिण्यस्य निवर्तिका धेनुरिति प्रतिज्ञायते । तत्रैतद्वर्ण्यते समस्तं दाक्षिण्यमिति । किमिदं समस्तं दाक्षिण्यमिति । न प्रतिद्रव्यं दक्षिणाशब्दः संबध्यते, गौर्दक्षिणा, अश्वो दक्षिणा, अश्वतरो दक्षिणा, इति । कथं तर्हि । गवादयो दक्षिणेति । न हि गवादीनुद्दिश्य दक्षिणासंबन्धो विधीयते, ये गवादयस्ते दक्षिणेति । तथा हि दक्षिणाशब्दो गवादीनां दक्षिणासंबन्धविधानार्थं यौगपद्येनान्तर्णीतसंबन्धमभिवदन् बहुवचनान्तः स्यात् , गवादयो दक्षिणा इति । यथा, अग्नीषोमौ देवते प्राणापानावभिसमभवतामिति । गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति ।

कथं तर्हि । दक्षिणामुद्दिश्य गवादयो विधीयन्ते । का दक्षिणा। गवादय इति । दक्षिणा नाम दक्षतेरुत्साहकर्मणः । दक्षिणा-उत्साहिका, इति । एकः स गुणः । स च प्राधान्येन विवक्षितः । तद्वि-

---

यते । स तस्यार्थः=। गवादीनामुद्दिश्यमानानां विशेषणमविवक्षितम् । तस्मादेकैकस्य दक्षिणासंबन्धः । उद्दिश्यमानप्राधान्यात् । प्राधान्यं च द्रव्यत्वात् ॥५६॥

---

इतरेतरयुक्ता दक्षिणा प्रतिविधीयते । कुतः । संख्यासामर्थ्यात् । यदि गवादीनुद्दिश्य दक्षिणा विधीयते, न संख्या दक्षिणां प्रति विधीयते । वाक्यभेदप्रसङ्गात् । यदि च गवादयः प्रधानभूतास्तथा सति तेषामिति प्राप्नोति । गवादीनां प्राधान्येऽदृष्टकल्पना प्राप्नोति । अन्यत्र शेषभावाद्गवादीनाम् । दक्षिणाप्राधान्ये तु नादृष्टं 'ऋत्विग्भ्यो दक्षिणां ददाति' इति । अपि च गुणवचनोऽयं दक्षिणाशब्दो यदा द्रव्य उपसर्जनीभूतस्तदा द्रव्यस्यैव यल्लिङ्गसंख्यं, तदेव

---

× नान्यदक्षिणा—पा० ।

शेषणत्वेन गवादयः। गुणवचनानां च शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति, न द्रव्यवचनानामाश्रितगुणवशेन। यथा, विश्वे देवा देवतेति। का पुनर्दक्षिणा। गौश्चाश्वश्चाश्वतरश्चेति। दक्षिणाशब्दो दाने संबध्यते, ऋत्विग्भ्यो दक्षिणां ददातीति, न गवादयः। एको हि दक्षिणानामर्थः, ऋत्विजामानमनम्। सकृच्चाऽऽनतास्ते भवन्ति, भूय आनमनेनार्थो नास्ति, गवादीनामपि गुणानामेकं कार्यं दक्षिणात्वम्।

यदा समस्तं दाक्षिण्यं तदा विकृतौ भुवि तस्मिन्प्राकृतेऽर्थे धेनुः श्रुतिभूता। सा च प्राकृतं कार्यमभिनिर्वर्तयति। क्रतुसंयोगेन हि श्रूयते तस्य क्रतोर्धेनुर्दक्षिणा इति। तस्मिन्निर्वृत्ते सर्वं चोदकप्राप्तमानुमानिकं निवर्तते। तथा समवायाद्धि कर्मभिर्ऋत्विजः संबध्यन्ते श्रुतिभूतया। अपि च चशब्दश्रुत्या ससहायं गोद्रव्यमिति प्रतीयते। दक्षिणासंबन्धोऽस्य वाक्येन। श्रुतिश्च वाक्याद्बलीयसी। तस्मात्पूर्वं चयोगः, पश्चाद्दक्षिणासंबन्धः। इतरेतरयुक्ता दक्षिणात्वेन संबध्यन्ते गवादयोऽर्थाः। तस्मात्कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तिका धेनुरिति॥ ५७॥

चोदनानामनाश्रयाल्लिङ्गेन नियमः स्यात्॥ ५८॥

यदुक्तं, यथेष्टिर्गुणशब्देनेति। अत्रोच्यते। आग्नेयोपांशुयाजाग्नीषोमीयानां प्राकृतानां, सौर्यार्यमणप्राजापत्यनैर्ऋतीनां चोदनानां न किंचिदेकं कार्यं, यद्विकृती चोदनाऽऽश्रयेत्। तत्र वक्ष्यते, एकस्य कर्मणो वैकृतं कर्म विध्यन्तं गृह्णातीति। तत्र कस्य ग्रहीष्यतीति संदेहे युक्तो लिङ्गेन नियमः। इह त्वपदिष्टो हेतुः। गवादीनामेकं कार्यं दक्षिणात्वम्। तस्मिंश्च धेनुः श्रुतिभूता चोदकप्राप्तान्निवर्तयितुमर्हतीति॥ ५८॥

---

लभते। इह च बहूनि द्रव्याणि। तस्माद्बहुवचनेन भवितव्यम्। अनुषङ्गस्य सत्यां गतावन्याय्यत्वात्। यदा तु स्वप्राधान्येन विवक्ष्यते गुणस्तदा, द्रव्यस्य यल्लिङ्गसंख्यं तन्न लभते। भवितव्यं च गुणस्यापि वचनेन। तस्मादेकवचनान्तं युक्तम्॥ ५७॥ [ ५८॥

( ज्योतिष्टोमे नैमित्तिकैकादिगोदक्षिणया नित्यप्रयोगीययोगतद्वाद-
शशतसंख्यामात्रबाधाधिकरणम् ॥ १५ ॥ )

[ १५ ] एकां पञ्चेति धेनुवत् ॥ ५९ ॥ पू०

यस्य सोममपहरेयुरेकां गां दक्षिणां दद्यात्, अभिदग्धे पञ्च गा इति। अत्र संदेहः। एका पञ्च च गावः श्रूयमाणाः किं कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तिका, उत गवामिति। किं प्राप्तम्। एकां पञ्चेति धेनुवत्। यथा धेनुः कृत्स्नस्य निवर्तिका एवमेका पञ्च च भवेयुः। दक्षिणासंबन्धो हि तासां प्रत्यक्षः श्रूयते। तेन ताः प्राकृतीनां कार्यमभिनिर्वर्तयन्ति। प्राकृत्यश्चाऽऽनुमानिक्यो निवर्तन्त इति ॥ ५९ ॥

[ साद्यस्के सोमक्रयार्थं विहितेन त्रैवार्षिकेण पुंगवेन, प्राकृतसर्व-
क्रयद्रव्यबाधाधिकरणम् ॥ १६ ॥ ]

इदं तावदपर्यवसितं तिष्ठतु। अथाधिकरणान्तरं प्रस्तूयते—

[ १६ ] त्रिवत्सश्च ॥ ६० ॥ सि०

अस्ति साद्यस्के, साण्डस्त्रिवत्सः सोमक्रयणः स्पर्धमानानामिति। सन्ति क्रयार्थानि द्रव्याणि चोदकप्राप्तानि। अजया क्रीणाति, हिरण्येन क्रीणाति, ऋषभेण क्रीणाति, अश्वशफेन क्रीणाति, वाससा क्रीणाति, इत्येवमादीनि। तत्र संशयः। किं त्रिवत्स ऋषभस्य निवर्तकः अथवा सर्वेषां क्रयार्थानां द्रव्याणामिति। किं प्राप्तम्। ऋषभस्य-निवर्तक इति। कुतः पुंगवत्वात्। पुंगवत्वेन सामान्येन, पुंगवोऽसौ विधीयते। कुतः पुंगवत्वम्। साण्डश्रवणात्। तस्मादृषभस्य निवर्तक इति।

एवं प्राप्ते, ब्रूमः। त्रिवत्सश्च। किम्। कृत्स्नस्य क्रयार्थस्य निवर्तक इति। प्रत्यक्षः स क्रीणातिना संबध्यते, तेन चोदकप्राप्तं निवर्तयति। तस्मात्कृत्स्नस्य क्रयार्थस्य निवर्तक इति ॥ ६० ॥

तथा च लिङ्गदर्शनम् ॥ ६१ ॥

---

॥ ५९ ॥ ६० ॥

एवं च कृत्वा लिङ्गं दर्शयति। किं लिङ्गं भवति। एवमाह। अपरस्मिन् साद्यस्क्रे, स्त्री गौः सोमक्रयणी व्यावृत्ता ह्येषां स्पर्धा, इति। यदि सर्वस्य क्रयार्थस्य निवर्तिका स्त्री गौः, ततः सैवैकाकिनी केन सह स्पर्धिष्यत इति। इतरथा सर्वस्यानिवर्तिकायां संघस्य स्पर्धा भवेत्। तत्रास्यां वर्तमानायां स्पर्धायां, व्यावृत्ता ह्येषां स्पर्धा, इति नोपपद्यते। तस्मात्सर्वस्य निवर्तिकेति। त्रिवत्सोऽपि तत्समानश्रुतिः। सोऽपि च सर्वस्य निवर्तक इति।

एवं वा। यदि त्रिवत्सः सर्वेषां निवर्तकस्तदा तमपबाधमाना साद्यस्क्रान्तरे स्त्रीगवी श्रूयमाणा केवला स्यात्। तत्र, व्यावृत्ता ह्येषां स्पर्धा, इति दर्शनमुपपद्यते। इतरथा हि केवलस्य ऋषभस्यापबाधितारं त्रिवत्सं निवर्तयन्ती संघमध्यपतिता स्पर्धेतापि। तत्र, व्यावृत्ता ह्येषां स्पर्धा, इति वचनं नावकल्पते। अतः कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकस्त्रिवत्स इति।

तत्रैवमन्तरागर्भिणीन्यायो भवतीत्यन्यथा सूत्रं वर्ण्यते। इतश्च, एका पञ्च च कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तिकाः; त्रिवत्सश्च। तथा च लिङ्गदर्शनम्। एवमेतत्समानश्रुतित्रिवत्सोऽपि सर्वस्य निवर्तकः प्राप्नोति। तदेतद्दर्शनमुपपत्स्यते। व्यावृत्ता ह्येषां स्पर्धा, इति ॥ ६१ ॥

एके तु श्रुतिभूतत्वात्संख्यया गवां लिङ्गविशेषेण ॥ ६२ ॥ सि०

स्थितादुत्तरम्। यदुक्तम्, एका पञ्च च कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तिकेति। एतन्न। एके त्वर्था निवर्तन्ते, एके गावो निवर्तन्ते, अश्वादयो न निवर्तन्ते। एका देया, पञ्च देया इति य एष नियमः, स गोविषयः। कुतः। गोविशिष्टया संख्यया संबन्धात्। यदेतत्, एकां ददाति, पञ्च ददातीति। नैवमभिसंबन्धः क्रिय-

॥ ६१ ॥

ते, एकां दाक्षिणां ददातीति । कथं तर्हि । एकां गामिति । गोसंब-न्धो हि मुख्यत्वाद्बलीयान् ।

अपि च गोशब्देन सह संख्यायाः प्रत्यक्षः संबन्धः । गोशब्द-व्यवधानात्परोक्षो दाक्षिणाशब्देन । गोशब्दश्चैवं मुख्यार्थो भवति । इतरथा लक्षणा स्यात्, एकां गामश्वादि चेति । तेन गवां लिङ्ग-विशेषेण संख्या गोषु निविशते । एवं च सर्वेषामनिवृत्तावश्वादीनां यथाप्रकृतिभावे चोदकानुग्रहो भविष्यति । तस्मादेका पञ्च च गवां निवर्तिका इति ॥ ६२ ॥

( अश्वमेधे विहिताभ्यां प्राकाशाभ्यां प्राकृताध्वर्युभागमात्रस्य बाधा-धिकरणम् ॥ १७ ॥ )

[ १७ ] प्राकाशौ तथेति चेत् ॥ ६३ ॥ पू०

अश्वमेधे श्रूयते, हिरण्मयौ प्राकाशावध्वर्यवे ददातीति । तत्रै-षोऽर्थः सांशयिकः । किं प्राकाशौ कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त-कावुताध्वर्युभागस्य निवर्तकाविति । कुतः संशयः । इह प्राकाशा-वित्येष यदि ददातिना संबध्यते, ततः कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकः । अथाध्वर्युणा, तदाऽध्वर्युभागस्य । किं प्राप्तम् । कृत्स्न-

॥ ६२ ॥

ददातिमनूद्य प्रकाशो विधीयते 'हिरण्मयौ' इति न विधीयते । कुतः । 'प्राकाशौ' इति हिरण्मयावेवोच्येते, नान्यद्रव्यमयौ, धेनुशब्दवत् । यदि प्राका-शाध्वर्युसंबन्धो भवेत्तथा सत्यन्तं वाक्यमेव स्यात् ×। न धात्वर्थो विधीयते । न धात्वर्थेऽन्यत्किंचिदिति । कारकविभक्तिश्च श्रुत्यैव प्राकाशयोर्ददातिना संबन्धं ब्रवीति । अध्वर्युसंबन्धे षष्ठ्यभविष्यत् ।

अत्र ग्रन्थः । अपि च विशेषणे सत्यपि यदि ददातिरविशिष्टः पदान्तरेण संबध्यते, अविशिष्ट एव कार्ये+ प्राप्नोतीति । कोऽभिप्रायः । अस्मिन्वाक्ये ददातिमनूद्य प्राकाशो विधीयते । ( एतस्यां ) ददातेर्विशेषण-मविवक्षितम् । वाक्यभेदप्रसङ्गात् । प्रयुज्यमानमपि विशेषणमशक्तं विशेष्यं न

× भवेत्—पा० । + कार्थे—पा० ।

स्येति । तत्रैतद्वर्ण्यते, प्राकाशाविति शब्दो ददातिना संबध्यत इति । कुतः । एवं ददातिसंबन्धविधाने श्रुतिरनुगृहीता । अध्वर्युणा संबन्धे वाक्यम् ।

अपि च प्राकाशाविति द्वितीया कारकविभक्तिः सामर्थ्यादेवाऽऽख्यातेन संबध्यते, न नाम्ना । तस्माद्ददातिना संबन्धः । अध्वर्युसंबन्धे चाध्वर्युशब्दात्षष्ठ्यभविष्यत् । तस्मादपि ददातिना संबन्धः । ददातिं लक्षयित्वा प्राकाशौ विधीयेते । तत्र न शक्यो ददातिरध्वर्युणा विशेष्टुम् । वाक्यं हि तदा भिद्येत । अपि च विशेषणे सत्यपि यदि ददातिरविशिष्टः पदान्तरेण संबध्यते, अविशिष्ट एव कार्ये प्राप्नोति । प्रयुज्यमानमपि हि विशेषणमशक्तं न विशेष्यं विशिनष्टि । तस्मात्, योऽध्वरं युनक्ति, सोऽध्वर्युरिहाभिप्रेतः । अतः कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकौ प्राकाशाविति ॥ ६३ ॥

अपि त्ववयवार्थत्वाद्विभक्तप्रकृतित्वाद्-
गुणेदन्ताविकारः स्यात् ॥ ६४ ॥ सि०

अपि त्विति पक्षव्यावृत्तिः । दक्षिणावयवकार्यार्थौ प्राकाशौ, न

---

विशिनष्टि । कथम् । प्रधानभूतोऽत्र ददातिः । प्रधानभूतस्य च लिङ्गसंख्यमविवक्षितम् । कथम् । प्रत्ययः क्रियां विधत्ते । क्रिया विधीयमाना कारकैर्विना न भवति । कारकाणि च स्वविशेषणैर्विना न भवन्ति । तस्मात्क्रियाकारकाणि कारकविशेषणानि प्रत्ययेन परामृश्यन्ते । तत्र यः क्रियां प्रत्युद्दिश्यते स प्रधानभूतः क्रियां प्रति, न तु स क्रियाङ्गम् । क्रियैव तदर्था । तस्य प्रधानभूतस्य यल्लिङ्गसंख्यं तदनङ्गत्वात्क्रियायाः प्रत्ययेन न परामृश्यते । तस्माद्यत्क्रियार्थं प्रातिपदिकमुपादीयते, तस्य यल्लिङ्गसंख्यं तद्विवक्षितम् । क्रियाङ्गत्वात् प्रधानस्य तु विशेषणमध्वर्युर्न विवक्षितम् । तस्मात्कृत्स्नाविकारौ प्राकाशौ । अध्वर्युशब्दस्त्ववयुत्यानुवाद इति ॥ ६३ ॥

---

न कृत्स्नस्य दाक्षिण्यस्य निवर्तकौ प्राकाशौ । कुतः । यदि दाक्षिण्यमनूद्य प्राकाशौ विधीयेयातां, प्राकाशौ दक्षिणा, तौ चाध्वर्यव इति । यथा 'औदुम्बरः सोमचमसो दक्षिणा, स ब्रह्मणे देयः' इति । एकं चेदं वाक्यं,

कृत्स्नदक्षिणाकार्यार्थौ। विभक्ता हि तेषां भागा अध्वर्य्वादीनाम्। अयमध्वर्योर्भागः, इमेऽन्येषामिति। तस्मात्, गुणेदन्ताविकारः स्यात्। किमिदं गुणेदन्ताविकार इति। गुणस्येदन्ता गुणेदन्ता इदंभाव इदन्ता। गुणेदन्ताया विकारो गुणेदन्ताविकारः। अध्वर्योर्भागस्य निर्वर्तकौ प्राकाशौ। कथमिव। एकमिदं हि वाक्यम्। हिरण्मयौ प्राकाशौ, इति। नेयं प्रथमा। नापि दक्षिणाशब्देन संबन्धः। येन दक्षिणाकार्ये वर्तेयाताम्। का तर्ह्येषा। द्वितीया। ददातिनैव संबध्यते। तदेकं वाक्यं, हिरण्मयौ प्राकाशावध्वर्यवे ददातीति। अध्वर्युसंप्रदानकेन ददातिनैतयोः संबन्धः। तस्मात्तत्राध्वर्युंददातिभागं निवर्तयतः। यद्वा सर्वविशेषणविशिष्टो ददातिरपूर्वो विधीयते। दृष्टार्थत्वादध्वर्योरन्यानानत्यर्थान् प्रत्याख्यास्यति।

अथ यदुक्तं, प्राकाशयोर्ददातिसंबन्धो विधीयत इति। तथा हि श्रुतिरनुगृहीता भविष्यतीति। नासौ वाक्यानपेक्षिणी श्रुतिः। असति ददातिनाऽऽनन्तर्ये नावकल्पते। यदप्युच्यते, कारकविभक्तिराख्यातेन संबन्धयोग्येति। योग्यत्वं दर्शनेन बाध्यते। दृश्यते त्वानन्तर्यं प्राकाशयोरध्वर्युशब्देन। यदप्युक्तं, तत्संबन्धे षष्ठ्यभाविष्यादिति। सत्यं

प्राकाशावध्वर्यवे ददाति' इति। प्राकाशाविति न चेयं प्रथमा। यथा 'सोमचमसः' इति। किं तर्हि। द्वितीया। सा (अध्वर्यवे) ददातिना संबध्यते। एकवाक्यत्वात्। अध्वर्युप्राकाशयोर्ददातिना संबन्धो विधीयते, न ददातिमध्वर्युविशिष्टमुद्दिश्य। नापि ददातिमुद्दिश्य, अध्वर्युशब्दस्यावयुत्यानुवाददोषात्, व्यवहितसंबन्धाच्च। किं त्वध्वर्युनैवोद्दिश्येति। तत्र चतुर्थ्यन्तोऽध्वर्युः संप्रदानभूतः। प्राकाशप्रातिपदिकं च द्वितीयान्तमध्वर्युं प्रति गुणभावेन, तयोः प्रातिपदिकयोः संबन्धाच्चतुर्थी लभ्यत इति।

ननु ददातिमनूद्य प्राकाशौ× विधीयेते इत्युक्तम्। उच्यते। अध्वर्युपदसामर्थ्यात्तदानन्तर्येण योऽर्थः स ग्रहीतव्यो न प्रकाशददात्योः संबन्धो ग्रहीतव्यः। ननु श्रुत्यैव क्रियया कारकाणि संबध्यन्ते। तेन ददातिना प्रकाशयोः संबन्धो भविष्यति। उच्यते। अविधीयमानत्वाद्ददातेर्वाक्यसंबन्ध एष बलवान्

× प्रकाशो विधीयते—पा०।

प्राप्नोति षष्ठी, न तु तदभावे संबन्धो नास्त्यध्वर्युणा । गम्यते हि स वाक्येन । आह । चतुर्थीश्रुतिरत्र या, सा वाक्यमपबाधिष्यत इति । नाविधीयमाना बाधितुमुत्सहते । कथं तर्ह्यविधित्सिते संप्रदाने श्रूयत इति । सामर्थ्यप्राप्तस्यानुवादेनेति तस्माददोषः । उक्तं वा सर्वविशेषणविशिष्टं* दानं विधीयत इति एवमन्येषामानिवृत्तौ यथाप्रकृतिभावे चोदकानुग्रहो भविष्यति । तस्मादध्वर्युभागस्य निवर्तकौ प्राकाशाविति ॥ ६४ ॥

[ उपहव्ये कृतावोपदेशिकाश्वदक्षिणया प्राकृतकृत्स्नक्रतुदक्षिणाया बाधाधिकरणम् ॥ १८ ॥ ]

[ १८ ] धेनुवच्चाश्वदक्षिणा स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य ॥ ६५ ॥ सि०

अस्त्युपहव्यः, उपहव्योऽनिरुक्तः । तेनाभिशस्यमानं याजयेत् । अग्निष्टोमो यज्ञः पञ्चदशस्तोमो रथंतरसामा, अश्वः श्वेतो दक्षिणा । उपहव्योऽनिरुक्तः । तेनाभिशस्यमानं याजयेत् । उक्थ्यो यज्ञः सप्तदशस्तोमो बृहत्पृष्ठः, अश्वः श्यावो रुक्मललाटो दक्षिणा तत्र श्रूयते, स ह्यनिरुक्तः, स ब्रह्मणे देय इति । तत्र संदेहः । किमश्वो ब्रह्मभागस्य निवर्तक उत कृत्स्नस्य क्रतुदाक्षिण्यस्येति । किं प्राप्तम् । ब्रह्मभागस्य निवर्तक इति । कुतः । कर्तृसंबन्धात् , अवयवार्थत्वाद्विभक्त-

---

भवति । विधीयमानायां कारकाण्युद्भूतशक्तीनि भवन्ति । तानि क्रियया संबध्यन्ते, कारकत्वात् । अविधीयमानायां तु क्रियायां कारकाण्यनुद्भूतशक्तीनि भवन्ति । तथा चाऽऽनन्तर्येण यः संबन्धो वाक्यलक्षणः स ग्रहीतव्यः, न व्यवहितेन ददातिना । अध्वर्युपपदेन व्यवधानात्प्राकाशयोः ।

नासौ वाक्यानपेक्षणी श्रुतिरित्यादिग्रन्थोऽनेन न्यायेन नेयः । प्रसिद्धिर्दर्शनेन बाध्यत इत्ययमप्यविधीयमानत्वेन नेयः । तस्मादध्वर्युणा संबन्धात्तद्भागस्यैव निवृत्तिः । 'एकां गाम्' इत्येकशब्दस्य गोशब्देन संबन्धो न ददातिना । अनूद्यमानत्वादेव क्रियाया इत्येवमेव नेयः ॥ ६४ ॥

---

* सर्वविशेषणविशिष्टदानं—पा० ।

प्रकृतित्वाच्च गुणेदन्ताविकारः स्यात् । स्रग्वत् । यथा, स्रजमुद्गात्रे ददाति, इत्युद्गातृभागस्य निवर्तिका स्रक्, न कृत्स्नस्य क्रतुदाक्षिण्यस्य एवमिहापीति ।

एवं प्राप्ते, ब्रूमः । धेनुवदश्वदाक्षिणा स्यात् । कृत्स्नस्य निवर्तिकेति । कुतः । दक्षिणाशब्दसंबन्धात् । अश्वः श्यावो रुक्मललाटो दक्षिणा, इति प्रत्यक्षश्रुतेनाश्वेनाऽऽनमनं कर्तव्यम् । एवं चेत्, आनुमानिकं निवर्तितुमर्हति । ननु कर्तृसंबन्धोऽस्य श्रूयते, स ह्यनिरुक्तः स ब्रह्मणे देय इति । उच्यते । एकेन वाक्येन देशकप्राप्तानां निवृत्तिः । द्वितीयेन वाक्येन निवृत्तौ× सत्यां पुरुषापनयः क्रियते । यथा हिरण्यस्य, सर्वं ब्रह्मणे परिहरतीति । तस्मात्कृत्स्नस्य निवर्तकोऽश्व इति ॥ ६५ ॥

एके तु कर्तृसंयोगात्स्रग्वत्तस्य लिङ्गविशेषेण ॥ ६६ ॥

अथ यदुक्तम्, एके अर्था निवर्तन्ते, कर्तृसंयोगाल्लिङ्गविशेषेण स्रग्वदिति । तत्परिहर्तव्यम् ॥ ६६ ॥

अपि वा तदधिकाराद्धिरण्यवद्विकारः स्यात् ॥ ६७ ॥

अपि वेति पक्षव्यावृत्तिः । तदधिकारात्, दक्षिणाधिकारात् । दक्षिणाशब्देन दक्षिणामधिकृत्याश्वसंबन्धः कृतः । तस्मात्कृत्स्नदाक्षिणाविकारोऽश्वः । अतो हिरण्यवदेव भवति, न स्रग्वत् ॥ ६७ ॥

---

द्वितीयमधिकरणं= कृत्स्नस्य । तृतीयमपि÷ कृत्स्नस्यैव, लिङ्गाशङ्कानिवृत्त्यर्थमारभ्यते । चतुर्थमपि* तत्कृत्स्ने विकारः, तदन्ताविकारोऽध्वर्युभागे नियमार्थः ॥ ६५ ॥ [ ६६ ॥ ६७ ॥

— —

---

× विनिवृत्तौ—पा० । = द्वितीयमिति—' धेनुवच्चाश्वदक्षिणा ' ( अ० १० पा० ४ अ० १८ सू० ६५ ) इत्यधिकरणं कृत्स्नस्य विकारार्थमारभ्यत इत्यर्थः । ÷ तृतीयमिति—' तथा च सोमचमसः ' ( अ० १० पा० ४ अ० १९ सू० ६८ ) इत्यधिकरणमपि कृत्स्नविकारार्थमेवाधिकाशङ्कायाऽऽरभ्यत इत्यर्थः । * चतुर्थमपीति—' यजुर्युक्ते त्वध्वर्योः ' इत्यधिकरणमपि ( अ० १० पा० ४ अ० २१ सू० ७४ ) कृत्स्नविकारार्थ एव दक्षिणापुनःश्रवणे सति कृत्स्नाध्वर्युभागविकारापवादतयाऽध्वर्युभागमात्रे नियमार्थमारब्धमित्यर्थः ।

( ऋतपेये विहितसोमचमसदक्षिणया प्राकृतकृत्स्नक्रतुदाक्षिणाया बाधाधिकरणम् ॥ १९ ॥ )

[ १९ ] तथा च सोमचमसः ॥ ६८ ॥ पू०

ऋतपेये श्रूयते औदुम्बरः सोमचमसो दक्षिणा। स प्रियाय सगोत्राय ब्रह्मणे देय इति। तत्र संदेहः। किं ब्रह्मभागस्य निवर्तकः सोमचमसः, उत कृत्स्नस्य क्रतुदाक्षिण्यस्य। किं प्राप्तम्। तथा सोमचमसः स्यात्। यथा, स्रग् उद्गात्रे तद्भागस्य निवर्तिका, उद्गातृसंयोगात्। एवं ब्रह्मसंयोगाद्ब्रह्मभागस्य निवर्तकः सोमचमसः ॥ ६८ ॥

सर्वविकारो वा क्रत्वर्थे प्रतिषेधात्पशूनाम् ॥ ६९ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति, न ब्रह्मभागस्य निवर्तकः। किं तर्हि। कृत्स्नस्य क्रतुदाक्षिण्यस्य। कथमवगम्यते। पशुप्रतिषेधानुवादात्। एवमाम्नायते, ऋतं वै सोमोऽनृतं पशवो यत्पशून् दद्यात्सोऽनृतं कुर्यात्, औदुम्बरः सोमचमसो दक्षिणा, इति। पशुदानमपोह्य सोमचमसो विधीयते। य पशून् दद्यात्तस्यैष दोषो भवेत्। एतस्मान्न पशवो दातव्या इति वक्तव्ये तमेवार्थमुक्तं मन्यमानः, सोमचमसो दक्षिणा, इत्याह। सोमचमसदानेन पशवो न दीयन्त इति गम्यते। तदेवं कृत्स्नस्य निवर्तकोऽवकल्पते। ब्रह्मदानस्य निवर्तके सत्यन्येभ्यः पशवो दीयेरन्। तस्मात्कृत्स्नस्य निवर्तक इति ॥ ६९ ॥

ब्रह्मदानेऽविशिष्टमिति चेत् ॥ ७० ॥

इति चेत्पश्यसि। पशुदानविप्रतिषेधात्कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तक इति। ब्रह्मदानेऽप्येतदवकल्पते। ब्रह्मणे सोमचमसो देयः। यः पशून् दद्याद्ब्रह्मणे,= इति गम्यते। तस्मान्न नियोगतः कृत्स्नस्यैव क्रतुदाक्षिण्यस्य निवर्तके पशुप्रतिषेधानुवादोऽवकल्पते। ब्रह्मणे दानेऽपि तदुपपद्यत इति ॥ ७० ॥

---

॥ ६८ ॥ ६९ ॥ ७० ॥

——

---

= दद्यात्स ब्रह्मणे–पा०।

उत्सर्गस्य क्रत्वर्थत्वात्प्रतिषिद्धस्य कर्म स्यान्न च गौणः प्रयोजनमर्थः स दक्षिणानां स्यात् ॥ ७१ ॥

न चैतदस्ति, ब्रह्मभागस्य निवर्तकः सोमचमस इति । कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकः स्यात् । अस्य सोमचमसस्य य उत्सर्गः, स क्रत्वर्थः स्यात् । दक्षिणाशब्देन हि संबध्यते, सोमचमसो दक्षिणा, इति । न च प्रकृतावेकैको गवादिर्दक्षिणा । उक्तमेवेदं, गवादीनां समुदाये दक्षिणाशब्द इति । तदेवं सोमचमसदाने प्रतिषिद्धेषु पशुषु यदि ब्रह्मदानेऽप्येतदविशिष्टमिति कृत्वाऽन्येभ्यः पशवो दीयेरन्, प्रतिषिद्धं क्रियेत। यो हि ब्रह्मभागो न सा दक्षिणा। दक्षिणावयवो हि सः। दक्षिणावयवे दक्षिणाशब्दो निविशमानो गौणः स्यात् । न च विद्यमाने मुख्ये गौण उपादीयते । सोमचमसस्य हि प्रयोजनं दक्षिणानिवृत्तिः*। सर्वेषामृत्विजामानमनं प्रयोजनं दक्षिणानां, न ब्रह्मदानम् । तस्मात्कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकः सोमचमस इति ॥ ७१ ॥

[ पूर्वाधिकरणपूर्वोत्तरपक्षयोः प्रयोजनप्रतिपादनम् ॥ ]

यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् ॥ ७२ ॥

सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥ ७३ ॥

प्रयोजनसूत्रद्वयमिदम् । यदि तु ब्रह्मभागस्य निवर्तकः सोमचमसः, ततो ब्रह्मभागोना सा दक्षिणा । एतेन विकारेणान्या दीयेरन्, यथा पूर्वः पक्षः । यथा तर्हि सिद्धान्तः, तथा सर्वं निवर्तते । तस्मिन् निवर्तिते, ततः पुरुषापनयः क्रियते, स ब्रह्मणे देय इति। तासां दक्षिणानां क्रतुप्रधानत्वं भवति । सर्वर्त्विगानमनेन हि क्रतुः सिध्यति, न ब्रह्मानत्या केवलया। सोमचसेन च सा सर्वानतिः कृतेति नान्यत्किंचन दीयेत । एतत्प्रयोजनं भवत्येव पक्षोक्तं यथोपवर्णितामिति ॥ ७२ ॥ ७३ ॥

---

॥ ७१ ॥ ७२ ॥ ७३ ॥

---

* दक्षिणानिर्वृत्तिः–पा० ।

[ अथवा–क्रतपेये सोमचमसेन कृत्स्नक्रतुदक्षिणायाः पुरुषान्तरस्य च निवृत्त्यधिकरणम् ॥ २० ॥ ]

एवं वा–

[ २० ] यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् ॥ ७२ ॥ पू०

क्रतपेये श्रूयते, औदुम्बरः सोमचमसो दाक्षिणा । स प्रियाय सगोत्राय ब्रह्मणे देय इति । तत्रैषोऽर्थः सांशयिकः । किं ब्रह्मभागेनोनं दातव्यमुत सोमचमस एव केवलो दातव्य इति । ननु सोमचमसो दक्षिणेत्येष संबन्ध इत्युक्तम् । तत्रोच्यते । सोमचमसो ब्रह्मण इत्येष संबन्ध इति कृत्वा चिन्ता । यद्येवं, ब्रह्मणः सोमचमस इति संबन्धो विवक्षितः, सोमचमसेन ब्रह्मभागो निवर्तितः । अवशिष्टं दातव्यं तदूनो विकारः स्यादिति ॥ ७२ ॥

सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥ ७३ ॥ सि०

सर्वं वा सोमचमसेन निवर्त्येत । कुतः । सोमचमसो दक्षिणा, इत्येष संबन्धः प्रत्यक्षः । तेन निर्वर्तिते सर्वस्मिन् दाक्षिण्ये पुरुषापनय एव क्रियते । तासां क्रतुप्रधानत्वात् । दक्षिणानां सोमचमसो यः क्रतुदक्षिणा, स सर्वं क्रतुदाक्षिण्यं निवर्तयतीति ॥ ७३ ॥

[ वाजपेये श्रुतेन यजुर्युक्तरथेनाध्वर्योर्दास्यादिभागान्तरस्यानिवृत्त्यधिकरणम् ॥ २१ ॥ ]

[ २१ ] यजुर्युक्ते त्वध्वर्योर्दक्षिणा विकारः स्यात् ॥ ७४ ॥ पू०

अस्ति वाजपेयः । तत्रेदं समाम्नायते, यजुर्युक्तं रथमध्वर्यवे ददातीति । तत्रायमर्थः सांशयिकः । किं यजुर्युक्तोऽध्वर्योर्भागस्य निवर्तकः, किं भागे नियम इति । किं प्राप्तम् । यजुर्युक्ते दक्षिणा त्वध्वर्योर्विकारः स्यात् । तुशब्दः संशयव्यावृत्त्यर्थः । न खलु संशयोऽस्ति । यजुर्युक्तं रथमध्वर्यवे ददाति, नान्यदिति गम्यते । स रथोऽध्वर्युभागं निवर्त्य कृतार्थोऽवशिष्टानां चोदकप्राप्तानां निवृत्तिं न

---

॥ ७२ ॥ ७३ ॥ ७४ ॥

शक्नोति कर्तुम् । नैवमभिसंबन्धः क्रियते, यजुर्युक्तं रथं वाजपेये ददातीति । येन क्रतुसंयोगो गम्यते । कुतः । प्रकृतो हि वाजपेयः । अध्वर्युः पुनर्वाक्येन श्रूयते । वाक्यं पुनः प्रकरणाद्बलीयः । तस्मादध्वर्युभागस्य निवर्तको रथ इति ॥ ७४ ॥

अपि वा श्रुतिभूतत्वात्सर्वासां तस्य भागो
नियम्यते ॥ ७५ ॥ सि०

अपि वेति पक्षव्यावृत्तिः । श्रुतिभूता हि सर्वे रथाः सामान्येन वचनेन, सप्त सप्तदशकानि ददातीति । सप्तदश रथाः, सप्तदश निष्काः, सप्तदश दास्यः, सप्तदश युग्मानि, सप्तदश गवां शतानि, वयसो* वयस्यश्च सप्तदश, इति । तेनाविशेषेण सप्तदश रथाः सर्वेषां प्राप्ता विभक्तव्याः । तत्र न ज्ञायते कस्य को रथः । तत्राध्वर्योर्यजुर्युक्तः पक्षे प्राप्तः स नियम्यते । यजुर्युक्तमध्वर्यवे ददाति, नान्यं, न चान्यस्मै । एवम्, ऋग्भिर्युक्तं होत्रे, नान्यं, न चान्यस्मै । सामभिर्युक्तमुद्गात्रे नान्यं, न चान्यस्मै। तत्र पक्षे विधानार्थं यजुर्युक्तग्रहणं, नाध्वर्योर्भागं निवर्तयितुमुत्सहते । तस्यानिवृत्तौ चोदकानुग्रहो भविष्यति । तस्मादध्वर्योर्भागे रथो नियम्यते, न तद्भागं निवर्तयतीति ॥ ७५ ॥

इति श्रीशबरस्वामिविरचिते मीमांसाभाष्ये दशमाध्यायस्य
तृतीयः पादः ॥

---

॥ ७५ ॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां
टुप्टीकायां दशमाध्यायस्य तृतीयः पादः ॥

---

* सप्तदश वयसो वयस्यश्च—इति खण्डदेवधृतः पाठः ।

## अथ दशमाध्यायस्य चतुर्थः पादः ॥

( नक्षत्रेष्ट्यादावुपदिष्टैरुपहोमादिभिरातिदेशिकानां नारिष्ठहोमादीनां बाधाभावाधिकरणम् ॥ १ ॥ )

[ १ ] प्रकृतिलिङ्गासंयोगात्कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥ सि०

अस्त्यग्निः, य एवं विद्वानग्निं चिनुत इति । तत्र नक्षत्रेष्टिः, अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत् । सोऽत्र× जुहोति । अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा, अम्बायै स्वाहा, नितत्न्यै स्वाहा, अभ्रयन्त्यै स्वाहा, मेघयन्त्यै स्वाहा, वर्षयन्त्यै स्वाहा, चुपुणिकायै स्वाहा, इति । सन्ति तु प्रकृतौ नारिष्ठहोमाः, नारिष्ठान् होमाञ्जुहोतीति । तत्र संशयः । किं नारिष्ठहोमानां निवृत्तिः, अथवाऽनिवृत्तिः, समुच्चय इति । तथा श्येने श्रूयते, लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्तीति । अस्ति प्रकृतौ, निवीतं मनुष्याणां, प्राचीनावीतं पितॄनाम् , उपवीतं देवानाम् , उपव्ययते देवलक्ष्ममेव तत्कुरुत इति । तदिह चोदकेन प्राप्तम् । तत्र संशयः । किमुपवीतस्य निवृत्तिः, उतानिवृत्तिः, समुच्चय इति । तथा पृष्ठ्ये

---

निवीता ऋत्विज इत्येतदनुदाहरणम् । कथम् । ज्योतिष्टोम उपवीताभावात् । न प्रत्यक्षेण, न चोदकेन ज्योतिष्टोम उपवीतम् । तत्प्रकृतिश्च श्येनो न दर्शपूर्णमासप्रकृतिकः । 'आनर्थक्यात्तदङ्गेषु*' इति न्यायोऽत्र नास्ति । प्रधाने ह्यसंभवन्नङ्गेष्वर्थात्क्रियते । संभवति चात्र प्रधान एव निवीतम् । तस्माद्भिन्नविषयत्वान्निवीतोपवीतयोर्व्यवस्था= । एवमुदाहरणमुपहोमाद्येव । ( तदुदाहरणम् ) । ननूपहोमानां प्रत्यक्षविधानाच्चोदक एव नास्ति नक्षत्रेष्टौ । यथा गृहमेधीयस्याऽऽज्यभागयोः प्रत्यक्षाम्नानात् । यथा सोमस्य प्रत्यक्षविधानात् ।

---

× सोऽनु जुहोति–पा० । * ( अ० ३ पा० १ अ० ९ सू० १८ ) । = भिन्नविषयत्वादिति–औपदेशिकस्य निवीतस्य श्येनरूपप्रधानविषयत्वात् , ऐष्टिकोपवीतस्य चाऽऽतिदेशिकस्य दीक्षणीयादिरूपाङ्गविषयत्वादेकविषयत्वाभावादुपवीतनिवीतयोर्विरोधाभावेन व्यवस्थैवेत्याशयः ।

षडहे श्रूयते, मध्वाशयेत्, घृतं वेति। अस्ति तु प्रकृतौ, पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्येति। तदिह चोदकेन प्राप्तम्। तत्र संशयः। किं तस्य निवृत्तिः, उताऽनिवृत्तिः, समुच्चय इति।

किं प्राप्तम्। तस्य निवृत्तिरिति। प्रत्यक्षश्रुता उपहोमादयश्चोदकप्राप्तानानुमानिकानां निवर्तका इति। अपि च प्रकृतिलिङ्गसंयोगो भवति, जुहोति, निवीताः प्रचरन्ति, आशयेदिति। यथा शरमयं बर्हिर्भवतीति, शराः कुशान्निवर्तयन्ति।

एवं प्राप्ते, ब्रूमः। अनिवृत्तिः, समुच्चय इति। कुतः। प्रकृतिलिङ्गासंयोगात्। प्राकृतेन लिङ्गेन कार्येण संयोग एषामुपहोमादीनां नास्ति। स हि प्रत्यक्षदर्शनेन वा भवति। यथा, नैवारश्चरुरिति। अभावे विधानेन वा भवति। यथा, जुहूषा वा एतर्हि वाग्भवति, यर्हि पृष्ठ्यः षडहः संतिष्ठते। न बहु वदेन्नान्यं पृच्छेन्नान्यस्मै प्रतिब्रूयात्, मध्वाशयेत्, घृतं वा, इति। विकारेण वा। यथा, नैर्ऋतश्चरुर्नखावपूतानामिति। स्वशब्देन वा भवति। यथा, परिधौ पशुं नियुञ्जीतेति। प्रतिषेधेन वा भवति। यथा, न गिरा गिरेति ब्रूयात्। यद्गिरा गिरेति ब्रूयादात्मानं तदुद्गाता गिरेत्, ऐरं कृत्वोद्गेयमिति। अन्येन वा, येनावगम्यते प्राकृतं कार्यमभिनिर्वर्तयन्तीति। तदिह न किंचिदप्यस्ति। न चैतावता निवृत्तिः, इदं प्रत्यक्षश्रुतमिदं चोदकेन प्राप्तमिति। प्रकृतिलिङ्गसंयोगे निवृत्तिर्भवति, नान्यथा।

---

उच्यते। सर्वास्वेव विकृतिषूपमानेन धर्मप्राप्तिः। न च सोमस्य केनचित्सादृश्यमस्ति। दार्शपूर्णमासकैर्विहितधर्मकैस्तौ व्यक्तचोदनौ। सोमस्त्वव्यक्तचोदनः। तस्मात्सोमे य एव धर्मा विधीयन्ते त एव भवन्ति, नान्ये। नक्षत्रेष्ट्यामपि प्रथमं तावदुपकारापेक्षा भवति, ततः सादृश्येन धर्मप्राप्तिः। न चापूर्वमङ्गमुपकारवद्दृष्टम्। सादृश्यं च स्याऽऽग्नेयेन। तस्य च प्रकारा अनन्तरिता आग्नेये विधीयन्ते। ते नोपकारमन्तरेण संभवन्तीति तत्सद्भावः। तस्माद्यत्प्रकारान्तरमुपकारो विद्यते तद्गृह्णाति विकृतिः। इमे चोपहोमा नोपकारपूर्वका दृष्टाः। तस्मात्प्राकृतमङ्गजातं प्रवर्तते।

नन्विदानीमेवोक्तं, भवतीह प्रकृतिलिङ्गसंयोगः—जुहोति, निवीताः प्रचरन्ति, आशयेदिति। उच्यते। प्राकृतानां जुहोत्यादीनां जुहोत्याद्यन्तराणीमानि विधीयन्ते। तत्र तावज्जुहोतिरदृष्टार्थः। कथमसौ गम्येत प्राकृतस्यार्थे वर्तत इति। तथा, उपवीतमदृष्टार्थं, कथं तस्य कार्ये निवीतं वर्तत इति गम्यते। तथा, व्रतं वृत्त्यर्थम्। मध्वशनं घृताशनं च तस्मिन्नर्थे वर्तत× इत्येतन्न ज्ञायत एव। तस्मान्नास्ति प्रकृतिलिङ्गसंयोगः।

अथोच्यते, नैवोपहोमा जुहोत्यन्तरं, प्राकृते होमे मन्त्रो विधीयत इति। तच्च न। विधायकस्याभावात्। सोऽत्र+ जुहोतीति परिसमाप्ते वाक्ये केवलस्य मन्त्रस्याऽऽम्नानम्। नास्ति वचनम्, एवं जुहोतीति। भिन्नान्येतानि वाक्यानि। सोऽत्र+ जुहोतीति विधिवाक्यम्। अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा, इत्येवमादीनि मन्त्रवाक्यानि। तस्मान्न मन्त्रविधानार्थं जुहोतेः पुनः श्रवणम्। होम-

---

गृहमेधीये तु दृष्टोपकारावाज्यभागौ पुनः। श्रुतौ, शक्नुवतो* गुणावेकैकस्याम्। तस्यां गिरापदस्य प्रतिषिध्यमानस्य यत्कार्यं लक्ष्यते तत्रेरापदं विधीयते। तस्मात्कार्यलक्षणार्थं गिरापदमुच्चार्यते, न प्रतिषेधार्थम्। वाक्यभेदादिदोषप्रसङ्गात्। न चापि लक्षणया कार्यापत्तिः। यथा, पृष्ठ्यः षडहः संतिष्ठत इति। अभावः—संस्था, अभावेन प्रतिषेधो लक्ष्यते=। प्रतिषेधेन लक्षणया कार्यं गम्यम्। देवग्रहणं÷ यत्र, यत्रापि संदंशाभावः, तत्रापि क्रमादेवाङ्गत्वमिति। तस्मात्समुच्चयः।

जुहोतिशब्दसामान्यात्स्थानसामान्यात्पूर्वबाधः। उच्यते। नात्र बाधः कुतः। कार्यापत्त्यभावात्। प्रत्यक्षेण तावत्कार्यापत्तिर्यथा 'नैवारश्चरुर्भवति' इति व्रीहीणां कार्ये नीवारा वर्तन्ते। ननु शब्देनेयं कार्यापत्तिः। न हि। नीवारप्रातिपदिकं नीवारान्ब्रवीति। तद्धितो विकारम्। चरुशब्दश्चरुम्। बृहस्पति-

---

× वर्तेत—पा०। + सोऽनु जुहोति—पा०। * आदर्शपुस्तकेष्वपि समीचीनः पाठो नोपलब्ध इति यथाश्रुत एव प्रकाशितः। = लक्ष्यत इति—षडहाभावे मध्वशन विधिना षडहप्रतिषेधमनुमाय प्रतिषेधेन च षडहकार्यमनुमीयत इति तात्पर्यार्थः। ÷अत्र समीचीनः पाठो नोपलब्धः।

विधानार्थे श्रुतिर्विधायिका भवति, मन्त्रविधाने वाक्यम् । तस्मादपि न मन्त्रविधानम् । अतः समुच्चयः । उभयमपि प्रमाणेन प्राप्तम् । प्रत्यक्षश्रवणं प्रमाणं, चोदकोऽपि प्रमाणम् । नानाकार्यत्वान्नैतयोर्विरोधः । तस्माद्यथा, प्रयाजादीन्न बाधन्ते, एवं नारिष्ठहोमानपि न बाधेरन् । अत एवंजातीयकं कर्मसंस्कारं विकृतावधिकं स्यादिति ॥ १॥

चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृति-
संनिधानात् ॥ २ ॥

अथ यदुक्तं, शरमयं बर्हिर्भवतीति । यथा शराः कुशान् निवर्तयन्ति, एवमिहापीति । अत्रोच्यते । युक्तं शरमये । भवति हि तत्र प्रकृतिलिङ्गेन संयोगः । बर्हिःशब्देनैवंविशिष्टं वा बर्हिर्भवति, शरा वा

---

शब्दस्तस्य विकारस्य देवतासंबन्धम् । न हि शब्देन कार्यापत्तिर्गम्यते । प्रत्यक्षेण त्ववगम्यते । व्रीहयः पुरोडाशं निर्वर्तयन्ति । पुरोडाशो यागम् । एवं नीवाराश्चरुं, चरुर्यागमित्युभयेषामपि हविर्निर्वर्तकत्वं प्रत्यक्षम् । न चैवमुपहोमानाम् । अदृष्टार्थत्वात् । न चानुमानेन कार्यापत्तिः । यथा, 'नखावपूतानां चरुः' इति । तत्र तुषकणविपमोकं दृष्ट्वा फलं, नूनमवघातकार्ये वर्तते नखावपनमिति । न च प्रतिषेधेन कार्यापत्तिरनुमीयते । यथा, 'न गिरा गिरेति ब्रूयात्' इति ।

ननु परस्परनिराकाङ्क्षमेवेदं वाक्यद्वयम् , विधायकद्वयसद्भावात्×, ब्रूयात्-उद्गेयामिति चेत् । उच्यते । एवं सति वाक्यभेदः प्राप्नोति । विधायकशक्तिकल्पना चैकैकस्य स्यात् । तस्माद्गिरापदस्य प्रतिषिध्यमानस्य यत्कार्यं लक्ष्यते तत्रेरापदं विधीयते । तस्मात्कार्यलक्षणार्थं गिरापदमुच्चार्यते, न प्रतिषेधार्थम् । वाक्यभेदादिदोषात् । न चापि लक्षितलक्षणया कार्यापत्तिः। यथा 'परिधौ पशुं नियुञ्जीत +' । तस्मात्पञ्चप्रकाराऽपि कार्यापत्तिर्नास्त्युपहोमानां, येन बाधेरन् । प्राकृतं येन वा केनचिदन्येन, येनावगम्यते । कार्यापत्तिरिति ॥ १ ॥

---

× विधायकसद्भावात्-पा० । + नियुञ्जन्ति-पा० ।

बर्हिषः कार्ये वर्तन्त इति । इह तु प्रकृतिलिङ्गासंयोगः । तस्माद्विषमं बर्हिषेति ॥ २ ॥

( अथवा—सोमारौद्रयाग उपदिष्टैः शरैरातिदेशिकानां कुशानां बाधनिरूपणम् ॥ १ ॥ )

एवं वा—

[ १ ] प्रकृतिलिङ्गासंयोगात्कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥ पू०

इदमाम्नायते, सौमारौद्रं चरुं निर्वपेत्कृष्णानां व्रीहिणामभिचरन् इति । तत्रेदं श्रूयते, शरमयं बर्हिर्भवतीति । तत्र संशयः । किं कौशं निवर्तते, नेति । किं प्राप्तम् । उभयस्य प्रमाणावगतत्वात्समुच्चयः ॥ १ ॥

एवं प्राप्ते ब्रूमः—

चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसंनिधानात् ॥ २ ॥ सि०

चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेतेति । अस्ति हि तत्र प्रकृतिलिङ्गेन बर्हिःशब्देन संयोगः । तस्मात्प्राकृतस्य निवृत्तिरिति ॥ २ ॥

( अथवा—वाजपेये माहेन्द्रस्तोत्रोपाकरणसाधनतया विहितरथघोषादिना प्राकृतदर्भमन्त्रयोर्बाधनिरूपणम् ॥ १ ॥ )

एवं वा—

---

निरूपयन्तीति कोऽयं ग्रन्थः । न होमानुवादेन मन्त्रविधानम् । शुद्ध एव होमो विधीयते, तेन वाक्येन, ‘ सोऽत्र जुहोति ’ इति । द्वितीयेन मन्त्र, ‘ अग्नये कृत्तिकाभ्यः ’ इत्येवमादिना । तयोर्होममन्त्रयोः संबन्धः प्रकरणेन वाक्येन । तस्मान्नारिष्ठोपहोमयोः समुच्चयः ॥ १ ॥ [ २ ॥ ]

—

‘ रथघोषेण ’ इति रथो दर्भयोर्निवर्तकः, घोषो मन्त्रस्य । कुतः ।

[ १ ] प्रकृतिलिङ्गासंयोगात्कर्मसंस्कारं विकृता-
वाधिकं स्यात् ॥ १ ॥ पू०

अस्ति वाजपेयः, शरदि वाजपेयेन स्वाराज्यकामो यजेतेति। तत्र श्रूयते, रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति। दुंदुभिघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोतीति। अस्ति च प्रकृतौ, उपावर्तध्वमिति दर्भाभ्यां स्तोत्रमुपाकरोतीति। तदिह चोदकेन प्राप्तम्। तत्र संशयः। किं रथघोषेण दुंदुभिघोषेण यो नादः स मन्त्रस्य निवर्तकः, यद्द्रव्यं तद्दर्भयोः, उतोभयमुभयस्य निवर्तकमिति। किं प्राप्तम्। शब्दत्वेन सामान्येन नादो मन्त्रस्य निवर्तकः, द्रव्यत्वेन द्रव्यं दर्भयोः। ननु तत्पुरुषनिर्देशोऽयम्। तेन परार्थेन रथस्य घोषविशेषणत्वेनोच्चारणं, न स्वकार्येण निर्देशः।

अत्रोच्यते। द्वंद्वनिर्देशोऽपीदृशो भवति। तत्रायमप्यर्थः, न रथः परार्थ उच्चरिष्यते। श्रुतिर्हि तथा हीयेत, लक्षणा च स्यात्। चोदनालिङ्गसंयोगश्च बाध्येत। तस्माद्घोषो मन्त्रस्य निवर्तको द्रव्यं दर्भयोरिति ॥ १ ॥

एवं प्राप्ते, ब्रूमः-

चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृति-
संनिधानात् ॥ २ ॥ सि०

---

एवं= स्वार्थरथशब्दो भविष्यति। इतरथा* परविशेषणमिति लक्षणां ब्रवीति। ( श्रुतं स्वार्थं इतरथा रथशब्दो रथमेव ब्रवीति। घोषशब्दो घोषमेव। तत्पुरुषे तु रथः परार्थमुच्चार्यते )। तस्माद्द्वंद्वोऽयम्। ननु द्वंद्वे सति द्विवचनं प्राप्नोति। उच्यते। 'सर्वो द्वंद्वो विभाषयैकवद्भवति' इत्येकवचनं भवत्येव+ ॥ १ ॥

---

एवं तर्हि तत्पुरुषादयं पापीयान् प्राप्नोति। कथम्। अत्र धवखदिरयोर्थः

---

= एवमिति--' रथघोषेण ' इति पदे, रथश्च घोषश्चेति द्वंद्वसमासपक्ष इत्यर्थः।
* इतरथेति-रथस्य घोष इति षष्ठीतत्पुरुषपक्ष इत्यर्थः। + भवत्येव-इत्यनन्तरं, एवं तर्हि-इत्यस्य प्राक्कियांश्चिद्ग्रन्थो लुप्त इति भाति।

चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत, उभयस्य चोदनालिङ्गसंयोगो नैकैकस्य । रथघोषेणेति श्रूयते, न रथेन घोषेण चेति । रथविशिष्टो घोषो लक्षणं स्तोत्रोपाकरणस्य । प्रकृतौ दर्भौ लक्षणं, मन्त्रश्च । नन्विदानीमेवोक्तं द्वंद्वनिर्देशो भविष्यतीति । नैतदेवम् । द्विवचनं हि तथा स्यात् । एकवचनेन च निर्देशः । तेनैको लक्षणं, स च घोषः । तेन हि समभिव्याहारस्तृतीयायाः । ननु समुदायेन समभिव्याहारो भविष्यति । न हि । समुदायस्याशब्दार्थत्वात् । अथ समुदायो निर्दिश्येत, ततोऽभ्युपगतमुभयस्य निवर्तकमिति ।

ननु मन्त्रो वाचक एव, उपावर्तध्वमिति । नेत्युच्यते । उपावर्तनमात्रस्याभिधायको मन्त्रः । न चोपावर्तनमात्रं स्तोत्रोपाकरणम् । अथाप्यभिधानं स्यात्, तथाऽपि तस्य निवर्तकः । लक्षणेनोपाकर्तव्यमिति प्रत्यक्षा श्रुतिः । अभिधानेनोपाकर्तव्यमिति चोदकः । श्रुतिश्च चोदकाद्बलीयसी । तस्मादुभयस्य निवर्तको रथघोषो दुंदुभिघोषश्चेति । किं भविष्यति प्रयोजनम् । यदि रथो न घोषविशेषणम्, अरथविशिष्टोऽपि घोषः* स्तोत्रोपाकरणं लक्षयेदिति ॥ २ ॥

---

समाहारः स प्रधानभूतस्तं प्रति धवखदिरावत्यन्तगुणभूतावुच्चार्येते । स च समुदायः केनचिच्छब्देन नोच्यते । तत्र द्वावपि रथघोषौ परार्थौ भवेताम् । तस्मात्तत्पुरुष एव शेषात् ÷ । प्रयोजनं, यदि रथो घोषविशेषणमेवं नियमो= भवति । ननु+ पूर्वपक्षेऽपि नियम एव । उच्यते× । साधारणगुणवचनोऽयं शब्द एवोपपद्यते । अरुणगुणस्तु साधारणोऽपि भवति । तत्र वाक्येन द्रव्यनियमो भवति ॥ २ ॥

---

* घोषस्तत्रोपाकरणम्—पा० । ÷ शेषादिति—परिशेषादित्यर्थः । = नियमो भवतीति—रथस्यैव घोषो नान्यस्येति नियमो भवतीत्यर्थः। + ननु द्वंद्व इति पूर्वपक्षेऽपि तेन रथघोषयोः परस्परसाहित्यावगतेररुणैकहायनीन्यायेन परस्परनियमात्कथं घोषो रथस्यैवेति नियमो न सिध्येदिति शङ्कते—ननु पूर्वपक्षेऽपीति । × अत उच्यते—पा० । उच्यत इति समाधानग्रन्थस्यायमाशयः । अरुणैकहायनीस्थले परिच्छेद्यपरिच्छेदकभावस्याऽऽगोपालाङ्गनमनुभूयमानत्वात्तत्रैव वाक्येन परस्परं नियमः । 'रथघोषेण' इति द्वंद्वेन परस्परसापेक्षैकान्वयरूपस्येतरयोगस्य धवखदिरयोरिव प्रतीयमानत्वेऽपि निरूप्यनिरूपकभावस्याप्रतीतेर्न घोषो रथस्यैवेति नियन्तुं शक्यत इति ।

[ बृहस्पतिसवादिविकृतावौपदेशिकैर्ग्रहणैरातिदेशिकानामैन्द्रवायवादि-
ग्रहणानां समुच्चयाधिकरणम् ॥ २ ॥ ]

[ २ ] सर्वत्र तु ग्रहाम्नानमधिकं स्यात्प्रकृतिवत् ॥३॥ सि०

बृहस्पतिसवे श्रूयते, बार्हस्पत्यं ग्रहं गृह्णाति । विषुवति, अर्कं ग्रहं गृह्णातीति । महाव्रते, शुक्रं* ग्रहं गृह्णातीति । अश्वमेधे, सौवर्णराजताभ्यां महिमानौ ग्रहौ गृह्णातीति । सन्ति तु प्रकृतावैन्द्रवायवादयो ग्रहाः । त इह चोदकेन प्राप्ताः । तत्र संशयः । वैकृतैस्ते निवर्त्यन्त उतानिवृत्तिः, समुच्चय इति । किं प्राप्तम् । प्रत्यक्षश्रुता वैकृताश्चोदकप्राप्तान् प्राकृतान् निवर्तयितुमर्हन्ति । अस्ति हि तेषां प्रकृतिलिङ्गेन ग्रहशब्देन संयोग इति ।

एवं प्राप्ते, ब्रूमः तत्र तत्र सर्वत्र ग्रहाम्नानमधिकं भवितुमर्हति । प्राकृतस्यानिवृत्तिरिति । कुतः । उभयेषां प्रमाणावगतत्वात् । चोदकोऽपि प्रमाणं, प्रत्यक्षश्रवणमपि । ग्रहशब्दः प्रकृतिलिङ्गमिति चेत् । नैवम् । यदि ग्रहशब्दमुच्चार्य गुणो विधीयते, ततः प्राकृता एव ग्रहा गुणविकृता भवेयुः । अथ ग्रहसंबन्धेनाग्रहो विधीयते, ततो ग्रहकार्ये व-

---

प्रकृतिं तावन्निरूपयामः । 'ऐन्द्रवायवं गृह्णाति ' मैत्रावरुणं गृह्णाति ' इत्येवमादीनि वाक्यानि प्रकृतौ श्रूयन्ते, नैन्द्रवायवेन यजेत, मैत्रावरुणेन यजेतेति । यद्येवं श्रूयेत, तथा सतीरावद्विकल्पः× स्यात् ।

किं तर्हि । इन्द्रवायू देवताऽस्येति तद्धितो देवतां द्रव्योपसर्जनीभूतां= ब्रवीति । तच्च द्रव्यं द्वितीयया गृह्णातिं प्रति गुणभूतम् । गृह्णातिश्च द्रव्यस्य पृथक्प्रकल्पनम् । तच्चादृष्टार्थम् ×। योऽत्र देवतानिर्देशोऽदृष्टार्थः+ । अन्यत्र देवताया अचोदितत्वात् । तस्माद्द्वितीयादिष्वपि ग्रहणेष्वयमेव न्यायः । न चैन्द्रवायवोऽयं मैत्रावरुणस्य कार्ये वर्तत इति प्रमाणमस्ति । तस्माद्भिन्नान्येतानि ग्रहणानि ।

---

* शुक्रग्रहं—पा० । × इरादिवत्–पा० । वस्तुतो ' यवादिवद्विकल्पः ' इति पाठः साधीयान् । अथवा–इराधिकरणपूर्वपक्षेण वा दृष्टान्तः समर्थनीयः । = उपसर्जनभूतां–पा० । × स त्र दृष्टार्थः–तच्च दृष्टार्थं–इति च, पा० । + दृष्टार्थ इति—पा० । सोऽपीति पूर्वं शेषः।

र्तत इति प्राकृतं निवर्तयेत् । यथा, खलेवाली यूप इति । अन्यः पुनरेष ग्रहशब्दो ग्रहणवचनः । अर्कं नाम ग्रहं गृह्णाति, महिमानौ नाम ग्रहौ गृह्णातीति । अत्रापूर्वा ग्रहणक्रिया विधीयते । तस्मान्न ग्रहशब्दश्चोदनालिङ्गम् । एकार्थानां हि विकल्पो वा बाधो वा भवति । न चैषां वैकृतैरेकार्थता ।

ननु यागनिर्वृत्त्यर्थाः सर्वे । तेनैषामेकार्थतेति । उच्यते । यागं प्रति संहत्यकारिण एते, न निरपेक्ष एकैक एषां साधकः । न ह्येषां पृथक्त्वेन यागसंबन्धः, अर्केण यजेत, शुक्रेण यजेतेति । कथं तर्हि । प्रयोगवचन एषां ग्राहकः । स च संनिहितानाम् । न च संनिधाने विशेषोऽस्ति । तस्मात्सर्वेषां प्राकृतानां वैकृतानां च संग्राहकः प्रकृतिवत् । यथा प्रकृतावैन्द्रवायवग्रहणं चोदितं, मैत्रावरुणग्रहणं पुनश्चोद्यते । विभागश्चादृष्टार्थः संस्कारो देवतोद्देशश्च । अदृष्टत्वात्कार्यस्य, न ज्ञायते पूर्व उत्तरस्य कार्ये भवतीति । प्रयोगवचनग्रहणाच्च समुच्चयः, न केवलं मैत्रावरुणादिभिः सह, अप्रकरणाधीताभ्यामश्वदाभ्यामपि । एवं विकृतावपि समुच्चयो भवितुमर्हति ।

आह । ननु ग्रहं संकीर्त्य गुणो विधीयते—अश्वमेधे, सौवर्णराजताभ्यामिति । अत्रोच्यते । न तौ प्राकृतौ ग्रहौ । संज्ञा * चोत्पत्तिसंयोगादिति । ग्रहकर्मणी भिद्येते । आह । इह तर्हि, बार्हस्पत्यं गृह्णातीति देवताविधानार्थं स्यात् । उच्यते । ग्रहे विधीयमाने श्रुतिरनुगृहीता । देवतायां वाक्यम् । श्रुतिश्च वाक्याद्बलीयसी ।

---

यागोऽत्र देवतामपेक्षते । देवताश्च यागमन्तरेण न संभवन्तीति यागमपेक्षन्ते । तयोः× संनिधानेन प्रमाणेन संबन्धो भवति । तच्च संनिधानं सर्वेषां ग्रहणानामविशिष्टम् । ईदृशी तावती प्रकृतिः । यागः प्रधानभूतः । फले चोदितत्वात् । ( प्रधानभूत ) देवतावाक्यानि तदर्थानि । तस्मात्प्रधानभूत एव यागोऽर्थादभ्यस्यते । विकृतौ तु ‘ ऐन्द्रवायवं गृह्णाति ’ इति चोदकेन÷ प्राप्तानि । संनिहितानीतराणि । अम्नानसामर्थ्यात् । संनिहितान्येव तेन= सर्वाणि, युगपद्गृह्णातिप्रयोगवचनः । संनिधानाद्यविशेषात् +।

---

* ( अ० २ पा० २ अ० ८ सू० २२ ) । × ततः–पा० । ÷ चोदकप्राप्तानि–पा० । = तानि–पा० । + संनिधानादिर्विशेषात्—पा० ।

आह आग्नेयवत्। यथा, आग्निष्टुति-आग्नेया ग्रहा भवन्तीति देवताविधानं भवति, एवमेकवचनान्तेनापि। तस्याविवक्षितत्वात्। यथा, ग्रहं संमार्ष्टीति सर्वग्रहाणां संमार्गोऽभिधीयते। एवमिहापि सर्वग्रहाणां देवता विधीयते। अत्रोच्यते। उत्कमेतच्छ्रुतेर्बलीयस्त्वादिति। आग्नेया ग्रहा भवन्तीति तु वाक्यमविरुद्धं श्रुत्या। न हि तत्रास्ति, आग्नेयं ग्रहं गृह्णातीति। आग्नेयसत्ता तत्र वाक्येन श्रुत्यविरुद्धेन चोद्यमाना युक्तैवेति। तस्मात्प्राकृतेभ्यो व्यतिरिक्तो बार्हस्पत्यः समुच्चीयते। यथा प्रकृतौ, अंशुं गृह्णाति, अदाभ्यं गृह्णातीत्यप्राकरणिकौ प्राकरणिकैः समुच्चीयेते, एवमिहापि वैकृताः समुच्चीयेरन्निति ॥ ३ ॥

अधिकैश्चैकवाक्यत्वात् ॥ ४ ॥

---

ननु बृहस्पतिर्देवता चोदकप्राप्तेषु ग्रहेषु विधीयते। उच्यते। न संभवति देवताविधानम्। कथम्। यद्देवताविधानं तस्योपसर्जनार्थो विधीयते। यथा दण्डीति पुरुषोपसर्जनीभूतो दण्ड एव विधीयते, पुरुषस्य प्राप्तत्वात्। एवमिहापि। कथं द्रव्यदेवतासंबन्धे चोदकप्राप्तमनूद्य बृहस्पतिर्देवता विधीयते ×।

उच्यते। उपसर्जनार्थो न चोदकप्राप्ते* ग्रहे शक्यते विधातुम्। असामर्थ्यात्। कथमसामर्थ्यम्। यदाऽस्य देवतासंबन्धः, तदाऽस्यशब्दो देवताविशेषणत्वेनोच्चार्येत। तदा परार्थमुच्चारणं, न स्वार्थम्। यदा बृहस्पतिरस्येति, तदा स्वार्थमुच्चारणं, न परार्थम्। सकृदुच्चारणेन स्वार्थवत्परार्थवच्चोच्चारणं विरुध्यते। यदा तु न देवताविशेषणत्वेनोच्चार्यते, तदाऽस्यशब्दः प्रधानभूतः, देवताप्रातिपदिकं तदर्थम्। तस्माद्द्वाभ्यां विशेषणाभ्यां विशिष्टस्तद्धितार्थो विधीयते, नोपसर्जनम्। तस्मात् 'बार्हस्पत्यं गृह्णाति' इति श्रुत्यैव विधानमित्यनेनैवाभिप्रायेणोच्यते।

न चैतत् 'व्रीहीन्प्रोक्षति' इत्यनेन तुल्यम्। तत्र वाक्यान्तरेण व्रीहयो यागसाधनत्वेनावगताः। तेषां स्वरूपमपि विद्यते। लक्षणयाऽपूर्वसाधनत्वमपि। तत्र द्वितीया प्रोक्षणस्य गुणभावं ब्रवीति व्रीहिलक्षितापूर्वं प्रति। न त्विहैन्द्र-

---

× न विधीयत इति पाठ आवश्यक इति भाति। * चोदकप्राप्तो ग्रहेषु वाक्यतो-पा०।

इतश्च पश्याम समुच्चय इति। कुतः। निःसंदिग्धैश्चाधिकैः सुराग्रहैरेकवाक्यत्वं भवति। कथम्। सप्तदशैते ग्रहा गृह्यन्ते, द्वये प्राजापत्याः सोमग्रहाः सुराग्रहाश्च। अत्र व्यक्तमधिकाः सुराग्रहाः। तेषु, गृह्यन्त इति ग्रहणं चोद्यते, नानूद्यते। सकृदुच्चरितो गृह्यन्त इति शब्दः सोमग्रहैरपि संबध्यते। तस्माच्चोदनान्तरं ग्रहाणाम्। अनेनासंदिग्धेनान्यदप्येवमेवावगम्यते ॥ ४ ॥

---

वायवद्रव्यं प्रमाणान्तरेण यागसाधनं= निर्ज्ञातं, येन गृह्णातिक्रियायाऽपूर्वांशेन संबध्येत, प्रोक्षणक्रियेव। तस्मादैन्द्रवायवं गृह्णातिक्रियां प्रति प्रधानभूतम्। द्वितीयाविभक्तिसामर्थ्यात्।

न च प्रयाजादिवाक्यतुल्यम्। तत्र द्रव्यदेवतेन क्रिया निर्वर्त्यते। सा तदुपकारिका। इह तु विपरीतम्। न चाऽऽग्नेयतुल्यम्। तत्र 'आग्नेयोऽष्टाकपालो भवति' इति साकाङ्क्षमेतद्वाक्यम्। तच्च यागमन्तरेण निराकाङ्क्षं न भवति। परिपूर्णं वाक्यान्तरेण संबध्यते। प्राक् च यागात्परिपूर्णमेव न भवति। न च यागमन्तरेणान्येन प्रकारेण पूर्यते। तत्र 'आग्नेयोऽष्टाकपालो भवति' इति यागात्तुल्यम्*। 'दर्शपूर्णमासाभ्याम्' इत्यनेन प्रकृता एव फले विधीयन्त आग्नेयादयः। न चेह तथा। ऐन्द्रवायवादीनां यागविधानाभावात्। अन्यथानुपपत्त्या यागकल्पना। परिपूर्णं वाक्यम् 'ऐन्द्रवायवं गृह्णाति' इत्यनेन। न त्वाग्नेयादिवाक्यं परिपूर्णम्। तत्र साकाङ्क्षत्वाद्यागकल्पना। इह तु परिपूर्णेऽन्यथानुपपत्तिवेलायां × 'सोमेन यजेत' इति विद्यते यागः। स च यागो देवतामात्मसिद्ध्यर्थमपेक्षते। ऐन्द्रवायवादीन्यपि यागानपेक्षन्ते। तयोर्द्वयोः साकाङ्क्षयोरेकाङ्गविकलयोः संबन्धो भवति। तस्मान्न प्रकरणेनैन्द्रवायवादीनां संबन्धः। न चैतैर्देवतावाक्यैः पूर्वमसंबध्यमानः फलेन संबध्यते। अपि च 'ऐन्द्रवायवं गृह्णाति' इत्येतदपरिपूर्णं वाक्यं सोमयाजिना सह शीघ्रं संबध्यते प्रकरणेन ॥ ३ ॥ [ ४ ॥

—

---

= यागसाधने निर्ज्ञाते तां न गृह्णाति। क्रियापूर्वांशेन संबध्येत। प्रोक्षणं क्रियेत। तस्मात्—पा०। * यागकल्पना—इति पाठ आवश्यक इति भाति। × परिपूर्णस्यार्थानुपपत्ति—पा०।

लिङ्गदर्शनाच्च ॥ ५ ॥

लिङ्गमप्येतमर्थं दर्शयति । किम् । विरण्यो वा एष यज्ञक्रतुर्यद्वाजपेयः । अतीव ह्यग्निष्टोमं क्रामत्युकथ्यमतिषोडशिनं नातिरात्रमाप्नोतीति । विरण्यशब्दो विस्तीर्णे भवति । यथा, विरण्यान्यरण्यानि, विस्तीर्णानीति गम्यते । यदि समुच्चयः, एवं विस्तीर्णता । बाधायां नोपपद्यते । तस्मादपि समुच्चय इति ॥ ५ ॥

[ वाजपेये–उपदिष्टैः प्राजापत्यैः पशुभिरातिदेशिकानां क्रतुपशूनां समुच्चयाधिकरणम् ॥ ३ ॥ ]

[ ३ ] प्राजापत्येषु चाऽऽम्नानात् ॥ ६ ॥ सि०

अस्ति वाजपेयः, वाजपेयेन स्वाराज्यकामो यजेतेति । तत्र प्राजापत्याः पशवः, सप्तदश प्राजापत्यान् पशूनालभत इति । सन्ति तु प्रकृतौ क्रतुपशवः । त इह चोदकेन प्राप्ताः । तत्र संशयः । किं ते प्राजापत्यैः क्रतुपशवो बाध्यन्ते, उत समुच्चीयन्त इति । किं प्राप्तम् । प्रत्यक्षाः प्राजापत्याश्चोदकप्राप्तान् क्रतुपशून् बाधेरन्निति ।

एवं प्राप्ते, ब्रूमः । प्राजापत्येषु च समुच्चयः स्यात् । चशब्दोऽन्वाचयार्थः । आम्नायन्ते हि क्रतुपशवः । ब्रह्मवादिनो वदन्ति, नाग्निष्टोमो नोकथ्यो न षोडशी नातिरात्र इति । अथ कस्माद्वाजपेयेन सर्वे यज्ञक्रतवोऽवरुध्यन्ते, पशुभिरिति ब्रूयात । यदाग्नेयं पशुमालभतेऽग्निष्टोमं तेनावरुन्धे, ऐन्द्राग्नेनोकथ्यम्, ऐन्द्रेण षोडशिनं, सारस्वत्याऽतिरात्रं, मारुत्या बृहत्स्तोत्रम् । एतावन्तो वै यज्ञक्रतवस्तान् पशुभिरेवावरुन्धे, इति समुच्चयं दर्शयति । ननु दर्शनमिदमुपादिश्यते, कोऽत्र न्याय इति । उच्यते । प्रकृतिलिङ्गासंयोगः । ननु पशुशब्दः प्रकृतिलिङ्गम् । नेत्याह । नात्र पशुमनूद्य देवता विधीयते, संख्याश्रवणात् । संख्यादेवताश्रवणात्कर्मान्तरं चेदमुक्तम्, पृथक्त्वनिवेशात्संख्यया* कर्मभेदः स्यादिति । अतो ग्रहाणामिव समुच्चयो भवितुमर्हतीति ॥ ६ ॥

॥ ५ ॥ ६ ॥

---

* ( अ० २ पा० २ अ० ७ सू० २१ )

[ सांग्रहणेष्टावुपदिष्टैरामनहोमैरातिदेशिकानां समुच्चयाधि-करणम् ॥ ४ ॥ ]

[ ४ ] आमने लिङ्गदर्शनात् ॥ ७ ॥ सि०

अस्ति सांग्रहणीष्टिः, वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकाम इति। तत्र श्रूयते। आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोतीति। सन्ति तु प्रकृतौ त्रयोऽनुयाजाः। तेऽत्र चोदकेन प्राप्ताः। तत्र संशयः। किमामनहोमैरनुयाजा निवर्तन्त उत तैः समुच्चीयन्त इति। किं प्राप्तम्। प्रत्यक्षश्रुतैरामनहोमैरानुमानिका अनुयाजा निवर्त्येरन्। अपि च त्रित्वं प्रकृतिलिङ्गसंयोगो भवति।

एवं प्राप्ते, ब्रूमः। आमने समुच्चयः स्यात्। कुतः। लिङ्गदर्शनात्। लिङ्गं हीममर्थं दर्शयति। किं लिङ्गम्। बहिरात्मा वै प्रयाजानुयाजा आत्मा देवता, यत्प्रयाजानुयाजानां पुरस्ताद्वोपरिष्टाद्वा जुहुयाद्बहिरात्मानं सजातानामादधीत, अथ यन्मध्यतो जुहोति मध्यत एव सजातानामात्मानं धत्ते, इत्यनुयाजानामनिवृत्तिं दर्शयति आह।

ननु त्रित्वं प्रकृतिलिङ्गसंयोगः। नेत्याह। न हि संख्यामात्रमनूद्य शक्यते गुणो विधातुम्। न हि कस्यचित्काचित्संख्या न भवति। तस्मान्न संख्या प्रकृतिलिङ्गसंयोगः लिङ्गदर्शनं त्विदमपदिष्टं, प्राप्तिरत्र वक्तव्येति। उच्यते। आहुतीर्जुहोतीति श्रुत्याऽऽहुतिसत्ता, वाक्येन मन्त्रविधानम्। त्रिसंख्या चानुवादत्वेनावकल्पते। संख्यामन्त्रवन्ति तु यागान्तराणि विधीयन्ते। तेषां चाभयप्रमाणावगतत्वात्समुच्चयो न्याय्य इति ॥ ७ ॥

[ गवामयनान्तर्गते महाव्रत उद्गानान्तरकर्त्रीभिः पत्नीभिरातिदेशिकोपगानकर्तॄणामृत्विजामबाधाधिकरणम् ॥ ५ ॥ ]

[ ५ ] उपगेषु शरवत्स्यात्प्रकृतिलिङ्गसंयोगात् ॥ ८ ॥ पू०

महाव्रते श्रूयते, पत्न्य उपगायन्ति, पिच्छोलाभिरुपगायन्ति,

---

॥ ७ ॥ ८ ॥

काण्डवीणादिभिरुपगायन्ति, आपाटलिकाभिरुपगायन्तीति । अस्ति तु प्रकृतौ ऋत्विज उपगायन्तीति । तदिह चोदकेन प्राप्यते । तत्राय-मर्थः सांशयिको भवति । किं पत्नीभिः, उपगायन्तीति ऋत्विज उप-गायन्तो निवर्त्यन्त उत न निवर्त्यन्त इति । तत्रैवत्तावच्चिन्त्यते । किं गानोपगानमेतदुत वादित्रोपगानमिति । तत्रापि द्वैतं, किं गानस्योप-गानं गानोपगानमुत गानमेवोपगानं गानोपगानमिति । किं ताव-त्प्राप्तम् । प्राकृतं निवर्त्यत इति । तत इदं वर्ण्यते । गानस्योपगान-मिति । पत्न्यो गायतां गानमुपचिन्वन्तीति, गानं प्राप्तमेव प्राकृतम् । उपचय उपसर्गार्थो विधीयते । तस्माद्गानस्योपगानमिति ।

अथवा, गानमेवोपगानं, गानशब्दो हि शारीर्यां गीतौ प्रसिद्धः। तस्माद्गानमेतदुपगानम् । गानस्य वोपगानमिति । यदैतयोरन्यतरत्त-दा ऋत्विक्कार्ये पत्न्यो वर्तन्ते । अतः, प्रकृतिलिङ्गसंयोगात्प्रत्यक्षश्रु-तेन चोदकप्राप्तं निवर्त्यते, शरवत् । यथा, शरमयं बर्हिर्भवतीति शराः प्रत्यक्षश्रुताश्चोदकप्राप्तान् दर्भान् निवर्तयन्ति, एवमिहापीति ॥ ८ ॥

आनर्थक्यात्त्वधिकं स्यात् ॥ ९ ॥

तुशब्दः पक्षं व्यावर्तयति, न निवृत्तिरिति । समुच्चयः स्यात् । तत एतच्चिन्त्यते । वादित्रस्यैतदुपगानम् । अस्ति ह्यत्र वादित्रम् । दिक्षु दुंदुभयो नदन्तीत्येवमादि । तस्योपगानं वादित्रस्योपगानम् । कथम् । प्रत्ययेन हि श्रुत्या धात्वर्थस्य सत्तोच्यते । विप्रकृष्टोपसर्गा-र्थस्य सत्ता, अर्थविप्रकर्षाद्दुर्बला भवति । तस्मादुपसर्गार्थसत्ताविधानं धात्वर्थसत्ताविधानेन बाध्यते ।

अथवा, वादित्रमिदमुपगानम् । एवं ह्याह । पत्न्य उपगायन्ति, काण्डवीणादिभिरुपगायन्तीति । काण्डवीणादिभिर्वादित्रमुपगानं भ-वति । भवति च तन्त्रीगाने गानशब्दः । तस्माद्वादित्रमुपगानम् । तत्र यद्येवं वादित्रस्योपगानं, यदि वा वादित्रमुपगानम् , उभयथा

---

॥ ९ ॥

—

प्राकृतादर्थान्तरे भवति । तस्मात्समुच्चयः । कुतः । आनर्थक्यात् । एवं चोदकानर्थक्यं न भविष्यति । चोदकोऽनुग्रहीष्यतीत्यर्थः । तस्मात्समुच्चय इति ॥ ९ ॥

[ अञ्जनाभ्यञ्जनाख्ये सत्रे समाम्नातेन गौग्गुलवाभ्यञ्जनादिना प्राकृतनवनीताभ्यञ्जनस्य समुच्चयाधिकरणम् ॥ ६ ॥ ]

[ ६ ] संस्कारे चान्यसंयोगात् ॥ १० ॥ सि०

अस्ति, अञ्जनाभ्यञ्जनो नामैकोनपञ्चाशद्रात्रः । तत्रेदं समाम्नायते । गौग्गुलवेन प्रातःसवने समञ्जते, अभि वाऽञ्जते । पैलुदारवेण माध्यंदिने सवने, सौगन्धिकेन तृतीयसवन इति । अस्ति तु प्रकृतौ नवनीतेनाभ्यञ्जनम् । तदिह चोदकेन प्राप्तम् । तत्र संशयः । किं तद्वैकृतेन बाध्यत उत नेति । किं प्राप्तम् । प्रत्यक्षश्रुतत्वाद्वैकृतेषु, अञ्जते, अभि वाऽञ्जते, इति च प्रकृतिलिङ्गसंयोगाद्बाध्यत इति । आह । ननु सुत्याकालमञ्जनमभ्यञ्जनं च सत्रे, दीक्षाकाले नवनीतेनाभ्यञ्जनं प्रकृतौ, अन्यकालत्वात्प्रयोजनान्तरे वर्तत इति बाधो न स्यात् । उच्यते । प्रयाजवदन्यकालमपि तत्कार्यमेव द्रष्टव्यम् । कालमात्रमन्यत् । पदार्थस्तु स एव । यथा, तिष्ठन्तं पशुं प्रयजन्तीति तिष्ठति पशौ प्रयाजा वर्तमानाः प्राकृतकार्यका एव भवन्ति, एवमिहापि द्रष्टव्यम् ।

एवं प्राप्ते, ब्रूमः । संस्कारे—अञ्जनेऽभ्यञ्जने च प्राकृतेन सह समुच्चयः स्यात् । कुतः । अन्यसंयोगात् । अन्यकालमिदं कार्यान्तरे वर्तते । एवं चोदकोऽनुग्रहीष्यते । तस्मात्समुच्चय इति ॥ १० ॥

प्रयाजवदिति चेत् ॥ ११ ॥

इति यदुक्तं तत्परिहर्तव्यम् ॥ ११ ॥

नार्थान्यत्वात् ॥ १२ ॥

न च प्रयाजवद्भवितुमर्हतीति । कुतः । अर्थान्यत्वात् । स्नेहनार्थमादौ नवनीतं सुखप्रचाराय । प्रवृत्ते कार्ये सुत्याकालं गौग्गुल-

॥ १० ॥ ११ ॥ १२ ॥

वेनाभ्यञ्जनं विरूक्षीकरणार्थं, प्रत्यक्षं कार्यान्तरं वर्तत इति न प्राकृतं निवर्तयितुमर्हति ॥ १२ ॥

( महाव्रते—तार्प्यादिभिः प्राकृताहतवाससः समुच्चयाधिकरणम् ॥७॥ )

( ७ ) आच्छादने त्वैकार्थ्यात्प्राकृतस्य विकारः स्यात् ॥ १३ ॥ पू०

महाव्रते श्रूयते, तार्प्यं* यजमानः परिधत्ते, दर्भमयं पत्नी, इति। अस्ति तु प्रकृतौ, अहतं वासः परिधत्त इति। तदिह चोदकेन प्राप्तम्। तत्र संशयः। किमहतस्य वाससो निवृत्तिः, नेति। किं प्राप्तम्। आच्छादने तु प्राकृतस्य विकारः स्यात्। कुतः। ऐकार्थ्यात्। एको ह्यर्थः प्राकृतस्य वैकृतस्य च। कौपीनमाच्छादयितुं, प्रकृतौ विकृतौ च प्रच्छादनं क्रियते। तस्मात्प्रत्यक्षश्रुतेन चोदकप्राप्तं निवर्तेत ॥ १३ ॥

अधिकं वाऽन्यार्थत्वात् ॥ १४ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति। अधिकमिदं प्राकृताद्वाससो भवितुमर्हतीति। कुतः। तद्धि निवर्तकं भवति, यदनिवर्त्य न शक्नोति निवेष्टुम्। यत्त्वनिवर्त्यापि शक्नोति भवितुं, न तन्निवर्तयति। तद्धि× निवर्तयदप्रतिषेधकं सच्चोदकं प्राप्तं बाधेत। ननु कौपीनप्रच्छादने, परिधत्त इति भवति, नान्यकार्यके। उच्यते। नैतदेवम्। उपरिवाससोऽपि कार्ये परिधत्त इति भवति। तद्यथा, कम्बलं परिधत्ते, रौरवं परिधत्त इति। सर्वतो धत्ते—परिधत्त इत्यवयवप्रसिद्ध्या भवति। तस्मादहतस्य वाससो न निवृत्तिः, समुच्चय इति ॥ १४ ॥

समुच्चयं च दर्शयति ॥ १५ ॥

समुच्चयं च वासःशब्देन बहुवचनान्तेन दर्शयति, वासांसि वाराही चोपानहौ विमुञ्चतीति। कृष्णविषाणया वासांसि विस्रंसयति, ततोऽध्वर्युः परिधत्ते, इति। तस्मादपि पश्यामोऽनिवृत्तिः, समुच्चय इति ॥ १५ ॥

---

॥ १३ ॥ १४ ॥ १५ ॥

---

* तार्थ्यं—पा०। × तद्धिनिवर्तयेत, यदप्रतिषिद्धं सच्चोदकं प्राप्तं बाधेत—पा०।

( महाव्रते स्तोत्रान्तरसाधनीभूतैः श्लोकादिसामभिः प्राकृतसाम्नां समुच्चयाधिकरणम् ॥ ८ ॥ )

[ ८ ] सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत ॥ १६ ॥ सि०

महाव्रते श्रूयते, श्लोकेन पुरस्तात्सदसः स्तुवते, अनुश्लोकेन पश्चात्सदसः क्रौञ्चेन चात्वालमवेक्ष्यमाण इति । सन्ति तु प्राकृतानि सामानीह चोदकेन प्राप्तानि । तत्र संशयः । किं प्राकृतानां साम्नां निवृत्तिरुतानिवृत्तिः, समुच्चय इति । किं प्राप्तम् । स्तुवत इति प्रकृतिलिङ्गसंयोगे प्रत्यक्षश्रुते चोदकप्राप्तानि सामानि निवर्तन्त इति । यथा कौत्सं भवति, काण्वं भवति, वसिष्ठस्य जनित्रे भवतः, शुद्धाशुद्धीये भवतः, भर्गयशसी भवतः, क्रौञ्चानि भवन्तीति श्रुतेषु चोदकप्राप्तानि निवर्त्यन्ते, एवमिहापि द्रष्टव्यम् ।

एवं प्राप्ते ब्रूमः । सामसु श्लोकेन पुरस्तात्स्तुवत इत्येवमादिश्रूयमाणेषु प्राकृतानामविकारः प्रतीयेत । कुतः । अर्थान्तरश्रुतेः । अर्थान्तरेण हि संबन्धः श्रूयते, पुरस्तात्सदसः स्तुवत इत्येवमादि = । यच्च पदं केनचित्पदेन संबध्यते विशेषणत्वेन, न तत्पदान्तरेण सह संबन्धमर्हति सकृदुच्चरितम् । यथा, भार्या राज्ञः, पुरुषो देवदत्तस्येति भार्याविशेषणत्वेनोच्चार्यमाणो राज्ञ इति शब्दो न पुनः पुरुषशब्देन संबध्यत इति । एवं, पुरस्तात्सदसः स्तुवत इत्यनेन संबध्यमानो न पुनः श्लोकेन स्तुवत इति संबन्धमर्हति ।

यदि स्तुतौ देशसत्ता विधीयते, श्लोकेन चेत्यनूद्येत तत उपपद्येतैकं वाक्यमिति । यदा तु पुनर्देशसत्ता विहिता तदा परिपूर्णं वाक्यम् । श्लोकेन चेत्येतदपि विधातव्यं, तदा पुनर्विधिप्रत्ययो हृदयमानेतव्यः । हृदयमानेतुमुच्चारयितव्यः । न चोच्चारितः । तस्मादनुच्चारितो वा कल्पयितव्यः । उच्चारणं वा कल्पयितव्यम् । कल्पनायां च शब्दो बाध्येत । तस्मान्नैवम् । कथं तर्हि । देशसामाविशिष्टा स्तुतिः श्रुत्या विधीयते । न चैकेन केनचित्संबन्धे विहिते, परिपूर्णे वाक्ये पुनरपरं वाक्यं कल्पयितव्यं भवति । उभयविशेषणविशिष्टा

---

= इत्येवमादिषु—पा० ।

हि स्तुतिः श्रुत्या यदा विहिता तदा परिपूर्णं वाक्यम् । न तदा पुनरपरेण केनचित्संबन्धः कल्पयितव्यो भवति, यदर्थं किंचिदुद्विरुच्चार्येत । तस्मात्स्तुत्यन्तरमिदं विधीयते, न प्राकृतं निवर्त्यते, समुच्चय इति ॥ १६ ॥

अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् ॥ १७ ॥

अथ यदुपवर्णितं, यथा कौत्सं भवति, काण्वं भवति, वशिष्ठस्य जनित्रे भवत इत्येवमादिभिरिव प्राकृतानां निवृत्तिरिति । तत्परिहर्तव्यम् । अत्रोच्यते । युक्तमत्र यत्प्राकृतं निवर्त्यते । अत्र ह्यर्थान्तरं न श्रूयते, प्राकृतस्यैव शेषः श्रूयते । तस्मात्तत्र वैकृतेन प्रत्यक्षश्रुतेन प्राकृतस्य निवृत्तिरिति । इह त्वर्थान्तरश्रवणाद्वाक्यभेदप्रसङ्गादनिवृत्तिरित्युक्तम् ॥ १७ ॥

( अथवा–विकृतिविशेषे केवलं श्रूयमाणैः कौत्सादिसामभिः प्राकृतसाम्नांबाधाधिकरणम् ॥ ८ ॥ )

एवं वा–

[ ८ ] अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् ॥ १७ ॥ सि०

क्वचिच्छ्रूयते कौत्सं भवति, काण्वं भवति, वशिष्ठस्य जनित्रे भवतः, शुद्धाशुद्धीये भवतः, भर्गयशसी भवतः, क्रौञ्चानि भवन्तीति । सन्ति तु प्रकृतौ सामानि । तत्र चोदकेन प्राप्तानि । किं तानि निवर्त्यन्ते, नेत्येषोऽर्थः संदिह्यते । किं प्राप्तम् । अनिवृत्तिः । समुच्चय इति । कुतः । साममात्रं विधीयते । न, स्तुवत इति प्रकृतिलिङ्गसंयोगोऽस्ति । तस्मादधिकमिति ।

एवं प्राप्ते, ब्रूमः । अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् । तुशब्दः पक्षं व्यावर्तयति, अश्रूयमाणेऽन्यर्थे प्राकृतस्य विकारः स्यात् । शेषभूतं हि प्रकृतौ साम । इदमपि साम श्रूयते । तत्सामत्वेन

---

॥ १७ ॥

———

सामान्येन साम्नः कार्यं भवितुमर्हति। तद्यथा, दधि घृतं शाकं शालयः, देवदत्तो भोजयितव्यः, देवदत्तवद्यज्ञदत्तस्तैलेनेति, यद्यपि तैलेन स्नेहयितव्य इति न श्रूयते, तथाऽपि स्नेहन एव तैलं भवति। तत्समर्थत्वात्। एवं यद्यपि साम्ना ऋक् संस्कर्तव्येति न श्रूयते, एवमपि तत्समर्थत्वात्साम ऋक्संस्कार एव भवितुमर्हति॥ १७॥

( विकृतिविशेषे श्रूयमाणैः कौत्सादिसामभिस्तत्समसंख्यप्राकृतसामबाधाधिकरणम्॥ ९॥ )

[ ९ ] सर्वेषामविशेषात्॥ १८॥ पू०

क्वचिच्छ्रूयते—कौत्सं भवति, काण्वं भवति, वाशिष्ठस्य जनित्रे भवतः, शुद्धाशुद्धीये भवतः, भर्गयशसी भवतः, क्रौञ्चानि भवन्तीति। सन्ति तु प्राकृतानि सामानि। तत्र चोदकेन प्राप्तानि। तानि प्राकृतानां निवर्तकानीत्येतत्समधिगतम्। अथैषोऽर्थः संदिह्यते। किं सर्वाणि सर्वेषां निवर्तकानि, अथ किमेकमेकस्य, द्वे द्वयोः, बहूनि बहूनामिति। किं तावत्प्राप्तम्। सर्वाणि सर्वेषामिति। कुतः। विशेषाभावात्। न हि विशेषः कश्चिदस्ति, येनावगम्यत इदमस्य निवर्तकं, नान्यस्येति। तस्मात्सर्वं सर्वस्य निवर्तकमिति॥ १८॥

एकस्य वा श्रुतिसामर्थ्यात्प्रकृतेश्चाविकारात्॥ १९॥ सि०

न चैतदस्ति, सर्वाणि सर्वेषां निवर्तकानीति। एकमेकस्य, द्वे द्वयोः, बहूनि बहूनामिति। कुतः। श्रुतिसामर्थ्यात्। कौत्सं भवति, काण्वं भवतीत्येकैकस्य निवृत्तिं कृत्वा श्रुतिः समर्था—अर्थवतीति। एवं, वाशिष्ठस्य जनित्रे भवतः, शुद्धाशुद्धीये भवतः, भर्गयशसी भवत इति द्वयोर्निवृत्तौ कृतायां श्रुतिसामर्थ्यमनुगृहीतं भवति। तथा, क्रौञ्चानि भवन्तीति त्रिभिस्त्रीणि× निवर्त्य कृतसामर्थ्या श्रुतिर्भवति। यद्येकस्मिन् श्रुत एकमेव निवर्त्यते, ततो यावत्येवासावङ्गीकृता प्राकृती सामसंख्या तावत्येव भवति। एवं सर्वत्र। किमेवं भविष्यति।

॥ १७॥ १८॥

———

× त्रीणि त्रिभिर्निवर्त्य—पा०।

प्रकृतेरविकारः, प्राकृतानामवशिष्टानां साम्नां ग्रहणं भविष्यति । तत्र चोदकोऽनुग्रहीष्यते। तस्मादेकमेकस्य निवर्तकं, द्वे द्वयोः, बहूनि बहूनामिति ॥ १९ ॥

( विवृद्धस्तोमकक्रतुषूपदिष्टैः सामभिः प्राकृतसाम्नामबाधस्य—अविवृद्धस्तोमकक्रतुषूपदिष्टैः सामभिः प्राकृतसाम्नां बाधस्य च निरूपणाधिकरणम् ॥ १० ॥ )

[ १० ] स्तोभविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वाच्च ॥ २० ॥ सि०

सन्ति विवृद्धस्तोमका अविवृद्धस्तोमकाश्च क्रतवः । एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकाममिति । तथा, द्वात्रिंशाः पवमाना अभिषेचनीयस्य । तत्र, नव राजसामानि, एकादश राजसामानि, बलौघश्रवसे वशिष्ठस्य जनिजनित्रे च साकं प्रवेदनान्याहुः । शद्धाशुद्धीये च संश्रवोपपदे चोभे । तथा, रथहविर्धाने पुनःस्तोमस्य यज्ञस्य । तथा, अपचितिवतः पुनस्तोमस्य यज्ञस्य ।

पुनःस्तोमस्य सवनं मध्यमं द्वादशं स्मृतम् ।
कार्यौ नवदशस्तोमावभितः सवने उभे ॥ इति ।

तदत्र कचित्प्राकृती स्तोत्रसंख्या विवृद्धा, कचिद्धीना । तत्र संदेहः । किं विकृतौ विवृद्धो हानौ च प्राकृतानां साम्नां निवृत्तिः, उत हानौ निवृत्तिः, विवृद्धावनिवृत्तिरिति । किं प्राप्तम् । उभयत्र निवृत्तिः । प्रत्यक्षश्रुतेन हि चोदकप्राप्तं निवर्त्यते । साम्नां चोत्पत्तिरर्थवती भविष्यति, अपूर्वेषु क्रियमाणेष्विति ।

एवं प्राप्ते, ब्रूमः । स्तोमविवृद्धौ—अनिवृत्तिराधिक्यं स्यात् । कुतः । आगमेन हि साम्नां संख्यापूरणं वक्ष्यते । आगमेन= वाऽ-

---

॥ १९ ॥

---

= [( अ० १० पा० ५ अ० ६ सू० १६ )।

भ्यासस्याश्रुतित्वादिति । एवं चोदकानुग्रहो भविष्यति । अविवृद्धौ तु प्राकृतं निवर्त्येत । यावता निवृत्तेन सा संख्या पूर्यते, तावत्प्राकृतं बाधितव्यम् । अन्यत्प्राकृतमेव स्यात् । कुतः । इतरस्याश्रुतित्वात् । इतरच्च श्रूयते, आगमः कर्तव्य इति । संख्यामात्रं श्रूयते । तस्माद्विवृद्धस्तोमकेष्वनिवृत्तिः । हीनस्तोमकेषु यावदर्थं निवर्तयितव्यम् । अथ यदुक्तं, साम्नामुत्पत्तिरर्थवती भविष्यतीति । उच्यते । बाध्यतामार्षं× चोदकेन । गुणमात्रमार्षं, विशिष्टगुणश्चोदक इति ॥ २० ॥

( विवृद्धाविवृद्धस्तोमकक्रतुषु माध्यंदिनार्भवपवमानस्तोत्रयोरेव साम्नामावापोद्वापाधिकरणम् ॥ ११ ॥ )

[ ११ ] पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् ॥ २१ ॥

इह विवृद्धस्तोमका अविवृद्धस्तोमकाश्च क्रतव उदाहरणम् । त एव ये पूर्वस्मिन्नधिकरण उदाहृताः । तत्रैषोऽर्थः समधिगतः । विवृद्धस्तोमकेष्वनिवृत्तिरविवृद्धस्तोमकेषु निवृत्तिरिति । अथेदानीमिदं संदिह्यते । किं यस्मिन् कस्मिंश्चिदावापो यतः कुतश्चिदुद्वाप उत पवमानेष्वेवाऽऽवापोद्वापाविति । किं प्राप्तम् । अविशेषादनियम इति ।

एवं प्राप्ते, ब्रूमः । पवमाने, आवापोद्वापौ स्यातामिति । कुतः । अस्मिन्नेव हि तौ दृश्येते, त्रीणि ह वै यज्ञस्योदराणि, गायत्री बृहत्यनुष्टुप् । अत्र ह्येवाऽऽवपन्ति, अत एवोद्वपन्तीति ॥ २१ ॥

ननु दर्शनमिदं, प्राप्तिरुच्यताम् । उच्यते—

वचनानि त्वपूर्वत्वात् ॥ २२ ॥

असति न्याये वचनान्येवैतानि कल्प्यन्ते । तस्मात्पवमान एवाऽऽवापोद्वापस्थानामिति ॥ २२ ॥

---

॥ २० ॥ २१ ॥ २२ ॥

---

× आर्षचोदकेन—पा० ।

( त्यागादौ विधिगतस्यैव देवताशब्दस्योच्चारणनियमाधिकरणम् ॥ १२ ॥

[ १२ ] विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना ॥ २३ ॥ सि०

स्तो दर्शपूर्णमासौ, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, इति। तत्रेदमाम्नायते । यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाऽच्युतो भवतीति । सन्ति चाग्नेरभिधानानि, अग्निः शुचिः पावकः,

---

अस्याधिकरणस्य बाधसंबन्धो वक्तव्यः। पूर्वपक्षे न किंचिद्बाध्यते । सिद्धान्ते पर्यायशब्दो बाध्येत । इन्द्रादीनां यद्यर्थो विद्यते लोकव्यवहारे, यथा गवादीनां ततः पर्यायशब्दानामवकाशो भवेत् । न त्वर्थो विद्यते । इन्द्रादीनामप्रत्यक्षत्वात् ।

उच्यते । इन्द्रशब्द उच्चरिते किमपि प्रतीयते सामान्येन । तत्रोपपदाद्व्यवहारात्स्मरणाच्चेन्द्रादीनामर्थो विद्यते । यथा, प्राची दिगिति न प्रत्यक्षेण प्रमीयते, नानुमानेन । शब्दादेव प्रतीयते । इन्द्रशब्देन च यदुच्यते, शक्रशब्देन च तदेवोच्यत इति लोकस्मरणम् । अनादि च स्मरणं न शक्यं पर्यनुयोक्तुम् । यथा प्रत्यक्षेण रूपमवबुध्यमानं न शक्यते पर्यनुयोक्तुं, किमर्थमवबुध्यत इति । एवमिहापीत्युभयोरर्थ एव देवता । तस्य च वाचकः शब्दः । स हविषा संबध्यमानोऽर्थस्य देवतात्वं प्रतिपादयति, नान्यथा ।

पूर्वपक्षस्तु—शब्दोऽर्थं प्रत्यत्यन्तगुणभूतः । अर्थ एव कार्ययोगी, प्रधानत्वात् । अग्निशब्दो न स्वयं कार्येण द्रव्येण सह संबध्यते । किं तर्हि । अर्थेन संबध्येत । अर्थपरत्वाच्च निर्देशस्य पर्यायशब्दानामनिवृत्तिः । न चाग्निशब्दब्दार्थक एव द्रव्येण संबध्यते ( लिङ्गबलात्तद्धित+ एव वर्तते । वाक्येन पुरोडाशेन । न चेतिकरणेन निष्कृष्य निर्दिश्यते । येन लिङ्गं बाध्यते । यदि निष्कृष्य पुरोडाशेन संबध्यते ) तथा सति तद्धितानुत्पत्तिः । अपि च वाक्यार्थे पदनिर्वचनम् । वाक्यार्थश्च पदार्थपूर्वको भवति । यदि शब्द एव देवता भवेत्तथा सति देवतापदमर्थशून्यं स्यात् । अर्थशून्ये च तस्मिन् , अस्यशब्देन योऽर्थ उच्यते, स एव केवलः स्यात् । तत्र साकाङ्क्षत्वादनिराकाङ्क्षीकृतत्वाच्च वाक्यमेव न स्यात् ।

---

+ चिह्नितभागान्तर्गतः पाठः क्वचिन्नास्ति ।

धूमकेतुः कृशानुर्वैश्वानरः शाण्डिल्य इत्येवमादीनि । तत्र संदेहः । वाचिषु निगमेषु किं येन केनचिदग्नेः शब्देनाभिधानं कर्तव्यमुत विधिशब्देनाग्निशब्देनेति । किं प्राप्तम् । येन केनचिदिति । कुतः । अग्न्यर्थनिर्देशात् । अग्न्यर्थेन पुरोडाशः संबद्धव्यः । अग्न्यर्थो देवता कर्तव्या । त्यागकाल उद्देष्टव्या । सा येन शब्देन शक्यत उद्देष्टुं, तेनोद्देशनीया । सैषां शब्दानामन्यतमेन शक्योद्देष्टुम् । तस्माद्येन केनचिद्वाचिषु निगमेषूद्देशः कर्तव्य इति ।

एवं प्राप्ते, ब्रूमः । विधिशब्देनैव—अग्निशब्देनोद्देष्टव्या, नान्येन शुच्यादिनेति । कुतः । तेन चोदना । तेन—विधिशब्देनास्य हविषः संबन्धचोदना भवति । कथमिव । आग्नेयः कर्तव्य इत्यग्निरस्य देवता कर्तव्येत्यर्थः ।

का पुनरियं देवता नाम । एकं तावन्मतं, या एता इतिहासपराणेष्वग्न्याद्याः संकीर्त्यन्ते नाकसदः, ता देवता इति । उच्यते । तासु देवतासु, अहरादीनां शार्दूलादीनां वा न संग्रहः । स्मर्यते च

---

नन्वेवमपि पर्यायशब्दानामप्रसङ्ग एव । कथम् । अग्निशब्दः स्वमर्थं पुरोडाशं प्रति देवतात्वेन प्रतिपादयति । तत्तु देवतात्वं, यदि वाचिकां श्रुतिमुद्दिश्य परित्यजति द्रव्यं, ततः संपादितं भवति, नान्येन प्रकारेण । अस्य चावस्थायामग्निशब्द एव मनसि विपरिवर्तते, नान्यः । तस्माद्विपरिवर्तमानः स एव ग्रहीतव्यो नान्ये +। स च शब्दः=। तस्मात्स एवोच्चारयितव्यो वाचकश्रुतिवेलायाम् ।

अत्रोच्यते । अग्निशब्दः स्वमर्थं पुरोडाशस्य देवतात्वेन प्रतिपाद्य कृतार्थः । उच्चारणवेलायां शब्देन प्रयोजनम् । नान्यथा यागो भवतीति । एतस्यामवस्थायामग्निशब्दो न* विद्यते । येन केनचिच्छब्देनोच्चारणं कर्तव्यम् । अग्निशब्दस्य व्यवहितत्वात् । तस्माद्ग्निशब्दो न शक्यो नियन्तुमिति ।

---

+ नान्यः—पा० । = शब्दः...पा० । * न विद्यत इति—विधिवाक्यस्थाग्निशब्दस्य यागानुष्ठानात्प्रागेवार्थसमर्पकत्वेन चरितार्थस्य न पुनरनुष्ठानकाले व्यापारः संभवतीति विपरिवर्तमानतयाऽग्निशब्दो न विद्यत इत्यर्थः ।

कालवाचिनां देवतात्वं, कालेभ्यो भवति, मासो देवता, संवत्सरो देवता, इति।

अपरं मतं, येषु देवताशब्दो मन्त्रब्राह्मणे श्रूयते, अग्निर्देवता, वातो देवता, सूर्यो देवता, चन्द्रमा देवता, इत्येवमादिषु, तेऽत्र देवताशब्देनोच्यन्त इति। तत्राप्यहरादीनामनुपसंग्रह एव। किंच सामान्यवचनस्य शब्दस्य लौकिके व्यवहारेऽभावादर्थस्याप्रसिद्धिः स्यात्। तस्मात्सूक्तभाजो हविर्भाजश्च देवताः। काः सूक्तभाजः इमं+ स्तोममर्हते जातवेदसे रथमिव संमहेमामनीषया। भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मारिषामावयंतव, इति। हविर्भाजः, आग्नेयमष्टाकपालं निर्वपेत्, अग्नीषोमीयमेकादशकपालमिति।

आह। यदि हविर्भाजो देवताः, कपालानामपि देवतात्वं प्राप्नोति। तान्यपि हविर्भाञ्जि। एवं तर्हि सा हविर्भाग् देवता, यां प्रति तादर्थ्यं हविषः। सूक्तस्याप्येवमेव। अत्र हि देवताशब्दः स्मर्यते। अग्निदेवत्यं सूक्तम्, अग्निदेवत्यं हविरिति। तथा, अतिथिदेवत्यं, पितृदेवत्यमिति। एवं मूर्तानाममूर्तानां चेतनानामचेतनानां श्रुत्या कंचिदर्थं प्रति तादर्थ्येन संकल्पनीयानां देवतात्वं भविष्यति। सामान्यवचनं चोपपत्स्यते। किमतो यद्येवम्। यस्या वाचकं शब्दमुद्दिश्य स्मृत्वा वा हविस्त्यक्ष्यामीति संकल्पः क्रियते, सा देवता भवति तत्र।

नन्वेवं सति सुतरां येन केनाचिदग्नेः शब्देन निर्देशः करणीयः। अत्रोच्यते। भवेदेतदेवं, यद्यग्निशब्दोऽर्थप्रत्यायनार्थमुच्चार्येत। अर्थोऽपि हविःसंबन्धार्थं प्रत्याय्येत। न त्वत्राग्निशब्दोऽर्थप्रत्यायनार्थमुच्चार्यते। यत्र ह्यर्थे कार्यमासाद्यते, तत्र शब्दोऽर्थप्रत्यायनार्थो भवति, यत्रार्थेन प्रयोजनम्। यत्र पुनः शब्द एव कार्यं, तत्र कार्यसंबन्धार्थः शब्द एव प्रत्याययितव्यः। देवतायाश्च यज्ञसाधनभावो न रूपेण भवति। केन तर्हि। संबन्धिना शब्देन। यथा, अध्वर्युर्हस्ताभ्यामुपकरोति, एवं देवता शब्देनोपकरोति। यथा, होतुः पाणौ द्विर्लेपेनो-

---

+ ऋ० सं० ( अष्ट० १ अ० ६ व० ३० )।

पस्तृणातीति पाणिसंबन्धेऽपि होतैवोपकरोति, एवं संबन्धिनी शब्देनोपकुर्वती देवतोपकारिणी गम्यते । देवतायामप्युपकारिण्यां, चोदितायां शब्दस्यैव यज्ञे समवायः । तस्मान्न शब्दोऽर्थप्रत्यायनार्थमुच्चारितः । स चार्थः पुनः शब्दं प्रत्याययेदिति लक्षितलक्षणा हि तथा स्यात् । किं× तर्हि । शब्द एव हविषा संबध्यते । तत्संबन्धादर्थोऽपिदेवता भविष्यति । यस्य हि शब्दो हविषा तादर्थ्येन संबध्यते, सा देवता । शब्दे कार्यस्यासंभवादर्थे कार्यं विज्ञायते । इह तु शब्द एव कार्यं संभवति । तस्मान्नार्थप्रत्यायनार्थः शब्द इति ।

तदुक्तं वृत्तिकारेण । न वा शब्दपूर्वको ह्यर्थसंप्रत्ययस्तस्मादर्थनिष्पत्तिरित्ति । एवं चेदग्निशब्देन हविषः संबन्धः । नास्ति प्रसङ्गः शुच्यादीनां शब्दानामिति । तस्मान्मन्त्रत्वे विधिशब्द उपादातव्य इति । उच्यते । नन्वेवं शब्द एव देवता प्राप्नोति । अत्रोच्यते । नैतदस्माभिः परिहर्तव्यम् । न हीदमुच्यमानमस्मत्पक्षं बाधते । सुतरां शुच्यादीनामप्रसङ्ग इति ॥ २३ ॥

शेषाणां चोदनैकत्वात्तस्मात्सर्वत्र श्रूयते ॥ २४ ॥

---

सिद्धान्तस्तु—अग्निशब्द एवाष्टाकपालेन संबध्यमानोऽर्थात्तस्य देवतात्वं प्रतिपादयति । यथा 'वैष्णवीमनुब्रूयात्' इति ऋगुच्यमाना ऋगर्थं प्रतिपादयति । न च विवक्षित ऋगर्थः कार्ययोगेन । एवमिहाप्यग्न्यर्थो न कार्ययोगेन विवक्षितः । अपि च योऽर्थमष्टाकपालेन संबन्धयितुमिच्छति, तथापि वाचिका श्रुतिरुच्चारयितव्या । तद्द्वारेण देवता क्रियया संबध्यते । तत्र प्रथममर्थस्य देवतात्वम् । पश्चाच्च शब्दोच्चारणं विधीयत इति श्रुत्यर्थाभ्यामर्थद्वयं बोध्यते । यस्य पुनरग्निश्रुतिरेवाष्टाकपालेन संबध्यते, तदुच्चारणमेव विधीयते, अग्नय इत्युच्चार्याष्टाकपालं त्यजेदिति, तस्याग्न्यर्थो+ देवतेत्यनुवाद एषः । * यथा 'पूतिकामाभिषुणुयात' इति यागोऽर्थाल्लभ्यते ॥ २३ ॥

---

× एवं तर्हि—पा० । + तस्यायमर्थो—पा० । * एव—पा० ।

इतश्च विधिशब्देन वाचिषु वचनं कर्तव्यम् । कुतः । शेषाणां मन्त्राणामेकः शब्दः । य एवासौ विधिशब्दः, स एव सर्वत्र श्रूयते, अयाट्कारे—उज्जित्यां-स्वाहाकारे च । अयाळग्निरग्नेः प्रिया धामान्ययाट्, सोमस्य प्रिया धामान्ययाळग्नेः* प्रिया धामानि, इत्ययाट्कारे । अग्नेरुज्जितिमनूज्जेषं, सोमस्योज्जितिमनूज्जेषमित्युज्जित्याम् । स्वाहाऽग्निं स्वाहा सोममित्येवमादि स्वाहाकारे । एवं च नित्यवच्छ्रूयमाणा अपाक्षिका भविष्यन्ति, यथाऽस्माभिर्न्यायोऽपदिष्टः । तस्माद्विधिशब्दस्य मन्त्रत्वे भावः स्यादिति ॥ २४ ॥

( सौर्यादिविकृतावप्यावाहनादिमन्त्रेषु विधिगतशब्देनैव देवताप्रकाशनाधिकरणम् ॥ १३ ॥ )

[ १३ ] तथोत्तरस्यां ततौ तत्प्रकृतित्वात् ॥ २५ ॥ सि०

अस्ति चरुः, सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इति । सन्ति सूर्यस्याभिधानानि । सूर्य आदित्यो भास्करः सविता दिवाकर इति । तत्र किं वाचिषु निगमेषु येन केनचिच्छब्देनाभिधानं कर्तव्यमुत विधिशब्देन सूर्यशब्देनेति । किं प्राप्तम् । अग्निशब्दसंयुक्तास्ते प्रकृतौ निगमा इह चोदकेन+ प्राप्ताः, न सूर्यशब्देनेति । सूर्यशब्दो हि चरौ, नोज्जित्यादिषु । ते यथार्थं विपरिणमयितव्याः । सूर्यार्थश्च तेषु संकीर्तयितव्यः । स च येन केनचित्सूर्यवाचिना शब्देन संकीर्त्यते । तस्मादनियमः । ये च प्रकृतावग्निशब्दसंयुक्ता निगमास्त इहोदाहरणं, नासंयुक्ताः ।

एवं प्राप्ते, ब्रूमः । तथोत्तरस्यां ततौ तत्प्रकृतित्वादिति । यथा प्रकृतौ, तथोत्तरस्यां ततौ विकृतौ कर्तव्याः । तत्प्रकृतित्वात्तेषां, चोदकानुग्रहाय । प्रकृतौ च विधिशब्दाभिप्रायोऽग्निशब्दः प्रयुक्तो नाग्न्यभिधानपरः । इहापि तत्प्रकृतित्वाद्विधिशब्दाभिप्रायेणैव निगमाः प्रयोक्तव्याः । न चायं चरुणा सूर्यशब्दस्य संबन्धः । किं तर्हि । प्रयो-

॥ २४ ॥

———

* धामान्ययाळिन्द्रस्य—पा० । + चोदनेन—पा० ।

गेण । सौर्यं निर्वर्तयेदिति प्रयोगेण संबन्धो न सौर्यश्चरुरिति । कारकविभक्तिर्हि द्वितीया । साऽऽख्यातेन संबध्यते । तस्मात्तत्रापि सूर्यशब्देन संयुक्ताः कर्तव्या इति ॥ २५ ॥

( विकृतौ देवतानिष्ठगुणवाचिपदस्यापि त्यागादौ प्रयोगाधिकरणम् ॥ १४ ॥

[ १४ ] प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् ॥ २६ ॥ सि०

अस्त्याधानं, य एवं विद्वानग्निमाधत्त इति । तत्र पवमानहवींषि श्रूयन्ते । अग्नये पवमानायाष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचय इति । तत्र संशयः क्रियते । किं सगुणमग्नेरभिधानं कर्तव्यमुत निर्गुणमिति । किं प्राप्तम् । प्राकृतस्य निर्गुणस्य सगुणेनाभिधानं कर्तव्यमिति ॥ २६ ॥

अविकारो वाऽर्थशब्दानपायात्स्याद्द्रव्यवत् ॥ २७ ॥ पू०

अविकारो वा स्यात्, निर्गुणमभिधानम् । कुतः । अर्थशब्दानपायात् । एवं शब्दोऽर्थश्चानपेतो भवति । य एवासावग्निः, स एव पवमानः, पावकः, शुचिश्च । या देवता निर्देष्टव्या, सा निर्दिष्टैव भवति, असत्यपि गुणवचने । द्रव्यवत् । यथा, सा वा एषा सर्वदेवत्या यदजा वशा, वायव्यामालभेत भूतिकाम इति । अजावशाशब्देन

---

ननु नैवेदमधिकरणमारम्भ्यम् । य एव शब्दश्चोदितः स एवान्यत्राप्युच्चार्यः । उच्यते । यत्र शब्दो विद्यते तत्रैव पर्यायशब्दानामप्रसङ्गः । यत्र शब्दो नाऽऽम्नायते तत्रार्थः प्रत्याययितव्यः । स च येन केनचित्प्रत्यायत इति पूर्वः पक्षः ।

सिद्धान्तस्तु—सूर्यशब्दो यागानुमितप्रयोगभावनया संबध्यते । अन्यः शब्दो यद्युच्चार्येत तथा सति शब्दः प्रयोगेऽश्रुत एवोच्चार्येत एवं प्रकृतावपि ॥ २५ ॥ [ २६ ॥

———

चोदिते कर्मणि छागाशब्देन+ वाचिषु निगमा भवन्ति । अर्थः शब्दोऽनपेत इति कृत्वा । एवमिहापि द्रष्टव्यम् । तस्मान्निर्गुणेनाभिधानं कर्तव्यमिति ॥ २७ ॥

तथाऽऽरम्भासमवायाद्वा* चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यात् ॥ २८ ॥ सि०

अथवा, चोदितेन सगुणेनाभिधीयेत । कुतः । आरम्भासमवायात् । न ह्यारम्भेण देवता कर्मणि समवैति । न स्वेन रूपेण देवतायाः कर्मणि साधनभाव इत्युक्तम् । यदि हि रूपेण समवेयात्तथा सत्यग्निशब्देन पवमानोऽपि प्रत्याय्यत इति गुणाभिधानं न क्रियेत । कथं तर्हि साधनभावः । श्रुतिसमवायित्वाद्देवतार्थस्य । देवताशब्दस्य च हविषश्च संबन्धः साक्षादुच्यते । यस्य शब्दस्य संबन्धः स शब्दो वदितव्यः । एवमसौ संबन्धः कृतो भवति । यदि च गुणाभिधानं न क्रियते, गुणशासनमनर्थकं स्यात् । एवमर्थं हि तत्र शब्द उच्चार्यते, कथमसौ कर्मणि संबध्येतेति । तत्र यदि गुणो न संबध्नीयात्, गुणवचनवैयर्थ्यं स्यात् । तस्मात्सगुणेनाभिधानं कर्तव्यमिति ॥ २८ ॥

द्रव्येष्वारम्भगामित्वादर्थेऽविकारः= सामर्थ्यात् ॥ २९ ॥

अथ यदुक्तं द्रव्यवदिति, सा वा एषा सर्वदेवत्या यदजा वशा, वायव्यामालभेत भूतिकाम इति । अजावशाशब्देन चोदिते कर्मणि छागाशब्देन निगमा वाचिषु भवन्तीति (यदुक्तं), तत्परिहर्तव्यम् । अत्रोच्यते । युक्तं द्रव्येष्वारम्भसमवायः । रूपेण समवायं गच्छति

॥ २७ ॥ २८ ॥

---

+ छाग—पा० । छागाशब्देनेति पाठे तु वायव्यापशौ 'छागाया वपाया मेदसः' इति स्त्रीलिङ्गान्तत्वेनोहितमन्त्रस्थछागाशब्देनेत्यर्थः । * तथा—इति क्वचिन्नास्ति । = विकार इति सर्वत्र पाठः ।

द्रव्यम् । तत्र छागाशब्देन याऽसावालब्धा यदि वशा यद्यवशा, तत्र साऽभिधीयत इति गम्यते । तस्मादर्थे साधने सत्यविकारेऽप्यर्थे वचनसामर्थ्यमुपपद्यत इति विना गुणवचनेनाभिधानं स्याच्चोदकानुग्रहाय । इह श्रुतिसमयायित्वादवश्यं चोदकप्राप्तस्य विकारः कर्तव्य इति ॥ २९ ॥

( पवमानेष्टिष्वाज्यभागयोर्निर्गुणस्यैव देवतापदस्याभिधानाधिकरणम् ॥ १५ ॥

[ १५ ] बुधन्वान्* पवमानवद्विशेषनिर्देशात् ॥ ३० ॥ पू०

अस्त्याधानं, य एवं विद्वानग्निमाधत्त इति । तत्र पवमानेष्टयः । अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेत् , अग्नये पावकाय, अग्नये शुचय इति । तत्राऽऽज्यभागौ प्रकृत्य श्रूयते, बुधन्वानाग्नेयः कार्यः, पावकवान् सौम्य इति । तत्रायमर्थः सांशयिकः । किं सगुणमग्नेरभिधानं कर्तव्यमुत निर्गुणमिति । तत्रैवं तावत्परीक्ष्यते । किं देवतानिर्देशोऽयं, मन्त्रनिर्देश इति । देवतानिर्देशे सति सगुणमभिधानं, मन्त्रनिर्देशे निर्गुणमिति । किं तावत्प्राप्तम् । सगुणमभिधानमिति । तत्रैतद्वर्ण्यते, देवतानिर्देश इति । कुतः । रूपत एव मन्त्राणां प्राप्तत्वाद्विधानमनर्थकं, देवता पुनर्न प्राप्नोति । तस्या विधानमर्थवद्भवति । बुधन्वानाग्नेयः कर्तव्य इति । देवतया बुधन्वद्गुणयुक्तया भवति बुधन्वानाग्नेयः । तस्मात्सगुणमभिधानम् । यथा पावमानेष्टिषु, अग्निः पवमान इति । एवमत्रापि, अग्निर्बुधन्वानिति विशेषनिर्देशोऽर्थवान् भविष्यति । तस्मात्सगुणमभिधानमिति ॥ ३० ॥

---

॥ २९ ॥ ३० ॥

---

* वृधन्वान्—इति खण्डदेवधृतः पाठः । एवं भाष्येऽपि यत्र यत्र बुधशब्दः प्रयुक्तस्तत्र खण्डदेवादिग्रन्थे वृधशब्दपाठो दृश्यते ।

मन्त्रविशेषनिर्देशान्न देवताविकारः स्यात् ॥ ३१ ॥ सि०

न चैतदेवं, सगुणमभिधानमिति, निर्गुणं कर्तव्यम् । तत्रैतद्वर्णयन्ति, मन्त्रविशेषनिर्देशोऽयमिति । कुतः । मन्त्रविशेषरूपोऽयं शब्दः । आग्नेयो यो विशिष्टाग्निविशिष्टः स बुधन्वान् कर्तव्यः, नाग्निः । अथाग्निर्बुधन्वान् क्रियते, तत्र बुधन्वानग्निर्देवता स्यात् । तत्राऽऽग्नेय इति सापेक्षे तद्धितनिर्देशो न स्यात् । न हि सविशेषणानां वृत्तिर्भवति । न खल्वपि वृत्तस्य विशेषणं प्रयुज्यते । तस्मान्नाग्नेर्विशेषणं बुधन्वत्ता । कस्तर्हि बुधन्वत्तया विशेष्यते । आग्नेयः । तस्य बुधो मन्त्रः, तेनासौ बुधवान् = भवति यागः । अग्निं स्तोमेन बोधय समिधानो अमर्त्यमिति । अथवा, मन्त्र एवाभिसंबध्यते, बुधन्वानाग्नेय इति ।

अथ यदुक्तं, रूपादेव मन्त्रः प्राप्नोति, न विधातव्य इति । उच्यते । यः कश्चिदग्न्यभिधानो मन्त्रः प्राप्नोति । तन्निषेधार्थमिदमुच्यते । बुधन्वान् कर्तव्यः, अग्निं स्तोमेन बोधयेति । एवं चेत्, न देवताविशेषणम् । तस्मान्निर्गुणमभिधानं देवतायाः कर्तव्यम् । एवं चोदकानुग्रहो भविष्यति ॥ ३१ ॥

( आनुबन्ध्यवनस्पतियागयोर्निगमेषु विधिगतोस्रावनस्पतिशब्दाभ्यामेव द्रव्यदेवतयोरभिधानाधिकरणम् ॥ १६ ॥ )

[ १६ ] विधिनिगमभेदात्प्रकृतौ तत्प्रकृतित्वाद्विकृतावपि भेदः स्यात् ॥ ३२ ॥ पू०

अस्ति ज्योतिष्टोमः । तत्र श्रूयते, गौरनुबन्ध्यः, अजोऽग्नीषोमीय इति । सन्ति तु गोरभिधानानि–उस्रा, उस्रिया, अही, मही, अदितिः, इला, इति । तत्र संशयः । किं नियमेषु केनचिदेव शब्देन

---

॥ ३१ ॥

---

ननु ‘ उस्रायै वपायै मेदसः ’ इति मन्त्राम्नानादनियमो नैव प्राप्नोति, विधिशब्दो वा । उच्यते । सत्यम् । समीपे मन्त्रः श्रूयते, न त्वनेन कर्तव्यमिति

---

= बुधन्वान्–पा० ।

गोरभिधानं कर्तव्यम्, अथवा विधिशब्देन कर्तव्यमिति। तथा, पृषदाज्येन वनस्पतिं यजतीति। सन्ति वनस्पतेरभिधानानि, वृक्षः पादपो द्रुमो नग इति। तत्र संशयः। किं निगमेषु केनचिदेव शब्देन वनस्पतेरभिधानं कर्तव्यम्, अथवा विधिशब्देनेति। किं प्राप्तम्। केनाचिदेवेति। कुतः। विधिनिगमभेदात्प्रकृतौ, विधिनिगमभेदः कृतः। यो दीक्षितो यदग्नीषोमीयं पशुमालभत इति विधौ। मन्त्रे, छागस्य वपाया मेदसोऽनुब्रूहीति। इहापि चोदकेन, यत्प्राकृतं तत्प्राप्यते। विधिनिगमभेदश्च प्रकृतावस्ति। तस्मात्स प्राप्यते। छागशब्दः प्रकृतौ कृतः, स न शक्यते गवि कर्तुम्। विधिनिगमभेदस्तु शक्यते। तस्माद्वृक्षादीनामन्यतमेन वाचिषु वचनं कर्तव्यम्। तथा, अग्निं स्विष्टकृतं यजतीति विधौ। निगमेऽपि—

पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँ ऋतुपते यजेह।

ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायाजिष्ठ, इति।

विधिनिगमभेदः प्रकृतौ कृतः। स्विष्टकृद्विकारश्च वनस्पतिरिति संकर्षे वक्ष्यते+। तस्मात्तत्रापि विधिनिगमभेदः कर्तव्यः। अतो येन केनचिद्वनस्पत्यभिधानेन निर्देशः कर्तव्यः। तत्प्रकृतित्वादिति ॥ ३२ ॥

---

विधीयते। चोदकस्तु विधिशब्दादन्येन प्रकाशनं प्रापयति। तस्मान्न* नियमः। नन्वनुबन्ध्यायां भवेदपि। वनस्पतौ तु विधिशब्द एव प्राप्नोति, उक्तेन× न्यायेन। उच्यते। स्विष्टकृद्विकारो वनस्पतिः। स्विष्टकृति च विधिशब्दादन्येन प्रकाशनम् ÷, विकृतौ चोदकेन तथैव प्राप्नोति। न चेह गुणलोपः। निर्गुणत्वादाम्नानस्य। अन्यत्वं कर्तव्यं विधिशब्दात्। अतः पर्यायशब्दप्रसङ्गः ॥ ३२ ॥

---

+( अ० १४ पा० ४ सू० २१ ) इत्यत्र संकर्षकाण्डे वक्ष्यत इत्यर्थः। * अनियमः-पा०। × उक्तेनेति-पूर्वाधिकरणोक्तेन न्यायेनेत्यर्थः। ÷ प्रकाशनमिति-कृतमिति शेषः।

यथोक्तं वा विप्रतिपत्तेर्न चोदना ॥ ३३ ॥ सि०

यथोक्तेन वा शब्देन वचनं कर्तव्यं, गोरुस्राशब्देन। स हि तत्राम्नातः। उस्रायै वपायै मेदसोऽनुब्रूहीति। आह। मन्त्राम्नानमेतत्, न वचनमस्ति। अनेन कर्तव्यमिति। वचनं पुनश्चोदको विधिभिन्नेन वक्तव्यमिति। नैतदेवम्। न विप्रतिपात्तिं चोदकः प्रापयति। न हि यत्प्रकृतावस्ति तद्विकृतौ कर्तव्यमिति केनचित्प्राप्यते। किं तु यत्प्रकृतौ चिकीर्षितं शब्देनाभिहितं, नार्थात्प्राप्तं, तच्चोदकः प्रापयति। न च प्रकृतौ विधिनिगमभेदो विवक्षितः। छागस्य वपायै मेदसोऽनुब्रूहीत्येतद्वक्तव्यमिति विधीयते। तत्रार्थाद्विधिनिगमभेदो जातः। छागशब्दविधानं श्रुत्या गम्यते। विधिनिगमभेदो लक्षणया। श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा। तस्मान्न येन केनचिदभिधानम्। आम्नानसामर्थ्यादुस्राशब्देन। तथा, पृषदाज्ये देवतायां यो विधिशब्द उक्तः, तेन वचनं कर्तव्यम्। विधिनिगमविप्रतिपत्तिर्न चोद्यते। तस्माद्वनस्पतिशब्देन निर्देशः कर्तव्य इति ॥ ३३॥

( अवभृथे स्विष्टकृद्यागीयनिगमादिषु स्विष्टकृद्गुणकयोरग्नीवरुणयोरभिधानाधिकरणम् ॥ १७ ॥ )

[ १७ ] स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्तेत ॥ ३४ ॥ पू०

अस्त्यवभृथः, वारुणेनैककपालेनावभृथं यन्तीति। तत्रेदमाम्नायते, अग्नीवरुणौ स्विष्टकृतौ यजतीति। तत्रायमर्थः सांशयिकः। किं निगमेऽस्विष्टकृच्छब्दकं वचनं कर्तव्यमुत सस्विष्टकृच्छब्दकमिति। तत्रैवं तावत्परीक्ष्यते। किं सांविज्ञायिकः स्विष्टकृच्छब्द उत स्विष्टं करोतीत्येतेन गुणेन प्रवृत्त इति गौणो न रूढ इति। यदि रूढः, अस्विष्टकृच्छब्दकं वचनं कर्तव्यम्। अथ व्युत्पाद्यते, ततः सस्विष्टकृच्छब्दकम्। किं प्राप्तम्। सांविज्ञायिकः, न व्युत्पाद्यत इति। कुतः। न तावत्स्विष्टं कृतवान्। अथ च तस्मिन्नेव काले स्विष्टकृदित्युच्यते, स्विष्टकृतं यजतीति। न ह्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ भवतः। अग्निरेव स्विष्टकृच्छब्देनोच्यते, न योऽर्थः स्विष्टं

---

सिद्धान्तस्तु समान इति कृत्वा वनस्पतिरुदाहृतः ॥ ३३ ॥

कृतवान् । यदा सांविज्ञायिकः, तदाऽस्विष्टकृच्छब्दकं वचनं कर्तव्यम् । कुतः । अग्नेर्हि देवताया असौ वाचकः, नाग्नीवरुणयोः । विकृतावग्नेर्देवताया अभावादग्नीवरुणाभ्यां निवर्तेत । तस्मादस्विष्टकृच्छब्दकं वचनं कर्तव्यमिति ॥ ३४ ॥

संयोगो वाऽर्थापत्तेरभिधानस्य कर्मजत्वात् ॥ ३५ ॥ सि०

न चैतदस्ति, अस्विष्टकृच्छब्दकं वचनं कर्तव्यमिति । किं तर्हि । सस्विष्टकृच्छब्दकं वचनं कर्तव्यमिति । तत एतद्वर्ण्यते । गौणमिदमभिधानमिति । स्विष्टकरणात्स्विष्टकृदिति गम्यते । गम्यमाने न न्याय्यमविवक्षितं कल्पयितुम् । क्रियानिमित्तत्वमवयवशब्देभ्यो गम्यते । समुदायस्य चाग्नावप्रयोगाल्लोकेऽन्याभिधानत्वं नाध्यवसीयते। तस्मान्न सांविज्ञायिकः । एवं चेत्सस्विष्टकृच्छब्दकं वचनं कर्तव्यम् । अर्थापत्तेः । अग्नेरर्थेऽग्नीवरुणौ श्रूयेते । अग्नीवरुणौ स्विष्टकृतौ यजतीति । क्रियासंयोगित्वाच्च शक्नोति स्विष्टकृच्छब्दोऽग्नीवरुणौ वक्तुम् । तस्मात्सस्विष्टकृच्छब्दकं वचनं कर्तव्यमिति । अथ यदुक्तं, स्विष्टं कृतवति चैष शब्दः । न चाग्निः स्विष्टं कृतवानिति । अत्र ब्रूमः । मत्पक्षे भूतकालता ह्रियेत । त्वत्पक्षे सा च सोपपदश्च धात्वर्थः । अपि च ततः पूर्वान् यागानपेक्ष्य स्विष्टं कृतवानग्निः ॥ ३५॥

( अग्नीषोमीयपशौ पशुपुरोडाशाङ्गस्विष्टकृद्यागीयत्यागकाले निगमेषु च निर्गुणस्यैवाग्नेरभिधानाधिकरणम् ॥ १८ ॥ )

( १८ ) सगुणस्य+ गुणलोपे निगमेषु यावदुक्तं स्यात् ॥ ३६ ॥ पू०

अस्ति सोमे पशुरग्नीषोमीयः । तत्र श्रूयते । अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपतीति । तत्र स्विष्टकृति गुणलोपः श्रूयते, अग्निं यजतीति । तदत्र संशयः । किं याग एव स्विष्टकृतो गुणलोपः, अवशिष्टेषु निगमेषु यथाप्रकृतिभाव उत सर्व-

---

॥ ३४ ॥ ३५ ॥

---

+ ' सगुणस्य गुणलोपे निगमेषु गुणस्थाने यावदुक्तं स्यात् ' इति लिखितपुस्तकेषु पाठः ।

त्रैव गुणलोप इति। किं प्राप्तम् । स्विष्टकृतोऽग्नेः सगुणस्य गुणलोपे श्रूयमाणे ब्रूमः । यत्रैवोच्यते, गुणलोपस्तत्रैव स्यात्। यागे चोच्यते, अग्निं यजतीति। यागे गुणलोप उच्यमाने यदि सर्वनिगमेषु गुणलोपोऽध्यवसीयेत, अश्रुतं कल्प्येत । यावांश्च श्रुतस्योत्सर्गे दोषः, तावानश्रुतकल्पनायाम्। तस्माद्याग एव लोपः स्यात्, न सर्वेषु निगमेष्विति ॥ ३६ ॥

सर्वस्य वैककर्म्यात् ॥ ३७ ॥ सि०

सर्वस्य वा निगमस्थस्यापि= स्विष्टकृतोऽग्निशब्दस्य गुणो लुप्येत। कुतः। ऐककर्म्यात् । नैष स्विष्टकृद्याग एव गुणो लुप्येत। किं तर्हि। यागप्रयोगे । कथम्। अग्निं यजतीति प्रयोगवचन एष शब्दः। सर्वस्मिन् स्विष्टकृद्यागप्रयोगे लुप्येत। अन्येऽपि हि स्विष्टकृन्निगदाः स्विष्टकृद्याग एव। तस्मात्सर्वत्र लोप इति ॥ ३७ ॥

( दर्शपूर्णमासयोराग्निस्विष्टकृद्देवत्यस्य तृतीयानुयाजस्य शेषसंस्कारार्थावापिकस्विष्टकृद्देवतासंस्कारकतया संनिपत्योपकारकत्वाधिकरणम् ॥ १९ ॥ )

[ १९ ] स्विष्टकृदावापिकोऽनुयाजे स्यात्प्रयोजनवदङ्गानामर्थसंयोगात् ॥ ३८ ॥ सि०

स्तो दर्शपूर्णमासौ। तत्र स्विष्टकृदनुयाजेषु, अग्निं स्विष्टकृतं यजतीति। तत्र संदेहः। किं स्विष्टकृद्यागोऽनुयाजेष्वारादुपकारक उत संस्कारक इति। किं प्राप्तम्। आरादुपकारक इति। कुतः। एतद्धि कर्मणां प्रसिद्धं कार्यं, यदारादुपक्रिया। तथा हि भूतस्य भव्यार्थता भविष्यति। श्रुत्या च विधानम्। इतरथा भव्यस्य भूतार्थता स्यात्। वाक्येन च विधानम्। तस्मादारादुपक्रियेति।

एवं प्राप्ते, ब्रूमः। स्विष्टकृदावापिकः स्यात्, न बाह्यः। किमिदमावापिक इति। आज्यभागस्विष्टकृतावन्तराऽऽवापस्थानम्। तत्र

---

॥ ३६ ॥ ३७ ॥

---

= निगमस्यापि-पा०।

भव आवापिकः। बाहिरावापादनुयाजस्तान्त्रिकः। या तु स्विष्टकृद्देवता तत्र, सैवासौ प्रधानदेवताऽऽवापिकी। तस्मादावापिक इत्युच्यते। यदा चैवं, तदा संस्कारकर्म स्यात्। तथा प्रयोजनवद्भवति, प्रयोजनवतोऽङ्गैरुपकरोतीति। अपि च द्विविधान्यङ्गानि। आरादुपकारकाणि, सामवायिकानि च। आरादुपकारकेभ्यः सामवायिकानि गरीयांसि। तत्र हि साक्षाद्वाक्यम्। आरादुकारकेषु प्रकृतेन परोक्षेणैकवाक्यता स्यात्। तस्मात्संकारकर्मेति ॥ ३८ ॥

( याज्यापुरोनुवाक्यानुवचनयोः संस्कारकर्मत्वाधिकरणम् ॥२०॥ )

[ २० ] अन्वाहेति च शस्त्रवत्कर्म स्याच्चोदनान्तरात् ॥ ३९ ॥ पू०

दर्शपूर्णमासयोः श्रूयते, याज्यामन्वाह पुरोनुवाक्यामन्वाह, इति। तत्र संशयः। किं याज्यापुरोनुवाक्यानुवचनं प्रधानकर्म, उत संस्कारकर्मेति। किं प्राप्तम्। अन्वाहेति प्रधानकर्म स्यात्। कुतः। चोदनान्तरात्। यदि संस्कारकर्म ततो रूपादेव तयोर्वचनं प्राप्नोति। पुनरन्वाहेति वचनमनर्थकम्। प्रधानकर्मत्वे तु वक्तव्यम्। न ह्यन्यथा तस्य कर्तव्यता गम्यत इति। अतः श्रुत्या कर्तव्यतावगमात्प्रधानकर्मेति। शस्त्रवत्। यथा स्तोत्रशस्त्रे, स्तौति शंसतीति कर्तव्यतावगमात्प्रधानकर्मणी एवमिहापि द्रष्टव्यम् ॥ ३९ ॥

संस्कारो वा चोदितस्य शब्दवचनार्थत्वात् ॥ ४० ॥ सि०

संस्कारकर्म वा स्यात्। कुतः। चोदितस्यार्थस्य यः शब्दः, स तद्वचनार्थो भवति। स तस्य दृष्टोऽर्थः। तस्मिन् सत्यदृष्टकल्पनायां हेतुर्नास्ति। तस्मात्संस्कारकर्मेति ॥ ४० ॥

अवाच्यत्वान्नेति चेदिति यदुक्तं, तत्परिहर्तव्यम्—

स्याद्गुणार्थत्वात् ॥ ४१ ॥

स्यादुपपद्येत, अन्वाहेति वचनम्। कुतः। गुणार्थत्वात्। तिष्ठन्

---

॥ ३८ ॥३९ ॥४० ॥

याज्यामन्वाह, आसीनः पुरोनुवाक्यामन्वाहेति स्थानासनगुणार्थं पुनर्वचनमुपपद्यते । तस्मासंस्कारकर्मणी याज्यापुरोनुवाक्ये इति ॥ ४१ ॥

( मनोतामन्त्रस्य वायव्यादिपशावनूहाधिकरणम् ॥२१॥ )

[ २१ ] मनोतायां तु वचनादविकारः स्यात् ॥ ४२ ॥ सि०

अस्ति वायव्यः पशुः, वायव्यं श्वेतमालभेत भूतिकाम इति । अस्ति तु प्रकृतावग्नीषोमीये पशौ मनोतामन्त्रः । त्वं× ह्यग्ने प्रथमो मनोतास्याधियो अभवोदस्महोता, इति । स इह चोदकेन प्राप्यते । तत्र संदेहः । किं यथादेवतमूहितव्यो मनोतामन्त्रः, अथवाऽविकारेण प्रयोक्तव्य इति । उच्यते । ननु प्रकृतावन्यायनिगदोऽयम् । अग्नीषोमौ हि प्रकृतौ देवता । अयमप्याग्नेयः । असमवेताभिधानादविकारेण प्रयोक्तव्यः । अत्रोच्यते । सत्यमग्नीषोमौ देवता प्रकृतौ । तौ तु-अग्निश्च सोमश्च । तत्राग्निरदेवता, न त्वसमवेतः । अग्निप्रत्ययेन याऽत्र देवता सा प्रतीयते । अयमिह वायुर्देवताकार्ये श्रूयते । स देवताकार्ये श्रूयमाणोऽग्निकार्यमपि करोति देवताप्रत्ययम् । तस्मात्तदर्थापत्तेस्तद्धर्मा स्यात्* । तस्माद्यथादेवतं मनोतामन्त्रः प्रयोक्तव्य इति ।

---

॥ ४१ ॥

'यद्यप्यन्यदेवत्यः पशुः' इत्येतद्वचनं चिन्त्यते । किं प्रकृतावुपपद्यत उत विकृताविति । पूर्वपक्षः प्रकृताविति । अग्निलिङ्गा मनोता प्रकृतौ नाग्नीषोमावभिधातुं शक्नोतीत्याशङ्का भवति । तस्याश्चोत्कर्षे= प्राप्ते विकृतावनाम्नानात्तस्यामपि न भवति । श्रुतिलिङ्गाद्यभावात् । ननु लिङ्गेन प्राप्नोति । उच्यते । सामान्यसंबन्धे सति लिङ्गमवकाशं लभते+। न च सामान्यसंबन्धोऽ-

---

× ऋ० सं० ( अष्ट० ४ अ० ४ व० ३५ ) । * स्यादिति—( अ० १० पा० ३ अ० ७ सू० ३५ ) अत्रत्यन्यायेनेति शेषः । = सा चोत्कर्षे—पा० । + लभत इति—सर्वेषामेव मन्त्राणां 'सर्वा ऋचः सर्वाणि सामानि सर्वाणि यजूंषि वाचस्तोमे पारिप्लवं शंसति' इति ब्राह्मणवाक्येन वाचस्तोमे विनियोगान्मन्त्रगतस्वारसिक्या आकाङ्क्षाया निवृत्तेः पुनराकाङ्क्षोत्थापकसामान्यसंबन्धबोधकप्रमाणाभावे न लिङ्गमात्रं मन्त्रविनियोजकं संभवति । अत सामान्यसंबन्धबोधकप्रमाणसत्त्व एव लिङ्गं मन्त्रविनियोजकं, नान्यथेत्याशयः ।

एवं प्राप्ते, ब्रूमः । मनोतायां तु वचनादविकारः स्यादिति । वचनमिदं भवति । यद्यप्यन्यदेवत्यः पशुः, आग्नेय्येव मनोता कार्या, इति । किमिव वचनं न कुर्यात् । नास्ति वचनस्यातिभारः । तस्मादविकारेण मनोतामन्त्रः प्रयोक्तव्य इति ॥ ४२ ॥

( वैश्यस्तोमे पृष्ठस्तोत्रसाधनतया विहितस्य कण्वरथंतरस्य स्वयोनौ गानाधिकरणम् ॥ २२ ॥ )

[ २२ ] पृष्ठार्थेऽन्यद्रथंतरात्तद्योनिपूर्वत्वात्स्यादृचां प्रविभक्तत्वात् ॥ ४३ ॥ पू० ॥

अस्ति वैश्यस्तोमः. वैश्यो वैश्यस्तोमेन यजेतेति । तत्र श्रूयते, कण्वरथंतरं पृष्ठं भवतीति । उभयविकारः कण्वरथंतरमित्युक्तम्, अप्राकृते* तद्विकाराद्विरोधाद्व्यवतिष्ठेरन्निति । तत्र संशयः । किं

---

रिति । तस्मात्प्रकृतौ निवेशो मनोतायाः ।

न चादृष्टार्था मनोता प्रकृतौ । अग्निं तावच्छ्रुत्यैवाभिधत्ते । तत्संबद्धं सोमं लक्षणया शक्नोति वक्तुम्, उभयोर्यागसाधनत्वात् । इतरेतरयुक्तौ हि तौ देवतात्वं प्रतिपद्येते । यथा पुष्करं स्वनन्तं दृष्ट्वा ग्रहेश्वरोऽपि× स्वनन्निव लक्ष्यते, एककार्यत्वात् । एवमिहापि । इदं वचनमर्थवादत्वेन स्तुवन्मन्त्रं प्रकृतावेव निवेशयति । अथवा–उत्कर्षाशङ्कायामिदं वचनमनुत्कर्षं करोति । लक्षणया च सोमं प्रत्याययतीत्युक्तमेव पुष्करवद्ग्रहेश्वरम् +।

सिद्धान्तस्तु–एवकारकरणमनर्थकं प्रकृतौ भवति । अवधारणाभावात् । विकृतौ चावधारणं विद्यते । तत्र चोदकेन यद्देवत्यः पशुस्तद्देवत्यैव मनोता प्राप्नोत्यूहेन । एवं प्राप्तेऽवधारणं क्रियते । आग्नेय्येवेति । न चार्थवादत्वेनोपपद्यते । अन्यत्रैव मनोता श्रूयते । मनोतामन्वाहेति । अन्यत्र 'यद्यप्यन्यदेवत्यः पशुः' इति । अपि चार्थवादत्वेऽप्येवकारस्य+ पर्युदसितव्यभावो भवत्येव यथा विधौ । दशमसंबन्धो बाधसामान्येन, ऊहबाध इति ॥ ४२ ॥

---

× ग्रहेश्वर इत्येव लिखितपुस्तकेष्वपि दृश्यते, परंतु 'गजेश्वरः' इति पाठ आवश्यक इव भाति । + अर्थवादत्वेनैवकारस्य—पा० । * ( अ० ९ पा० २ अ० १६ सू० ४८ ) ।

रथंतरयोनौ बृहद्योनौ वाऽनियमेन कण्वरथंतरं गेयमुत रथंतरयोनौ, अथवा स्वयोनाविति । किं प्राप्तम् । चोदकेनानियमः । लाघवं हि तथा भवति । ततः प्रयोगप्राशुभावः ।

एवं, प्राप्ते ब्रूमः । पृष्ठार्थे यदेतदन्यद्रथंतरात्कण्वरथंतरं श्रूयते, तद्रथंतरयोनौ स्यात् । ज्योतिष्टोमपूर्वको हि वैश्यस्तोमः । ज्योतिष्टोमे रथंतरयोनौ पृष्ठं कृतम् । ननु बृहद्योनावपि तत्र कृतम् । नैवम् । ऋचां प्रविभक्तत्वात् ऋचां प्रविभाग इह गम्यते । यथा रथंतरयोनिर्भवतीति । कुतः । कण्वरथंतरे रथंतरशब्दः श्रूयते । तेन गम्यते रथंतरविशेषः कण्वरथंतरमिति । अर्थान्तरे कण्वरथंतरशब्दो भवेद्यदि, रथंतरधर्मा न भवेयुः । तेषु सत्सु यूपवदुपपद्यते । यथा, औदुम्बरो यूपो भवतीति । न ह्युदुम्बरो यूपद्रव्यं प्रकृतौ संकीर्तितम् । धर्मनिमित्तस्त्वयं शब्द उपपद्यते । एवमिहापि धर्मनिमित्तः कण्वरथंतरे रथंतरशब्दो भवति, नान्यथेति ॥ ४३ ॥

स्वयोनौ वा सर्वाख्यत्वात् ॥ ४४ ॥ सि०

न चैतदस्ति, रथंतरयोनौ गीयेतेति । किं तर्हि । स्वयोनौ । कुतः । सर्वाख्यत्वात् । सर्वविशेषणविशिष्टस्य हि रथंतरशब्दो वाचकः । प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनवतः सर्वस्य सस्तोभस्वरकालाभ्यासस्य कण्वरथंतरमित्याख्या भवति । तस्माद्योनिरपि विशेषणम् । अपि चार्थान्तरे कण्वरथंतरे रथंतरशब्दः कल्प्यः स्यात् । तस्मात्स्वयोनौ गेयमिति ॥ ४४ ॥

यूपवदिति चेत् ॥ ४५ ॥

इति चेत्पश्यसि स्वयोनौ गेयमिति, रथंतरशब्दस्तेनोपपद्यते । स हि रथंतरधर्मेषु सत्सु यूपवदुपपद्यत इति ॥ ४५ ॥

न कर्मसंयोगात् ॥ ४६ ॥

नैतदेवम् । कर्मसंयोगात्काष्ठस्य यूपता । न हि लोके यूप इति संज्ञातः कश्चिद्वृक्षोऽस्ति । यत्र ते संस्काराः स यूपः । तस्मात्,

॥ ४३ ॥ ४४ ॥ ४५ ॥

औदुम्बरो यूपो भवतीति संस्कारनिमित्तः । इह पुनरेवंविशेषणविशिष्टः कण्वरथंतरशब्दो लोक एवास्ति । नासौ कण्वानां रथंतरं कण्वरथंतरमित्येवं कृत्वोच्यते । रथंतरत्वे कण्वसंबन्धे वाऽस्य विधीयमाने वाक्यभेदः प्रसज्येत । तस्मात्संज्ञाविज्ञायिकः कण्वरथंतरशब्दः। अत एव स्वयोनौ गीयते ॥ ४६ ॥

( वैश्यस्तोमे पृष्ठस्तोत्रसाधनतया विहितस्य कण्वरथंतरस्य स्वयोन्युत्तरयोर्गानाधिकरणम् ॥ २३ ॥

[ २३ ] कार्यत्वादुत्तरयोर्यथाप्रकृति । ४७ ॥ पू०

कण्वरथंतर एव भवति संशयः । उत्तरयोर्गायतीति, किं रथंतरयोन्युत्तरयोः, बृहद्योन्युत्तरयोर्वा गेयमुत स्वयोन्युत्तरयोरिति । किं प्राप्तम् । बृहद्योन्युत्तरयोर्वा रथंतरयोन्युत्तरयोर्वेति । कुतः । चोदकानुग्रहात् । न तत्रैष दोषो भवति, स्वयोनिविशिष्टं कण्वरथंतरमिति । उत्तरयोर्हि यत्कार्यं, तत्र स्वयोनिरवश्यं हातव्या भवति । तस्मात्प्रकरणमपेक्षितव्यमिति ॥ ४७ ॥

---

भाष्यकारेण यदिदं व्याख्यानं कृतं, प्रस्तावोद्गीथादौ कण्वरथंतरशब्द इति । तदयुक्तम् । ' गीतेषु* सामाख्या ' इति कण्वरथंतरशब्देन सामोच्यते, नर्क् । प्रकृतौ चर्गक्षराणि संस्कुर्वती रथंतरगीतिः पृष्ठस्य साधनभावेनावगता । एवं बृहद्गीतिरपि । इह तु बृहद्रथंतरानुवादेनान्यद्गीत्यन्तरं विधीयते पृष्ठसाधनत्वेन । तस्माद्गीतिर्गीतेरेव कार्ये वर्तते, न ऋक्कार्ये । ऋक्च चोदकेन प्राकृती प्राप्नोति । सा न बाध्याऽङ्गभूता । वाक्यस्य तावदपदार्थः । न चापदार्थसामर्थ्याच्चोदकप्राप्ताया ऋचो बाधः। यथा धेनुशब्देन च्छागबाधः । धेनुशब्दो गोद्रव्यमन्तरेण नैव दृष्टः प्रयुज्यमानः । कण्वरथंतरगीतिस्तु ऋगन्तरेऽपि दृष्टैव प्रयुज्यमाना । न च गौणी सा गीतिरन्येन क्रियमाणा । तस्माच्चोदकेन ऋक्प्राप्नोतीति×॥ ४६ ॥ ४७ ॥

---

*( अ० २ पा० १ अ० ११ सू० ३६ ) । × प्राप्नोतीति—अतः कण्वरथंतरसाम्नः स्वयोनावेवं गानमिति सिद्धान्तो भाष्यकृद्व्याख्यानरीत्या दुःसाध इत्याशयः । कथं तर्हि सिद्धान्तः समर्थनीय इति चेत् । अयमाशयः। सत्यं, सामशब्दो गीतिमात्रवाची । तथाऽपि वैश्यस्तोमक्रमे कण्वरथंतरयोनेस्तदुत्तरयोश्चोत्तराग्रन्थे पाठात्तासामपि वैश्यस्तोमाङ्गत्वात्तगतेरौपदेशिकत्वैरातिदेशिकानामृचां बाधोपपत्तेः स्वयोनावेव गानमिति ।

समानदेवते वा तृचस्याविभागात् ॥ ४८ ॥ सि०

न चैतदस्ति, बृहत्योन्युत्तरयोः रथंतरयोन्युत्तरयोर्वा गेयमिति। किं तर्हि। स्वयोन्युत्तरयोः। कुतः। तृचशब्दात्। समानच्छन्दसि समानदेवताके चाविशेषितस्तृचशब्दो भवतीत्युक्तम्। अतः श्रुत्या चोदको बाध्यत इति स्वयोन्युत्तरयोर्गेयमिति ॥ ४८ ॥

( अग्निष्टुद्यागे स्तोत्रशस्त्रमन्त्राणां प्राकृतानामेवाविकारेण प्रयोगाधिकरणम् ॥ २४ ॥ )

( २४ ) ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वाद-विकारः स्यात् ॥ ४९ ॥ सि०

अस्ति, अग्निष्टुदेकाहः। तत्र श्रूयते, आग्नेया ग्रहा भवन्तीति। तत्र संदेहः। किं प्राकृतयोः स्तोत्रशस्त्रयोर्यथादेवतमूहः, उताविकार इति। ऊहबुद्धिं व्यावर्तयितुमिदमभिधीयते। ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात्। प्रधानकर्मत्वादिति। कस्य पुनरेषा बुद्धिः स्यात्। यं निवर्तयेत्। यो मन्दधीर्मन्यतेऽभिधानं सेत्स्यतीति। मन्दधियामपि चोपदेशः क्रियमाणः फलवान् भवति। अपि च कंचिदपेक्ष्य सर्वे मन्दधियः।

अथ तु न परितोष एवं, ततोऽन्यथा वर्ण्यते। यत्तद्वृत्तमाधिकरणं× द्वितीयेऽध्याये। तस्येदं प्रयोजनसूत्रं, ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यादिति। यदि संस्कारकर्मणी स्तोत्रशस्त्रे, किं भवति प्रयोजनम्। अग्निष्टुदेकाहे यथादेवतमूहः। अथ प्रधानकर्मणी, ततो ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यादिति ॥ ४९ ॥

---

॥ ४८ ॥ ४९ ॥

---

× (अ० २ पा० १ अ० ५)।

( चातुर्मास्येषु—अनुयाजीयदेवताप्रकाशनार्थं प्राकृतावाहन-मन्त्रस्याविकारेणैव प्रयोगाधिकरणम् ॥ २५ ॥ )

[ २५ ] उभयपानात्पृषदाज्ये दध्नः स्यादुपलक्षणं निगमेषु पातव्यस्योपलक्षणात् ॥ ५० ॥ पू०

सन्ति चातुर्मास्यानि, चातुर्मास्यैः स्वर्गकामो यजेतेति। तत्रानुयाजान् प्रकृत्य समामनन्ति, पृषदाज्येनानुयाजान् यजतीति। अस्ति तु प्रकृतावावाहनं, देवानाज्यपानावह, इति। तदिह चोदकेन प्राप्तम्। तत्र संशयः। किमविकारेणाऽऽवाहनं कर्तव्यमुतोहेनेति। यदोहेन, तदा किम्, आज्यपान् दधिपानिति कर्तव्यमुत दधिपानिति, अथवा पृषदाज्यपानिति। किं प्राप्तम्। दध्नोऽप्युपलक्षणं स्यादाज्यस्यापि। कस्मात्। उभयपानात्। उभयं हि तद्देवतामुद्दिश्य त्यज्यते। यच्च त्यज्यते, तत्पीयत इति मन्त्रेणोक्तम्। यच्च पातव्यं तदुपलक्षितं प्रकृतावाज्यपानिति। इह, आज्यस्यार्थे दधिसर्पिषी श्रूयेते। अथ पृषदाज्यं गृह्णाति, द्वयं वा इदं सर्पिश्चैव दधि च, द्वंद्वं वै मिथुनं प्रजननं, मिथुनमेवैतत्प्रजननं क्रियत इति। तुल्यं दध्याज्येनोच्चार्यते। तस्मादुभयमप्युपलक्षयितव्यं, दधि चाऽऽज्यं चेति ॥ ५० ॥

न वा पदार्थत्वाद्यज्ञपतिवत् ॥ ५१ ॥

न वैतदेवं, दध्युपलक्षयितव्यमिति। कुतः। परार्थत्वात्। परार्थं हि पातव्यं द्रव्यं, पातॄणामुपलक्षणम्। तत्राऽऽज्येन चेदुपलक्ष्यते, कृतोऽर्थ इति न पुनर्दध्नोपलक्षयितव्यम्। यज्ञपतिवत्। यथा, य इमं यज्ञमवान्ये च यज्ञपतिं वर्धानिति, यज्ञपतिर्मनुष्याणां होतॄणां प्रशंसार्थो न स्वार्थं कीर्त्यत इत्यविकारेण प्रयुज्यते। न सर्वान् यजमानान् प्रत्यादरः। एवमिहापि पातव्यं पातुर्लक्षणार्थं प्रयुज्यते, न स्वार्थम्। तत्रैकेनापि येन केनचिल्लक्षिताः पातार इति कृत्वा न द्वितीयः प्रयोक्तव्य इति ॥ ५१ ॥

---

॥ ५० ॥ ५१ ॥

स्याद्वाऽऽवाहनस्य तादर्थ्यात् ॥ ५२ ॥

स्याद्दध्न उपलक्षणम् । न यज्ञपतिवत्स्यात् । यज्ञपतिशब्दो हि न स्वार्थमुच्चार्यते= । इडास्तुत्यर्थेन स उच्यते । आवाहनं पुनः स्मरणार्थम् । तत्र पाताऽपि स्मर्तव्यः, पेयमपि । तस्माच्चोदकानुग्रहाय पेयान्तरमुपलक्षयितव्यमिति ॥ ५२ ॥

न वा संस्कारशब्दत्वात् ॥ ५३ ॥

न वा दध्युपलक्षयितव्यम् । संस्कारशब्दोऽत्र विद्यत आज्यस्य, पृषदाज्येनानुयाजान् यजतीति । पृषदाज्येन—चित्रेणेत्यर्थः । संस्कारेण हि मिश्रणे संस्कृतं चित्रमाज्यं भवति । तां च चित्रतामस्य प्रत्यक्षतो दध्युत्पादयति । तस्मात्परार्थं चित्रतासंजननार्थं न पातव्यम् । अतोनोपलक्षयितव्यामिति ॥ ५३ ॥

स्याद्वा द्रव्याभिधानात् ॥ ५४ ॥

स्याद्वा दध्युपलक्षणम् । द्रव्यं हि दधि तुल्यमाज्येन प्रधानभूतमुपदिश्यत इत्युक्तमस्माभिः । अथ पृषदाज्यं गृह्णाति, द्वयं वा इदं सर्पिश्चैव दधि च, द्वंद्वं वै मिथुनं प्रजननं, मिथुनमेवैतत्प्रजननं क्रियत इति । किं पृषदाज्यं गृह्यते, सर्पिश्चैव दधि चेति । सर्पिषा दध्ना च यागः कर्तव्य इत्यर्थः । पृषदाज्यमिति न द्रव्यान्तरमुच्यते । तस्माद्दध्युपलक्षयितव्यमिति ॥ ५४ ॥

दध्नस्तु गुणभूतत्वादाज्यपा निगमाः स्युर्गुणत्वं
श्रुतेराज्यप्रधानत्वात् ॥ ५५ ॥ सि०

न चैतदस्ति, तुल्यं दध्याज्येन, प्रधानभूतमिति । ग्रहणे हि तत्तुल्यमाज्येन, न यागे । यागो ह्याज्येन चित्रेण श्रूयते । तस्माच्छ्रुतेराज्यप्रधानत्वाद्यागं प्रति गुणभूतं दधि स्यात् । न हि ग्रहणे श्रूयमाणं यागे श्रुतं भवतीति । दधि ग्रहणे श्रूयमाणं न यागार्थं भवति । तत्र श्रुत्याऽऽज्यं करणं, दधि वाक्येनेति । किमर्थं तर्हि तत्र दधिग्रहणम् । गृह्यमाणेन प्रत्यक्षतश्चित्रमाज्यं भवतीति । तस्मादाज्यपा निगमाः स्युः । न दध्न उपलक्षणं कर्तव्यमिति ॥ ५५ ॥

---

॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥

---

= स्वार्थं उच्चार्यते—पा० ।

दधि वा स्यादप्रधानमाज्ये प्रथमान्त्य-
संयोगात् ॥ ५६ ॥

न चैतदस्ति, आज्यपा निगमा भवेयुरिति, न दध्न उपलक्षणं कर्तव्यमिति । दधिपानिरस्त्येव कर्तव्यं, दध्येवात्र प्रधानम् । कुतः । आज्ये प्रथमान्त्यसंयोगात् । प्रथमसंयोग उपस्तरणम् । अन्त्यसंयोगोऽभिघारणम् । यदि वसन्ते यजेत, द्विरुपस्तृणीयात् । सकृदभिघारयेत् । ओषधयो वै प्रियङ्गव ओषधिष्वेव पशून् प्रतिष्ठापयतीति । यदि प्रावृषि यजेत, सकृदुपस्तृणीयात, द्विरभिघारयेत् । वृष्ट्यैव पशूनभिजिघर्तीति, उपस्तरणमन्यत्र निधापयितुं क्रियते । परार्थेनैष तत्र शब्दार्थो न ग्रहणमात्रम् । ग्रहणेनान्यस्याधिकरणसंस्कारे, उपस्तृणातीति शब्दो वर्तते। तथा,अभिघारयतीति, न ग्रहणमात्रमभिघारणम् । अन्यस्याऽऽभिमुख्येनाभिघारयतीति गम्यते । सोऽन्य आज्यसंयुक्तः कथं स्यादिति । तदुपस्तरणाभिघारणशब्दाभ्यां दधिप्रधानभूतं गम्यते। आज्यमपि तस्य गुणभूतम्। तस्माद्दध्न एवोपलक्षणं कर्तव्यं, नाऽऽज्यस्येति ॥ ५६ ॥

अपि वाऽऽज्यप्रधानत्वाद्गुणार्थे व्यपदेशे भक्त्या
संस्कारशब्दः स्यात् ॥ ५७ ॥

अपि वा-नैतदेवं, दधिप्रधानं तदुपलक्षयितव्यमिति । आज्यमेव प्रधानं, तद्धि प्रयोजनवत् । यागसंबन्धात्, पृषदाज्येनानुयाजान् यजतीति । यत्तेनोपस्तीर्यते, तत्र द्रव्यं निष्पद्यते । तच्चैवावचं भवति, दधिचोपस्तीर्णम् । तत्र शब्दादाधेयस्याऽऽधारसंस्कारोऽवगम्यते दधिसंस्कारः, न तु संस्कृतस्य प्रयोजनं दध्नः । प्रत्यक्षा तु चित्रता निर्वर्त्यमाना लक्ष्यते । तया च प्रयोजनम् । पृषद्धि तदाज्यं श्रूयते । न च यागे दधि करणं भवितुमर्हति वाक्यप्राप्तम्, आज्ये श्रुतिप्राप्ते प्रत्यर्थिनि । तस्मादुपस्तरणमाज्यग्रहणार्थमेव । ततो दधिग्रहणं भविष्यतीति । अर्थादाधेयाधारसंबन्धे, उपस्तरणमिव तद्भवतीति भाक्त

---

॥ ५६ ॥

———

उपस्तृणातिः प्रयुक्तः । तथाऽभिघारयतिः । तस्मात्सकृद्द्विरित्येतस्य गुणस्यार्थे व्यपदेशो भक्त्यैष संस्कारशब्द उपस्तृणाति, अभिघारयति, ओषधिष्वेव पशून् प्रतिष्ठापयति, वृष्ट्यैव पशूनभिजिघर्तीति च । तस्मात्, आज्यपा निगमा एव भवेयुरिति ॥ ५७ ॥

अपि वाऽऽख्याविकारत्वात्तेन स्यादुपलक्षणम् ॥ ५८ ॥

अपि वेति पक्षव्यावृत्तिः । न, आज्यपा निगमा भवेयुः पृषदाज्यपानिति वक्तव्यम् । कुतः । आख्याविकार एव भवति । दधिसर्पिषोरत्र संसर्गः क्रियते । तत्र यो गुण उपजायते तद्गुणयुक्तस्य संसृष्टस्याऽऽख्याविशेषो भवति पृषदाज्यमिति । यथा, रागः खाडवः सुरा, इति । तत्र ह्युपचरितमेकं शब्दमुपलक्षयामः । उपचाराच्चाभिधानाभिधेयसंबन्धो गम्यते । तेन च यागनिर्वृत्तिः श्रूयते, पृषदाज्येनानुयाजान् यजतीति । तस्मादेवमुपलक्षयितव्यं, पृषदाज्यपानिति ॥ ५८ ॥

न वा स्याद्गुणशास्त्रत्वात् ॥ ५९ ॥

नैतदेवं स्यात् । संसृष्टस्य रागवत्पृषदाज्यशब्दो वाचकः, उपचारादिति । सत्यमुपचरितोऽयं तत्र । स तूपचारो लोकादेवावगतः । स गुण आज्ये भवतीति गम्यते । कुतः । आज्यशब्दः सर्पिषो वाचकः । पृषच्छब्दाश्चित्रस्य । तद्यथा, पृषद्रज्जुः पृषन्मणिः पृषन्मृग इति । तयोरुच्चरितयोश्चित्राज्याभिधानं गम्यते । तस्मात्तत्रैव स उपचार उपपन्नः । अतश्चाऽऽज्यस्यैवोपलक्षणं, चित्रमचित्रं वाऽऽज्यमाज्यशब्देनाभिधीयत एवेति ॥ ५९ ॥

इति श्रीशबरस्वामिविरचिते मीमांसाभाष्ये दशमाध्यायस्य चतुर्थः पादः ॥

---

॥ ५७ ॥ ५८ ॥ ५९ ॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां दशमाध्यायस्य चतुर्थः पादः ॥

अथ दशमाध्यायस्य पञ्चमः पादः ।

( विकृतावेकदेशग्रहणे यावत्संख्यमाद्यानामेव ग्रहणाधिकरणम् ॥ १ ॥ )

[ १ ] आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात् ॥ १ ॥ सि०

द्यावापृथिव्यमेककपालम् ×, आश्विनं द्विकपालं, वैष्णवं त्रिकपालमित्याद्येकदेशवचनम् । समस्तवचनमपि भवति । आग्नेयमष्टाकपालं निर्वपेदिति । तथा, द्विरात्रेण यजेत, त्रिरात्रेण यजेत, चतूरात्रेण यजेत, पञ्चरात्रेण यजेत, षड्रात्रेण यजेत, सप्तरात्रेण यजेत, अष्टरात्रेण यजेत, नवरात्रेण यजेत, दशरात्रेण यजेत, एकादशरात्रेण यजेतेत्येकदेशग्रहणम् । समस्तग्रहणमपि भवति, द्वादशाहेन प्रजाकामं याजयेत् । तथा, एकां सामिधेनीमन्वाह, तिस्रः सामिधेनीरन्वाह, इत्येकदेशग्रहणम् । समस्तग्रहणमपि भवति, पञ्चदश सामिधेनीरन्वाहेति । तदत्र संशयः । किं सर्वेष्वेवाऽऽद्योपादानम् , अन्त्यलोपश्च, उत विकल्प इति । किं प्राप्तम् । आनुपूर्व्यवतां—क्रमवतामेकदेशग्रहणं ब्रूमः । अन्त्यलोप आद्योपादानं चेति । किं कारणम् । मुख्यमाद्यं, जघन्यमन्त्यम् । मुख्यजघन्ययोरन्यतरस्मिन् लोप्तव्ये जघन्यो लुप्येत । मुख्यो ह्यनुग्रहीतव्यः । तदुक्तं, मुख्यं=वा पूर्वचोदनाल्लोकवदिति । आगमवत् । यथा, समाजेषु समासेषु च य आगन्तवो भवन्ति, ते पूर्वोपविष्टाननुपमृद्यैव निविशन्ते, एवमिहापि द्रष्टव्यम् ॥ १ ॥

लिङ्गदर्शनाच्च ॥ २ ॥

इतश्चाऽऽद्योपादानमन्त्यलोपश्चेति । कुतः । लिङ्गमप्येवं भवति । लुप्येत वा एतत्षष्ठमहो यत्पञ्चाहानुपयन्ति, लुप्येत वा एतत्षष्ठं कपालं यत्पञ्चकपालं निर्वपन्तीति षष्ठस्य लोपं दर्शयाति, न प्रथमस्य ॥ २ ॥

---

॥ १ ॥ २ ॥

---

× द्यावापृथिवीयम् क. ख. । =( अ० १२ पा० २ अ० ८ सू० २५ )।

विकल्पो वा समत्वात् ॥ ३ ॥

नैतदस्ति, आद्योपादानमिति । किं तर्हि । विकल्पः । आद्यमन्त्यं वोपादातव्यमिति । कुतः । समत्वात् । समो ह्यन्त्यलोप आद्यलोपेन । न ह्यादिलोपे श्रुतिः, नो खल्वप्यन्तलोपे । मुख्ये जघन्ये वोपादीयमाने प्राकृतमुपात्तं भवति । न हि विशेषश्रुतिरस्ति, मुख्यमुपादातव्यमिति । तस्मादनियम इति ॥ ३ ॥

क्रमादुपजनोऽन्ते स्यात् ॥ ४ ॥

अथ यदुक्तं, समाजेषु समासेषु चाऽऽगन्तुर्जनो* यथा वास्तव्याननुपमृद्यैव निविशते, एवमिहापीति । युक्तं यद्वास्तव्यैराक्रान्ते देश आगन्तुर्जनोऽसंभवादन्ते निविशते । इह त्वनाक्रान्ते चिन्त्यते, के प्रथममाक्रमेयुरिति । तेनात्र न केषांचित्क्रमो विरुद्ध इति ॥४॥

लिङ्गमविशिष्टं संख्याया हि तद्वचनम् ॥ ५ ॥

अथ यल्लिङ्गमुक्तं, लुप्येत वा एतत्षष्ठमहः, इति षष्ठस्य लोपं दर्शयति, नाऽऽद्यस्येति । तदविशिष्टं विकल्पेऽपि । संख्याया हि, षष्ठमिति पूरणवचनं भवति । यस्मिन्न् कस्मिंश्चिदपगते येन प्रथमेन मध्येनान्त्येन वा संख्या पूर्यते, तत्षष्ठम् । यथा षष्ठो भ्रातॄणां न दृश्यत इति, कनीयसि ज्येष्ठे मध्ये वाऽदृश्यमाने भवति । एवमिहापि द्रष्टव्यम् ॥ ५ ॥

आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वाद्वचनादन्त्यविधिः स्यात् ॥ ६ ॥

वाशब्दः पक्षं व्यावर्तयति । आदितः प्रवृत्तिर्भवितुमर्हति । कुतः । आरम्भस्य तदादित्वात् । आरम्भो हि तेषामानुपूर्व्यवतामादितो न्याय्यः । पूर्वेण ह्युपक्रान्तो द्वितीयादिः कर्तव्यः । स इह प्रथममेव क्रियमाणोऽनुपक्रान्तः केनचित्क्रियेत । पूर्वो हि पदार्थः क्रियमाण उत्तरं पदार्थमभिनियच्छति । यः पुनराद्यः पदार्थः सोऽनुपक्रान्त

---

॥ ३ ॥ ४ ॥ ५ ॥

---

* वाऽऽगन्तुः—क. ।

एवान्येन कर्तव्यः। तस्मिन्नेव प्रथममुपादीयमाने नानुपक्रमदोषो भविष्यति। तस्मात्सर्वत्रैवं, ये क्रमवन्त आरब्धव्याः, ते प्रथमादुपक्रमितव्या इति।

अपि च, प्रथमस्य निमित्तमुपसंप्राप्तम्। न च विरोधोऽस्ति तदादिषु कृतेषु। अन्त्यानां निमित्तेऽपि* प्राप्ते, परिपूर्णत्वात्पदार्थानां लोपो न विरुद्धः। तस्मादाद्योपादानमन्त्यलोपश्चेति। अथैवं न्यायेन प्राप्ते यत्र वचनं भवति, तत्रापनीय मध्यममपि विधिर्भवति। यथा, अपबर्हिषः प्रयाजान् यजति। अपबर्हिषावनुयाजौ यजतीति। विना वचनेनान्त्यलोप एव न्याय्य इति ॥ ६ ॥

[ एकत्रिके क्रतौ माध्यंदिनपवमानस्तोत्रे, आद्य एव तृचे गानाधिकरणम् ॥ २ ॥ ]

[ २ ] एकत्रिके तृचादिषु माध्यंदिने छन्दसां श्रुतिभूतत्वात् ॥ ७ ॥ पू०

अस्त्येकत्रिकः क्रतुः, अथैष एकत्रिकः। तस्यैकस्यां बहिष्पवमानं, तिसृषु होतुराज्यम्, एकस्यां मैत्रावरुणस्य, तिसृषु ब्राह्मणाच्छंसिनः, एकस्यामच्छावाकस्य, तिसृषु माध्यंदिनः पवमान इति। तदत्र माध्यंदिने पवमाने संशयः। किं तृचाद्यासु गानं कर्तव्यमुताऽऽद्य तृच इति। किं प्राप्तम्। एकत्रिके क्रतौ माध्यंदिने पवमाने तृचाद्यासु स्तोत्रियासु गानं स्यात्। कुतः। छन्दसां श्रुतिभूतत्वात्। श्रुतिभूतानि हि त्रीणि छन्दांसि प्रकृतौ, त्रिच्छन्दा आवापो माध्यंदिनः पवमानः पञ्चसामेति। तानीह चोदकेनैव प्राप्तानि। तान्येवमुपसंहर्तुं शक्यन्ते, यदि तृचाद्यासु गानम्। तस्मात्तृचाद्यास्विति ॥ ७ ॥

॥ ६ ॥ ७ ॥

---

* निमित्तेऽपरिपूर्ण-ख.।

आदितो वा तन्न्यायत्वादितरस्याऽऽनुमानि-
कत्वात् ॥ ८ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । आद्ये तृचे गानं कर्तव्यम् । एष हि न्यायः, क्रम एवमनुगृहीतो भवति । इतरस्य छन्दोनुग्रहस्य प्राकृतत्वादिहाऽऽनुमानिकत्वं भवति । आह । ननु क्रमोऽपि प्राकृतत्वादानुमानिकः । उच्यते । उभयोरानुमानिकयोः क्रमानुग्रहो ज्यायान् भवति । कथम् । तत्र हि प्रथमे गायत्रे छन्दस्यभिनिर्वृत्ते द्वितीया स्तोत्रीया प्रारब्धा । प्रथमारम्भेण हि पदार्थः क्रियमाण उत्तरं पदार्थमभिनियच्छति । अप्रवृत्ते कस्मिंश्चित्पदार्थे सर्वं वैकल्पिकं प्राप्नोति न प्रवृत्ते । प्रवृत्ते हि ततोऽन्यदशक्तत्वादप्राप्तम् । प्रारब्धस्य च क्रिया प्राप्ता । तस्यामवस्थायामुभयप्राप्त्यभावादविकल्पः । अत्र किं तदेव प्रारब्धं परिसमाप्यतामथान्यदप्राप्तमारभ्यतामिति । तत्परिसमापयञ्छ्रुतं करोति, परित्यजञ्छ्रुतं जहातीति प्रारब्धं परिसमापनीयं गम्यते । अथेदानीं तस्मिन्निर्वृत्ते वैकल्पिकं कृतार्थत्वादप्राप्तम् । तस्मात्क्रमानुग्रहो न्याय्यो न छन्दोनुग्रह इति ।

---

ननु प्रकृतौ क्रम आनुमानिकः । त्रिच्छन्दस्त्वं तु 'त्रिच्छन्दा आवापो माध्यंदिनः पवमानः' इति वचनेन प्रतीयते । चोदकेन प्राप्नोति । तस्मादानुमानिकत्वात्क्रमबाधश्छन्दसामनुग्रह इति । उच्यते । युक्तं प्रकृतौ बलाबलम् । तत्र प्रत्यक्षाणि शास्त्राणि । इह पुनरुपकारा अतिदिश्यन्ते, न शास्त्राणि । तेन विकृतौ श्रुतिप्राप्तस्य समाख्याप्राप्तस्य च बलाबलशङ्कैव नास्ति । अनाम्नानात् +। असत्यां बलाबलशङ्कायामुभयं कर्तव्यं, यदि विरोधो नास्ति । इह तु विरोधः । तत्र च्छन्दसामनुग्रहः किमुत क्रमस्येति= । क्रमस्येति ब्रूमः ।

अत्र ग्रन्थः । अप्रवृत्ते कस्मिंश्चित्पदार्थे सर्वं वैकल्पिकं प्राप्नोति, न प्रवृत्ते । वैकल्पिकानां हि सर्वेषां युगपत्प्राप्तिः । यावदन्यतमाध्यवसायो न भवति तावत्तुल्यप्राप्तिः । अध्यवसाने कृते तदेवानुष्ठेयमितरेषां निवृत्तिः । तदुक्तं,

---

+ अनाम्नानादिति—इह विकृतौ प्रमाणयोरिति शेषः । = क्रमस्येतिचिन्तायामिति शेषः ।

तत्राऽऽह । ननु गायत्रेण छन्दसा पूर्वं क्रियमाणे नोत्तरकालं त्रैष्टुभमप्युपक्रान्तं भवति । उच्यते । सत्यमुपक्रान्तं भवति, न तु द्वितीयां तृतीयामकृत्वा । अथ तयोः कृतयोः पूर्णे तृचे नैव छन्दसा+ प्रयोजनम् । तस्मात्प्रत्यक्षत्वात्पूर्वया स्तोत्रीययोत्तरयोः स्तोत्रीययोः क्रमस्य, क्रमानुग्रहो ज्यायान्न छन्दोनुग्रह इति ॥ ८ ॥

यथानिवेशं च प्रकृतिवत्संख्यामात्रविकारत्वात् ॥ ९ ॥

इतश्चाऽऽद्ये तृचे गेयमिति । कुतः । यथानिवेशं प्रकृतिवच्छब्देन प्राप्तासु स्तोत्रीयासु, तिसृषु माध्यंदिन इति संख्यामात्रस्य प्रत्याम्नायो न क्रमस्य । आह । ननु यथा क्रमस्य न प्रत्याम्नाय एवं छन्दसामपि । उच्यते । सत्यमेवमेतत् । मुख्यस्तु क्रमानुग्रहः, जघन्यश्छन्दसाम् । तस्मादप्याद्ये तृचे गातव्यमिति ॥ ९ ॥

[ एकत्रिके क्रतावेकस्या एव ऋचस्त्रिरभ्यासेन त्रिकस्तोमकधूर्गानानुष्ठानाधिकरणम् ॥ ३ ॥ ]

[ ३ ] त्रिकस्तृचे धुर्ये स्यात् ॥ १० ॥ पू०

अस्त्येकत्रिकः क्रतुः, अथैष एकत्रिकः । तस्यैकस्यां बहिष्पवमानं, तिसृषु होतुराज्यम् । एकस्यां मैत्रावरुणस्य, तिसृषु ब्राह्मणाच्छंसिनः, एकस्यामच्छावाकस्य, तिसृषु माध्यंदिनः पवमान इति । सन्ति तु धुरि सामानि । तेषु संशयः । किं तृचे गेयानि, उतैकस्यामृचीति । किं प्राप्तम् । त्रिकः स्तोमस्तृचे स्याद् धुरि सामसु । एवं तृचप्रापकश्चोदकोऽनुग्रहीष्यते । तस्मात्तृचे गेयमिति ॥ १० ॥

एकस्यां वा स्तोमस्याऽऽवृत्तिधर्मत्वात् ॥ ११ ॥ सि०

एकस्यां वा ऋचि गेयं, स्तोमस्य हि तत्राऽऽवृत्तिधर्मता भवति।

---

निर्देशात्तु* विकल्पे यत्प्रवृत्तम् ' इति । प्रवृत्ते च ततोऽन्यन्न भवति । अशक्तत्वात्× । अत्र च पूर्वेण मन्त्रेण गायत्री प्राप्यत इत्युभयसिद्धम् । सा च

---

॥ ८ ॥ ९ ॥ १० ॥

---

+ छन्दसां–क० पु० । * ( अ० ६ पा० ३ अ० १२ सू० २८ ) । × अनुक्तत्वात्–घ० पु० ।

वचनप्रामाण्यात् । इदं भवति वचनम् , आवृत्तं धूर्षु स्तुवते, पुनरावृत्तं पृष्ठैरुपातिष्ठत इति । किमिव वचनं न कुर्यात् । तस्माद् धुरि सामस्वेकस्यामृचि गेयमिति ॥ ११ ॥

( द्विरात्राद्यहर्गणेषु द्वादशाहिकदशाहधर्माणामनुष्ठानाधिकरणम् ॥४॥]

[ ४ ] चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमः स्यात् ॥ १२ ॥ सि०

सन्ति द्विरात्रादयोऽहर्गणाः, द्विरात्रेण यजेतेत्येवमादयः । तेषु किं कृत्स्नस्य द्वादशाहस्य विध्यन्तः प्रवर्तेत उत प्रायणीयोदयनीयौ वर्जयित्वा दशरात्रस्येति । किं प्राप्तम् । अविशेषात्कृत्स्नस्येति । एवं प्राप्ते, ब्रूमः ।

चोदनासु तासु प्रायणीयोदयनीययोः पूर्वत्वेनासंभवाद्दशरात्रस्य विध्यन्तः प्रवर्तते । केन हेतुना । लिङ्गेन विध्यन्तो नियम्येत । किं लिङ्गं भवति । एवमाह—यत्प्रथमं तद्द्वितीयं, यद्द्वितीयं तत्तृतीयं, जगतीमन्तर्गच्छतीति । एवं ज्ञापयति, यत्प्रथमं द्विरात्रस्य, तद्द्वितीयं द्वादशाहस्य गायत्रम् । यद् द्वितीयं द्विरात्रस्य, तत्तृतीयं त्रैष्टुभम्* । जगतीमन्तर्गच्छतीति षडहतृतीयं जागतमहरन्तरीयमाणं दर्शयन् दशरात्रस्य प्रवृत्तिं दर्शयति । यत्प्रथमामिति द्विरात्रस्य वादः, प्रकरणात् । तत्तृतीयामिति द्वादशाहस्य, द्विरात्रे तृतीयाभावात् । अपि चेदमपरं लिङ्गं, गायत्रं प्रथममहस्त्रैष्टुभं द्वितीयं जगतीमन्तर्गच्छतीति, अन्तराये षडहतृतीयं जागतं दर्शयति । तस्माद्दशरात्रस्य प्रवृत्तिः ॥१२॥

प्राप्तिस्तु रात्रिशब्दसंबन्धात् ॥ १३ ॥

द्विरात्रेण यजेतेति रात्रशब्दः । इहापि दशरात्र इति स एव । तदेतस्मात्प्रकृतिलिङ्गाद्दशरात्रस्य विध्यन्त इति प्राप्ते लिङ्गदर्शनम् ॥ १३ ॥

---

गायत्री द्वितीयां गायत्रीमेव पर्युपस्थापयति, न द्वितीयं च्छन्दः । पर्युपस्थापकाभावात् । तस्मात्क्रमानुग्रह इति ॥ ११ ॥ १२ ॥ १३ ॥

---

* त्रैष्टुभं जगती—मु० ।

[ चयनप्रकरणे पठ्यमानानां वपनार्थानामाधूननार्थानां च मन्त्राणां श्रुतसंख्यासंपत्तयेऽनियमेनोपादानाधिकरणम् ॥ ५ ॥

( ५ ) अपूर्वासु तु संख्यासु विकल्पः स्यात्सर्वासामर्थवत्त्वात् ॥ १४ ॥ सि०

अष्टौ त्वाधूननार्था मन्त्राः, वेशीनां त्वा पत्मन्नाधूनोमीत्येवमादयः । तान् प्रकृत्य श्रूयते, सप्तभिराधूनोतीति । तथा, अष्टौ वपनार्था मन्त्राः । या× ओषधीरित्येवमादयः । तानपि प्रकृत्य श्रूयते, चतुर्दशभिर्वपतीति । तत्र संशयः । किमाद्योपादानमुतानियम इति । किं प्राप्तम् । आद्योपादानम् । आदितो* वा तन्न्यायत्वादिति ।

एवं प्राप्ते, ब्रूमः । अपूर्वासु तु संख्यास्वप्रकृतिपूर्विकासु श्रूयमाणासु ब्रूमः । विकल्पः स्यात् । एवं सर्वासां संख्यानामर्थवत्त्वं भविष्यति । आद्योपादाने हि केषांचिन्मन्त्राणामुत्पत्तिरनार्थिकैव स्यात् । गम्यते च ताभिर्वपनम् । प्रकरणात् । या हि प्रकृतिपूर्विका भवन्ति, तासां प्राकृतप्रयोगेणार्थवत्ता । आनर्थक्येन च कारणेन मुख्यातिक्रमः संख्यायाः ॥ १४ ॥

( विवृद्धस्तोमके क्रतौ श्रुतसंख्यासंपत्तये सामान्तरागमाधिकरणम् ॥ ६ ॥

[ ६ ] स्तोमविवृद्धौ प्राकृतानामभ्यासेन संख्यापूरणमविकारात्संख्यायां गुणशब्दत्वादन्यस्य चाश्रुतित्वात् ॥ १५ ॥ पू०

---

प्रकरणे मन्त्रा आम्नायन्ते । ते च प्रकरणात्सर्वे प्रयोक्तव्या इति । श्रुत्या+ चतुर्दशानां प्रयोग उच्यते । स चानियमेनापि घटते । क्रमस्तु नियतक्रमानेव प्रापयति । प्रकरणे तु सर्वे प्रयोक्तव्याः । ननु क्रमोऽपि प्रकरणं नैव= बाधते । प्रकृतग्रहणात् । उच्यते । सर्वविषयतां प्रकरणेनावगतां बाधते । सा च क्रमानुग्रहे सर्वविषयता न घटते । तस्मात्प्रकरणानुग्रहः । अतो विकल्पः ॥ १४ ॥

---

× 'या जाता ओषधयः' इति मन्त्रानुपूर्वी शास्त्रदीपिकादिग्रन्थेषु दृश्यते । * ( अ० १० पा० ५ अ० २ सू० ८ ) । + श्रुत्येति–' चतुर्दशभिर्वपति ' इति संख्यानाधकश्रुत्येत्यर्थः । = नैव बाधत इति–क्रमप्रकरणयोर्विरोधो नास्तीत्यभिप्रायः ।

इह विवृद्धस्तोमकाः क्रतव उदाहरणम् । एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकाममिति। तत्रायं संशयः । किं प्राकृतानां साम्नामभ्यासेन संख्या पूरयितव्या, उताप्राकृतानामागमेनेति । किं प्राप्तम् । अनियमः । अविशेषादिति प्राप्ते, ब्रूमः स्तोमविवृद्धावभ्यासेन संख्या पूर्यते* । एवं हि प्रकृतग्रहणम् । इतरथाऽप्रकृतक्रियेति । संख्या हि प्राकृतानां प्रधानभूतानां साम्नां गुणभावेनोच्यते, न प्राधान्येन । न चान्यत्सामद्रव्यं श्रुत्या विधीयते । यावांश्च श्रुतस्यार्थस्योत्सर्गे दोषस्तावानश्रुतकल्पनायाम् । तस्मादभ्यसितव्यानि प्राकृतानि सामानि । यथा धुरि सामानीति ॥ १५ ॥

आगमेन वाऽभ्यासस्याश्रुतित्वात् ॥ १६ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । अप्राकृतानां साम्नामागमेन संख्या पूरयितव्येति । कुतः । अभ्यासो न हि श्रूयते । एतावच्छ्रूयते, एकविंशेनातिरात्रेण प्रजाकामं याजयेदिति । यावांश्च श्रुतस्योत्सर्गे दोषस्तावानश्रुतकल्पनायाम् । नन्वागमोऽपि न श्रूयते । उच्यते । उभयस्मिन्नश्रूयमाण आगमो न्याय्यः । एवमागमपूरिता संख्या समञ्जसा भविष्यति । इतरथाऽभ्यासपूरिताऽसमञ्जसा स्यात् । तस्मादागमेन पूरयितव्येति ॥ १६ ॥

संख्यायाश्च पृथक्त्वनिवेशात् ॥ १७ ॥

इतश्चाऽऽगमेनेति । कुतः । पृथक्त्वनिवेशिनी हि संख्या । यथा, अष्टौ घटा इति । अभ्यासेनापृथक् × स्यात् । तस्मादागमेन

---

पूर्वपक्षस्तु—प्राकृतस्य संख्याविधानं, संख्येयस्याबाधितत्वात् । तस्मात्तेषामभ्यासः । यथा+ प्रयाजानां संख्याविधानम् । संख्येयास्तु त एव ॥ १५ ॥

———

सिद्धान्तस्तु—पृथक्त्वनिवेशः संख्याया न्याय्यः । यत्र × वचनं नास्ति ।

---

* पूर्यंत—ख० । × अभ्याचे य पृथक्—क. । + यथेति—यथा पशौ 'एकादश प्रयाजान् यजति' इत्यनेन प्राकृतप्रयाजानां संख्याविधाने तेषामभ्यासः, तद्वत्प्रकृतेऽपीत्यर्थः । ÷ यत्र वचनं नास्तीति—यत्र विशिष्याभ्यासस्य वचनं—उपादानं नास्तीत्यर्थः ।

पूरयितव्येति ॥ १७ ॥

पराक्शब्दत्वात् ॥ १८ ॥

इतश्चाऽऽगमेनेति। कुतः। पराक्शब्दो हि भवति। पराग् बहिष्पवमानेन स्तुवन्तीति। स चानभ्यासस्य वाचकः यथा, पराचीः सामिधेनीरन्वाहेति, अनभ्यस्ता इति गम्यते। तस्मादप्यागमः ॥ १८ ॥

उक्ताविकाराच्च ॥ १९ ॥

इतश्चाऽऽगमः। एवमुक्तस्याविकारो भवति। किमिदमविकार इति। अपुनर्वचनम्। तत्र जामितादोषो न भविष्यति। अभ्यासे हि स स्यात्। जामि वा एतद्यज्ञस्य क्रियते यदेकं भूयः क्रियेतेति॥१९॥

अश्रुतित्वान्नेति चेत् ॥ २० ॥

इति चेत्, इति पुनर्यदुक्तमागमोऽपि नैव श्रूयत इति। तत्परिहर्तव्यम् ॥ २० ॥

स्यादर्थचोदितानां परिमाणशास्त्रम् ॥ २१ ॥

अर्थेन सामानि चोद्यन्ते। कतमेनार्थेन। एकविंशेनातिरात्रेण प्रजाकामं याजयेदित्येवमादीनां वाक्यानामर्थेनेति। न ह्यनागम्यमानेषु सामस्वेताः संख्याः सामञ्जस्येन संभवन्ति। तस्मादर्थचोदितानामिदं परिमाणशासनं कृत्वा कृतार्थः शब्द एकविंशेनातिरात्रेण प्रजाकामं याजयेदिति, अर्थप्राप्तमागमं न शक्नोति वारयितुम्। तस्मादागमेन पूरणमिति ॥ २१ ॥

---

वचनेन तु बाध्यते=। यत्र संख्येयानुवादेन संख्याविधानं, यथा 'एकादश प्रयाजान्' इति। तत्र हि प्रयाजा वाक्येनोपात्ताः। तत्र संख्याऽभ्यस्यते+। उपात्तत्वात्संख्येयस्य। इह तु नोपात्तं संख्येयं वाक्येन, यथा प्रयाजेषु। तस्मादत्र पृथक्त्वनिवेश एव, नाभ्यासः ॥ १६ ॥ [ १७ ॥ १८ ॥ १९ ॥ २० ॥ ॥ २१ ॥

---

= बाध्यत इति—यथा 'आवृत्तं धूर्षु स्तुवते' इति शेषः। + अभ्यस्यते—अभ्यासेन पूर्यत इत्यर्थः।

आवापवचनं चाभ्यासे नोपपद्यते ॥ २२ ॥

इतश्चाऽऽगम इति पश्यामः। आवापवचनं हि भवति। त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्। अत्र ह्येवाऽऽवपन्ति, अत एवोद्वपन्तीति। एतदभ्यासे नावकल्पते। तस्मादप्यागम इति ॥२२॥

साम्नां चोत्पत्तिसामर्थ्यात् ॥ २३ ॥

इतश्चाऽऽगमः। कुतः। साम्नां ह्येवमुत्पत्तिरर्थवती भवति—

दश सामसहस्राणि शतानि च चतुर्दश।
साङ्गानि सरहस्यानि यानि गायन्ति सामगाः॥
अशीतिशतमाग्नेयं पावमानं चतुःशतम्।
ऐन्द्रं स्यात्सप्तविंशानि× यानि गायन्ति सामगाः॥ इति।

इतरथैषां साम्नामुत्पत्तिरनर्थिका स्यात्। तस्मादप्यागम इति ॥ २३ ॥

धुर्येष्वपीति चेत् ॥ २४ ॥

अथ यदुपवर्णितं, यथा धुरि सामस्विति। तत्परिहर्तव्यम् ॥२४॥

नाऽऽवृत्तिधर्मत्वात् ॥ २५ ॥

नैतदेवं युक्तम्। धुरि सामस्वावृत्तिधर्मकाणि हि तानि। वचनप्रामाण्यात्। इदं तत्र वचनम्। आवृत्तं धूर्षु स्तुवते, पुनरावृत्तं पृष्ठैरुपतिष्ठत इति। वचनात्तत्र क्रियते। तद्वदिह वचनं नास्ति। तस्माद्विषममेतदुपवर्णनम्। अत्राऽऽगमेन संख्या पूरयितव्येति सम्यगेतदिति ॥ २५ ॥

[ विवृद्धस्तोमके क्रतौ बहिष्पवमाने साम्नामभ्यासाधिकरणम् ॥७॥ ]

[ ७ ] बहिष्पवमाने तु ऋगागमः सामैकत्वात् ॥२६॥ सि०

विवृद्धस्तोमकेषु क्रतुषु संशयः। बहिष्पवमाने किं साम्नामागमोऽभ्यास इति। पूर्वेण न्यायेनाऽऽगम इति। एवं प्राप्ते, ब्रूमः। बहिष्पवमाने तु नैवम्। ऋगागमस्तत्रेति। कुतः। सामैकत्वात्। क-

---

॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

---

× षड्विंशानि-क०।

थम्। यदुत्तरयोः पवमानयोस्तृचाय तृचाय हिंकरोति। अथ कस्माद्बहिष्पवमाने सकृदेव हिंकरोतीति। एकं हि तत्र सामेति ब्रूयात्। स्वारमेव× गायत्रमिति वचनात्सामैकत्वे ज्ञात ऋगागमेन संख्या पूरयितव्येति। सामाभ्यसितव्यामिति *॥ २६॥

[ सामिधेनीविवृद्धौ प्रथमोत्तमे त्रिरभ्यस्यावशिष्टानामागमेन संख्यापूरणाधिकरणम्॥ ८॥ ]

(८) अभ्यासेन तु संख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात्॥ २७॥ पू०

स्तो दर्शपूर्णमासौ। तत्र काम्याः सामिधेनीकल्पाः। एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य। चतुर्विंशतिमनुब्रूयाद्ब्रह्मवर्चसकामस्य। एकविंशतिं चानुब्रूयादन्नकामस्य, द्वाविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य। षड्विंशतिमनुब्रूयात्पशुकामस्येत्येवमादयः। तत्रायमर्थः सांशयिकः। किं सामिधेनीष्वागमेन संख्या पूरयितव्या, उताभ्यासेन, उत यावदुक्तमभ्यस्य शेषमागमेनेति। किं प्राप्तम्। पूर्वेण न्यायेनाऽऽगम इति। अपि चाविशेषोऽर्थः। अभ्यासेन हि पूर्यमाणा न सामञ्जस्येन स्यात्। तस्मादागम इति। एवं प्राप्ते ब्रूमः।

अभ्यासेन तु संख्यापूरणमिति। तु शब्दः पक्षव्यावर्तकः। नाऽऽगमः। किं तर्हि। अभ्यासः कुतः। अभ्यासप्रकृतित्वात्। प्रकृतावभ्यासेन संख्या पूरिता, त्रिः प्रथमामन्वाह त्रिरुत्तमामिति। कथम्। पञ्चदश सामिधेन्य इति श्रुतिः। एकादश च समाम्नाताः। तत्राभ्यासेनाऽऽगमेन वा संख्यायां पूरयितव्यायामभ्यास उक्तः। त्रिः प्रथमामन्वाह, त्रिरुत्तमामिति। अनेन नियमेन प्रथमोत्तमयोरभ्यासः कर्तव्य इति। यावत्कृत्वस्तयोरभ्यासे क्रियमाणे पञ्चदशसंख्या पूर्यते तावत्कृत्वोऽऽभ्यसितव्यामित्येतदभिप्रायं त्रित्वम्। तथा हि दृष्टार्थता। त्रिसंख्याभिप्रायेऽदृष्टं कल्प्यं स्यात्। तस्मादिहापि तत्प्रकृतित्वाद्याव-

॥ २६॥

—

× 'स्वरसामैव गायति' इत्येवं भाट्टदीपिकादिधृतः पाठः। * सामाप्यभ्यसि—ख०।

त्कृत्वोऽभ्यस्यमानयोर्यथोदिता संख्या पूर्यते तावत्कृत्वोऽभ्यासितव्यमिति ॥ २७ ॥

अविशेषान्नेति चेत् ॥ २८ ॥

इति यदुक्तं तत्परिहर्तव्यम् ॥ २८ ॥

स्या द्धर्मत्वात्प्रकृतिवदभ्यस्येताऽऽसंख्यापूरणात् ॥ २९ ॥

स्यादभ्यासः । कुतः । प्रकृतिधर्मत्वं हि विकृतेः । तस्मादासंख्यापूरणादभ्यासितव्यम् । एवं प्रकृतिवत्कृतं भविष्यति । चोदकानुरोधेनाभ्याससामञ्जस्यमभ्युपगन्तव्यम् । तस्मादभ्यास इति ॥२९॥

यावदुक्तं वा कृतपरिमाणत्वात् ॥ ३० ॥ सि०

वाशब्दः पक्षं व्यावर्तयाति । नैवमासंख्यापूरणात्प्रथमोत्तमे अभ्यासितव्ये इति । यावदुक्तमभ्यस्यावशिष्टानामागमेन पूरयितव्या संख्येति । कुतः । कृतपरिमाणत्वादभ्यासस्य । कृतं ह्यभ्यासस्य परिमाणम् । त्रिः प्रथमामन्वाह, त्रिरुत्तमामिति । त्रिसंख्या चाभ्यासेन विवक्षिता, न पूरणी संख्या। तथा श्रुतिः परिगृहीता स्यात्। इतरथा लक्षणा ।

अथ यदुक्तं दृष्टार्थता चैवं भवतीति । नैतदेवम् । आदर्तव्यो हि त्रित्वानुरोधः । द्विचतुष्केणापि हि संख्या पूर्यते । तथाऽपि प्रथमोत्तमयोस्त्रिरभ्यासोऽनुष्ठेयः । तेन संख्या पूरयितव्येति । इहापि तेनैवाभ्यासेन संख्या पूर्यते । भवति हि सोऽप्यत्र संख्यापूरणः । प्र०तौ प्रथमोत्तमे च त्रिरभ्यस्ते । संख्या च पूरिता । इहापि तद्वदेव कर्तव्यम् । प्रथमोत्तमे च त्रिरभ्यसितव्ये । संख्या च पूरयितव्या । न प्रकृतावेष शब्दार्थो गम्यते, अनेनाभ्यासेन संख्या पूरयितव्येति । अभ्यासः कर्तव्य इति वचनादवगम्यते । संख्या पूरयितव्येति सामर्थ्यात् । सा च प्रकृतावर्थादनेन पूरिता । यश्चार्थात्कृतो न स चोदनार्थः । तस्मान्नानेनाभ्यासेन संख्या पूरयितव्येति चोदक आह । एवं चेद्यावदुक्तमभ्यस्यावशिष्टानामागम इति ॥ ३० ॥

---

॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

अधिकानां च दर्शनात् ॥ ३१ ॥

इतश्चाऽऽगम इति । अधिकदर्शनं हि भवति । न जगत्या परिदध्यात् । यज्जगत्या परिदध्यात्, तच्छन्दांसि गमयेत् । त्रिष्टुभा परिदधातीति । अभ्यासे च जगतीपरिधानाशङ्का नावकल्पते । तस्मादप्यागम इति ॥ ३१ ॥

कर्मस्वपीति चेत् ॥ ३२ ॥

इति चेत्पश्यसि, यावदुक्तमभ्यस्याधिका आगमयेदिति, धुरि सामकर्मस्वप्येवमेव स्यादिति ॥ ३२ ॥

न चोदितत्वात् ॥ ३३ ॥

नैतदेवं, धुरि सामकर्मसु युक्तम् । चोदितस्तत्राभ्यासः । आवृत्तं धूर्षु स्तुवते, पुनरावृत्तं पृष्ठैरुपतिष्ठत इति । इह तद्वचनं नास्ति । तस्माद्यावदुक्तमभ्यस्यावशिष्टानामागमेन संख्या पूरयितव्येति ॥३३॥

[ षोडशिनो ज्योतिष्टोमाङ्गत्वाधिकरणम् ॥ ९ ॥ ]

[ ९ ] षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात्
॥ ३४ ॥ पू०

अस्ति षोडशी ज्योतिष्टोमं प्रकृत्याऽऽम्नातः—य एवं विद्वानेतं षोडशिनं गृह्णाति, भवत्यात्मना पराऽस्य भ्रातृव्यो भवतीति । तत्र संशयः । किमेष प्राकृतो वैकृत इति । कथं* प्राकृतः । ज्योतिष्टोमं प्रकृत्याऽऽम्नानात् । वैकृतो विकृतौ वचनात्, मध्यमेऽहंस्त्रिरात्रस्य गृह्यत इति । प्रकृतावपि वचनमस्त्येवेत्याशङ्क्य, अग्निष्टोमे राजन्यस्य गृह्णीयादतिरात्रे ब्राह्मणस्येति विकृतावपि वचनसामर्थ्यात्, विकृतावतिरात्रे स्यादित्याशङ्क्यते । प्रकृतावाम्नानात्प्रकृतौ चातिरात्रस्य भावात्प्राकृत इत्याशङ्का । तस्मात्संशयः ।

किं प्राप्तम् । षोडशिनो वैकृतत्वं स्यात् । कुतः । तत्र कृत्स्नविधानात् । विकृतावसौ कृत्स्नो विधीयते । कथम् । य एवं विद्वा-

॥ ३१ ॥ ३२ ॥ ३३ ॥

---

* कथम्—मु० ।

नेतं षोडशिनं गृह्णाति, इत्यभिधाय मध्यमेऽहंस्त्रिरात्रस्य गृह्यत इति विधीयते। प्रकरणाच्च वाक्यं बलीयः। एवं वाक्येन प्रकरणे बाधिते, अतिरात्रे ब्राह्मणस्येति वचनं वैकृतेऽतिरात्र इति गम्यते। तेन यद्यपि ज्योतिष्टोमं प्रकृत्य विधानाद्विकृतावसौ न कृत्स्न आम्नातः, तथाऽपि कृत्स्न एव विकृतौ विहितो भवति। तस्माद्विकृतिषु परिगणितासु षोडशी ग्रहीतव्यो न प्रकृताविति ॥ ३४ ॥

प्रकृतौ चाभावदर्शनात् ॥ ३५ ॥

इतश्च वैकृत इति। कुतः। प्रकृतावभावो दृश्यते। कथम्। द्वे संस्तुतानां विराजमतिरिच्येते इति, अभावे षोडशिनो द्वे स्तोत्रीये विराजमतिरिच्येते इति वर्णितं द्वितीयेऽध्याये*। तस्मादपि वैकृतः षोडशीति ॥ ३५ ॥

अयज्ञवचनाच्च ॥ ३६ ॥

इतश्च वैकृतः स्यात्। एवं हि भवति वचनम्। न षोडशी नाम यज्ञोस्तीत्याहुरिति। न तावन्नास्ति षोडशी। ज्योतिष्टोमे प्रकृताविदं भवति वचनम्। यदि ज्योतिष्टोमे नास्ति, एवमुपपद्यते। तस्मादपि वैकृत इति गम्यते ॥ ३६ ॥

प्रकृतौ वा शिष्टत्वात् ॥ ३७ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति। नैतदस्ति वैकृतः षोडशीति। प्राकृतः स्यात्। कुतः। प्रकृत्यां हि ज्योतिष्टोम आम्नातः। प्रकर-

---

'य एवं विद्वान्षोडशिनं गृह्णाति' इति। अत्र पूर्वः पक्षः। 'मध्यमेऽहंस्त्रिरात्रस्य गृह्यते' इति प्रत्यक्षेण वाक्येन विकृतिसंबन्धः। प्रकृतौ प्रकरणाम्नानानुमितेन वाक्येन संबन्धः स्यात्। तच्च प्रत्यक्षे सति वाक्ये दुर्बलमिति ॥ ३४ ॥ ३५ ॥ ३६ ॥

---

नहीदं वचनं प्रकृतौ प्रतिषेधकम्। किं तर्हि। विकृतावुपदेशकमिति। जात्युत्तरम्। 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्रापि शक्यं वक्तुम्। गार्हपत्यसंबन्धं श्रुतिर्ब्रवीति, नेन्द्राभिधानं निवर्तयतीति।

---

* ( अ० २ पा० ४ अ० २ सू० २७ ) इत्यत्रेति शेषः।

णाच्च ज्योतिष्टोमेनैकवाक्यता स्यात्। सा विकृतावप्युच्यमानस्य नापैति। न हीदं वचनं प्रकृतौ प्रतिषेधम्। किं तर्हि। विकृतावुपदेशकम्। तस्मात्प्रकृतौ शिष्टाप्रतिषिद्धत्वात्षोडशी भवितुमर्हतीति।

अपि च न केवलं प्रकरणमस्य साधकम्। किं तर्हि। वाक्यमपि तथा, अप्यग्निष्टोमे राजन्यस्य गृह्णीयात्, अतिरात्रे ब्राह्मणस्येति। न चेदं प्रकृतौ संभवद्वैकृतेऽतिरात्रे शक्यते कल्पयितुम्। तस्मात्प्राकृतः षोडशीति॥ ३७॥

प्रकृतिदर्शनाच्च॥ ३८॥

प्रकृतौ भवति दर्शनमस्य षोडशिनः। तिस्रः संस्तुतानां विराजमतिरिच्यन्त इति। उक्तमेतत् ×। षोडशिनि गृह्यमाणे तिसृणां स्तोत्रीयाणां दर्शनमवकल्पत इति। तस्मात्प्राकृतः षोडशीति॥३८॥

---

सर्वत्रैवेदमुत्तरं= घटते। अत इदमुत्तरं न्यायेन÷ विरुद्धम्। तस्मादसमञ्जसम्। कथं तर्ह्ययं ग्रन्थः। उपचयत्वेन+।

यदुक्तं वाक्येनोत्कर्षः षोडशिन इति। तन्न। कथम्। प्रकृतौ षोडशी विधीयते, 'षोडशिनं गृह्णाति' इति। तत्र विधीयमानस्य त्र्यंशा भावना, किं केन कथमिति। तत्र किमंशं करणोपकारो विपरिवर्तमानो निराकाङ्क्षं करोति। केनेत्यंशं षोडशी। कथमंशं षोडशिन इतिकर्तव्यता याऽऽम्नायते सा निराकाङ्क्षं करोति। तत्र* वाक्यं परिसमाप्तं, न केनाप्यंशेनापरिपूर्णम्। परिपूर्णत्वात् वाक्यस्य प्रकृतावेव निवेशः। यत्र स्ववाक्य एव विधीयमानस्यैव किमंशपूरणं पदान्तरेणोपनीयते, यथा 'युवं हि स्थः स्वर्पती=' इति प्रतिपद्विधीयमानेव वाक्येन द्वियजमानेन क्रतुना संबध्यते, तत्र प्रकरणबाधो युक्तः। यथा च द्वादशोपसत्त्वस्य विधीयमानस्यैव किमंशपूरणमहीनशब्दः करोति। एवं नात्र किमंशस्य पूरणं वाक्येन, येन प्रकरणादुत्कर्षः स्यात्। तस्मात्प्रकरण एव निवेशः॥ ३७॥ [ ३८॥

---

×(अ० २ पा० ४ अ० २ सू० २७) इत्यत्रेति शेषः। = सर्वत्रेति–प्रबलदुर्बलप्रमाणसमवाये सर्वत्रेत्यर्थः। ÷ न्यायेनेति–बलाबलाधिकरणन्यायेनेत्यर्थः। + उपचयत्वेनेति–मूलयुक्तिस्त्वन्यैवेत्यभिप्रायः। तामेव दर्शयति यदुक्तमित्यादिना। * तत्रेति–प्रकृतावेव षोडशिवाक्यं परिपूर्णमित्यर्थः = 'इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्' इति वाक्यपूरणम्।

आम्नातं परिसंख्यार्थम् ॥ ३९ ॥

अथ यदुक्तं, वैकृतस्तत्र कृत्स्नविधानादिति । तदुक्तम् । प्रकृतावप्रतिषेधकं तद्वचनमिति । अथ चोदकेन प्राप्तौ किमर्थं पुनरुच्यत इति । अविशेषेण हि तद्वचनं प्रकृतावाभिधाय, अग्निष्टोमे राजन्यस्य, ब्राह्मणस्य चातिरात्रे, इति वाक्येनोक्तम् । तद्विकारार्थमेवं प्राप्नोति परिसंख्यानम् । तदर्थमुच्यते । अनतिरात्रेऽप्यनग्निष्टोमेऽपि कथं गृह्येत । मध्यमेऽहंस्त्रिरात्रस्य गृह्यत इति ॥ ३९ ॥

उक्तमभावदर्शनम् ॥ ४० ॥

अथ यदुक्तं, प्रकृतौ षोडशी न दृश्यते, द्वे संस्तुतानां विराजमतिरिच्येते इति । तदुक्तम् । अभावदर्शनाद्वैकल्पिकः षोडशी, विहितप्रतिषेधात्पक्षेऽतिरेक इति ॥ ४० ॥

गुणादयज्ञत्वम् ॥ ४१ ॥

अथ यदुक्तम्, अयज्ञवचनान्न प्रकृतौ षोडषीति । तदुक्तम् । शिष्टत्वात्प्रकृतौ गृह्यत इति । कथं त्वयज्ञवचनम् । वैकल्पिकत्वात् । पक्षे स यज्ञो नास्तीति भक्त्याऽयज्ञ इत्युच्यते । तस्मात्प्राकृतः षोडशीति । प्रयोजनं, पूर्वपक्षे प्रकृतौ न गृह्यते, गृह्यते सिद्धान्ते ॥ ४१ ॥

( आग्रयणादेव षोडशिग्रहणाधिकरणम् ॥ १० ॥ )

[ १० ] तस्याऽऽग्रहणादुग्रहणम् ॥ ४२ ॥ सि०

अस्ति षोडशी । य एवं विद्वानेतं षोडशिनं गृह्णाति, भवत्यात्मना पराऽस्य भ्रातृव्यो भवतीति । तत्रायमर्थः समधिगतः । प्राकृतः षोडशीति । अथेदानीमिदं संदिह्यते । किमसावाग्रहणादुक्थ्याच्च ग्रहीतव्य इति, उताऽऽग्रहणादेवेति । किं प्राप्तम् । तस्याऽऽग्रहणाद् ग्रहणम् । कुतः । वचनात् । आग्रयणाद् गृह्णाति षोडशिनमिति ॥ ४२ ॥

उक्थ्याच्च वचनात् ॥ ४३ ॥ पू०

गृह्णीम एतत्, आग्रयणाद्ग्रहीतव्यः षोडशीति । किंतूक्थ्या-

॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

च्च ग्रहीतव्यः। कुतः वचनात् । वचनमिदं भवति । उक्थ्याद्गृह्णाति षोडशिनमिति । किमिदं वचनं न कुर्यात्। तस्मादुक्थ्याग्रयणाभ्यां ग्रहीतव्य इति ॥ ४३ ॥

( तृतीयसवन एव षोडशिग्रहणाधिकरणम् ॥ ११ ॥ )

तदेतदपर्यवासितं तिष्ठतु तावत् । अथेदानीमेतच्चिन्त्यते—

[ ११ ] तृतीयसवने वचनात्स्यात् ॥ ४४ ॥ सि०

अस्ति ज्योतिष्टोमः । तत्र श्रूयते । यः षोडशी गृह्यत इन्द्रियमेव वीर्यमात्मन्धत्त इति । तत्र संशयः । किं सवने सवने ग्रहीतव्य उत तृतीयसवन इति । किं प्राप्तम् । सवने सवन इति । कुतः । प्रतिसवनं हि श्रूयते, गृह्णाति षोडशिनामिति । शब्दलक्षणे च कर्मणि शब्दो नः प्रमाणम् । तस्मात्सवने सवने षोडशी गृह्यत इति ।

एवं प्राप्ते, ब्रूमः । तृतीयसवने स्यादस्य ग्रहणमिति । कुतः । वचनात् । भवति हि वचनम् । तृतीयवसने आग्रयणाद्गृह्णाति षोडशिनमिति । वचनं नः प्रमाणम् । तस्मात्तृतीयसवने ग्रहीतव्य इति । अथ यदुक्तं, प्रतिसवनं षोडशिग्रहणामिति । तृतीयसवनग्रहणस्तुत्यर्थं तत् । कथम् । प्रातःसवने ग्राह्यः । तेजो वै प्रातःसवनम् । तेजस एव वज्रं निर्मिमीते । माध्यंदिने सवने ग्राह्यः । ओजो वै माध्यंदिनं सवनम् । ओजस एव वज्रं निर्मिमीते । तृतीयसवने ग्राह्यः । पशवो वै तृतीयसवनम् । पशुभ्य एव वज्रं निर्मिमीते । यत्प्रातःसवने गृह्णीयाद्वज्र उत्तरे सवने व्यतिरिच्येत । यन्माध्यंदिने मध्यतो वज्रं निहन्यात् । तृतीयसवने ग्राह्यः । तत्सर्वेषु सवनेषु गृह्णाति, न पूर्वे सवन आर्तिं नीत इति ॥ ४४ ॥

( अपर्यवासितस्य दशमाधिकरणस्य पुनरारम्भः ॥ )

अनभ्यासे पराक्शब्दस्य तादर्थ्यात् ॥ ४५ ॥

स्थितादुच्यते । इतश्च पश्यामः । उक्थ्याच्च ग्रहीतव्य इति ।

---

॥ ४३ ॥ ४४ ॥

कुतः । यत्पराञ्चमुक्थ्यान्निगृह्णाति षोडशिनमिति । उक्थ्यान्निगृह्णातीति संबन्धो नोक्थ्यात्पराञ्चमिति । कुतः । अनभ्यासे पराक्शब्दो वर्तते । कुतः । तादर्थ्यात् । तादर्थ्यं ह्यस्यावगम्यते । पराचीः सामिधेनीरन्वाह । अनभ्यस्ताः सामिधेनीरन्वाहेति । तथा, अनभ्यासवचनः सन् नोक्थ्येन संबध्यते । न हि भवति संबन्धः, उक्थ्यादनभ्यस्तमिति । कथं तर्हि । उक्थ्यान्निगृह्णाति, तमनभ्यस्तमिति । तस्मादप्युक्थ्याग्रयणाभ्यां ग्रहीतव्य इति ॥ ४५ ॥

उक्थ्यविच्छेदवचनत्वात् ॥ ४६ ॥

इतश्चोक्थ्यादपि ग्रहीतव्य इति । कुतः । उक्थ्यविच्छेदवचनं भवति । विच्छिन्दन्ति ह वा एतदुक्थ्यं यदुक्थ्यानि षोडशिनं च ततः प्रणयन्तीति । प्रणयतिना संबन्धाद्विस्पष्टमपादानं दर्शयति । तस्मादप्युभाभ्यां ग्रहीतव्य इति ॥ ४६ ॥

आग्रयणाद्वा पराक्शब्दस्य देशवाचित्वात्पुन-
राधेयवत् ॥ ४७ ॥ सि०

आग्रयणादेव वा ग्रहीतव्यः । नोक्थ्यात् । कुतः । यदाग्रयणाद् गृह्णाति षोडशिनमिति वचनात् । न शक्य आग्रयणात्कृत्स्नो गृह्यमाण उक्थ्याद्ग्रहीतुमिति । अगतिका ह्येषा गतिः । यत्कृत्स्नसंयोगे सति विकल्पसमुच्चयौ स्याताम् । सत्यां हि गतौ न तावाश्रयणीयौ स्तः । अस्ति चात्र गतिः । कथम् । पराक्शब्दस्य देशवाचित्वात् । दिग्देशकालवचनो हि पराक्शब्दो भवति । तथा सति, उक्थ्यात्पराञ्चमिति संबन्धो भविष्यति, न कृत्स्नसंयोगो विरोत्स्यते । यथा, पराञ्चमग्न्याधेयात्पुनरादधातीति कालसंयोगे पञ्चमी, नापादाने । एवमिहापि द्रष्टव्यम् । तस्मादप्याग्रयणादेव ग्रहीतव्य इति ॥ ४७ ॥

विच्छेदः स्तोमसामान्यात् ॥ ४८ ॥

अथ यदुक्तं, विच्छेदवचनादपादानदर्शनमिति । नैतदेवम् । वि-

---

॥ ४५ ॥ ४६ ॥ ४७ ॥

च्छेदः स्तोमसामान्याद्भवति। विच्छिन्दन्ति वा एतदुक्थ्यं यदुक्थ्यानि षोडशिनं च ततः प्रणयन्तीति । एकविंशस्तोमत्वादुक्थ्यग्रह× इव षोडशीति । तत्र पूर्वयोर्विच्छिन्न एवोच्यते, ततः प्रणयन्तीति । इयमपि कालसंबन्ध एव पञ्चमी, नापादाने । तस्मादाग्रयणादेव ग्रहीतव्यः षोडशी ॥ ४८ ॥

( षोडशिनः सस्तुतशस्त्रताधिकरणम् ॥ १२ ॥

[ १२ उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्सति हि संस्थान्यत्वम् ॥ ४९ ॥ पू०

षोडशिनि प्रकृत इदमाम्नायते, अग्निष्टोमे* राजन्यस्य गृह्णीयादप्युक्थ्ये ग्राह्य इति । तत्रायमर्थः सांशयिकः । किमस्तोत्रशस्त्रः षोडशी, उत सस्तोत्रशस्त्र इति । किं प्राप्तम् । अस्तोत्रशस्त्रः स्यात् । कुतः । उक्थ्याग्निष्टोमसंयोगात् । उक्थ्याग्निष्टोमसंयोगो भवति । अग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थ्ये ग्राह्य इति । अग्निष्टोमसंस्थे उक्थ्यसंस्थे च षोडशी ग्रहीतव्य इत्युच्यते । एवमग्निष्टोमसंस्थोऽसौ क्रतुर्भवति । यद्यत्र स ग्रहो गृह्यते, यदि च न तत्र स्तोत्रं शस्त्रं वा क्रियते । सति हि स्तोत्रे शस्त्रे वा षोडशिना= स्तोमेन संतिष्ठेत । तत्राग्निष्टोमसंस्थो न स्यात् । उक्थ्यसंस्थश्च । तत्रेदं वचनमुपरुध्येत, अग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थ्ये ग्राह्य इति । अग्निष्टोम-

---

॥ ४८ ॥

---

'अग्निष्टोमे राजन्यस्य गृह्णीयात्' इति सत्यग्निष्टोमे षोडशिग्रहणम् । यदि सस्तोत्रशस्त्रः क्रियेत, अग्निष्टोमसंस्था न स्यात् । असत्यां चाग्निष्टोमसंस्थायां षोडशिग्रहणमेव न प्राप्नोति । तस्मात्स्तोत्रशस्त्रं यत्र निमित्तविघातो न तद्विषयम् । इह तु निमित्तविघाताय स्यादिति । कथं÷ च सस्तोत्रशस्त्रो भवेत्,

---

× विग्रहः—क. ख । * अप्यग्निष्टोमे—इति भाट्टदीपिकादिधृतः पाठः । = षोडशिस्तोमेन—ख. । ÷ 'अग्निष्टोमविशिष्टे ज्योतिष्टोमे स उच्यते, नाग्निष्टोमस्यैवाङ्गम्' इति भाष्यार्थमाह—कथं चेत्यादिना ।

विशिष्टे ज्योतिष्टोमे स उच्यते नाग्निष्टोमस्यैवाङ्गम्। न हि यागः स्तुतशस्त्रयोरङ्गं भवति। फलवत्त्वाद्यागस्य। अफलत्वाच्चेतरयोः। अग्निष्टोमश्चासौ ज्योतिष्टोमसंस्थोऽनेन भवति, नान्यथा। तस्माद-स्तोत्रशस्त्रः स्यादिति ॥ ४९ ॥

सस्तुतशस्त्रो वा तदङ्गत्वात् ॥ ५० ॥ सि०

सस्तुतशस्त्रो वा षोडशी। कुतः। तदङ्गत्वात्। यागस्य हि स्तोत्रशस्त्रे अङ्गभूते ग्रहग्रहणनिमित्ते। कथम्। ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोतीत्युपसंप्राप्ते निमित्ते भवितव्यं नैमि-त्तिकेन। तस्मात्सस्तुतशस्त्रः षोडशी स्यात् ॥ ५० ॥

लिङ्गदर्शनाच्च ॥ ५१ ॥

लिङ्गमप्येतमर्थं दर्शयति, सस्तुतशस्त्रः षोडशीति। कथम्। ऊर्ध्वा वा अन्ये यज्ञक्रतवः संतिष्ठन्ते, तिर्यञ्चोऽन्ये। ये होतारमभि-संतिष्ठन्ते, त ऊर्ध्वाः। ये वाऽच्छावाकं, ते तिर्यञ्चः। कथं कृत्वैत-

---

यद्यग्निष्टोमस्तोत्रस्य षोडश्यङ्गत्वेन विधीयते। तथा सति प्रधानस्याङ्गेनाव्यव-धानात्क्रियेत स्तोत्रशस्त्रम्। न चायमग्निष्टोमस्तोत्रस्याङ्गत्वेन विधीयते। षोड-श्यागाभ्यासस्य फलवत्त्वात् *। न च निष्फलस्याङ्गिता स्तोत्रशस्त्रे प्रति ॥ ४९ ॥

---

कर्तव्ये स्तोत्रशस्त्रे, तदङ्गत्वात्। षोडशियागः फलवान्। फलवत्त्वाद-ङ्गान्यपेक्षते। यद्यङ्गानि न क्रियेरंस्तथा सति षोडशी स्वकार्यं नैव साधयेत्। तस्मात्क्रियेत स्तोत्रशस्त्रम्। क्रियमाणे× त्वग्निष्टोमसंस्था न स्यात्। असत्यां चाग्निष्टोमसंस्थायाम् +। तस्मात्सस्तोत्रशस्त्रः ॥ ५० ॥

---

ननु ‘ उत्तरेऽहन् द्विरात्रस्य गृह्यते ’ इत्यनेन वचनेन प्राप्नोति। तस्मा-त्किमनेन ‘ षोडश्युत्तरे ’ इति।

---

* फलवत्त्वादिति—फलवज्ज्योतिष्टोमाङ्गत्वेन फलवत्त्वादित्यर्थः। × अत्र चोद-यति-क्रियमाणे त्वित्यादिना। + संस्थायामिति-क्रियेतैवेति शेषः।

ल्लिङ्गम् । एतदुक्तं भवति । द्वये एव यज्ञक्रतवो भवन्ति, ये होतारमभिसंतिष्ठन्ते ये चाच्छावाकम् । यदि सस्तोत्रशस्त्रः षोडशीति तत एवम् । अन्यथाऽयं षोडश्यध्वर्युमभिसंतिष्ठेत। तस्मादपि सस्तोत्रशस्त्रः षोडशी ॥ ५१ ॥

वचनात्संस्थान्यत्वम् ॥ ५२ ॥

अथ यदुक्तं, सति हि संस्थान्यत्वमिति । वचनादेवं भविष्यति। अग्निष्टोमान्तं यदुक्तं तस्य वचनादयमन्योऽन्तो विधीयते। किमिव वचनं न कुर्यात् । तस्मादपि सस्तोत्रशस्त्र इति ॥ ५२ ॥

[ अङ्गिरसां द्विरात्रे षोडशिग्रहणोपसंहाराधिकरणम् ॥१३॥ ]

[ १३ ] अभावादतिरात्रेषु गृह्यते ॥ ५३ ॥ पू०

अस्ति, अङ्गिरसां द्विरात्रः । तत्रेदमाम्नायते, वैखानसं पूर्वेद्युः साम भवति षोडश्युत्तरे, इति । तत्रायमर्थः सांशयिकः किमत्र षोडशिनो विधानमुत प्राप्तस्य परिसंख्यानमिति । किं प्राप्तम् । अप्राप्तस्य विधानम् । आनुमानिकश्चोदकः । स विहिते न प्रापयति । विहितश्च, उत्तरेऽहन् द्विरात्रस्य गृह्यत इत्यनेन वचनेन । तस्माच्चोदको न प्रापयतीत्यप्राप्तस्य विधानमिति गम्यते ॥ ५३ ॥

अन्वयो वाऽनारभ्यविधानात् ॥ ५४ ॥ सि०

अन्वयो वा षोडशिनोऽप्यस्मिन् क्रतौ। परिसंख्यार्थमिदं श्रवणं,

---

॥ ५१ ॥ ५२ ॥

---

उच्यते । द्विरात्रमात्रं वर्णोपात्तम् × । द्विरात्रविशेषो* नोपात्तः । द्विरात्रविशेषो वर्णैरुच्यते । तस्मादेतद्विधानम् । सामान्यवचनेनापि लभ्यत एव तत् । सत्यं लभ्यते । किं तर्हि । प्रमाणवेलायां केन शीघ्रं प्रमीयत इति प्रमाजशक्तिं निरूपयामो न विधीयमानमर्थम् ॥ ५३ ॥

---

'षोडश्युत्तरे' इति प्रकरणादस्मिन्द्विरात्र इति गम्यते । द्विरात्रमात्रे

---

× वर्णोपात्तमिति—अनारभ्यविधाविति शेषः । * द्विरात्रविशेषः—अङ्गिरसां द्विरात्र इत्यर्थः ।

वैखानसं साम पूर्वेद्युर्भवति षोडश्युत्तरे, इति । कथमन्वयः । अनारभ्यविधानात् । कतमोऽनारभ्यविधिः । उत्तरेऽहन् द्विरात्रस्य गृह्यत इति । तेन प्राप्त उपसंहारः क्रियते । यदेतद्द्विरात्रस्योत्तरे गृह्यत इति, एतदङ्गिरसां द्विरात्रस्य गृह्यते, नान्यत्रेति ॥ ५४ ॥

[ अथवा—षोडश्युत्तरे इत्यस्य वैखानससामाविध्यर्थवादत्वाधिकरणम् ॥ १३ ॥ )

[ १३ ] अभावादतिरात्रेषु गृह्यते ॥ ५३ ॥ पू०

अथवैवं प्राप्तम् । अभावादतिरात्रेषु गृह्यत इति । यदेतत्प्राकृतमातिरात्रेषु षोडशिग्रहणं वैकल्पिकं तद्विकल्पेनैव सर्वद्विरात्रेषु प्राप्तं नियम्येत, उत्तरेऽहन् द्विरात्रस्य गृह्यत इति । तस्योपसंहारे कृतेऽन्यद्द्विरात्रेष्वभावः । अभावात्, अङ्गिरसां द्विरात्रे नियतो गृह्यते, षोडश्युत्तर इति ॥ ५३ ॥

अन्वयो वाऽनारभ्यविधानात् ॥ ५४ ॥ सि०

अन्वितानि षोडशिना सर्वद्विरात्रेषूत्तराण्यहानि । प्रत्यक्षश्रवणात्, उत्तरेऽहन् द्विरात्रस्य गृह्यत इत्यनारभ्यविधानेन। ननूपसंहारः परिसंख्या वा, षोडश्युतर इति । उच्यते । न शक्यं प्रत्यक्षश्रवणं परिसंख्यातुं विशेषवचनेन । त्रयो हि दोषाः प्रादुःष्युः—अस्वार्थग्रहणं, परार्थकल्पना, प्राप्तबाधश्च । न चोपसंहारः । भिन्नत्वाद्वाक्ययोः ।

---

श्रुत्यैव* विधानम् । तस्मादङ्गिरसां द्विरात्रेऽनेन प्रथमप्राप्तिः, पश्चात्तु प्रकरणात्× । किमर्थं तर्हि प्रकरणाम्नानम् । परिसंख्यार्थम् । काऽत्र परिसंख्या । अङ्गिरसां द्विरात्र एव षोडशी, नान्येषु द्विरात्रेषु। न पदार्थपरिसंख्या=। यदि बहवः पदार्था द्विरात्रेषु श्रूयेरंस्तथा।* सत्येतद्वचनं पदार्थपरिसंख्यां कुर्यात् । न च

---

* श्रुत्यैवेति—अनारभ्यविधिनेति शेषः । × प्रकरणादिना—मु० । = पदार्थपरिसंख्येति—षोडश्येवास्मिन् द्विरात्रे, नान्ये पदार्था इत्येवं रूपा पदार्थपरिसंख्या न भवतीत्यर्थः * श्रूयेरन्निति—अनारभ्याविधाविति शेषः । यद्यनारभ्यविधौ बहवः पदार्थाः श्रूयेरंस्तदा षोडशिनः पुनः श्रवणं पदार्थान्तरपरिसंख्यां कुर्यात् । न तु तथा श्रूयन्ते । किंत्वेक एव षोडशी । स च द्विरात्रविषय एव श्रूयत इत्याशयः ।

किमर्थं तर्हीदं, षोडश्युत्तर इति । नैवैतद्विधानं षोडशिनः । किं तर्हि। वैखानसस्य साम्नः । वैखानसं तत् साम पूर्वेद्युर्भवतीति विधीयते । उत्तरे षोडशीत्यनूद्यते । अनारभ्यविधानेन प्राप्तत्वात्, तस्मात्प्राप्तस्य षोडशिनो ग्रहणमिति ॥ ५४ ॥

( नानाहीनेषु चतुर्थे दिवसे षोडशिग्रहणाधिकरणम् ॥ १४ ॥

[ १४ ] चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत् ॥ ५५ ॥

षोडशिनं प्रकृत्याऽऽमनन्ति, चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इति । अत्रैषोऽर्थः सांशयिकः । किमेकस्मिन्नहीने चतुर्थे दिवसे षोडश्यभ्यासितव्य उतैकस्मादहीनादहीनान्तरे चतुर्थेऽहनि गृह्यत इत्येवमभ्यासितव्य इति । किं प्राप्तम् । एकस्मिन्नभ्यासितव्य इति । कुतः अहीनस्यैकस्येत्युच्यते । नानाहीनेषु चेदिष्यते, सा लक्षणा भवति । अस्मिन् पक्षे श्रुतिः । अपि च वीप्सानर्थक्यं नानाहीनेषु चेत्स्यात् । चतुर्थेऽहन्यहीनस्येतावतैव तत्सिध्यति । एकस्मिंस्तु वीप्साऽर्थवती भवति । तस्मादेकस्मिन्नहीनेऽभ्यासितव्यः । भोजनवत्। यथा चतुर्थे चतुर्थेऽहनि देवदत्तो भुङ्क्त इति चतुर्थे भुक्त्वा ततश्चतुर्थे गम्यत एकस्मिन् पक्ष इति । एवमिहापि द्रष्टव्यम् । तस्मादेकस्मिन्नहीन इति ॥ ५५ ॥

अपि वा संख्यावत्त्वान्नानाहीनेषु गृह्यते पक्षवदेकस्मिन् संख्यार्थभावात् ॥ ५६ ॥ सि०

नानाहीनेषु वा चतुर्थेऽहनि गृह्यते एवं संख्यावद्ग्रहणं भवति, चतुर्थेऽहनि, इति । एकस्मिन्नहीन एकं चतुर्थमहः, अन्यदष्टमं भवति । यदुक्तं श्रुतिशब्दो भविष्यतीति, अहीन इति । भवति सा हि श्रुतिः । न च तया श्रुत्या किंचित्सिध्यति । चतुर्थस्याभावात् । अस्मत्पक्षे लक्षणा । तया तु सिध्यति । अपि च न, लक्षणा ।सामान्याभिप्रायमेकवचनम् । यदुक्तं, वीप्सानर्थक्यमिति । नाऽऽनर्थक्यमाप-

॥ ५४ ॥ ५५ ॥

तत्रीत्यशब्दार्थः कल्पनीयः । तस्मान्नानाहीनेषु ग्रहीतव्य इति । पक्षवत् । यथा, पञ्चम्यां पञ्चम्यां भुङ्क्त इति पक्षान्तरं गम्यते । एवमिहापि द्रष्टव्यः । तस्मान्नानाहीनेषु ग्रहीतव्य इति ॥ ५६ ॥

भोजने तत्संख्यं स्यात् ॥ ५७ ॥

यत्तु भोजनवदित्युक्तम् । अर्थात्तत् । तस्माच्चतुर्थाद्दृष्यन्यच्चतुर्थं तत्र कल्प्यते । चतुर्थादारभ्य यान्यहानि तेषां चतुर्थमहीनस्य तदष्टमम् । शब्दलक्षणे कर्मणि शब्दाभिहितं गम्यते, न लोकाभिप्रायः । तस्माद्युक्तं भोजने लोकाभिप्रायानुष्ठानम् । अहीने तु शब्दाभिहितं गम्यते ॥ ५७ ॥

( विषुवत्संज्ञिकायां विकृतावाग्रयणाग्रताया निवेशाधिकरणम् ॥१५॥ )

[ १५ ] जगत्साम्नि सामाभावादृक्तः साम तदाख्यं स्यात् ॥ ५८ ॥ सि०

ज्योतिष्टोमे श्रूयते, यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामाऽऽग्रयणाग्रानिति । आग्रयणाग्रानित्येतदुदाहरणम् । तत्र संशयः किमाग्रयणाग्रतायाः प्रकृतौ निवेश उत विकृताविति । किं प्राप्तम् । प्रकरणानुग्रहात्प्रकृताविति । यदि जगत्सामेति ज्योतिष्टोम एवोच्यते, येन केनचिदभिसंबन्धेन गुणेन क्रियया वा ।

एवं प्राप्ते, ब्रूमः। जगत्साम्नि श्रूयमाणेऽपि ऋक्तः साम तदाख्यमित्यध्यवसीयते । कुतः । सामाभावात् । न हि कृत्स्नेऽपि सामवेदे जगन्नाम सामास्ति । तस्माद्यत्र जगत्यामुत्पन्नं साम स जगत्सामा । स विषुवान् । ननु शुक्राग्रो विषुवानित्युच्यते । नैष दोषः । स कामाय भविष्यति । तस्माद्विकृतौ विषुवति निवेश इति ॥ ५८ ॥

---

पदार्थाः श्रूयन्ते । तस्मात्क्रतुपरिसंख्या ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

---

कृतकरो विधिरनर्थकः स्यादिति । कोऽर्थः । रथंतरसामत्व ऐन्द्रवायवाग्रता विहिता । बृहत्सामत्वे तु शुक्राग्रता । उभयसामत्व आग्रयणाग्रतैव विधातव्या । जगत्सामशब्देऽनुच्यमानेऽपि लभ्यते ॥ ५८ ॥

---

( अथवा-जगत्सामशब्दार्थनिर्वचनाधिकरणं ॥ १५ ॥ )

एवं वा-

[ १५ ] जगत्साम्नि सामाभावादृक्तः साम तदाख्यं स्यात् ॥ ५८ ॥ सि०

यदि* जगत्सामाऽऽग्रयणाग्रानित्येतदेवोदाहरणम् । तत्र संशयः। किमन्यतरसामा जगत्सामा, रथंतरसामा बृहत्सामा वा, किमुभयसामा जगत्सामा, किं रथंतरसामा जगत्सामा, किं यत्र जगत्यामुत्पन्नं साम स जगत्सामेति। किं प्राप्तम्। अन्यतरसामेति। कुतः। विशेषानवगमात्। ज्योतिष्टोमस्य प्रकृतत्वात्। तस्य चान्यतरसामत्वात्। एवं प्राप्तम्। अथवा, उभयसामा जगत्सामा। जगच्छब्दः कृत्स्नवाची। कृत्स्नपृष्ठता च ज्योतिष्टोम उभयसामत्वे। अन्यतरसामत्वे जगच्छब्दस्याविशेषणत्वादविवक्षा प्रसज्येत। तस्मादुभयसामा। अथवा रथंतरसामा जगत्सामा। तत्र हि ऋचि जगच्छब्दो विद्यते। ईशानमस्य जगतः स्वर्दृशमिति। यदि चोभयसामा जगत्सामा भवेत्, कृतकरो× विधिरनर्थकः स्यात्। तेन नैतयोः समुच्चयः प्रकृतौ। तस्माद्रथंतरसामैव जगत्सामेति।

---

कृतकरो विधिरनर्थकः स्यादिति। कोऽर्थः। रथंतरसामत्व ऐन्द्रवायवाग्रता विहिता। बृहत्सामत्वे तु शुक्राग्रता। उभयसामत्व आग्रयणाग्रतैव

---

* यदि जगत्सामाऽऽग्रयणाग्रान् ग्रहान् गृह्णीयात्—मु०। × कृतकर इति—अयमाशयः। 'आग्रयणाग्रान् गृह्णीयात्' इत्येतावतैवोभयसामपक्षे आग्रयणाग्रतानिवेशसिद्धेः 'यदि जगत्सामा' इत्यन्तो विधिरनर्थकः स्यात्। अन्यतरसामत्वपक्षयोस्तत्तदग्रतावरोधादुभयसामत्वपक्ष एवाऽऽग्रयणाग्रता निविशेत। कथं ज्योतिष्टोमस्योभयसामत्वमिति चेत्। इत्थम्। यद्यपि 'रथंतरं पृष्ठं भवति' 'बृहत्पृष्ठं भवति' इति विहितयोः पृष्ठयोरदृष्टार्थत्वात्समुच्चयो न्यायप्राप्तो विकल्पवचनेन बाध्यते तथापि विकल्पवचनं तदबाधेनैव पक्षे विकल्पं बोधयति। तथा च समुच्चयपक्षोऽपि ज्योतिष्टोमे वर्तत इति पूर्वपक्षी मन्यत इति वेदितव्यमिति।

एवं प्राप्ते, ब्रूमः । यत्र जगत्यामुत्पन्नं साम स जगत्सामेति । तथा हि श्रुतिः । इतरथा रथंतरसामन्यध्यवसीयमान ऋचा पदं लक्ष्यते, पदेन साम, सैषा लक्षितलक्षणा स्यात् । तस्माज्जगत्यां यत्र साम, स जगत्सामा । ऋक्तो जगदाख्यं साम स्याद्विषुवति । ननु शुक्राग्रो विषुवानित्युच्यते । नैष दोषः । स कामाय भविष्यति । तस्माद्विषुवति विकृतौ निवेश इति ॥ ५८ ॥

( संसवादिविकृतौ प्राकृतयोर्नैमित्तिकयोरुपवत्यग्रियवत्योरननुष्ठानाधिकरणम् ॥ १६ ॥ )

[ १६ ] उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात्स्यात् ॥ ५९ ॥ पू०

सन्त्युभयसामानः क्रतवः, संसव उभे कुर्यात् । अपचितावप्येकाहे* श्रूयते, उभे बृहद्रथंतरे कुर्यादिति । तत्रास्ति रथंतरनिमित्तकं बृहन्निमित्तकं च, उपवतीं रथंतरपृष्ठस्य प्रतिपदं कुर्यादग्रियवतीं बृहत्पृष्ठस्येति । तत्रैषोऽर्थः सांशयिकः । किं रथंतरनिमित्तकं बृहन्निमित्तकं वा कार्यं, विकल्पः, अथवा रथंतरनिमित्तकं कर्तव्यम्, अथवाऽन्यनिमित्तकमेव कर्तव्यम् । किं प्राप्तम् ।: अन्यतरनिमित्तकं कर्तव्यं, विकल्प इति । कुतः । समा प्राप्तिः । विरुद्धश्च समुच्चयः । न हि विनिगमनायां हेतुरस्ति, एवं निमित्तकं कर्तव्यं, नैवंनिमित्तकमिति । न च द्वे प्रतिपदौ शक्येते कर्तुम् । तस्माद्विकल्प ॥ ५९ ॥

मुख्येन वा नियम्येत ॥ ६० ॥

यदुक्तं–समा प्राप्तिः । नास्ति विनिगमनायां हेतुरिति । अस्तीति ब्रूमः । मुख्यत्वं नाम रथंतरस्य प्रथमाधीतत्वम् । तदुक्तं, मुख्यं= वा पूर्वचोदनाल्लोकवदिति ॥ ६० ॥

---

विधातव्या । जगत्सामशब्देऽनुच्यमानेऽपि लभ्यते ॥ ५८ ॥

---

॥ ५९ ॥ ६० ॥

---

---

* अपचिता—ख० । =( अ० १२ पा० २ अ० ९ सू० २५ )।

निमित्तविघाताद्वा क्रतुयुक्तस्य कर्म स्यात् ॥ ६१ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । द्वयोरपि निमित्तयोर्विघातः स्यात् । क्रतुनिमित्तमेवाऽऽश्रीयते । तथा सति नैतद्रथंतरपृष्ठं, न बृहत्पृष्ठम् । बृहद्रथंतराभ्यामुभाभ्यां तत्र पृष्ठनिर्वृत्तिः । तस्मान्नोपवती प्रतिपत्, नाग्रियवती । अन्यैव क्रतुनिमित्ता भवितुमर्हतीति ॥ ६१ ॥

( ऐन्द्रवायवस्य मैत्रावरुणादिग्रहापेक्षया प्रथममनुष्ठानाधिकरणम् ॥ १७ ॥ )

[ १७ ] ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षः स्यात् ॥ ६२ ॥ पू०

ज्योतिष्टोमे श्रूयते, वाग् वा ऐन्द्रवायवो यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते वाचमेवावरुन्ध इति । तत्र संशयः । किमैन्द्रवायवस्य सर्वादितः प्रतिकर्षः स्यात् , उपांश्वन्तर्यामाभ्यामपि पूर्वं ग्रहीतव्य उत शुक्रामन्थिभ्यां पूर्वं ग्रहणमिति । किं प्राप्तम् । ऐन्द्रवायवस्य सर्वादितः प्रतिकर्ष इति । कुतः । अग्रवचनात् । अग्रताऽत्र विधीयते, ऐन्द्रवायवाग्रं गृह्णातीति, ऐन्द्रवायवमग्रे कुर्यादेषामिति । अविशेषात्सर्व एवैन्द्रवायवाग्राः कर्तव्याः । यद्यादितः प्रतिकर्षो न क्रियेत, उपांश्वन्तर्यामावैन्द्रवायवाग्रौ न स्याताम् । आदितस्तु प्रतिकर्षे क्रियमाणे सर्व ऐन्द्रवायवाग्राः कृता भवन्ति । न चात्रैन्द्रवायवस्याग्रता विधीयते । यदि विधीयेत, यान् कांश्चित्प्रत्यैन्द्रवायवस्याग्रतायां कृतं कर्तव्यं स्यात् । अथ पुनरन्येषां ग्रहाणामैन्द्रवायवाग्रता धर्म उच्यते । तस्मात्सर्वेषां धर्मः कर्तव्य इत्यादितः प्रतिकर्षः स्यात् । कथं पुनरवगम्यते, सर्वेषामेवायं धर्म इति । ऐन्द्रवायवाग्रान् कुर्यादिति निर्देशात् । नात्र ग्रहस्य कर्तव्यतोच्यते । तदग्राः कर्तव्या इति श्रूयते । अग्रता परार्था, न स्वार्था विज्ञायते । तस्मात्सर्वादितः प्रतिकर्षः स्यात् ॥ ६२ ॥

---

॥ ६१ ॥ ६२ ॥

अपि वा धर्मविशेषात्तद्धर्माणां स्वस्थाने प्रकरणा-
दग्रत्वमुच्यते ॥ ६३ ॥ सि०

अपि वेति पक्षव्यावृत्तिः। न सर्वादितः प्रतिकर्षः स्यात्। किं तर्हि। स्वस्थानस्य ग्रहणम्। कुतः। नात्र तदग्रता विधीयते। वाक्यं हि तदाऽनुगृह्यते। किं तर्हि। तदग्राणां ग्रहणं विधीयते। तथा हि श्रुतिरनुगृहीता भवति। यदि रथंतरसामा सोमः स्यात्, य ऐन्द्रवायवाग्रा ग्रहाः समाम्नातास्तेषामनेनानुऽऽपूर्व्येणैन्द्रवायवादितया धर्मविशेषेण तद्धर्माणां प्रकृतानां ग्रहणं विधीयते। स्वे स्थाने ये ग्रहा ऐन्द्रवायवाग्राः, तान् प्रकृत्य ग्रहणविधिरिति न सर्वादितः प्रतिकर्ष इति ॥ ६३ ॥

धारासंयोगाच्च ॥ ६४ ॥

अपि च धारासंयोगो भवत्यैन्द्रवायवादिवाक्ये, अण्व्याऽव्यवच्छिन्नया धारया गृह्णातीति। तस्माद्धाराग्रहास्ते। तदग्रानधिकृत्य ग्रहणं विधीयत इति ॥ ६४ ॥

( कामसंयोगेऽप्यैन्द्रवायवस्य पाठप्राप्तस्वस्थान एवानुष्ठानाधि-
करणम् ॥ १८ ॥ )

[ १८ ] कामसंयोगे तु वचनादादितः प्रतिकर्षः
स्यात् ॥ ६५ ॥ पू०

अथ यत्र कामसंयोगे वचनमैन्द्रवायवस्य, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति×। तत्र किं सर्वादितः प्रतिकर्ष= उत तत्रापि स्वक्रमस्थस्य ग्रहणमिति। किं प्राप्तम्। पूर्वेणाधिकरणेन स्वक्रमस्थस्येति। तथा प्राप्ते, ब्रूमः। कामसंयोगे तु सर्वादितः प्रतिकर्षः स्यात्। कुतः। वचनात्। वचनं हि भवति, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति*। तत्सर्वादितः+ प्रतिकर्षेऽर्थवदग्रतायां विधीयमानाँ-

---

॥ ६३ ॥ ६४ ॥

---

× प्रकल्पेरन्-क.। = स प्रतिकर्षः-क.। * प्रकल्पेरन्-क. ख.। + तत्र सर्वा-ख.।

याम् । अप्रवृत्तिविशेषकरं तदग्राणां ग्रहणे विधीयमाने । तस्मात्सर्वादितः प्रतिकर्ष इति ॥ ६५ ॥

तद्देशानां वाऽग्रसंयोगात्तद्युक्तं कामशास्त्रं स्यान्नित्यसंयोगात् ॥ ६६ ॥ सि०

न चैतदस्ति, यदुक्तं सर्वादितः प्रतिकर्ष इति । स्वक्रमस्थस्य ग्रहणे क्रमानुग्रहो भविष्यति । तस्मात्स्वक्रमस्थस्येति । यदुक्तम्, अग्रताभिधानादादितः प्रतिकर्ष इति । तन्न । तद्देशानां धारादेशानामैन्द्रवायवाग्राणामयमुपदेशः । तद्युक्तानां तदग्राणां ग्रहणेन कामः साध्येत । श्रुतिरेवमनुगृह्यते । त्वत्पक्षे वाक्यम् । श्रुतिश्च वाक्याद्बलीयसी । अथ यदुक्तम्, अप्रवृत्तिविशेषकरं ग्रहणविधाविति । तन्न । संयोगपृथक्त्वात् । एकोऽत्र नित्यस्य कामसंयोगः । ग्रहणेन कामं साधयेत् । अपरो नित्यसंयोगः । य ऐन्द्रवायवाग्रा ग्रहास्तान् गृह्णीयादिति । तस्मादस्ति प्रवृत्तिविशेषः । अतस्तद्देशसंयुक्ते काम साधनमेतत् । तस्मात्स्वक्रमस्थस्य ग्रहणमिति ॥ ६६ ॥

( काम्याग्रताविधौ शुक्रादिग्रहस्य सर्वादितः प्रतिकर्षाधिकरणम् ॥ १९॥)

[ १९ ] परेषु चाग्रशब्दः पूर्ववत्स्यात्तदादिषु ॥ ६७ ॥ पू०

अस्ति ज्योतिष्टोमः । तत्रैन्द्रवायवात्परे ग्रहाः कामाय श्रूयन्ते—आश्विनाग्रान् गृह्णीयादामयाविनः, शुक्राग्रान् गृह्णीयादभिचरतः, मन्थ्यग्रान् गृह्णीयादभिचर्यमाणस्येति । तत्र संशयः । किमेतेष्वपि स्वक्रमस्थानां ग्रहणमुत सर्वादितः प्रतिकर्षः कर्तव्य इति । किं प्राप्तम् । परेषु चैन्द्रवायवात्परेष्वेवमादिषु ग्रहणेषु, अग्रशब्दः पूर्ववत्स्यात्स्वक्रमस्थग्रहणमिति । यस्य यस्याग्रता श्रूयते, तदग्राणां कामसंयोग इति ॥ ६७ ॥

प्रतिकर्षो वा नित्यार्थेनाग्रस्य तदसंयोगात् ॥ ६८ ॥ सि०

---

॥ ६५ ॥ ६६ ॥ ६७ ॥

प्रागैन्द्रवायवात्प्रतिकर्षः स्यात् । कुतः । न ह्यत्र नित्यार्थेन कामस्य संयोगो भवति । यदि हि नित्ये कामो भवेत्, आश्विनाग्रान् मन्थ्यग्रानित्यग्रशब्दोऽस्य नोपपद्येत । न हि तस्मिन् वचने सति प्रवृत्तेः कश्चिद्विशेष उपलभ्यते, प्रागैन्द्रवायवात्पुनः प्रतिकर्षे वचनमर्थवद्भवति । अपि च प्रकृतास्ते ग्रहाः । तेषामाश्विनाग्रता शुक्राग्रता विधीयते । तस्मादादितः प्रतिकर्ष इति ॥ ६८ ॥

प्रतिकर्षं च दर्शयति ॥ ६९ ॥

धारयेयुस्तं यं कामाय गृह्णीयुः, ऐन्द्रवायवं गृहीत्वा सादयेत्,* अथ तं सादयेत्, यं कामाय गृह्णीयुरिति कामाय गृहीते धार्यमाण ऐन्द्रवायवस्य ग्रहणं दर्शयति । तस्मात्सर्वादितः प्रतिक्रष्टव्य इति ॥ ६९ ॥

( काम्याग्रताविधौ शुक्रादिग्रहस्यैन्द्रवायवग्रहापेक्षया पूर्वं प्रतिकर्षाधिकरणम् ॥ २० ॥ )

[ २० ] पुरस्तादैन्द्रवायवस्याग्रस्य कृतदेशत्वात् ॥ ७० ॥ सि०

अस्ति ज्योतिष्टोमः । तत्रैन्द्रवायवात्परे ग्रहाः कामाय श्रूयन्ते, आश्विनाग्रान् गृह्णीयादामयाविनः, शुक्राग्रानभिचरतः, मन्थ्यग्रानभिचर्यमाणस्येति । नैषां स्वक्रमस्थानां ग्रहणं, प्रतिकर्ष इति समधिगतमेतत् । अथेदानीमिदं संदिह्यते । किं सर्वादितः प्रतिकर्षः यतः कुतश्चिद्वा, उतैन्द्रवायवस्य पुरस्तात्प्रतिकर्ष इति । किं प्राप्तम् । नियमकारिणः शास्त्रस्याभावादनियम इति ।

एवं प्राप्ते, ब्रूमः । पुरस्तादैन्द्रवायवस्य प्रतिकर्ष इति । कुतः । अग्रस्य कृतदेशत्वात् । एषोऽग्रस्य देशो विज्ञातो यदुपांश्वन्तर्यामाभ्यामूर्ध्वं, पुरस्ताच्चैन्द्रवायवस्य । कथमिव कृत्वा । पूर्वेण वचनेनैन्द्रवायवाग्रा ग्रहाः प्रकृताः, यदि रथंतरसामा सोमः स्यादैन्द्रवाय-

---

॥ ६८ ॥ ६९ ॥

---

* सादयेत्, तं यं कामाय—क. ख.।

वाग्रान् ग्रहान् गृह्णीयादिति । तत्रैन्द्रवायवाग्रानुद्दिश्य तेषां ग्रहणं विहितम् । तेनैव विहितत्वान्न पुनराश्विनाग्रेषु शुक्राग्रेषु मन्थ्यग्रेषु च ग्रहणं विधीयते । अतो वाक्येन तदग्रता विधीयते । सा पुनरैन्द्रवायवाग्राणां प्रकृतत्वात् । अभिचरतः शुक्राग्रान्, किं कुर्यात्, गृह्णीयादिति प्रकृतेनाभिसंबध्यते । शुक्राग्रान् ग्रहानिति नास्ति संबन्धः, ग्रहशब्दाभावात्* । केन तर्हि संबन्धः । प्रकृतेनैन्द्रवायवाग्रशब्देन, शुक्राग्रान् गृह्णीयात्, ऐन्द्रवायवाग्रानिति । के ते ग्रहा इति, तत्रोक्तम् । तस्मादैन्द्रवायवस्य पुरस्तात्प्रतिकर्ष इति ॥ ७० ॥

तुल्यधर्मत्वाच्च ॥ ७१ ॥

तुल्यधर्माश्चैत ऐन्द्रवायवाग्रैः । तत्र धारासंयोगो दृश्यते । तस्माद्धाराग्रहानुद्दिश्यैतदग्रता विधीयते ॥ ७१ ॥

तथा च लिङ्गदर्शनम् ॥ ७२ ॥

धारयेयुस्तं यं कामाय गृह्णीयुः ऐन्द्रवायवं गृहीत्वा सादयेत् । अथ तं सादयेत्, यं कामाय गृह्णीयुरिति काम्यस्य धारणानन्तरमैन्द्रवायवस्य ग्रहणं दर्शयति । तस्मादैन्द्रवायवस्य पुरस्तात्प्रतिकर्ष इति ॥ ७२ ॥

( ग्रहणप्रतिकर्षेण सादनस्यापि प्रतिकर्षाधिकरणम् ॥ २१ ॥ )

[ २१ ] सादनं चापि शेषत्वात् ॥ ७३ ॥ सि०

इदमाम्नायते—आश्विनाग्रान् गृह्णीयादामयाविनः, शुक्राग्रान् गृह्णीयादभिचरतः, मन्थ्यग्रान् गृह्णीयादभिचर्यमाणस्येति । पुरस्तादैन्द्रवायवस्य प्रतिकर्ष इत्युक्तम् । तत्रायमर्थः सांशयिकः । किं सादनमपि प्रतिकृष्यते नेति । अवचनान्नेति ब्रूमः । शब्दप्रमाणका वयम् । शब्दश्च ग्रहणस्य प्रतिकर्षमाह, न सादनस्य । तस्मान्न सादनं प्रतिकृष्यत इति ।

---

॥ ७० ॥ ७१ ॥ ७२ ॥

—

---

*ग्रहणशब्द—ख. ।

एवं प्राप्ते, ब्रूमः। सादनमपि प्रतिकृष्यत इति। कुतः। ग्रहणशेषो हि सादनम्। ग्रहणं हि प्रदानार्थम्। तदनेकस्य द्रव्यस्य युगपत्प्राप्तमसादयित्वा न शक्यं युगपद्धोमार्थं कर्तुम्। सादनेन ग्रहणं होमयोग्यं भवति। तस्माद्ग्रहणशेषः सादनमिति ग्रहणे प्रतिकृष्यमाणेऽवश्यं प्रतिकृष्टव्यमिति ॥ ७३ ॥

लिङ्गदर्शनाच्च ॥ ७४ ॥

लिङ्गमपि दृश्यते, यथा सादनं प्रतिकृष्यत इति। किं लिङ्गम्। धारयेयुस्तं यं कामाय गृह्णीयुः। ऐन्द्रवायवं गृहीत्वा सादयेत्, अथ तं सादयेत्, यं कामाय गृह्णीयुरिति, सादनस्यापि प्रतिकर्षं दर्शयति ॥ ७४ ॥

( ग्रहणप्रतिकर्षेऽपि प्रदानानपकर्षाधिकरणम् ॥ २२ ॥ )

[ २२ ] प्रदानं चापि सादनवत् ॥ ७५ ॥ पू०

इदमाम्नायते—आश्विनाग्रान् गृह्णीयादामयाविनः, शुक्राग्रानभिचरतः, मन्थ्यग्रानभिचर्यमाणस्येति। तत्र ग्रहणे प्रतिकृष्यमाणे सादनं प्रतिकृष्यत इत्युक्तम्। अथेदानीमिदं संदिह्यते, ग्रहणे प्रतिकृष्यमाणे प्रदानं प्रतिकृष्यते नेति। किं प्राप्तम्। प्रतिकृष्यत इति। कुतः। संबन्धात्। संबद्धं हि ग्रहणं प्रदानं च। प्रदातुं हि तद्गृह्यते। तथा हि दृष्टार्थं तद्भवति। इतरथा यत्सादनादूर्ध्वं तददृष्टार्थं भवेत्। न चेदमदृष्टार्थम्। तस्माद्यतरस्मिन् काले प्रदानं क्रियते, तत्र ग्रहणं कर्तव्यम्। एवं चेद्यत्र ग्रहणं तत्र प्रदानमपि भवितुमर्हतीति, संबन्धात्। सादनवत्। यथा ग्रहणे प्रतिकृष्यमाणे सादनं प्रतिकृष्यते, एवं प्रदानमपीति ॥ ७५ ॥

न वा प्रधानत्वाच्छेषत्वात्सादनं तथा ॥ ७६ ॥ सि०

न चैतदस्ति, प्रदानं प्रतिकृष्यत इति। प्रधानं हि तत्। न हि तद्ग्रहणस्योपकारकम्। तस्मान्न प्रतिकृष्यते। यदुक्तं सादनवदिति। शेषो हि सादनम्। तस्मात्प्रतिकृष्यते ॥ ७६ ॥

---

॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥

[ त्र्यनीकायां प्रथमद्वितीययोरह्नोरैन्द्रवायवाग्रत्वशुक्राग्रत्वयोः पुनःश्रवणस्यानैमित्तिकत्वार्थताधिकरणम् ॥ २३ ॥ ]

(२३) त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ॥ ७७ ॥ पू०

अस्ति द्वादशाहे त्र्यनीका, ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं चाहः, अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रमिति । तत्र प्रथमद्वितीययोरह्नोरैन्द्रवायवाग्रता शुक्राग्रता च श्रूयते । सा चोदकेनैव तयोः प्राप्ता, रथंतरसामत्वात्, बृहत्सामत्वाच्च । तत्र संदेहः । किमुदितमनुवदितुं पुनः श्रूयते, किमन्यत्परिसंख्यातुम्, उतार्थवादार्थम्, अथवा समानविध्यर्थम् । किं प्राप्तम् । अर्थवादायेति । कुतः । उदितमनुवदितुं ह्युच्यमाने प्रवृत्तिविशेषक्रिया नास्ति । त्रिदोषा परिसंख्या । तस्मादर्थवादायेति । कः पुनरत्र गुणवादः । औचित्यम् । आग्रयणाग्रत्वं हि तृतीयेऽहनि न्याय्यम् । कथमिव । प्रथमद्वितीययोरह्नोरैन्द्रवायवाग्रता च चोदिता,= न तृतीयेऽहनि । तत्र त्वाग्रयणाग्रता न्याय्येति ॥ ७७ ॥

अपि वाऽहर्गणेष्वग्निवत्समानविधानं स्यात् ॥ ७८ ॥ सि०

अपि वेति पक्षव्यावृत्तिः । न गुणार्थं श्रवणं समानविध्यर्थमिति । न शक्यं वदितुं चोदकेन प्राप्तम् । तत्र पुनर्वचनमनर्थकम् । तस्मात्तदन्यार्थमिति । कथं तर्हि शक्यम् । वाक्येनेदं ज्योतिष्टोमे रथंतरसाम्नि प्रवृत्तं चोदकेन प्राप्यते । तस्मात्समानविधिं करिष्यामीति पुनरुच्यते । अग्निवत् । यथा, अथातोऽग्निमाग्निष्टोमेनैवानुयजति, तमुक्थ्येन, तमातिरात्रेण, तं चतूरात्रेण, तं पञ्चरात्रेण, तं सप्तरात्रेण,

॥ ७७ ॥

———

= उदिता–मु० । * अथातोऽग्निष्टोमेन–मु० ।

तमष्टरात्रेण, तं नवरात्रेण, तं दशरात्रेण, तमेकादशरात्रेणेति । प्रयोजनं पक्षोक्तं, न परिसंख्या भवतीति ॥ ७८ ॥

( व्यूढस्य समूढविकारत्वाधिकरणम् ॥ २४ ॥ )

[ २४ ] द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत्समानविधानं स्यात् ॥ ७९ ॥ पू०

द्विविधो द्वादशाहः, व्यूढः समूढश्च । समूढस्तावत्, ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं चाहः, अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रमिति । अथ व्यूढः, ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशनामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे, अथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथऽऽग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे इति । तत्र संदेहः । किमुभयप्रकारमपि द्वादशाहं प्रकृत्य धर्मा आम्नाता उत समूढं प्रकृत्याऽऽम्नातः । तद्विकारो व्यूढ इति । किं प्राप्तम् । द्वादशाहस्य व्यूढसमूढत्वं समानविधानं स्यात् । कुतः । उभयप्रकारस्य प्रकृतत्वान्न गम्यते विशेषः, कस्य धर्माः कस्य नेति । तस्मात्समानविधानौ । पृष्ठवत् । यथा, बृहद्रथंतरे पृष्ठे प्रकरणस्य तुल्यत्वात्समानधर्मणी, एवं व्यूढसमूढं स्यादिति ॥ ७९ ॥

व्यूढो वा लिङ्गदर्शनात्समूढविकारः ॥ ८० ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । न व्यूढसमूढौ समानविधानौ । किंतु व्यूढः समूढविकारः स्यात् । कुतः । लिङ्गदर्शनात् । लिङ्गमिदं भवति, ऐन्द्रवायवस्य वा एतदायतनं यच्चतुर्थमहरिति व्यूढे श्रूयते । न च व्यूढे चतुर्थेऽहन्यैन्द्रवायवाग्रता । का तर्हि । आग्रयणाग्रता । तत्र, ऐन्द्रवायवस्य वा एतदायतनमिति वचनं नावकल्पते । यदि व्यूढः समूढविकारस्ततः प्रकृतिमपेक्ष्योपपद्यते वादः । ऐन्द्रवाय-

॥ ७८ ॥ ७९ ॥

—

वस्यैतदायतनं प्राप्तम् । तत्राऽऽग्रयणस्योच्यत इति । तस्माल्लिङ्ग-दर्शनाद्व्यूढः समूढविकार इति ॥ ८० ॥

कामसंयोगात् ॥ ८१ ॥

यः कामयेत बहु स्यां प्रजायेयेति । काम्यो वा नैमित्तिको वा नित्यमर्थं विकृत्य निविशते । यथाऽक्ष्यामये मुद्गौदनभोजनं निवात-शय्या चेति ॥ ८१ ॥

तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ ८२ ॥

इदं प्रयोजनसूत्रम् तस्योभयप्रकारस्याहर्गणेषु प्रवृत्तिरविशे-षेण । ऐककर्म्यात् । यथा पूर्वः पक्षः । यथा तर्हि सिद्धान्तः, यत्र वचनं लिङ्गं च तत्र व्यूढः प्रवर्तते, । अन्यत्राविशेषेण समूढ इति ॥ ८२ ॥

( गवामयने त्र्यनीकायाः स्वस्थानविवृद्ध्याऽभ्यासाधिकरणम् ॥ २५ ॥

[ २५ ] ऐकादशिनवत्त्र्यनीकापरिवृत्तिः स्यात् ॥ ८३ ॥ पू०

द्वादशाहे समाम्नायते—ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दश-मं चाहः, अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शु-क्राग्रम्, अथाऽऽग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथा-ऽऽग्रयणाग्रमिति । तद्गवामयने चोदकेन प्राप्तम् । तत्र बहूनि त्र्यनीकानि परिवर्तयितव्यानि । तत्रार्थप्राप्तोऽभ्यासः । अथेदानीम-भ्यासे संदेहः, किं दण्डकलितवदभ्यासः कर्तव्य उत स्वस्थानविवृद्धि-रिति ।

कथं दण्डकलितवत्स्यात्, कथं वा स्वस्थानविवृद्धिरिति । य-द्यह्नामाधिकारस्तत आद्येषु नवस्वहःसु परिसमाप्तेषु शिष्टेष्वपि त्र्य-नीकां चोदकः प्रापयतीत्युपस्थितमिदं भवति, ऐन्द्रवायवाग्रं प्रथम-महः, अथ शुक्राग्रमिति । तेष्वपि नवसु परिसमाप्तेषु पुनरिदमेवो-पतिष्ठते, ऐन्द्रवायवाग्रं प्रथममहरिति । एवं दण्डकलितवदावृत्तिः ।

---

॥ ८० ॥ ८१ ॥ ८२ ॥

अथाहरधिकारो नास्ति, ततः प्रायणीयोदयनीययोरन्तरं नवभिरनीकैः पूरितमिति गवामयनेऽपि नवभिरनीकैः पूरयितव्यं स्यात् । तत्र पूर्णे पुनरावृत्तिर्नास्तीति दण्डकलितवन्न स्यात् । न च वृद्ध्या विना तदन्तरं पूर्यत इति स्वस्थानविवृद्धिरागतेति ।

किं पुनः प्राप्तम् । दण्डकलितवदावृत्तिरिति । तत्रैतद्वर्ण्यतेऽहरधिकारोऽत्रेति । एवं ह्याम्नायते–ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम् । प्रकृतत्वादहरिति गम्यते । तस्मादहरधिकारः । अतोऽवगच्छामो दण्डकलितवदावृत्तिरिति । आवृत्तिन्यायानां दण्डकलितं न्याय्यम् । तथा क्रमानुग्रहो भवति । तद्यथा, कश्चिदुच्यते–अनुवाकाश्चिः पठ्यतामिति । दण्डकलितवदसौ पठ्यते, क्रमानुग्रहाय । एवमिहापि द्रष्टव्यम् । यथाऽस्मिन्नेव गवामयन एकादशिन्यभ्यस्यमाना दण्डकलितवदभ्यस्यते, न स्वस्थानविवृद्ध्येति ॥ ८३ ॥

स्वस्थानविवृद्धिर्वाऽह्नामप्रत्यक्षसंख्यत्वात् ॥ ८४ ॥ सि०

स्वस्थानविवृद्धिर्वा, न दण्डकलितवदावृत्तिः । तत्रेदं वर्ण्यते, नाहरधिकार इति । कुतः । अह्नामप्रत्यक्षसंख्यत्वात् । अप्रत्यक्षाऽह्नां संख्या नवानामह्नामिति । ऐन्द्रवायवाग्रमिति च विधीयमानमिति । कथमहर्न विधीयत इति । वाक्यभेदप्रसङ्गात् । ऐन्द्रवायवाग्रं प्रथमं भवति, तच्चाहः, नाहःसंघात इति वाक्यं भिद्येत । तस्मादनुवादमात्रमहर्ग्रहणम् । एवं चेत्क्रमानुग्रहाय स्वस्थानविवृद्धिराश्रयणीया । आग्रयणाग्रान् कृत्वैन्द्रवायवाग्राः कर्तव्या इति ॥ ८४ ॥

---

अतः परं त्र्यनीकाधिकरणं व्याख्यायते ।

प्रथमस्य यज्ञभागस्यैन्द्रवायवाग्रता विधीयते । कुतः । यज्ञस्य फले चोदितत्वात् । अहानीत्ययमर्थो लभ्यत= एव । यदि चाहरिति विवक्ष्येत, वाक्यं भिद्येत । निष्फलानि च तानि ॥ ८४ ॥

---

= लभ्यत एवेति–यज्ञभागस्याहरात्मकत्वादिति शेषः ।

पृष्ठ्यावृत्तौ चाऽऽग्रयणस्य दर्शनात्त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवः स्यात् ॥ ८५ ॥

इतश्च पश्यामः, स्वस्थानविवृद्धिरिति । कुतः । उत्तरस्मिन् पक्षसि पृष्ठ्यावृत्तावाग्रयणाग्रताया दर्शनं भवति त्रयस्त्रिंशेऽहनि । कथम् । जगतीं वै च्छन्दांसि प्रत्यवरोहन्ति, आग्रयणं वै ग्रहाः, बृहत्पृष्ठानि, त्रयस्त्रिंशं स्तोमा इति । तदेतत्स्वस्थानविवृद्धाववकल्पते, न दण्डकलितवदावृत्तौ । कथम् । पूर्वस्मिन् पक्षसि त्र्यनीका त्रिः परिवर्तते । तस्मिन्ननावृत्तैव साऽऽग्रयणाग्रेषु परिसमाप्यते । उत्तरमपि पक्षो व्यावृत्तमिति कृत्वाऽऽग्रयणाग्रेष्वारभ्यते । तत्र प्रथमे*

यस्य दण्डकलितवदावृत्तिः, तस्यैतद्दर्शनं नोपपद्यते । कथम् । अस्मिन् गवामयने, अशीतिशतं पूर्वं पक्षः, एवमुत्तरम् = । तत्र पूर्वपक्षसि त्र्यनीका निविशते । सा निविशमानाऽऽद्ये द्वे अहनी वर्जयित्वा भवति । तयोरैन्द्रवायवाग्रतायाः प्रत्यक्षाम्नानात् । शिष्टेष्वहःसु निविशमानायाः÷ सप्ताहानि परिशिष्यन्ते । तत्र सप्तम ऐन्द्रवायवाग्रता । तस्मिंश्च+ पूर्वं पक्षः समाप्तं, त्र्यनीका त्वपरिसमाप्ता । सा च परिसमापयितव्या । ततो विषुवान् शुक्राग्रः । ततः प्रथमः स्वरसामाऽऽग्रयणाग्रः, द्वितीयः स्वरसामा, ऐन्द्रवायवाग्रः, तृतीयः स्वरसामा शुक्राग्रः । ततो विश्वजिदाग्रयणाग्रः, ततः षडह आवृत्तः प्रयुज्यते । तस्याऽऽवृत्तस्य= प्रथमं त्रयस्त्रिंशमहः, तदैन्द्रवायवाग्रं प्राप्नोति । एवं दर्शनं नोपपद्यते दण्डकलितवदावृत्तौ ।

यदेतद्व्याख्यानं भाष्यकारेण कृतमिदं नोपपद्यते । कथम् । अस्मिन्ग-

* प्रथमे—पक्षसीति शेषः । = एवमिति—मध्ये विषुवत्संज्ञक एकाहः, इति शेषः । तथा च—एकषष्ठ्यधिकशतत्रयसुत्यात्मकं गवामयनमिति ज्ञेयम् । ÷ निविशमानाया इति—एकोनविंशतिवारमावृत्ताया इति शेषः । + तस्मिंश्च—सप्तमेऽहनि । = आवृत्तस्येति—प्रातिलोम्येनेति शेषः । तथा च पूर्वस्मिन्पक्षसि षडहः क्रमेण त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशस्तोमक इति तस्योत्तरे पक्षसि प्रातिलोम्ये सति षडहाद्यं त्रयस्त्रिंशस्तोमकं संपद्यते तदैन्द्रवायवाग्रं प्राप्नोतीत्यर्थः ।

नवमभागे त्रयस्त्रिंशमहरिति कृत्वा तदाग्रयणाग्रं भवति । तत्रैतद्दर्शनमुपपद्यते । दण्डकलितवत्पुनरावृत्तौ सत्यां तदैन्द्रवायवाग्रं स्यात् । कथम् । त्रिवृत आरभ्य नवकैरहःसु संकल्प्यमानेषु पूर्वस्मिन् पक्षसि सप्त परिशिष्यन्ते । तत्र सप्तमे ऐन्द्रवायवाग्रता, शुक्राग्रो

---

वामयने चोदकेन÷ त्र्यनीका प्राप्नोति । विश्वजिति नामधेयेनाऽऽग्रयणाग्रता प्राप्नोति । 'पृष्ठ्यः षडहः' इति नामधेयेनैव षडहसंबन्धिनी ग्रहाग्रता । अभिप्लवे च नामधेयेनैकाहिको विध्यन्तः प्राप्नोति । चोदकप्राप्तेश्च नामधेयप्राप्तिर्बलीयसीत्युक्तम् । एवमिदं नोपपद्यते ।

यद्यपि चोदकेन प्राप्तिः स्यात्तथाऽपि दशरात्रस्य धर्मा अतिदिश्यन्त इत्युक्तम्× । दशरात्रप्रवृत्तौ च पूर्वस्मिन्पक्षसि दशधा विभागः प्राप्नोति । नवरात्रप्रवृत्तौ नवधा विभागः प्राप्नुयात् । न च नवरात्रः* प्रवर्तते। दशमे = चैन्द्रवायवाग्रता । उत्तरे पक्षसि स एवान्त्यो दशमो भागः प्रथममारभ्यते । तत्रैन्द्रवायवाग्रता× प्राप्नोति त्रयस्त्रिंशेऽहनि+ । पूर्वोत्तरपक्षयोर्न कश्चिद्विशेषः । यद्यपि नवरात्रः प्रवर्तते, तथाऽपि कोऽयं विशेषः । एकस्य = त्रिवृत आरभ्य गणना, अपरस्य+ प्रायणीयात् । तस्मात्तुल्या गणना कर्तव्या । तुल्यायां च गणनायां लिङ्गदर्शनानुपपत्तिरेव । अयं च विशेषो दर्शितः । एकस्य कृत्स्नं गवामयनमधिकृत्य गणना, अपरस्य पूर्वस्मिन्नेव पक्षसि गणना ।

अत्रोच्यते । यदि चोदकेन त्र्यनीका प्राप्यते तथा सत्येते दोषा भवेयुः । एषा तु गवामयने प्रत्यक्षेण वाक्येन विधीयते । गवामयने च धर्मा विधीयमाना

---

÷ चोदकेनेति–भाष्यकारमते त्र्यनीका प्राप्यमाणा चोदकेनैव प्राप्यते, न नामधेयात्, न वा प्रत्यक्षवचनादित्यर्थः । + 'चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमः स्यात्' (अ० १० पा० ५ सू० (९२) इत्यत्रेति शेषः । * नवभागाः प्रवर्तन्ते—इति मुद्रितपुस्तके पाठः । = दशमे इति–दशरात्रप्रवृत्तौ हि दशधा विभक्ते पूर्वस्मिन् पक्षसि दशमे भागे, इत्यर्थः । × ऐन्द्रवायवाग्रतेति–द्वादशाहे 'ऐन्द्रवायवाग्रो प्रायणीयोदयनीयौ, दशमं चाहः' इति वचनेन दशमस्यैन्द्रवायवाग्रत्वादित्यर्थः । ÷ अहनीति–सिद्धान्तेऽपीति शेषः । = एकस्य–पूर्वपक्षिणः । + अपरस्य–सिद्धान्तिनः ।

विषुवान् , आग्रयणाग्रः प्रथमः स्वरसामा, ततो विश्वजिदिति त्र्यनीका समाप्ता । त्रयस्त्रिंशमहरैन्द्रवायवाग्रं प्राप्नोति । तत्रैतद्दर्शनं विरुध्यते । तस्मात्स्वस्थानविवृद्धिरिति ॥ ८५ ॥

अवान्तरप्रकरणेन पूर्वस्मिन्पक्षासि निविशन्ते, न कृत्स्ने गवामयने । असंभवात्कृत्स्ने गवामयने भवेयुः । संभवति चावान्तरप्रकरणेन निवेशः । पूर्वपक्षवादिनस्तु दण्डकलितवदावृत्तिः पूर्वस्मिन्पक्षासि न समाध्यते । तस्य* त्रिवृत आरभ्य गणना प्रवर्तते । आद्ययोरैन्द्रवायवाग्रतायाः प्रत्यक्षाम्नानात् । आदौ चाऽऽरभमाणस्य द्वितीयेऽहनि शुक्राग्रता स्यात् । तस्मात्प्रत्यक्षेणैन्द्रवायवाग्रत्वेन विरोधः स्यात् ।

ननु शुक्राग्रताऽपि प्रत्यक्षैव । उच्यते । सामान्येन शुक्राग्रता विशेषेणैन्द्रवायवाग्रता । सामान्याच्च विशेषो बलवान् । तस्मात्तृतीयादारभ्य तस्य गणना । सिद्धान्ते त्वविरोधात्प्रथमादेवाऽऽरभ्य गणना घटते ।

अत्र चोद्यते । ज्योतिरादय उत्पद्यमाना विशेषनामधेयेन धर्मान्गृह्णन्त एवोत्पद्यन्ते । यथा कुण्डपायिनामयनेऽग्निहोत्रम्× । त्र्यनीका तु संघातधर्मत्वेन प्राप्नोति । सा च पश्चात्कालीनत्वाद्दुर्बला, उत्पन्नसंयोगित्वेन ।

उच्यते । अत्र पौर्वापर्यबाधो भवति । यथा विकृतौ दक्षिणाम्नानं चोदकेन प्राप्तं बाधित्वा निविशते, विरोधात् । एवमिहापि त्र्यनीका नामधेयप्राप्तं बाधित्वैव निविशते । यथाऽपच्छेदे पूर्वं नैमित्तिकमुत्तरेण विरोधे बाध्यते+ ।

अथवा, यदा यागः फले चोदितो भवति तदा धर्मानाकाङ्क्षति । एतस्यामवस्थायां किं चोदकेन धर्मा उत नामधेयेनेति चिन्तायां नामधेयेन धर्मप्राप्तिः । तच्च= लक्षणया धर्मप्राप्तिं करोति । त्र्यनीकां तु ग्रहणन् न लक्षणया धर्मप्राप्तिं करोति । उपदेशेनैव गृह्णाति । अतिदेशाच्चोपदेशो बलवान् ॥ ८५ ॥

---

* तस्येति-पूर्व पक्षवादिन आद्यमहर्द्वयं विहाय पृष्ठ्यषडहाद्यस्य त्रिवृत आरभ्य त्र्यनीकाया गणना प्रवर्तत इत्यर्थः । × कुण्डपायिनामयनाग्निहोत्रम्—ङ. पु० । + बाध्यत इति—तथा चोक्तं 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' ( अ० ६ पा० ५ अ०१९ सू० ५४ ) इत्यत्रेति शेषः । = तच्च—नामधेयम् ।

वचनात्परिवृत्तिरैकादशिनेषु ॥ ८६ ॥

अथ यदुक्तम्, ऐकादशिनिवादिति । युक्तं यदैकादशिनेषु दण्डकलितवदावृत्तिरिति । वचनं हि तद्भवति । वारुणमन्ततः पुनः पर्यावृत्तेष्वाग्नेयमेव प्रथमऽहन्यालभेतेति । वचनाद्दण्डकलितवदावृत्तिः पुनःपर्यावृत्तेष्विति । सा द्वादशाहेऽसंभवन्ती गवामयनं विशति । किमिव वचनं न कुर्यात् । न हि वचनस्यातिभारोऽस्ति ॥८६॥

लिङ्गदर्शनाच्च ॥ ८७ ॥

लिङ्गं खल्वप्येवमर्थं दर्शयति, यथा दण्डकलितवदैकादशिना आवर्तन्त इति । प्राणा वा ऐकादशिनाः, यदेकादशिनीभिरीयुरहान्यतिरिच्यन्ते पशवो वेति । स्वस्थानविवृद्धौ नास्त्यतिरेकः, दण्डकलितवदावृत्तौ न्यूनयताऽतिरिक्तता वा भवति । तस्मादपि पश्याम ऐकादशिनेषु दण्डकलितवदावृत्तिरिति ॥ ८७ ॥

( व्यूढात्मकद्वादशाहे मन्त्राणामेव छन्दोव्यतिक्रमाधिकरणम् ॥ २६ ॥ )

[ २६ ] छन्दोव्यतिक्रमाद्व्यूढे भक्षपवमानपरिधिकपालस्य मन्त्राणां यथोत्पत्तिवचनमूहवत्स्यात् ॥ ८८ ॥ सि०

अस्ति द्वादशाहः, समूढो व्यूढश्च । तत्र व्यूढः, ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे, अथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथाऽऽग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे इति । तत्र व्यूढे, इदं समामनन्ति, छन्दांसि वाऽन्योन्यस्य लोकमभिध्यायन्ति, गायत्री त्रिष्टुभः, त्रिष्टुब् जगत्याः, जगती गायत्र्या इति । तत्र सन्ति भक्षपवमानपरिधिकपालानि । भक्षास्तावत्, भक्षे हि मा विश दीर्घायुत्वाय शंतनुत्वाय एहि वसो पुरोवसो प्रियो मे हृदोऽस्यश्वि

॥ ८६ ॥ ८७ ॥

नोक्त्वा*बाहुभ्यां सव्यासंवसुमद्गणस्य+ रुद्रवद्गणस्याऽऽदित्यवद्गणस्य सोमदेव ते मतिविदः प्रातःसवनस्य माध्यंदिनस्य सवनस्य तृतीयसवनस्य गायत्रच्छन्दसस्त्रिष्टुप्छन्दसो जगतीच्छन्दसोऽग्निष्टुत इन्द्रपीतस्य–मधुमत उपहूतस्योपहूतो भक्षयामीति। तथा पवमानः, श्येनोऽसि गायत्रच्छन्दाः, सुपर्णोऽसि त्रिष्टुप्छन्दाः, सघाऽसि× जगतीच्छन्दाः, अनु त्वारभे स्वस्ति मा संपारय, इति च। तथा परिधयः, गायत्रो मध्यमः परिधिः, त्रैष्टुभो दक्षिणः, जागत उत्तर इति। तथा कपालानि, अष्टाकपालः प्रातःसवने, एकादशकपालो माध्यंदिनीयः, द्वादशकपालस्तातीयसवनिक इति।

तत्र संदेहः। किं छन्दोव्यतिक्रमे व्यतिक्रमो भक्षमन्त्राणां, भक्षणस्य च, पवमानमन्त्राणां पवमानस्य च, तथा परिधीनां कपालानां च, अथवा मन्त्राणां छन्दोव्यतिक्रम इति। किं प्राप्तम्। मन्त्राणां मन्त्रार्थानां च। कुतः। अविशेषवचनात्। अविशेषेण भवति वचनम्। छन्दांसि वा अन्योन्यस्य लोकमभिध्यायन्ति, गायत्री त्रिष्टुभः, त्रिष्टुब् जगत्याः, जगती गायत्र्या इति। न विशेषः श्रूयते मन्त्राणां व्यतिक्रम इति। तस्मान्मन्त्राणामर्थानां चेति। अतो मध्यमः परिधिर्दक्षिणस्थाने स्थापयितव्यः, दक्षिण उत्तरस्य, उत्तरो मध्यमस्येति। अष्टाकपालो माध्यंदिनीयः कार्यः, एकादशकपालतातीयसवनिकः, द्वादशकपालः प्रातःसवनीय इति। तथा, प्रातःसवनीयो* भक्षो माध्यंदिनस्य भक्षणस्य स्थाने भक्षयितव्यः, माध्यंदिनस्तातीयसवानिकस्य, तातीयसवनः प्रातःसवनीयस्येति। तथा, बहिष्पवमानो माध्यंदिनस्य पवमानस्य लोके,+ माध्यंदिन आर्भवस्य, आर्भवो बहिष्पवमानस्येति।

---

* हृदये भवाश्विनोर्बाहुभ्यां–क. ख.। + (अ० ३ पा० २ ण० ९ सू० २५) इत्यत्र भाष्यकृता भक्षमन्त्र आनुपूर्व्या कृत्स्नोऽपि लिखित इति प्रकृते किंचिदंशपरित्यागेन लेखनेऽपि न बाधकमिति ज्ञेयम्। × सखाऽसि–क. ख.। * प्रातःसवनीयस्येति सर्वत्र पाठ उपलभ्यते। + लोकं–क. ख.।

एवं प्राप्ते, ब्रूमः। नाविशेषेण छन्दसां व्यतिक्रमः स्यात्। मन्त्रगतो ह्येष व्यतिक्रमः। मन्त्रगतान्येव व्यतिक्रमेयुः। किं कारणम्। शक्यन्ते मन्त्रगतानि विपर्यासितुम्। भक्षादयः पुनर्विपर्यस्ता अपि त एवेति। माध्यंदिनस्य भक्षस्य कालेऽपि प्रातःसवनीयो भक्षो भक्ष्यमाणो नैव त्रैष्टुभः कृतः स्यात्। एवं सर्वत्र। कथम्। स्वकालेऽपि ह्यसौ न गायत्रः। गायत्री हि त्रिष्टुभः स्थानमभ्येति, नागायत्री। न भक्षादयो गायत्रादयः। तस्मादसंभवो भक्षादीनां व्यतिक्रमणस्य। मन्त्रगतानि तु छन्दांसि शक्नुवन्त्यन्योन्यस्य लोकं व्यतिक्रमयितुम्। तस्मान्मन्त्रगतानां छन्दसां व्यतिक्रम इति॥ ८८॥

इति श्रीशबरस्वामिविरचिते मीमांसाभाष्ये दशमाध्यायस्य पञ्चमः पादः॥

---

अथ दशमाध्याये षष्ठः पादः॥

---

( यज्ञे रथंतरादिसाम्नां तृचे गानाधिकरणम्॥ १॥ )

[ १ ] एकर्चस्थानि यज्ञे स्युः स्वाध्यायवत्॥ १॥ पू०

सामान्युदाहरणं, रथंतरं बृहद् वैरूपं वैराजं शाक्वरं रैवतमिति। तत्र संशयः। किमेकस्यामृचि गानं कर्तव्यमुत तृच इति। किं प्राप्तम्। एकर्चस्थानि यज्ञे स्युः। एकस्यामृचि गातव्यानि। एवं स्वाध्याये गीतानि। यथा स्वाध्याये गीतानि, तथा कर्माणि गातव्यानि। कर्मणि स्वाध्याये चावैलक्षण्यं न्याय्यम्। कर्माणि कर्तुं स्वाध्यायमभ्यस्यन्ति। अतो यथाऽभ्यस्तं तत्र प्रयोक्तव्यम्।

---

॥ ८८॥

---

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां दशमाध्यायस्य पञ्चमः पादः॥

---

तस्मादेकस्यामृचि गीयेरन् । एकर्चोत्पत्तीन्युदाहरणं, न तृचोत्पत्तीनि । यथाऽऽह, भिमा--संतानि--यतय--एवागपत्य--शाक्करवर्णमिति ॥ १ ॥

तृचे वा लिङ्गदर्शनात् ॥ २ ॥ सि०

न चैतदेवम्, एकस्यामेव गातव्यानीति । कुतः । लिङ्गदर्शनात् । लिङ्गं भवति । एवमाह, अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति, द्व्यक्षरेणोत्तरयोरिति । न ह्येकस्यामृचि प्रथमोत्तरासंबन्धो भवति । तस्मात्तृचे गातव्यानीति । अथेदमपरं लिङ्गम् । ऋक् सामोवाच, मिथुनी संभवावेति । सोऽब्रवीत्, न वै त्वं ममालमसि जायात्वे वेदो मे महिमेति । ते द्वे भूत्वोचतुः, सोऽब्रवीन्नैव वां ममालं स्थो जायात्वे वेदो मे महिमेति । तास्तिस्रो भूत्वोचुः, सोऽब्रवीत्संभवामेति। तस्मादेकं साम तृचे क्रियते स्तोत्रीयामिति ।

आह । लिङ्गमिदं, प्राप्तिरुच्यतामिति। तदभिधीयते । कृत्स्नेऽपि ऋग्वेदे न प्रथमा नाम काचिदृगस्ति, तथा उत्तरे इति । व्यवस्थाकृतं प्रथमात्वम्, उत्तरात्वमिति प्रथमाया ऋचोऽष्टाक्षरेण प्रस्तोतव्यं, द्व्यक्षरेण चोत्तरयोरिति । तस्मिन् वचने सति ऋचस्त्रित्वमापद्यते । तथा, यद्यप्यनुवादसरूपोऽयं शब्दः, तस्मादेकं साम तृचे क्रियते स्तोत्रियामिति, तथाऽपि ऋक् सामोवाच--इति पुरस्तादर्थवादप्ररोचनयां विदधातीति गम्यते । तदुक्तं, वचनानि* त्वपूर्वत्वादिति ॥ २ ॥

( वीक्षणे स्वर्दृक्पदपाठकालविधानाधिकरणम् ॥ २ ॥ )

( २ ) स्वर्दृशं प्रति वीक्षणं कालमात्रं परार्थत्वात् ॥ ३ ॥ सि०

ईश्वरं वै रथंतरमुद्गातुश्चक्षुः । प्रमथिता रथंतरे प्रस्तूयमाने

॥ १ ॥ २ ॥

---

*( अ० ३ पा० ५ अ० ६ सू० २१ )।

संमीलेत्,× स्वर्दृशं प्रति वीक्षेत । अत्र संशयः । किं स्वर्दृशं प्रति वीक्षणमङ्गप्रयोजनसंबन्ध उत कालार्थः संयोग इति । तत एतावत्तावन्नः परीक्ष्यं, किं रथंतरे प्रस्तूयमाने संमीलेदित्यस्य शेषः स्वर्दृशं प्रति वीक्षेतेति, उत स्वर्दृशमित्येवमादि पृथग्वाक्यमिति । किं प्राप्तम् । अङ्गप्रयोजनसंबन्ध इति पृथग्वाक्यमिति । कुतः। भेदेनावगमात् । भिन्नमिदमुपलभ्यते, स्वर्दृशं प्रति वीक्षेतेति । नन्वभिन्नमपि लक्ष्यते, रथंतरे प्रस्तूयमाने संमीलेदिति विधाय, स्वर्दृशं प्रति वीक्षेतेत्यनुवदतीति । उच्यते । उभयावगतौ भेदो ग्रहीतव्यः। स भेदो गृह्यमाणो= न तेन विरुध्यते । अन्यतरगतिस्तु विध्यनुवादयोर्विरोधात् । तत्र विधिर्न्याय्योऽपूर्वत्वात् । वादमात्रं ह्यनर्थकम् । विध्यवगमाच्च । विधिश्चावगम्यते, वीक्षेतेति । श्रुतिश्चैवमनुगृह्यते । स्वर्दृशं प्रति वीक्षेतेति स्वर्दृक्शब्दं प्रति वीक्षणार्थो विधीयते । स्वर्दृक्शब्देन सह वीक्षणस्य साक्षात्संबन्धः । इतरथा स्वर्दृक्शब्दः कालं लक्षयेत् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या । तस्मादङ्गप्रयोजनसंबन्धः ।

अथवा, स्वर्दृशं प्रति वीक्षेतेत्येवमङ्गप्रयोजनसंबन्धः । स्वर्दृक्शब्दो वीक्षणस्य साधनमिति । तथा लिङ्गमप्यनुगृहीतं भवति । स्वर्दृक्शब्दश्रवणाद्वाक्यमपि । तस्मादङ्गप्रयोजनसंबन्ध एवेति ।

एवं प्राप्ते, ब्रूमः । स्वर्दृशं प्रति वीक्षणं कालमात्रं स्यात्परार्थत्वात् । नैतदेवम्, अङ्गप्रयोजनसंबन्ध इति । किं तर्हि । स्वर्दृक्शब्देन वीक्षणस्य कालार्थः संबन्धः स्यात् । कुतः । परार्थत्वात्साम्नः । रथंतरं पृष्ठं भवतीति पृष्ठस्तुतौ हि साम विनियुज्यते । तच्च साम पदानां स्तुतिं निर्वर्तयतां संश्लेषादिभिर्विशेषैः स्तुतिपदाक्षराण्युपदर्शयत्स्तुतिमभिनिर्वर्तयतीत्युच्यते । एवं चेत्साम्नि स्तुतौ विनियुज्यमाने यानि तानि परस्परसव्यपेक्षाणि ऋक्पदानि स्तुतौ विनियु-

---

× संमीलयेदिति भाट्टदीपिकादिषु पाठः। = गृह्यमाणेन—मु०।

कानि भवन्ति*। अतः स्वर्दृक्शब्दस्य तन्मध्यपाठात्स्तुतौ विनियोग उक्तो भवतीति। अतः परार्थत्वादिह कालार्थः संयोग इत्यध्यवसीयते।

ननु मन्त्रे समाम्नानमात्रं, रथंतरोपदेशाच्च पदोपदेशमानुमानिकं बाधित्वैतद्वाक्यं प्रत्यक्षमङ्गप्रयोजनसंबन्धमेव प्रकल्पयेदिति। उच्यते। ताद्धि बाधकं भवति। यद्बाधमानमप्रयोजनं भवति। न चैतद्बाधमानमनर्थकं, क्रियासु कालपरिच्छेदेनार्थवत्त्वात्। मन्त्रे समाम्नानसामर्थ्यात्सामोपदेशाच्च स्तुतिसंबन्धः साक्षात्। वाक्यात्क्रियाकारकसंबन्धः। उभयोः प्रमाणावगतत्वादुभयसंबन्धो न विरुध्यत इति यद्युच्येत। तन्न। यो हि मन्त्रवाक्याद्व्यवच्छिन्नस्य क्रियाकारकसंबन्धमवगच्छति, नासौ सकृदुच्चारितस्य स्तुतिसंबन्धमप्यवगच्छति। यद्यवगच्छेत्, पुनरुच्चारयेत्, नान्यथा। तस्मात्तस्यामेव× श्रुतौ= क्रियासंबन्धे कारकसंबन्धो न स्तुतिसंबन्धे। कारकविशेषणाभावात्। तदेवं मन्त्राम्नानस्य सामोपदेशवाक्यस्य स्वर्दृशं प्रति वीक्षेतेत्यस्याविरोधे साधिते कालार्थः संयोग इति। अत उच्यते—कालार्थः संयोग इति।

अथ यदुक्तं, भेदाभेदयोर्भेदो ग्रहीतव्यः। विध्यनुवादयोर्विधिर्ज्यायान्। विधिप्रत्ययदर्शनाच्चैवमेवावगम्यत इति। अत्र ब्रूमः। सत्यं, विध्यनुवादयोर्विधिर्ज्यायान्, अपूर्वार्थप्रकल्पकत्वादिति। यदि तु प्रमाणान्तरप्राप्तिर्नावगम्यते। यत्र तु पदान्तरादर्थाद्वा प्राप्तिरवगम्यतेऽर्थस्य तत्र प्रमाणान्तरप्रतीतत्वाच्छब्द उच्चरन्ननुवाद इत्यवगम्यते। अत्र च स्वार्थप्रवृत्त्या पुरुषस्य दर्शनमस्ति। नापश्यन् पुरुषः क्रियासु व्यापारमुपगन्तुमुत्सहत इत्यर्थप्राप्ते विधिप्रत्ययोऽप्यनुवाद इत्यवगम्यते। ननु रथंतरे प्रस्तूयमाने संमीलेदिति प्रत्यक्षवाक्यमर्थप्राप्तं पुरुषस्य दर्शनं बाधेत। यथा प्रजापतिव्रतानि पौरुषेयीं स्वेच्छाप्रवृत्तिं वचनसामर्थ्यान्निरुन्धन्ति, तद्वदिति। नेत्यवगम्यते। क-

---

* संभवन्तीत्यतः—क.। × यस्मात्—क. ख.। = स्तुतौ—ख.।

थम् । क्रियाप्रारम्भसंबन्धात् । रथंतरे प्रस्तूयमाने, इत्युच्यते । तदतीते प्रस्तावे वचनार्थस्य कृतार्थत्वादर्थप्राप्तं न वारयितुमर्हति ।

अथ यदुक्तं, स्वर्दृक्शब्दवीक्षणयोर्वाक्येन संबन्ध इति । वाक्यार्थत्वाद् दृशिप्रयोगाच्च लिङ्गाद्दर्शनक्रियासामर्थ्यमस्तीति । अत्र ब्रूमः । प्रतिशब्दः कर्मप्रवचनीयत्वात्स्वर्दृक्शब्दस्य लक्षणतामाचष्टे श्रुत्यैव । श्रुतिश्च लिङ्गवाक्ययोर्बाधिका समधिगतैव । अथवा, नात्र वाक्यं बाध्येत । वाक्यं हि संबन्धप्रत्यायकम् । यथासंभवमनेकविधः संबन्धो वाक्याद्गम्यते । क्वचित्क्रियाकारकसंबन्धः, क्वचिद्विशेषणविशेष्यसंबन्धः, क्वचिल्लक्ष्यलक्षणसंबन्ध इत्येवंप्रकाराः संबन्धविशेषा इति । तत्रेह लक्ष्यलक्षणसंबन्धः प्रयोजनप्रयुक्त इति गृह्यत एव संबन्धविशेष इति न वाक्यं बाध्यते । यथा लोके, वृक्षं प्रति विद्योतत इति न विद्योतनस्य वृक्षस्य च साध्यसाधनभावो गम्यत इति । अन्यतः प्रवृत्तस्य विद्योतनस्य वृक्षश्चिह्नभावायोपादीयत इति । तद्वदिहापि पुरुषार्थतया प्रवृत्तस्य दर्शनस्य स्वर्दृक्शब्दो लक्षणतयोपादीयत इति न वाक्यानर्थक्यम् । न हि लक्ष्यलक्षणयोरनुच्चार्यमाणयोः संबन्धोऽवगम्यत इति ।

यदपि दृशिप्रयोगाल्लिङ्गानुग्रह इति । तदपि न समर्थमिवेप्सितस्यार्थस्य पश्यामः । स्वार्थो हि दृशिः प्रयुज्यमानो दर्शनमवगमयेत्, न पदार्थः । स्वर्दृक्शब्दे तु सोपपदे दृशिः कर्तृत्वे गुणभूतोऽवगम्यते । कर्ता तु प्रधानभूतः । न च कर्ता प्रत्याय्यमानो वीक्षणलिङ्गत्वेन कल्प्यते, दृशेरत्यन्तपारतन्त्र्यात् । कर्त्रभिधानश्च सन्नयं नैव वीक्षतिना सामञ्जस्येन संबन्धमुपैति । यदि तावदयमर्थ उपदिश्यते, स्वर्दृशं वीक्षेतेति । कोऽसौ स्वर्दृग्, यं प्रति वीक्षणमुपदिष्टमित्यविजानन्तो नैव क्रियामध्यवस्येम । अथायमर्थः, स्वर्दृशा वीक्षणं निर्वर्तयेदिति । तथाऽप्यप्रज्ञानात्स एव दोषः । तदेवंप्रकारे संबन्ध आञ्जस्येनाभ्युपगम्यमाने न लिङ्गं न च वाक्यमनुगृह्यते । लक्षणसंबन्धे तु वीक्षणस्य, एतदुच्चारणकाले वीक्षेतेति भवति कयाचिद-

युक्त्यां संबन्धः । स्तुतिसंबन्धश्च कर्त्रभिधानस्यापि सतो न विरुध्यते । सामानाधिकरण्यादीशानेन विशेषणविशेष्यभावसंबन्धमभ्युपैति, ईशानं स्वर्दृशं तस्थुष इति । अतो वदामः, स्तुत्यर्थस्य सतः, स्वर्दृशं प्रति वीक्षेतेत्यत्र कालार्थः संबन्ध इति ।

किं भवति प्रयोजनम् । अङ्गाङ्गिसंबन्धे सति यदा, रथंतरमुत्तरयोर्गायतीत्यतिदेशः, तदैतदुपतिष्ठते, रथंतरे प्रस्तूयमाने संमीलेदिति । उत्तरयोस्तु स्वर्दृक्शब्दाभावाद्दर्शनानियमः* पूर्वपक्षे । सिद्धान्ते तु लक्षणसंबन्धे सति तावति भागे कालाहानात्, स्वर्दृशं प्रति वीक्षेतेति नियमः सिद्धो भवति ॥ ३ ॥

( गावामयनिके पृष्ठ्यषडहे बृहद्रथंतरयोः प्रत्यहमेकैकस्यैवानुष्ठानाधिकरणम् ॥ ३ ॥

[ ३ ] पृष्ठस्य युगपद्विधेरेकाहवद्द्विसामत्वम् ॥ ४ ॥ पू०

इदमाम्नायते, पृष्ठ्यः षडहो बृहद्रथंतरसामा, इति । तत्रायमर्थः सांशयिकः । किमहरहर्द्विसामकं कर्तव्यमुत केषुचिदहःसु रथंतरं केषुचिद्बृहदिति । कुतः संशयः । यद्येते समस्ते सामनी, यदि विभक्ते, उभयथा, पृष्ठ्यः षडहो बृहद्रथंतरसामा, इतिशब्दोऽवकल्पते । तत्रैष विचारः । किं द्वंद्वगर्भो बहुव्रीहिरयं, बृहद्रथंतरे सामनी यस्येति, उतानेकपदो बहुव्रीहिः, बृहदस्य, रथंतरमस्येति । यदि द्वंद्वगर्भो बहुव्रीहिः, प्रत्यहं समस्ते सामनी । अनेकपदे बहुव्रीहौ विभक्ते इति ।

---

॥ ३ ॥

——

द्वंद्वगर्भो बहुव्रीहिरयम् । अथवाऽनेकपदाविशिष्ट इति । द्वंद्वगर्भे प्रथमं तावत्, बृहच्च रथंतरं चेति द्वंद्वः, पश्चादन्यपदार्थसंबन्धः । अनेकपदाविशिष्टे, बृहदस्य रथंतरमस्य सामेति सर्वाण्येवास्यशब्देन संबध्यन्ते निरपेक्षाणि ।

---

* दर्शनानियम इति—पूर्वपक्षे यावदुत्तरासमाप्ति संमीलनमेव कार्यमित्याशयः। सिद्धान्ते तु स्वर्दृक्पदाभिव्यञ्जकरथंतरभागावधिकमेव संमीलनमिति ।

किं तावत्प्राप्तम् । समस्ते इति । तत एतद्वर्ण्यते । द्वंद्वगर्भो बहुव्रीहिरिति । कुतः । बृहद्रथंतरशब्दयोरानन्तर्याद्वृत्तिपक्षस्याऽऽश्रितत्वात्, वृत्तिपक्षे च समासस्य नित्यत्वात् । द्वंद्वे च स्वार्थाभिधानाच्छ्रुत्यनुग्रहोऽन्तरङ्गता च । इतरथा चोभयमपि बाध्येत । अतो द्वंद्वगर्भो बहुव्रीहिः । एवं चेत्प्रत्यहं समस्ते सामनी भवेताम् । कुतः । इतरेतरयोगद्वंद्वस्य भावात्, यत्र रथंतरं तत्र बृहत्साहितम् । स एष युगपद्विधिर्यदितरेतरयोगः । तस्मात्प्रत्यहं समस्ते इति । एकाहवत् । यथा, ज्योगामयाविन उभे कुर्यात्, संसवे उभे कुर्यात्, अपचिताववप्येक हे× बृहद्रथंतरे कुर्यादिति ॥ ४ ॥

---

तत्र पूर्वः पक्षः। बृहच्छब्द उच्चरितः संबन्धिनमपेक्षते । रथंतरशब्दोऽपि । द्वयोरानन्तर्येणोच्चरितत्वात्प्रथमं= तावदानन्तर्येण संबन्धः पश्चादस्यशब्देन । वृत्तिपक्षस्याऽऽश्रितत्वादिति वृत्तिशब्देन समासं ब्रवीति । स प्रागन्यपदार्थसंबन्धाद्द्वंद्वसमासो भवति, पश्चादन्यपदार्थसंबन्धः । ननु 'विभाषा ×' इत्यनेन वैकल्पिकः समासः स्यात्*, न नित्यः । तन्न । यदा वाक्यं तदाऽन्यपदार्थसंबन्ध एव भवति, नावान्तरसंबन्धः । यदा समासस्तदाऽवान्तरसंबन्धो लभ्यते । एतस्मिन्द्वैते चोदकसामर्थ्याद्वाक्यमेवाऽऽश्रयामो न समासमित्याशङ्कां निराकर्तुं वृत्तिपक्षे च समासस्य नित्यत्वादित्यनेन ग्रन्थेन नित्यं समासं प्रतिपादयतीदृशेषु । कथम् । एवमाह–'द्वंद्वतत्पुरुषयोरुत्तरपदे÷ नित्यसमासवचनम्' वाक्त्वचप्रियः× पञ्चगवधनो= दशगवधन इति । यदि पूर्वं समासो न क्रियेत तथा सत्यप्रयोगः प्राप्नोति* । तस्माद्द्वंद्वभाविनोः पूर्वपदयोरवान्तरसमासो नित्य इति ॥ ४ ॥

---

× अपवितौ—क. । = तयोः–मु । + पा० सू० ( ४-१-११ )। * स्यात् । न । तत्र यदा–घ० मु० । ÷ पा० सू० ( २-१—५१ ) अत्रात्यं वार्तिकम् । :× वाक्त्वचप्रिय इति–द्वंद्वपक्ष इति शेषः । = पञ्चगवधन इति–तत्पुरुषपक्ष इति शेषः । * प्राप्नोतीति—ततश्च 'वाक्त्वक्प्रियः' इत्यपि प्रयोग स्यादित्यर्थः ।

विभक्ते* वाऽसमस्तविधानात्तद्विभागेऽवि-
प्रतिषिद्धम् ॥ ५ ॥ सि०

न चैतदस्ति, अहरहर्द्विसामकमिति । केषुचिदहःसु रथंतरं, केषुचिद् बृहत्, न समस्ते सामनी विधीयेते। कुतः। यद्युभयोरपि पक्षयोः, बृहद्रथंतरसामेतिशब्दोऽवकल्पते, विभक्ते सामनी इति न्याय्यम् । कुतः । प्रकृतावेकेन साम्ना पृष्ठं साधितम् । विकृतावप्येकेन साधितव्यं, चोदकानुग्रहाय । तथा च सति बृहन्निमित्तं च सकलमभिनिर्वर्तयिष्यते ।

अथ बृहद्रथंतरसमुदायः पृष्ठं साधयति, न बृहत्साधनं, न रथंतरं साधनमिति तन्निमित्तं न प्रकल्पेत । तत्र चोदकोपरोधः स्यात् । न केवलं तन्निमित्तं न प्रकल्पते, बृहत्पृष्ठताऽपि न प्रकल्पते, रथंतरपृष्ठताऽपि । तत्र वैषम्यात्स्यादन्यदेव प्रयोगान्तरम् । अपि च समस्तं पृष्ठमित्युपचर्यमाणे लक्षितं, बृहत्पृष्ठं भवति, रथंतरं पृष्ठं भवतीति, तदसमुदायाभिधाने लिङ्गम् । अपि च बृहच्छब्दः सामशब्देन संबन्धमपेक्ष्यमाणो× न रथंतरशब्देन संबद्धः स्यात् । आनन्तर्यं च तुल्यं रथंतरशब्दस्य सामशब्देन । अपि च वृत्तिपक्षाश्रये सुतरां द्वंद्वपदेनासामर्थ्यम् । न चैष नियोगो वृत्तिपक्षे नित्यः समास इति । विभाषां हि स्म भगवान् पाणिनिरधीते । सामशब्दश्रुतिश्च बृहद्रथंतरयोर्लक्षणतामाचष्टे । तस्मादसमस्ते सामनी स्यातामिति । एतच्चोक्तमेव विभागेऽपि साम्नोरविप्रतिषिद्धो बृहद्रथंरसामशब्द इति । यथा, मासं घृततैलाभ्यां देवदत्तो भोजयितव्य इत्युक्तेऽर्धमासं घृतेनार्धमासं तैलेन, एवमपि शब्दोऽवकल्पते । एकाहे त्वेकत्वादेव विभागासंभवात्समस्ते, ज्योगामयाविन उभे कुर्यादिति ॥ ५ ॥

॥ ५ ॥

---

* 'विभक्ते वा समस्तविधानात्तद्विभागे विप्रतिषिद्धम्' इत्येव प्रायः सर्वत्र पाठो दृश्यते । × अपेक्षमाणः—क. ।

[ प्रायणीयोदयनीययोरैकादशिनानां विभज्यानुष्ठानाधिकरणम् ॥४॥ ]

[ ४ ] समासस्त्वैकादशिनेषु तत्प्रकृतित्वात् ॥ ६ ॥ पू०

इदमाम्नायते, ऐकादशिनान् प्रायणीयोदयनीययोरातिरात्रयोरालभेतेति । तत्र संशयः । किमेकादश प्रायणीये, पुनस्त एवैकादशोदयनीये, आहोस्वित्केचित्पशवः प्रायणीये केचिदुदयनीय इति । समानत्वान्निर्देशस्य, संशयः । किं प्राप्तम् । तुशब्दः संशयनिवृत्त्यर्थः । समास एवैकादशिनेषु, सर्वे प्रायणीये, सर्वे पुनरुदयनीये भवितुमर्हन्ति । कुतः । तत्प्रकृतित्वात् । प्रकृतौ ज्योतिष्टोमे समस्तानामैकादशिनानामालम्भः, इहापि समासं चोदकः प्रापयति । अपि च लक्षणत्वेन प्रायणीयमुदयनीयं चाहः+ श्रूयते । तत्र प्रायणीये सर्वे विहिता भवन्ति । न गम्यते विशेषः, क इहैकादशिना न विहिता इति । तथोदयनीये । तस्मात्समासस्तत्र ॥ ६ ॥

विहारप्रतिषेधाच्च ॥ ७ ॥

विहारप्रतिषेधश्चायम्, ऐकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेरन्निति । अन्वहमेकैकमालभेतेति विहारः प्राप्तः । तत्रैकः पशुः प्रायणीके प्राप्त एव । अन्येऽन्येष्वहःसु । ततोऽनेन किं क्रियते, येऽन्येष्वहःसु, ते प्रतिषिध्यन्ते, प्रायणीये च ते सर्वे भवन्तीति । तथोदयनीये । तस्मात्सर्वे प्रायणीये भवितुमर्हन्तीति ॥ ७ ॥

श्रुतितो वा लोकवद्विभागः स्यात् ॥ ८ ॥ सि०

वाशब्देन पक्षं व्यावर्तयति, नैतदस्ति समास इति । विभागः स्यात् । कुतः । द्वित्वश्रुतितः । द्वित्वश्रुतिर्हि भवति, प्रायणीयोदयनीययोरिति । सा चेदानीमुपादेयत्वेन, न लक्षणतया । कुतः । एकादशिनीविधौ संनिहिते वचनादेकादशिनीं विधाय पुनः श्रुत्या तां लक्षयित्वा प्रयोजनविधित्सयैतदभिधीयते, प्रायणीयोदयनीययोरिति ।

---

॥ ६ ॥ ७ ॥

---

+ वाऽह्नः श्रूयते-मु० ।

तत्र द्वंद्वभाविनोः प्राधान्यात्सत्यामपेक्षायां भवति समासः। समासे चेतरेतरयोगान्नैकादशिनी केवले प्रायणीये। सोदयनीययुक्तं भवितुमर्हति। तद्वदुदयनीयेऽपि। तस्मात्समुदाये वाक्यपरिसमाप्तिः। यदि पुनर्नोपादेयत्वेनाश्रोष्येतां, तत्र द्वंद्वभाविनोरप्राधान्यम्। अप्राधान्येऽसत्यामाकाङ्क्षायां न समासो भविष्यति। तत्र प्रत्येकं वाक्यपरिसमाप्तिः स्यात्। उपादेयत्वेन त्वेतच्छ्रूयते। तस्माद्विभाग इति।

लोकवत्। यथा लोके शतं देवदत्तयज्ञदत्तयोर्दीयतामित्युक्ते समासार्थो विधीयते, यदेतच्छतं, तदेतयोर्दीयतामिति। द्वंद्वश्रुतिविधानसामर्थ्याच्छतं विभज्यते, एवमेकादशिन्यपि विभज्येतेति ॥ ८ ॥

विहारप्रकृतित्वाच्च ॥ ९ ॥

इतश्च विभागः। कुतः। विहारः प्रकृतः। एकादशिन्यामन्वहमेकैकमालभेतेति। तस्यैव विकारः, ऐकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेतेति। यावच्छक्यं तावद्विहारस्यानुग्रहीतव्यम् + ॥ ९ ॥

विशये च तदासत्तेः ॥ १० ॥

इदं पदोत्तरं सूत्रम्। आह। यदि विहारोऽभिप्रेयते, तत्रैकत्र पञ्चाऽऽलब्धव्याः। एकत्र षट्। तत्रैकदेशो न निर्णीयते, किं प्राय-

---

एकादशिनी विहिता। तस्मिन्प्रकरणे 'प्रायणीयोदयनीययोरालभेरन्' इति। तत्रैकादशिनी, इतिकर्तव्यतां* कालं देशं चापेक्षते। अपेक्षमाणायाश्च देशविशेषत्वेन+ प्रायणीयोदयनीयौ विधीयेते। द्विवचनमितरेतरयोगश्च सर्वं विवक्षितम्, उपादीयमानत्वात्।

अत्र ग्रन्थः। तत्र द्वंद्वभाविनोः प्राधान्यात्सत्यामपेक्षायां× भवति समासः। समासे चेतरेतरयोगादिति। प्रायणीयोदयनीयौ विधीयमानौ शब्दवृत्तेन* प्रधानभूतौ। प्रधानस्य पदान्तरमपेक्षमाणस्यापि भवति समासः।

---

+ विकारस्य—ख.। * इतिकर्तव्यतामपेक्षते—मु०। + देशविशेषणत्वेन—घ०।
× सत्यामप्यपेक्षायां—घ० मु०। * शब्दवृत्तेन प्रधानभूताविति—शब्दस्य विधेये तात्पर्याद्विधीयमानौ प्रधानभूतावित्याशयः।

णीये किमुदयनीय इति । अनिर्णयेनानध्यवसानम् । अनध्यवस्यतोऽप्रवृत्तिः । तत्रोपदेशवैयर्थ्यं स्यादिति । अत्रोच्यते । विशये—एतस्मिन् संशये, प्रत्यासत्तिर्मुख्येनानुगृह्येत= । तत्र प्रायणीये पञ्चाऽऽलभ्यन्ते, षडुदयनीय इत्यध्यवस्यामः ॥ १० ॥

त्रयस्तथेति चेत् ॥ ११ ॥

इति चेत्पश्यसि प्रत्यासत्तिर्मुख्येनानुग्रहीतव्येति । तस्मात्त्रय एव प्रायणीय आलब्धव्याः, यावत्सु बहुवचनमविरुद्धं भवतीति, स्थितायां प्रतिज्ञायां सूत्रेण प्रतिचोदयत्येवम् ॥ ११ ॥

न समत्वात्प्रयाजवत् ॥ १२ ॥

नैतदेवम् । कुतः । समत्वात् । यदा प्रायणीयोदयनीययोरितरेतरापेक्षयोरैकादशिना विधीयन्ते, न सर्वेऽन्यतरस्मिन् केवले कर्तव्याः, तदपेक्षया कार्त्स्न्यं बाधितं भवति । तत्र यावद्भिरन्यतरत्र भवद्भिरवश्यं बाधितव्यं तावद्भिरनुज्ञातो बाधः । अत एव साम्येनैव विभागः प्रयाजानामिव । यथा, षडागन्तवः प्रयाजाः प्रथमोत्तमयोर्विकारभूताः साम्येन प्रविभज्यन्ते, एवमिहापि यावत्सु साम्यं भवति, तावतः साम्येन विभज्य, अभ्यधिक उदयनीय आलप्स्यते, प्रत्यासत्तिर्मुख्येनानुग्रहीष्यत इति । तस्माददोषः ॥ १२ ॥

( विश्वजिति षाडहिकरथंतरादिसाम्नां मध्ये वैरूपस्यैव होतुः

पृष्ठस्तोत्रे निवेशाधिकरणम् ॥ ५ ॥ )

[ ५ ] सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात् ॥ १३ ॥ पू०

---

यथा, राजपुरुषो, दर्शनीय इति प्राधान्यात्पुरुषस्य दर्शनीयत्वमपेक्षमाणस्यापि राज्ञा सह समासो भवति । एवं प्रायणीयोदयनीययोरैकादशिनानपेक्षमाणयोरापि भवति समासः । यदि न विधीयेयातां, तथा सति गुणभूतौ । गुणभूतयोश्चैकादशिनानपेक्षमाणयोः समासो न प्राप्नुयात् । तस्माद्विधीयेते ॥ ८ ॥ [ ९ ॥ ॥ १० ॥ ११ ॥ १२ ॥

———

= प्रकृत्यासत्तिः—क. ।

इदमाम्नायते, विश्वजित्सर्वपृष्ठ इति । तत्रायमर्थः सांशयिकः । किं सर्वेषां पृष्ठदेशे निवेश उतैकस्य पृष्ठदेशेऽन्येषामन्यत्रेति । किं प्राप्तम् । सर्वपृष्ठ एतस्मिन् सर्वेषां साम्नां पृष्ठदेशे निवेशः । कः पुनः पृष्ठदेशः । ऊर्ध्वं माध्यंदिनपवमानात्, प्राङ् मैत्रावरुणसाम्नः, इदमन्तरालं पृष्ठदेशः । स एवैको देशः स्यात्सर्वेषां साम्नाम् । कुतः । पृष्ठशब्दात् । पृष्ठकार्ये वर्तमानस्य चायं× कृतो देशः । तस्मात्सर्वेषां पृष्ठदेशे निवेशः ॥ १३ ॥

विधिस्तु विप्रकर्षः स्यात् ॥ १४ ॥ सि०

तुशब्दः पक्षं व्यावर्तयति । एवं न्यायेन प्राप्तं, वचनादन्यथा भवितुमर्हति । एकस्य पृष्ठकार्ये विधिरन्येषां परिसामकार्ये । कथम् । पवमाने रथंतरं करोति, आर्भवे बृहत्, मध्य इतराणि—वैरूपं होतुः पृष्ठं, वैराजं ब्रह्मसाम, शाक्वरं मैत्रावरुणसाम, रैवतमच्छावाकसाम, इति । एवमेकस्य पृष्ठकार्ये विधानमर्थवद्भविष्यति । यदीतरेषां परिसामकार्ये* निवेशः । इतरथा, एकस्य पृष्ठकार्ये विधानं नोपपद्यते, तन्मा भूदिति । अतः पश्याम एकस्य पृष्ठकार्ये निवेशः, अन्येषां परिसामकार्य इति ॥ १४ ॥

( उक्थ्यादिक्रतौ बहुव्रीहिपदनिर्दिष्टानां वैरूपादिसाम्नां होतुः पृष्ठ एव निवेशाधिकरणम् ॥ ६ ॥ )

[ ६ ] वैरूपसामा क्रतुसंयोगात्त्रिवृद्वदेकसामा स्यात् ॥ १५ ॥ पू०

अस्ति ज्योतिष्टोमः, तत्रोक्थ्यः षोडशी च संस्थाविशेषः । तत्र श्रूयते । उक्थ्यो वैरूपसामा, एकविंशः षोडशी वैराजसामा, इति । तत्रायमर्थः सांशयिकः । किं वैरूपं वैराजं च कृत्स्ने क्रतौ निविशेते, उत पृष्ठकार्ये इति । किं प्राप्तम् । कृत्स्ने क्रतौ वैरूपमेकं साम

॥ १३ ॥ १४ ॥

--

× वाऽयं क. । * सामकार्ये–मु० ।

स्यात्, षोडशिनि वैराजम्। कुतः। कृत्स्नक्रतुसंयोगात्। अविशेषेण कृत्स्ने क्रतौ वैरूपसाम विधीयते, वैराजं च। तन्न विशेषेऽवस्थातुमर्हति पृष्ठकार्ये। त्रिवृद्वत्। यथा= त्रिवृदग्निष्टोमः, त्रिवृत्स्तोमः कृत्स्ने क्रतौ भवति, एवमिमे अपि सामनी कृत्स्नयोः क्रत्वोर्भवेताम्। यथा वा धेनुः, अथैष भूर्वैश्वदेवः, त्रिवृदेव सर्वस्तस्य विश्ववत्यः स्तोत्रिया धेनुर्दक्षिणा, इति कृत्स्नस्य क्रतुदाक्षिण्यस्य कार्ये धेनुः, संयोगात्। एवमिमे अपि सामनी भवितुमर्हतः ॥ १५ ॥

पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात् ॥ १६ ॥ सि०

पृष्ठकार्ये वा सामनी विधीयेते। कथम्। वैरूपसामा वैराजसामेति सामशब्देन प्रकृतिलिङ्गेन बहुव्रीहिरवगम्यते। न वैरूपं साम विधीयते वैराजं च। किं तर्हि। वैरूपसामता वैराजसामता च क्रतोः। क्रतुसंयोगो हि भवति न स्तोत्रसंयोगः। एकस्मिन्नपि च स्तोत्रे वैरूपे वैराजे च, भवति वैरूपसामता वैराजसामता च क्रतोः। कुतः। यदि हि स्तोत्रे साम विधीयते, स्तोत्राविशेषात्सर्वस्तोत्रेषु भवेत्। न त्वेतदेवम्। तस्मादेकस्मिन्न् स्तोत्रे वैरूपे वैराजे च, भवति वैरूपसामता वैराजसामता चेति। यदैकस्मिंस्तदा पृष्ठकार्ये स्याताम्। वैरूपसामता हि गुणो विधीयमानो वैराजसामता चैवंजातीयकस्य गुणस्य कार्ये भवितुमर्हति। प्रकृतौ च बृहत्सामता रथंतरसामता चैवंजातीयका। तदिह× प्रकृतिलिङ्गसंयोगेन वैरूपसामतया वैराजसामतया च पृष्ठकार्ये वृत्तिरवगम्यते, यस्य* लिङ्गमर्थसंयोगादभिधानवदित्यनेन न्यायेन। तस्मादिमे सामनी पृष्ठकार्ये निविशेयातामिति ॥ १६ ॥

त्रिवृद्वदिति चेत् ॥ १७ ॥

इति चेत्, इति यदुक्तं यथा त्रिवृदग्निष्टोम इति त्रिवृत्त्वं कृत्स्ने क्रतौ निविशते, एवमिहापीति। तत्परिहरणीयम् ॥ १७ ॥

---

॥ १५ ॥ १६ ॥ १७ ॥

---

= सामकार्ये–मु०। × तत्रेह–ख.। * (अ० ८ पा० १ अ० १ सू० २)।

न प्रकृतावकृत्स्नसंयोगात् ॥ १८ ॥

नैतदेवम् । इह वैरूपवैराजयोः प्रकृतिलिङ्गेनाकृत्स्नसंयोगो गम्यते । नैवं त्रिवृति कश्चित्प्रकृतिलिङ्गेन संयोगोऽस्ति, येनाकृत्स्नताऽवगम्येत । ततो विशेषस्त्रिवृतः सामभ्याम् ॥ १८ ॥

विधित्वान्नेति चेत् ॥ १९ ॥

इति चेत्, इति यदुक्तं, यथा धेनुविधिर्भुवि कृत्स्नस्य क्रतुदाक्षिण्यस्य कार्यं भवति, एवं सामनी अपीति ॥ १९ ॥

स्याद्विशये तन्न्यायत्वात्कर्माविभागात् ॥ २० ॥

स्याद् धेनुर्भुवि कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तयित्री । सा हि कृत्स्नं क्रतुदाक्षिण्यं निवर्तयेत् , किंवा नेत्येतस्मिन् संशये, एवं न्याय्यं कृत्स्नं निवर्तयेत् । कुतः । कर्माविभागात् । अविभक्तं हि दक्षिणाकार्यं कात्स्न्र्येन वा दाक्षिण्येन क्रियेत धेन्वा वेति । दक्षिणाकार्ये हि धेनुः श्रूयते, धेनुर्दक्षिणा, इति । अतस्तत्र युक्तम् । इह प्रकृतिलिङ्गसंयोग इत्यपदिष्टो हेतुः । तस्मादेतदपि विषमम् ॥२०॥

प्रकृतेश्चाविकारात् ॥ २१ ॥

इतश्च न कृत्स्नक्रतुसंयोगः । कुतः प्रकृतेरविकारात् । एवं बहु प्राकृतमविकृतं भविष्यति । तत्र चोदकोऽनुग्रहीष्यते । अतोऽपि न कृत्स्नक्रतुसंयोगः साम्नोरिति ॥ २१ ॥

[ अग्निष्टुति श्रुतस्य त्रिवृत्त्वस्य स्तोत्रीयानवकरूपस्य स्तोत्रान्तरगतस्तोममात्रबाधकत्वाधिकरणम् ॥ ७ ॥ ]

[ ७ ] त्रिवृति संख्यात्वेन सर्वसंख्याविकारः स्यात् ॥ २२ ॥ पू०

एवं श्रूयते, त्रिवृदग्निष्टोम इति । तत्र संशयः । किं त्रिवृत्संख्याऽग्निष्टोमस्य साधनमात्रे, उत स्तोमविषया नियम्यत इति । किं प्राप्तम् । त्रिवृद्भवतीति श्रूयमाणे संख्यामात्रविकारः स्यात् । कुतः ।

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

त्रिवृच्छब्दो लोके त्रित्वसंबद्धे प्रयुक्तः । यथा त्रिवृद्रज्जुस्त्रिवृन्मणिरिति । इहापि, त्रिवृदग्निष्टोम इति त्रित्वसंबद्धोऽग्निष्टोमः कार्य इत्युच्यते । तच्च त्रित्वमग्निष्टोमसाधनपरिच्छेदद्वारेण तत्संबद्धमित्युक्तं भवति न साक्षात् । गुणत्वात्संख्यायाः । न चेह संख्येयविशेषः कश्चित्तदीय उपादीयते । तदविशेषाद्यावान् कश्चिदग्निष्टोमसंबद्धः संख्यया परिच्छेत्तव्यः सर्वं परिसंचक्षीतः संख्यात्वेन सामान्येन तत्संख्यां विकुर्यात् । यथा दधिघृतशालिभिर्देवदत्तो भोजयितव्यः । देवदत्तवद्यज्ञदत्तस्तैलेनेत्युक्ते स्नेहनसामान्यात्तैलं स्नेहनकार्य एव विनियुज्यते, नौदनकार्य इति । एवं संख्याऽपि संख्याकार्य एव विनियुज्यते ॥ २२ ॥

स्तोमस्य वा तल्लिङ्गत्वात् ॥ २३ ॥ सि०

न चैतदस्ति, सर्वसंख्याविकार इति । किं तर्हि । स्तोमगतामेव संख्यां विकुर्यात् । कथम् । स्तोमविषये त्रिवृच्छब्दस्यान्यत्र दर्शनात् । यथा, त्रिवृद्बहिष्पवमान इत्यत्र स्तोमविषयता परिच्छिन्ना । एवं, त्रिवृदग्निष्टोम इत्यत्रापि स एव शब्द उच्चरितस्तमेव संबन्धिनमनुमानाद्बुद्धौ संनिधापयेत् । अतः स्तोमलिङ्गत्वात्तद्गतामेव संख्यां विकुर्यात् ।

अत्राभिधीयते । नैतद्युक्तम् । संख्याशब्दा ह्यनियतवृत्तयो भवन्ति । ते हि येन येन संबध्यन्ते संख्येयेन तं तं परिसंचक्षते । तथा चोपदर्शितमेव त्रिवृद्रज्जुस्त्रिवृन्मणिरिति । तस्माद्बहिष्पवमानेन सामानाधिकरण्यात्स्तोत्रं परिसंचष्टे, अन्यत्रापि, यो यः परिसंख्यातव्यो भविष्यति, तं तं परिसंख्यास्यतीति । अतः स्तोमलिङ्गत्वमप्यहेतुर्नियमस्येति ।

अत्राभिधीयते । अयमिह त्रिवृच्छब्दोऽतीत्य लौकिकमर्थं विशिष्टसंख्येय आचरितः । यथा, त्रिवृद्बहिष्पवमान इति स्तोमविषयिण्यां नवसंख्यायाम् । त्रिवृद्बहिष्पवमान इत्यभिधाय नव स्तोत्री-

॥ २२ ॥

---

था उच्यन्ते । तेन तासु वर्तत इति गम्यते । तथा परस्मिन्नपि दृश्यते । त्रयस्त्रिकपालास्त्रिवृता स्तोमेन संमिताः, न* च प्रकृतिराग्निष्टोमस्येति, नवानां कपालानां त्रिवृता स्तोमेन संमानं वदन् त्रिवृच्छब्दस्य तत्र प्रसिद्धिं दर्शयतीति । अतः प्रसिद्धवदाचारात्, सामानाधिकरण्यदर्शनाच्चायमस्यार्थ इति निश्चीयते । लोकेऽपि सामानाधिकरण्यप्रयोगादाचाराच्चार्थाध्यवसानं भवति, यथाऽयं देवदत्त इति । तस्मादयं त्रिवृच्छब्दो विशिष्टसंख्यासंख्येयविषयोऽन्यत्र दृष्ट इतीहापि प्रयुज्यमानो यत्र दृष्टस्तमेव लिङ्गाद्बुद्धौ संनिधापयतीत्यतः स्तोमविषयो नियम्येत । यदुक्तं, संख्या ह्यनियतविषया सर्वत्र संबन्धमुपयाति । एतत् , अवयवार्थनिराकरणात्समुदायाङ्गीकरणाच्च परिहृतमेवेति । एवं चान्यगतानां संख्यानामनिवृत्तौ चोदकानुग्रहो भविष्यतीति ॥ २३ ॥

( उभयसामके संसवादिक्रतौ बृहद्रथंतरयोः पृष्ठस्तोत्र एव समुच्चित्य निवेशाधिकरणम् ॥ ८ ॥ )

[ ८ ] उभयसाम्नि विश्वजिद्वद्विभागः स्यात् ॥ २४ ॥ पू०

सन्त्युभयसामानः क्रतवः । संसव उभे कुर्यात् , अपचितावप्येकाह उभे कुर्यादिति । तत्र संशयः । किं बृहद्रथंतरे विभक्ते भवतः, उत समस्ते इति । कुतः समस्तताऽवगम्यते, कुतो वा व्यस्ततेति । उच्यते । एतदेव वचनमुभयमर्थमुद्भासयति । कथम् । उभाभ्यां क्रतुः संबन्धयितव्यः । ते यदि समस्ते, अथवा व्यस्ते भवतः, उभयथाऽपि क्रतुस्ताभ्यां संबद्धो भवति । तत्रोभयथा प्रतिभाति वचने । किं युक्तम् । व्यस्ते इति । कुतः । प्रकृतौ हि बृहद्रथंतराभ्यामन्यतरेण पृष्ठं साधितम् , इहापि प्रकृतिवच्चोदकानुग्रहायान्यतरेण साधयितव्यमवगम्यते । एवं च पृष्ठसंबद्धानां कर्मणां कार्त्स्न्येन प्रवृत्तौ चोदकोऽनुग्रहीष्यते, उभयोश्च+ पृष्ठं साधयतोरन्योन्येन विहतत्वात्प्रयो-

---

॥ २३ ॥

—

---

* नव-क० । + उभयोः पृष्ठं-ख. ।

गान्तरमापद्येत, न रथंतरं पृष्ठं, न बृहत्पृष्ठमिति । उभयथाऽपि वचनार्थोपपत्तौ न चोदकबाधायां कारणमस्ति । तस्माद्यथा, न विश्वजिति बृहदादीनां सर्वेषामेकत्र निवेशः, एवमिहापीति ॥ २४ ॥

पृष्ठार्थे वाऽतदर्थत्वात् ॥ २५ ॥ सि०

नैतदस्ति, विभक्ते इति । किं तर्हि । समस्ते सामनी स्याताम् । कुतः । प्रकृतौ हि बृहद्रथंतराभ्यां विकल्पमानाभ्यां पृष्ठं साधितम् । इहेदानीं विकृतौ तयोरधिगतदेशयोर्विकल्परूपेणैव प्राप्तयोः केवलमेतद्वचनं सामस्त्यविधानार्थम्, उभे बृहद्रथंतरे कुर्यादिति । एवं च सामस्त्यं भवति, यदि ते सामनी परस्परं न जहीतः । उपादेयत्वेन चानयोः श्रुतत्वाद्द्वित्वश्रुतिः समासश्रुतिश्च विवक्षितैव । तेन यत्र बृहत्, तत्र रथंतरसहितं, न केवलमिति ।

तत्रैतत्स्यात् । प्रधानक्रियापेक्षमनयोः साहित्यम् । तत्र व्यस्तयोरपि क्रियमाणयोः साहित्यं न विरुध्यते । यथा देवदत्तयज्ञदत्तयोः पाकेन समस्तयोरपि संयोग उच्यमाने, एकः किंचित्करोति, अपरोऽपि किंचित् । न यदेकेन कृतं तदेवापरः करोति । तद्वदेकं साम किंचित्स्तोत्रमभिनिर्वर्तयिष्यति, द्वितीयमप्यपरम् । प्रधानोपकारापेक्षं साहित्यमिति समस्तसंयोगो न विरोत्स्यत इति ।

तत्राभिधीयते । यत्र परस्परसव्यपेक्षयोर्योगो भवति, तत्रैतदेवं न्याय्यम् । येन क्रियावयवेनाऽऽरम्भेण मध्येनावसानेन वा योगः, तेन सहितयोर्न पृथक्त्वशः । कुतः । यथैवानेनोपकर्तव्यमित्यवगम्यते, एवमितरसाहितेनेति । यत्तु, लोके कारकसामस्त्येऽप्यभिहिते भेदेन व्यापारदर्शनमिति । अर्थासंभवादसौ । न ह्युखायामधिश्रीयमाणायां भूयोऽधिश्रयणं शक्यते कर्तुमित्यर्थविरोधान्न करोति, न तु शब्देनासौ तत्र न चोदितः । यद्यत्कर्तव्यं तत्तत्साहिताभ्यामेव, नान्यथा । इह तु नासंभवः । बृहद्रथंतरयोर्हि ऋक्संस्कारत्वेन विनियोगः । त

---

॥ २४ ॥

—

च शक्नुतः सहिते पृष्ठं संस्कर्तुमिति। अतस्तयोः साहित्यमेव युक्तम्, यदुक्तम्, उभयथा संभवे चोदकानुग्रहो न्याय्य इति। धर्मकात्स्न्र्ये निमित्तविघातश्च न भविष्यति। तत्र प्रत्यक्षात्समस्तविधानाच्चोदके बाध्यमाने न दोषो भवति॥ २५॥

लिङ्गदर्शनाच्च॥ २६॥

लिङ्गं च दर्शयति, यथा समस्तयोः प्रयोगो न व्यस्तयोरिति। किं लिङ्गम्। एवमाह, महावृक्षौ वै बृहद्रथंतरे निधनेन समाप्येते, यन्महावृक्षौ समृच्छच्येते। न ह्यत्र विभक्तं प्रभग्नमिति, निधनभेदवचनादेकस्थानताऽवगम्यते। यदि भिन्नदेशे स्याताम्, अर्थादेव तत्र निधनभेदः सिद्धः। अथ तु सहिते भवतस्ततो निधनभेदवचनमर्थवद्भवति। तस्मादप्यभेदः। तथाऽपरं लिङ्गं, पूर्वाह्णो वै रथंतरम्, अपराह्णो बृहदिति, एकेनाह्नाऽभिसंबन्धादेकस्थानतां दर्शयति। तस्मात्समस्तयोः पृष्ठदेशे निवेश इति॥ २६॥

(वैकल्पिकमध्वशनघृताशनयोर्गवामयने षडहान्तेऽनुष्ठानाधिकरणम्॥ ९॥

[९] पृष्ठे रसभोजनमावृत्ते संस्थिते त्रयस्त्रिंशेऽहनि स्यात्तदानन्तर्यात्प्रकृतिवत्॥ २७॥ पू०

क्वचित्कर्मविशेषे श्रूयते, पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणः इति। द्वादशाहे वचनं, संस्थिते पृष्ठ्ये षडहे मध्वाशयेद् घृतं, वा, इति। तदिदं मध्वशनं घृताशनं च चोदकप्राप्तं सत्संदिह्यते। किं त्रयस्त्रिंशान्ते कर्तव्यमुत षडहान्त इति। किं प्राप्तम्। ततः सूत्रेणैवोपक्रमः, पृष्ठे रसभोजनमावृत्ते षडहे त्रयस्त्रिंशेऽहनि संस्थिते कार्यम्। कुतः। तदानन्तर्यात्। प्रकृतौ त्रयस्त्रिंशानन्तरं रसभोजनं वृत्तं, प्रकृतिवदिहापि कुर्वाणो यदि त्रयस्त्रिंशानन्तरं करोति, चोदकमनुगृह्णाति। अथ त्वन्यस्याह्नोऽनन्तरं कुर्याच्चोदकं बाधेत। आनन्तर्यं हि क्रमः।

---

॥ २५ ॥ २६ ॥

स च विशेषसंबन्धे कारणमिति समधिगतम् । एतदानन्तर्यं च रसभोजनस्य त्रयस्त्रिंशेन सह दृष्टमिति । अतस्त्रयस्त्रिंशानन्तरं क्रियत इति ॥ २७ ॥

अन्ते वा कृतकालत्वात् ॥ २८ ॥ सि०

न चैतदस्ति, त्रयस्त्रिंशानन्तरं रसभोजनमिति। किं तर्हि । षडहान्ते स्यात् । कुतः । संस्थिते षडह इत्युच्यते, न संस्थिते त्रयस्त्रिंश इति । षडहाभिगमलक्षिते पर्यवसाने, न त्रयस्त्रिंशाद्युपलक्षिते । षडहश्च षट्स्वहःसु पर्यवसितो भवति, नैकस्मिंस्त्रयस्त्रिंशेऽहनि । यदुक्तं त्रयस्त्रिंशानन्तर्यदर्शनात्प्रकृतिवदिहापि तदानन्तर्य एव भोजनेन भवितव्यमिति । नैतद्युक्तम् । तत्र ह्यर्थात्त्रयस्त्रिंशानन्तर्यं वृत्तम् । कुतः । तस्मिन्नहनि तत्र द्वादशाहे षडहः पर्यवसित इति । इहापि यत्र पर्यवस्यति तत्र भोजनं भविष्यति । ततः षडहावसानलक्षितेन भोजनस्य संबन्धः, संस्थिते षडह इति, न त्रयस्त्रिंशावसानलक्षितेनेति । यत्तु क्रमः कारणं विशेषसंबन्ध इति । सत्यं कारणं, न तु बलीयसा प्रमाणेन यत्र विरुध्यते । इह तु वाक्येन षडहावसाने विधीयत इत्युक्तम् । तस्माद्वाक्येन विशेषसंबन्धे सति नाऽऽनन्तर्यमात्रं कारणम् । अतः षडहान्ते भोजनं स्यादिति ॥ २८ ॥

( षडहावृत्तौ सर्वषडहान्ते मध्वशनादेः सकृदेवानुष्ठानाधिकरणम् ॥१०॥ )

[ १० ] अभ्यासे च तदभ्यासः क्रमेण पुनः प्रयोगात् ॥ २९ ॥ पू०

आवृत्तं पृष्ठ्यं षडहमुपयन्तीति श्रूयते । तत्रैतच्चोदकेन प्राप्यते, संस्थिते पृष्ठ्ये षडहे मध्वाशयेद् घृतं वेति । तत्संदिह्यते । किं षडहावृत्त्याऽऽवर्तेत भोजनमुत षडहान्ते सकृदेव क्रियेतेति । किं प्राप्तम् । षडहावृत्तौ सत्यामावर्तेत भोजनम् । कुतः । कर्मणः पुनः पुनः प्रयोगात् । तद्धि कर्म पुनरावर्तते । तदावृत्त्या यदपि तत्संबद्धं तदप्याव

---

॥ २७ ॥ २८ ॥

र्तेत। यथा स्तोत्रशस्त्रादि षडहसंबद्धमावर्तते, एवं षडहसंबन्धि भोजनमप्यावर्तेतेति ॥ २९ ॥

अन्ते वा कृतकालत्वात् ॥ ३० ॥ सि०

न चैतदस्ति, यदुक्तं षडहावृत्त्या भोजनमप्यावर्तेतेति। किं तर्हि। षडहान्ते सकृदेवानुष्ठीयेत। कुतः। कृतकालत्वात्। कृतो हि भोजनस्य कालः, संस्थिते षडह इति। संस्थानं पर्यवसानं, षडहगतस्य व्यापारस्योपरमः। न च पुनः षडहं कुर्वाणः षडहगताद्व्यापारादुपरत इत्युच्यते। न चानुपरतौ कर्तुः षडहः संतिष्ठते। संस्था हि क्रियां प्रत्यौदासीन्यं, व्यापारान्तरकरणं वा पूर्वस्मात्कर्मणः। न च पुनः षडहं कुर्वाण औदासीन्यं भजते। न× वा व्यापारान्तरं करोति। तस्यैव कर्मण आवृत्तिं करोति। अतोऽपर्यवसितः। अपर्यवसिते च संस्थाभावादश्रुतमेव प्राशनमिति न क्रियते।

यदुक्तं, यथाऽन्ये षडहधर्माः स्तोत्रशस्त्रादय आवर्तन्ते, तद्वत्प्राशनमप्यावर्तेतेति। नैतद्युक्तम्। ते ह्यहःसंबद्धाः। तेषामह्नामावृत्तिरिति स्तोत्रादीनामावृत्तिरिति युक्तम्। न हि तेऽहःस्ववसानसंयोगेन चोद्यन्ते। इह त्ववसानसंयोगेन भोजनस्य चोदनेत्युक्तो हेतुः। तस्मान्न भोजनस्याऽऽवृत्तिर्युक्तेति।

अपि च यद्येतद्भोजनं षडहाङ्गं भवेत्, ततः प्रधानावृत्त्याऽऽवर्तेत। न चैतदङ्गम्। कुतः। अङ्गत्वप्रख्यापकस्य कारणस्याभावात्। प्रकरणादङ्गता स्यात्, वाक्यसंयोगाद्वा, प्रत्यक्षोपकारदर्शनाद्वा। एतेषां चेह न किंचित्कारणं पश्यामः। प्रकरणं तावद्द्वादशाहस्य, न षडहस्य। वाक्यसंयोगोऽपि, संस्थिते षडह इति षडहस्य संस्थायां भोजनमाचष्टे। संस्थितश्चैवं षडहो भवति, यद्यस्य न किंचिदपरमङ्गजातं परिशिष्यते। न च मध्वशनघृताशने प्रत्यक्षेणोपकुरुतः षड-

---

॥ २९ ॥

---

×न च-स.।

हस्य । कुतः । निवृत्ते करणात् । कामं यया च यावत्या च तर्पणमात्रया कर्तॄणां यानि परस्तात्कर्माणि वर्तन्ते, तेषां सामर्थ्योपजनेनोपकुर्यात् । नातिवृत्तस्य षडहस्येति । यान्यपि क्रमादीनि कारणानि, तान्यपि प्रमाणान्तरसंबन्धमुपादाय विशेषसंबन्धे कारणानि भवन्ति, न केवलानि । तस्मात्षडहावसानलक्षिते काले पुरुषाणां भोजनक्रिया विधीयत इति । अतो नाऽऽवर्तेत भोजनमिति ॥३०॥

( गवामयनेहरन्तरव्यवधानेन पृष्ठ्यषडहावृत्त्या मध्वशनादेरभ्यावृत्त्यधिकरणम् ॥ ११ ॥ )

[ ११ ] आवृत्तिस्तु व्यवाये कालभेदात्स्यात् ॥ ३१ ॥ सि०

गवामयने श्रूयते, चत्वारोऽभिप्लवाः षडहाः, पृष्ठ्यः षडहः, स मासः । स द्वितीयः स तृतीयः स चतुर्थः स पञ्चमः । तत्रैतच्चोदकेन प्राप्तम्, संस्थिते पृष्ठ्ये षडहे मध्वाशयेद् घृतं वेति । तत्र संदिह्यते । किं प्रतिमासमावर्तते रसभोजनमुत सर्वान्ते सकृदेव कार्यमिति । किं पुनर्युक्तम् । उक्तेन न्यायेन सकृदिति । सर्वान्ते ह्यसौ षडहगताद्व्यापाराद्उपरमते, न प्राक् । अर्वागसौ कृत्वाऽपि षडहं पुनः षडहाय प्रयतत एव । न चासौ षडहः संस्थितो भवति, यदि पुनस्तदर्थं प्रयतत एव । सर्वान्ते तु न पुनः प्रयतते, इति । अतः सर्वान्ते कुर्यादित्येवं प्राप्तम् ।

एवं प्राप्ते ब्रूमः आवृत्तिस्तु व्यवाये कालभेदात्स्यात् । आवृत्तीः रसभोजनस्य स्यात्, न सकृत्क्रिया । कुतः । निमित्तावृत्तेः, षडहसंस्था निमित्तम् । स च षडहः पुनरावर्तते । तस्मिन्नावर्तमाने संस्था निमित्तमावर्तत इत्यत आवर्तेत । यदुक्तं सर्वान्ते ह्यसौ षडहादुपरतो भवति, न प्राक् । कृत्वाऽप्यसौ पुनस्तदर्थं प्रयतत एवेति ।

अत्राभिधीयते । यद्यप्यसौ पुनः प्रवर्तते, तथाऽपि तं परिसमाप्य पुनरारभते । पुनश्च परिसमापयति, न यथाऽऽवृत्ते षडहे । तत्र

---

॥ ३० ॥

ह्यनुपरतस्य पृष्ठ्यस्याऽऽवृत्तिः। इह चतुर्भिरभिप्लवैर्व्यवधीयते। तेनोत्तरक्रियान्तरव्यवधानात्पृष्ठ्यगतो व्यापारः पर्यवसित इति गृह्यते विशेषः। न च तस्मिन्नपर्यवसिते क्रियान्तरं शक्यं कर्तुम्। उभयप्रकारश्चान्तः क्रियायाः, (कृत्वा) औदासीन्यं, क्रियान्तरव्यवधानं चेत्युक्तमेव। तस्मात्प्रतिमासं सव्यवधानः पृष्ठ्य आवर्तते। तस्मिन्नावर्तमाने संस्थानिमित्तं भोजनमप्यावर्तत इति। अतः प्रतिमासमावर्तत इति ॥ ३१ ॥

( सत्रात्मकद्वादशाहेऽपि सत्रिभिर्मधुभक्षणकर्तव्यताधिकरणम् ॥ १२ ॥ )

[ १२ ] मधु न दीक्षिता ब्रह्मचारित्वात् ॥ ३२ ॥ पू०

द्वादशाहे श्रूयते, संस्थिते पृष्ठ्ये षडहे मध्वाशयेद्घृतं वेति। तत्र संशयः। किं सत्रिभिर्मधु भक्षयितव्यं, नेति। किं प्राप्तम्। नेति। कुतः। दीक्षिता हि ते ब्रह्मचारिणः। ब्रह्मचारिणां च मधु प्रतिषिध्यते, मधु मांसं च वर्जयेदिति। तस्मान्न प्राश्नीयुरिति। नन्वेतद्वचनं सामान्यं प्रतिषेधं बाधेत। न बाधत इति ब्रूमः। कथम्। यद्यबाधमानमेतद्द्वादशाहेऽनर्थकं भवेत्, ततो बाधेत। न त्वनर्थकम्। कथम्। उभयविधं द्वादशाहमङ्गीकृत्योभयमाशितव्यं घृतं मधु वा। तत्र सत्रिणां घृतप्राशनं भविष्यति, अहीने मधुनः प्राशनमृत्विजाम्। एवमुभयं द्वादशाहसंबद्धं भविष्यति विषयभेदेन। न च विरुद्धस्याऽऽचारो भविष्यतीति। तस्मान्न प्राश्नीयुरिति ॥ ३२ ॥

प्राश्येत वा यज्ञार्थत्वात् ॥ ३३ ॥ सि०

न चैतदास्ति, सत्रिभिर्मधु न भक्षयितव्यमिति। किं तर्हि। भक्षयितव्यम्। कथम्। अविशेषेणोच्यते कर्तृमात्रस्योभयप्रकारमङ्गीकृत्य द्वादशाहं, संस्थिते पृष्ठ्ये षडहे मध्वाशयेद्घृतं वेति। उभयं विकल्पेन, न कर्तृव्यवस्थया। तस्मात्सत्रिणोऽपि मधु भक्षयेयुः। यत्तूक्तं, विषयभेदेनार्थवत्त्वान्न बाधो न्याय्यः, द्वादशाहाङ्गभावश्चैवं सति न विरोत्स्यत इति।

---

॥ ३१ ॥ ३२ ॥

—

अत्रोच्यते । षडहेऽतिवृत्ते सत्रसंबद्धेऽहीनसंबद्धे वाऽविशेषेण मध्वशने घृताशने चोच्यमाने× केन व्यवस्थां ब्रूमः । विरोधेनेति चेत् । न । विषयभेदेन विधिप्रतिषेधयोः समाम्नानात् । पुरुषार्थेन प्रतिषेधः कर्माङ्गत्वेन विधानम् । यदि च प्रतिषेधबलीयस्त्वमिहाङ्गी क्रियते, वचनमनर्थकमेव स्यात् । पक्षेऽर्थवत्तेति चेत् । न । नानाविषयत्वात् । तुल्यार्थयोर्हि तुल्यविषययोर्विकल्पो भवति, न नानार्थयोः। नानार्थता चेहाधिगम्यते । कुतः । विधेः कर्मसाद्गुण्यप्रयोजनत्वात् । प्रतिषेधस्यापि नियमानुष्ठानात्पुरुषस्यादृष्टासिद्धिरिति । तस्मात्प्राश्नीयुरिति ॥ ३३ ॥

( मानससंज्ञकस्य ग्रहस्य दशमाहाङ्गत्वाधिकरणम् ॥ १३ ॥ )

[ १३ ] मानसमहरन्तरं स्याद्भेदव्यपदेशात् ॥ ३४ ॥ पू०

द्वादशाहे श्रूयते, अनया+ त्वा पात्रेण समुद्रंरसया प्रजापतये जुष्टं गृह्णामीति, प्राजापत्यं मनोग्रहं गृह्णातीति। तत्र संशयः । किं मानसमहर्द्वादशाहादहरन्तरमुताहरङ्गमिति । तत्रेह कानिचिद्भेदकारणानि प्रतिभान्ति। तानि निराचिकीर्षन् आचार्य उपन्यस्यति, मानसमहरन्तरं स्यादिति । कुतः । भेदेन व्यपदेशात् । द्वादशाहाद्भेदेन व्यपदिश्यते । कथम् । वाग्वै द्वादशाहो मनो मानसमिति द्वादशाहानन्तर्भूतं मानसं व्यपदिशति । वाग्वै द्वादशाह इति वाक्संस्तवात्, मनो मानसमिति च मनःसंस्तवात् । यथा वाङ्मनसयोर्भेदो वस्तुतोऽवगम्यते, एवमेतयोरपि द्वादशाहमानसयोः । यतः पृथक्त्वे सति भेदेन व्यपदेशो भवति, नान्यथा । अतो भिद्यत एतदहरिति व्यपदेशाद्गम्यते ॥ ३४ ॥

तेन च संस्तवात् ॥ ३५ ॥

इतश्चाहरन्तरमिति । कुतः । तेन च मानसेनाह्ना द्वादशाहःसं-

॥ ३३ ॥ ३४ ॥

—

× उच्यमानेऽत्र—क० । + अनया त्वा परवणेन—ख. ।

स्तूयते । कथम् । विधूतानि ह वै द्वादशाहस्य गतरसानि छन्दांसि, तानि मानसेनैवाऽऽप्याययन्तीति । द्वादशाहस्य यानि गतरसानि छन्दांसि, तानि मानसेनाऽऽप्याययन्तीति ब्रुवन् भिन्नं द्वादशाहाद्दर्शयति । कथम् । संस्तवात् । न हि तेनैवाऽऽत्मना तस्य संस्तुतिर्भवति। कुतः । अत्यन्तभेदात्स्तुतिस्तुत्ययोः । न हि देवदत्तो देवदत्तेन स्तूयते। भिन्नैः शिरःपाण्यादिभिः संस्तूयते। तद्वदिहापि द्वादशाहो मानसेन स्तूयत इति संस्तवाद्भेदोऽधिगम्यत इति ॥ ३५ ॥

अहरन्ताच्च परेण चोदना ॥ ३६ ॥

इतश्चाहरन्तरमेवेति गम्यते । कुतः। द्वादशाहिकादहरन्तात्परेण चोद्यते, पत्नीः संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्तीति । यद्यदि द्वादशाहिकस्याह्नो गुणविधिर्भवेद्द्वादशाहिकी पत्नीसंयाजान्तता स्यात् । अथ त्वहरन्तरं भवति, ततो द्वादशाहिकानामयं धर्मो, नान्यस्येति न दोषो भविष्यति । अतोऽपि वैलक्षण्यादहरन्तरसिद्धिरिति गम्यते ॥ ३६ ॥

पक्षे संख्या सहस्रवत् ॥ ३७ ॥

परिचोदनापरिहारोऽयम् । किमियं परिचोदना । नन्वेवं द्वादशाह इति त्रयोदशस्वहःसु नोपपद्यते । अत्रोच्यते । यदा प्रमाणान्तरेण शब्द एतावत्यर्थे प्रयुक्त इति गम्यते तदा संख्या संनिकर्षात्त्रयोदशसु गुणवृत्त्या प्रयोगः सेत्स्यति । यथा, अतिरात्रः सहस्रमहानि, अतिरात्रेण सहस्रसाध्येन यजेतेति, अधिकेऽपि सहस्रे सहस्रशब्दो दृष्टः। तद्वदिहाप्यधिके भविष्यति । अथवा, कर्मगणनामधेयमेतत्, द्वादशाह इति । यावन्ति कर्माण्यङ्गीकृत्य प्रयुक्तस्तावतां वाचक इति निश्चीयते । सर्वाणि प्रकरणादङ्गीकृत्य प्रयोगात्सर्वेषां वाचको भविष्यतीति न दोषः ॥ ३७ ॥

---

॥ ३५॥ ३६ ॥ ३७ ॥

—

अहरङ्गं वांऽशुवच्चोदनाभावात्+ ॥ ३८ ॥ सि०

दशमस्याह्नो गुणस्य विधिः स्यात्, नाहरन्तरचोदना। कुतः। अहरन्तरप्रकल्पकस्य वचनस्याभावात्। कथम्। एवं= तावच्छ्रूयते। अनया त्वा पात्रेण समुद्ररसया प्रजापतये जुष्टं गृह्णामीति प्राजापत्यं मनोग्रहं गृह्णातीति। दशममहरङ्गीकृत्य ग्रहचोदनैषा। गृह्णातीति संस्कारविधानात्। न च संस्कारभेदे कर्मभेदो भवति। अचोदकाश्च* संस्कारा इत्युक्तम्। यैस्तु× द्रव्यं चिकीर्ष्यते गुणस्तत्र कर्म न प्रधानमिति। यथा, अंश्वदाभ्यौ विधीयमानौ न कर्म भिन्तः। यस्मिन् कर्माणि भवतस्तत्रापरौ ग्रहाभ्यासाविति विज्ञायेते, न कर्मान्तरे इति। यदि* चाहरङ्गमेतद्भवति, न कर्मान्तरम्, एवमल्पीयस्येवादृष्टानुमानप्रसङ्गकल्पना भविष्यति। प्रकृतसंबन्धश्च, नाप्रकृतप्रक्रिया क्रियान्तरस्य। अतो नाहरन्तरम्। दशम एवाहनि गुणविधिरिति ॥ ३८ ॥

दशमविसर्गवचनाच्च ॥ ३९ ॥

इतश्च नाहरन्तरं, तत्रैव गुणविधिः। कुतः। दशमविसर्गवचनात्। दशमविसर्गवचनं हि भवति। एष वै दशमस्याह्नो विसर्गो यन्मानसमिति। एष दशमस्य विसर्गः—अन्तः, यन्मानसमिति ब्रुवन्, अन्तोऽयमन्तवतो दशमस्य, न स्वतन्त्रमेतत्कर्मेति दर्शयति। तस्मादपि दशमस्याङ्गं, नार्थान्तरमिति गम्यते ॥ ३९ ॥

दशमेऽहन्निति च तद्गुणशास्त्रात् ॥ ४० ॥

इतश्चाङ्गम्। कथम्। एवं गुणशास्त्रं युक्तं भविष्यति, दशमेऽहनि मानसाय प्रसर्पन्तीति+। दशमेऽहनि सार्पराज्ञीभिर्ऋग्भिः स्तुवन्तीति दशमस्याह्नः प्रधानभावेन निर्देशात्, ग्रहस्याऽऽधेयभावेन। तत्स्तोत्रस्य गुणोऽयं दशमस्य, नार्थान्तरमिति गम्यते ॥ ४० ॥

---

॥ ३८ ॥ ३९ ॥ ४० ॥

---

× चांशु—ख.। = एतावच्छ्रूयते—ख.। * ( अ० २ पा० २ अ० ६ सू० १८ )। × ( अ० २ पा० १ अ० ३ सू० ८ )। + यदि वा—क.।

संख्यासामञ्जस्यात् ॥ ४१ ॥

यदि च गुणोऽयम्, एवं संख्या समञ्जसा भविष्यति, द्वादशाह इति। इतरथा त्रयोदशसु द्वादशाह इत्यसमञ्जसं संख्यावचनं स्यात्। अवाच्यत्वात्। यदुक्तं, गुणवृत्त्या सहस्रसाध्यवद्भविष्यतीति। तदनुपपन्नम्। कुतः। तत्र हि प्रमाणान्तरेण संख्येयावगमादधिके सहस्रशब्दो गौण्या वृत्त्या प्रयुक्त इति निश्चीयते। न* त्विह संख्येयातिरिक्ते प्रमाणमस्ति, येन गौणीयं वृत्तिराश्रीयेत। यदप्येतत्, अनया त्वा पात्रेणेति वचनं, तदपि ग्रहसंस्कारविधानाद्दशमेऽहनि यागाभ्यासं विधत्ते, न कर्मान्तरमिति समधिगतम्। एवं चेत्, नैतत्प्रत्यक्षवचनमहरन्तरप्रकल्पकं, नान्यत्प्रमाणान्तरं प्रापकं, येन संख्येयेऽतिरिक्ते शब्दप्रयोग इत्यध्यवस्यामः। तस्मान्नेह गौण्या वृत्त्या प्रयोग इति।

यदपि कर्मगणनामधेयत्वात्प्रकरणवशेन तावतामङ्गीकरणात्, नामधेयरूपेण वा+ वृत्तिर्भविष्यतीति। तदपि न युक्तम्। सत्यं कर्मगणनामधेयमेतत्, न त्वयथार्थसमन्वयेन। द्वादशैतानि कर्माण्यहोभिः परिमितान्येकत्र समाहृतानीत्यनेन रुपेण तत्कर्मगणस्य नामधेयं, न वर्णानुपूर्व्यमात्रेणेति। तथा हि सर्वेष्वेव कर्मनामधेयेष्वर्थसमन्वयेनानुवादभूतो नामशब्दो वर्तते, न लौकिकार्थतिरस्कारेण परिभाषामात्रेण, वृद्धिगुणवत्। यथा, अग्निहोत्रं, श्येनः, ज्योतिष्टोम इति। एवं, द्वादशाह इत्यर्थान्वयेन नामधेयं, नार्थाभावेनेति। तस्मादपरिचोदनैषा ॥ ४१ ॥

पश्वतिरेके चैकस्य भावात् ॥ ४२ ॥

इतश्चाहरङ्गमिति विज्ञायते। कुतः। पश्वतिरेकेणैकस्यातिरेकं दर्शयति, न द्वयोः। कथम्। यः पशुरतिरिच्येत स ऐन्द्राग्नः कार्य इति, एकादशिनीं द्वादशाहे, विधाय विहृतायामेकस्यातिरेकं दर्शयति। तत्र= तावदतिरिच्यते, एको न भवति। कथम्। एकादश

॥ ४१ ॥

---

* नन्विह—क. ख. । × चावृत्तिः-मु० । = तत्र तावत्-क. ख. ।

पशवः, द्वादशाहानि। एकस्यातिरेकं ब्रुवन् द्वादशैतान्यहानीति गमयति। यदि त्रयोदशाहानि स्युर्द्वयोरभावः स्यात्, नैकस्येति। तस्मादप्यहरङ्गं न कर्मान्तरमिति ॥ ४२ ॥

स्तुतिव्यपदेशमङ्गेनाविप्रतिषिद्धं* व्रतवत् ॥ ४३ ॥

अस्मिन् सूत्रे द्वयोः सूत्रयोः परिहार उच्यते। यदुक्तं, मानसमहरन्तरं, भेदेन व्यपदेशात्। तेन च मानसेन संस्तवाद्भेदः। न ह्यात्मनैवाऽऽत्मा संस्तूयत इति। अत्राभिधीयते। नैतद्विप्रतिषिद्धम्। अङ्गेनापि समुदायस्य स्तुतिर्दृष्टा। यथा महाव्रतधर्मेण संवत्सरसत्रस्य। यन्ति वा एते मिथुनाद्ये संवत्सरमुपयन्ति। अन्तर्वेदि मिथुनौ संभवतस्तेनैव मिथुना न यन्तीति समुदायदोषमभिधाय तदवयवभूतस्य महाव्रतस्य धर्मेणानुजिघृक्षन् समुदायस्यावयवधर्मेण स्तुतिं दर्शयति। लोकेऽप्यवयवधर्मेणावयवी संस्तूयत एवेति। यथा दीर्घैः केशैः शोभनो देवदत्त इति। तद्वदिहापि द्वादशाहः संस्ताविष्यत इति न दोषः ॥ ४३ ॥

वचनादतदन्तत्वम् ॥ ४४ ॥

यदुक्तं, यद्यहरन्तरमेतत्, एवं द्वादशाहधर्मवैलक्षण्यं मानसान्तता युक्ता× भविष्यति, न तदङ्गत्वे। पत्नीसंयाजान्तता भवेदिति। अत्र वदामः। वचनादतदन्तत्वं भविष्यति। द्वादशाहिकानामह्ना सामान्येन पत्नीसंयाजान्तता। विशेषेण तु दशमस्याह्नो मानसान्ततोच्यते, पत्नीः संयाज्य प्राञ्च मानसाय प्रसर्पन्तीति। नास्ति वचनस्यातिभारः। तस्मादप्यदोषः। अतो दशमस्याह्नो मानसमङ्गं न स्वतन्त्रमिति ॥ ४४ ॥

[ सत्रस्य बहुकर्तृकत्वाधिकरणम् ॥ १४ ॥ ]

[ १४ ] सत्रमेकः प्रकृतिवत् ॥ ४५ ॥ पू०

॥ ४२ ॥ ४३ ॥ ४४ ॥

---

* विप्रतिषिद्धं—क. ख. । × न युक्ता भविष्यति । तदङ्गत्वे पत्नीसंयाजान्तता भवेत्—ख० ।

इह द्वादशाहप्रभृतीनि सत्राण्युदाहरणम् । तत्र संशयः । किं सत्रमेकः प्रयुञ्जीत, उत बहवः । किं प्राप्तम् । एकः । कुतः । प्रकृतिवत् । ज्योतिष्टोम एकः कर्ता । तत्प्रकृतित्वाच्चोदकानुग्रहाय सत्रमेक एव प्रयुञ्जीतेति । ननु बहवः श्रूयन्ते, य एवंविद्वांसः सत्रमासते । य एवंविद्वांसः सत्रमुपयन्तीति । उच्यते । कामिनां सत्रं विधीयते । ते च परस्परनिरपेक्षा बहव एव । ते यद्येकैकश्येनापि कुर्वन्ति तथाऽपि सत्रक्रियामभिसमीक्ष्य बहव एव कुर्वन्तीति बहुवचनं भविष्यति । यथा लोके पृथक्त्वेनापि कुर्वाणानां बहुवचनं दृश्यते, देवश्चेद्वर्षेद्बहवः कृषिं कुर्युः, सस्यं चेत्संपद्येत बहवो ब्राह्मणा यजेरन्निति । तथा वेदेऽपि प्रयोगदर्शनं, सत्रादुद्वसाय पृष्ठशमनीयेन यजेरन्निति । एवमत्रापि, आसीरन् , उपेयुरिति बहुवचनं भविष्यतीति ॥ ४५ ॥

वचनात्तु बहूनां स्यात् ॥ ४६ ॥ सि०

नैतदस्ति, एको यजेत, न बहव इति । किं तर्हि । बहवो यजेरन् । कुतः । वचनात् । वचनमिदं भवति । आसीरन् , उपेयुरिति । बहुत्वसंबद्धः प्रयोगो विधीयते । स प्रत्यक्षवचनाच्चोदकप्राप्तामेककर्तृकतां बाधेतेति ॥ ४६ ॥

अपदेशः स्यादिति चेत् ॥ ४७ ॥

यदुक्तं, सामान्यक्रियासंबन्धमभिसमीक्ष्य लोकवद्बहुवचनशब्दप्रयोगो भविष्यति । यथा, कृषिं कुर्युरिति । वेदेऽपि दर्शनं, पृष्ठशमनीयेन यजेरन्निति बहुवचनं भवति, एवमत्रापीति । तत्परिहर्तव्यम् ॥ ४७ ॥

नैकव्यपदेशात् ॥ ४८ ॥

नैतत्सत्र उपपद्यते, एककर्तृकमिति । कुतः । एकव्यपदेशात् । कथम् । एवमाह । एष वै कुणपमत्ति यः सत्रे प्रतिगृह्णाति, एक एव यजेतेति, सत्रमपोद्यान्यस्यैककर्तृकतां विदधत्तस्य बहुकर्तृकतां गमयति । यत्तु लोकवदिति । तन्न युक्तम् । लोकेऽन्यतः प्रवृत्तस्यार्थ-

॥ ४५ ॥ ४६ ॥ ४७ ॥

स्यानुवादभूतः शब्द उच्चार्यमाणः सामान्यक्रियासंबन्धाभिसमीक्षयोच्चरित इति गम्यते । यदपि, उदवसानीयवदिति । तदप्युदवसानीये युक्तम् । तत्र हि भिन्नान्युदवसानान्युपलक्ष्य क्रियामात्रं विधीयते, तद्बहुत्वं च समानकर्तृकत्वादेव प्राप्तमनूद्यत इत्युक्तमेव । इह तु शब्दपूर्विका क्रियाप्रवृत्तिः । शब्दश्च बहुत्वविशिष्टं प्रयोगं सत्रिभिरभिसंबन्धयति । अतः शब्दप्रामाण्यादुपादीयमानायां क्रियायां बहुत्वं विवक्षितमिति बहवः प्रयुञ्जीरन्निति ॥ ४८ ॥

संनिवापं× च दर्शयति ॥ ४९ ॥

इतश्च बहव एव यजेरन्निति । कुतः । संनिवापदर्शनात् । बहूनामग्नीनामेकत्र संनिवापमाह । पञ्चभिः पशुभिर्यक्ष्यमाणाः संनिवपेरन्, सावित्राणि होष्यन्तः संनिवपेरन्निति । यदि संहत्य कुर्वन्ति, एवमग्नीनां संनिवाप उपपद्यते । अथ त्वेकैकश्येन कुर्युः, संनिवापदर्शनं नोपपद्यते । तस्मादपि गम्यते बहूनां सत्रमिति ॥ ४९ ॥

बहूनामिति चैकस्मिन् विशेषवचनं व्यर्थम् ॥ ५० ॥

इतश्च पश्यामः संभूय प्रयोग इति । कुतः । एवं श्रूयते । यो वै बहूनां यजमानानां गृहपतिः, स सत्रस्य प्रत्येता, स हि भूयिष्ठामृद्धिमाध्नोतीति । एकस्मिन् गृहपतौ बहुभिर्यजमानैः सह प्रवृत्ते फलविशेषं ब्रुवन् बहूनां सह प्रयोगं दर्शयति । इतरथा, एकस्मिन् यजमाने कर्तुरेकत्वात्फलैकत्वाच्च सामान्यविशेषभावानुपपत्तेः फलविशेषवचनं व्यर्थं स्यात् । अस्ति तु फलविशेषवचनम् । तस्मादपि गम्यते बहव एव यजेरन्निति ॥ ५० ॥

( सत्रे यजमानानामेव ऋत्विक्त्वाधिकरणम् ॥१५॥ )

[ १५ ] अन्ये स्युर्ऋत्विजः प्रकृतिवत् ॥ ५१ ॥ पू०

इह सत्राण्येवोदाहरणम् । तेषु बहवः कर्तार इत्युक्तम् । इद-

॥ ४८ ॥ ४९ ॥ ५० ॥

—

× संनिपातं च-श्री० ।

मिदानीं संदिह्यते । किं त एव सत्रिण ऋत्विजः, उतान्य उपादातव्या इति । किं प्राप्तम् । अन्य उपादातव्या ऋत्विजः । कुतः । ज्योतिष्टोमे हि प्रकृतावन्ये कर्तार उपादेयाः समाम्नाताः । तद्वदिहापि सत्रिभिः प्रकृतिवत्कुर्वाणैश्चोदकानुग्रहायान्य एवोपादेया इति । एवं प्रकृतिवत्कृतं भविष्यतीति ॥ ५१ ॥

अपि वा यजमानाः स्युर्ऋत्विजामभिधानसंयोगात्तेषां स्याद्यजमानत्वम् ॥ ५२ ॥ सि०

नैतदस्ति, अन्य ऋत्विज इति । यजमाना एव ऋत्विजः स्युः । कुतः । ऋत्विजामभिधानसंयोगात् । यजमानसंस्कारो हि दीक्षापदार्थोऽध्वर्य्वादिसमाख्यासंयोगेन कर्मनिमित्तेन प्रसिद्धिरूपेणाभिधाय विधीयमानो यजमानानां तेषामाध्वर्यवादिसंबन्धमवबोधयति । कथम् । यदि ते तान् पदार्थान् कुर्वन्ति, एवं ते नैमित्तिकीभिराख्याभिर्युज्यन्ते, नान्यथेति । अतोऽवगम्यते, अस्ति तैः पदार्थैरभिसंबन्ध इति । किं तद्वचनम् । अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, ततो होतारं तत उद्गातारमित्युपक्रम्य सर्वर्त्विज उपक्रान्ता दीक्षासंबन्धेन । तस्माद्गम्यते यजमाना एवाऽऽर्त्विज्ये स्युर्नान्य इति ॥ ५२ ॥

कर्तृसंस्कारो वचनादाधातृवदिति चेत् ॥ ५३ ॥

इति चेन्मन्यसे यजमाना एव ऋत्विजः स्युरिति । तन्न युक्तम् । प्रकृतौ हि यजमानादन्ये* श्रूयन्ते । प्रकृतिवदिहापि यजमानेभ्योऽन्यैरेव भवितव्यमिति पूर्व एव पक्षो व्यपदिश्यते । केवलं तु पूर्वोक्तस्य परिहारो वक्तव्यः । स उच्यते । कर्तृसंस्कारो वचनादाधातृवद्भविष्यति । कथम् । एतावदेव श्रूयते, अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीति । तद्यदि भिन्ना अपि कर्तारो भवन्ति, तानात्मीयाभिः संज्ञाभिरुपलक्ष्य वचनसामर्थ्याद्दीक्षासंस्कारस्तेषां विधीयत इति नानु-

॥ ५१ ॥ ५२ ॥

---

* यजमानादन्ये प्रकृतिवत्—मु. ।

पपन्नम् । आधातृवत् । यथाऽन्यत्राप्यृत्विजां संस्कारो विधीयत आधाने, यस्तं श्वोऽग्निमाधास्यत्स्यात्स एतां रात्रिं व्रतं चरेदिति । न मांसमश्नीयान्न स्त्रियमुपेयादिति वचनादध्वर्योर्नियमो विधीयते । तथा ज्योतिष्टोमे, सर्वर्त्विज उपवसन्तीति, ऋत्विजामुपवासो विधीयते । तद्वदिहापि ऋत्विजामेष संस्कारो भविष्यति ॥ ५३ ॥

स्याद्विशयेऽतन्न्यायत्वात्प्रकृतिवत् ॥ ५४ ॥

नैतदस्ति, अन्य ऋत्विज इति। किं तर्हि। यजमाना एव ऋत्विजः स्युः । कुतः । एतस्मिन्न संशये, त एव वा यजमाना ऋत्विजः, अन्ये वा भिन्ना इति । त एवेति न्याय्यम् । उक्तोऽत्र न्यायः । अपि वा यजमानाः स्युर्ऋत्विजामभिधानसंयोगादिति । अनेन न्यायेन पश्यामस्त एवेति । यदुक्तम् , आधानवत्संस्कार× ऋत्विजां भविष्यतीति । तदनुपपन्नम् । कथम् । अप्राकृतप्रयोजना वा दीक्षा ऋत्विजां विधीयते । प्रकृतिवद्वा प्राकृतकार्यका सती यजमानबहुत्वात्क्रमपरतया संकीर्त्येत । प्राप्तायाः संकीर्तनं लघीयः । क्रममात्रविधानात् । ऋत्विक्संस्कारे सत्यदृष्टकल्पना, अधिकार्यविधानं च । तस्मात्प्राप्तायाश्चोदकेन संकीर्तनं, नाप्राप्तविधानमिति । यत्तु, यथा ऋत्विजामुपवासविधानम् , आधातुश्च व्रतविधानं तद्वदिहापीति । तन्न युक्तम् । विस्पष्टं वचनम् । ऋत्विज उपवसन्ति, स तां रात्रिं व्रतं चरेदिति । न च तत्रापूर्वत्वात्प्राप्त्याशङ्का । तस्मात्तत्र विधानम् ॥५४॥

स्वाम्याख्याः स्युर्गृहपतिवदिति चेत् ॥ ५५ ॥

परिचोदनासूत्रमेतत् । अथ कस्मान्न स्वाम्याख्या एता अध्वर्य्वाद्या भवन्ति गृहपतिवदिति । किमेवं भविष्यति । एवं चोदकप्राप्ताऽन्यकर्तृकता न बाधिता भविष्यति । अध्वर्य्वाद्याश्च समाख्या गृहपतिवद्यजमानाभिधानतयाऽर्थवत्यो भविष्यन्तीति, स्थितेऽर्थे सूत्रेण परिचोदयति ॥ ५५ ॥

---

॥ ५३ ॥ ५४ ॥ ५५ ॥

---

× आधानवत्तत्संस्कारः–मु. ।

न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्मेण ॥ ५६ ॥

नैतद्युक्तं, स्वाम्याख्या एता गृहपतिवदिति। कुतः। प्रसिद्धग्रहणत्वात्। आध्वर्यवादिकर्म कुर्वाणेषु हि कर्तृषु कर्मनिमित्ता एता आख्याः प्रसिद्धाः, न याजमानं कुर्वाणेषु। यजमानानामाभिः क्रियाभिरसंयुक्तानां भविष्यन्तीत्यनुपपन्नम्। कथं गृहपतिरित्याख्या। उच्यते। असंयुक्तस्य ऋत्विग्धर्मेण स्वामिन एवाऽऽख्या गृहपतिरिति। अपि चावयवप्रसिद्ध्याऽपि गृहपतिशब्दस्य पतिर्वाच्य इति यजमानाभिधेयतोपपत्स्यते। प्रकृतावपि स्वामिनि चायं प्रयुक्तः, गृहपतिर्यजतेति। न त्वध्वर्य्वाद्याः स्वामिनि केनचिदपि प्रकारेण तात्क्रियासंयुक्ता उपपद्यन्त इत्यन्यक्रियासंबन्धात्ता भिद्यन्त इति ॥ ५६ ॥

बहूनामिति+ च तुल्येषु विशेषवचनं नोपपद्यते ॥ ५७ ॥

इतश्चाऽऽर्त्विजेषु यजमाना एव। कुतः। एवमाह। यो वै बहूनां यजमानानां गृहपतिः सत्रस्य प्रत्येता स हि भूयिष्ठामृद्धिमाप्नोतीति, एकस्मिन् गृहपतिरिति विशेषवचनमसमानत्वे सत्युपपद्यते, नान्यथा। यदि सर्वे गृहपतिकर्म कुर्युर्न कर्मान्तरं, ततो विशेषाभावाद्गृहपतौ विशेषवचनानुपपत्तिः स्यात्। अथ त्वितर उभयं कुर्वन्ति, गृहपतिर्याजमानमेव, ततो विशेषवचनं युक्तं भवति। तस्माद्विशेषचनात्त एव ऋत्विज इति गम्यते ॥ ५७ ॥

दीक्षितादीक्षितव्यपदेशश्च नोपपद्यतेऽर्थयोर्नित्यभावित्वात् ॥ ५८ ॥

इतश्च स्वयंकर्तृकाणि सत्राणीत्यवगम्यते। कुतः। दीक्षितादी-

॥ ५६ ॥ ५७ ॥

---

+ इदं च सूत्रं शास्त्रदीपिकादिमुद्रितपुस्तकेषु कुत्रापि नोपलभ्यते। काशीमुद्रितभाष्यपुस्तके भाष्यग्रन्थस्थतया प्रकाशनं यद्यपि दृश्यते, तथाऽपि प्राचीनलिखितकेवलसूत्रपाठे श्रीसंज्ञकेऽस्य सूत्रस्योपलम्भात्पृथक्सूत्रक्रमे संयोज्य प्रकाशितामिति ज्ञेयम्।

क्षितव्यपदेशात्। एवमाह। दीक्षिताः सत्रैर्यजन्ते, अदीक्षिता अहीनैर्यजन्तीति। एतौ च नियतावेवार्थौ। दीक्षिताः स्वार्थं यजन्ते। याजका अप्यदीक्षिता याजयन्तीति। अहीने सत्रे चैतयोरर्थयोर्विशेषाभावाद्व्यपदेशानुपपत्तिः स्यात्। अथ तु सत्रे यावत्कार्यं तत्सर्वं दीक्षितैरेव, क्रियते। अहीने चादीक्षितैः, ततो व्यपदेश उपपद्यते, नान्यथा। अतो व्यपदेशादवगच्छामः, अस्ति सत्रे स्वयंकर्तृत्वमिति ॥ ५८ ॥

अदक्षिणत्वाच्च ॥ ५९ ॥

इतश्च स्वयंकर्तृकं सत्रम्। कुतः। अदक्षिणत्वात्। अदक्षिणानि सत्राण्याहुः। न ह्यत्र गौर्दीयते, न वासो न हिरण्यमिति दक्षिणाभावदर्शनं स्वयंकर्तृकत्व उपपद्यते, नान्यथा। परकर्तृकत्वे हि दक्षिणाभावो नोपपद्यते। न हि कश्चिद्दते स्वार्थात्परार्थे परः प्रवर्तते। तस्मादपि गम्यते स्वयंकर्तृकाणि सत्राणीति ॥ ५९ ॥

( सत्राहीनयोर्लक्षणाधिकरणम् ॥ १६ ॥ )

[ १६ ] द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात्* ॥ ६० ॥

द्वादशाह एवोदाहरणम्। उक्तं च पूर्वं सत्रमहीनं च द्वादशाह इति। तस्येदानीं द्विप्रकारस्य लक्षणमन्वाख्यायते, एवंलक्षणको द्वादशाहः सत्रम्, एवंलक्षणकोऽहीन इति। तद्विवेकज्ञानार्थमिदमुच्यते, आसनोपायिचोदनया यजमानबहुत्वेन च सत्रत्वमवगम्यते। एते चोदने, आसते, उपयन्तीति हि नित्यं सत्रसंबद्धे दृष्टे। य एवं विद्वांसः सत्रमासते, य एवं विद्वांसः सत्रमुपयन्तीति। यजमानबहुत्वेन च, चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीरन्निति। तत्सहचरितलिङ्गदर्शनात्सहचरिते प्रत्ययो भवतीति ॥ ६० ॥

---

॥ ५८ ॥ ५९ ॥ ६० ॥

---

* सत्रशब्दाभिसंबन्धात्—श्री.।

यजतिचोदनादहीनत्वं स्वामिनां चास्थित-
परिमाणत्वात् ॥ ६१ ॥

अथ किंलक्षणकोऽहीन इति । तदुच्यते । यत्र यजतिचोदना, अनियतं च कर्तृपरिमाणं तत्राहीन इति निश्चीयते । अहीनानां यजतिचोदनया विधानं, द्विरात्रेण यजेतेत्येवमादि । कर्तृपरिमाणं चैषामनियतम् । सत्राणां तु नियतं परिमाणं बहवः । एवंलक्षणस्य च लक्षणे लक्षितं प्रयोजनं नान्यन्मृग्यमिति ॥ ६१ ॥

( पौण्डरीकेऽयुताश्वसहस्रयोः सकृद्दानाधिकरणम् ॥ १७ ॥ )

[ १७ ] अहीने दक्षिणाशास्त्रं गुणत्वात्प्रत्यहं
कर्मभेदः* स्यात् ॥ ६२ ॥ पू०

अस्ति पौण्डरीक एकादशरात्रः, पौण्डरीकेणैकादशरात्रेण स्वाराज्यकामो यजेतेति । तत्र श्रूयते । अयुतं पौण्डरीके दद्यादश्वसहस्रमेकादशमिति । तत्र संदिह्यते । किं प्रत्यहमयुतमश्वसहस्रं च दातव्यमुतैकमेवायुतमश्वसहस्रं च सकृदिति । किं प्राप्तम् । अहीने दक्षिणाशास्त्रं प्रत्यहं भिद्येत । कुतः । गुणत्वाद्दक्षिणायाः, प्रधानत्वाच्चाह्नाम् । समुदायशब्देन समुदायीन्यहान्युपलक्ष्य दक्षिणा गुणो विधीयमानः प्रतिप्रधानं भिद्येत । यथा गणाय स्नानम्, उपलेपनं वा विधीयमानं गणिनां भवति । एवमत्रापि द्रष्टव्यम् । प्रतिकर्मावसायी च चोदक एवमनुग्रहीष्यते । दक्षिणाभूयस्त्वाच्च फलभूयस्त्वं भविष्यति । अतोऽवगम्यते भेद इति ॥ ६२ ॥

सर्वस्य वैककर्म्यात् ॥ ६३ ॥ सि०

न चैतदस्ति, प्रत्यहं दक्षिणाभेद इदि । एकमेवायुतं सहस्रं च दीयते । कुतः । ऐककर्म्यात् । एकं हि दक्षिणानां कार्यम् । ऋत्विगानमनम् । आनतिश्च साङ्गक्रतुनिर्वृत्तये कृतेति, अन्तरा न तया प्रयोजनमस्तीति न भूयः क्रियते । यत्तु, अङ्गभूयस्त्वेन फलभूयस्त्वमिति,

---

॥ ६१ ॥ ६२ ॥

---

* कर्मभेदात्स्यात्—श्री. ।

तदङ्गत्वे प्रज्ञाते भवति, नान्यथा। समुदायाङ्गं च दक्षिणा, नावयवाङ्गमित्युक्तम्। अथ यदुक्तं प्रतिकर्मावसायी चोदकः प्रतिकर्म प्रापयतीति। प्रत्यक्षवचनात्समुदायाङ्गीकरणेन च दक्षिणानां विधानमिति चोदको बाधित इति न दोषः ॥ ६३ ॥

पृषदाज्यवद्वाऽह्नां गुणशास्त्रं स्यात् ॥ ६४ ॥

न चैतत्, सकृदेव दातव्यमिति। किं तर्हि। भेदेन। कुतः। प्रत्यहं दक्षिणानां प्राप्तानामयं विशेष उच्यमानः प्रत्यहमेव भवितुमर्हतीति। पृषदाज्यवत्। यथा, पृषदाज्येनानुयाजान् यजतीति पृषत्ता गुणो विधीयमानः प्रत्यनुयाजं भिद्यते, एवमत्रापि द्रष्टव्यमिति ॥ ६४ ॥

ज्यौतिष्टोम्यस्तु दक्षिणाः सर्वासामेककर्मत्वात्प्रकृतिवत्तस्मात्तासां* विकारः स्यात् ॥ ६५ ॥

न चैतदस्ति, भेद इति। किं तर्हि। तन्त्रेण सकृदेव। कथम्। ज्यौतिष्टोम्यो हि दक्षिणाः साङ्गं कर्मराशिमङ्गीकृत्य दीयन्ते। तथाभूतानां तासां च समुदायानत्यर्थानां प्राप्तानामयं विशेष उच्यते। सहस्रमयुतमिति विशेष उच्यमानो या इह दक्षिणा दीयन्ते तासामयं विकार इति गमयति। एकत्वमानतेर्न वारयति। तस्मात्सकृद्दातव्यमिति। यत्तु, अनुयाजवदिति। युक्तं, यदनुयाजेषु द्रव्यस्य भेद इति। यागे हि द्रव्यं गुणभूतं चोद्यते। तद्यागानां भेदादन्यस्य क्रियमाणं नान्यस्योपकरोतीति भिद्यते। इह त्वेकाऽऽनतिरित्युक्तम्। तस्माद्विषमो दृष्टान्त इति ॥ ६५ ॥

द्वादशाहे× तु वचनात्प्रत्यहं दक्षिणाभेदस्तत्प्रकृतित्वात्परेषु तासां संख्याविकारः स्यात् ॥ ६६ ॥

न चैतदस्ति, सकृद्दातव्यमिति। प्रत्यहमयं विशेषो भिद्यते।

---

॥ ६३ ॥ ६४ ॥ ६५ ॥

---

* तस्मात्तासां विकारः—श्री०। × द्वादशाह वचनात्—क० मु०।

कुतः । द्वादशाहे हि प्रत्यक्षं वचनम् , अन्वहं द्वादशशतं ददातीति । पौण्डरीकश्च द्वादशाहप्रकृतिः । तस्मात्पौण्डरीके प्रत्यहं चोदकप्राप्त्या प्रसक्तानां दक्षिणानामयं विशेष उच्यमानस्तथैव कर्मावयवसंबद्धानां विकार इति गम्यते । ततो भेदेन दक्षिणानां विशेष इति ॥ ६६ ॥

परिक्रयाविभागाद्वा समस्तस्य विकारः स्यात् ॥ ६७ ॥

न चैतदस्ति, दक्षिणाभेद इति । किं तर्हि । सकृदेव दक्षिणा दीयेतेति । कुतः । परिक्रयाविभागात् । समस्ता दक्षिणा विक्रियेरन् । कृत्स्नं हि क्रतुमङ्गीकृत्य दक्षिणा विधीयन्ते । कथम् । तावतः पुरुषार्थत्वात् । यत्फलवत् , तत्पुरुषस्य चिकीर्षितम् । तच्च कुर्वाणस्य सहायानुपाददानस्यायं विशेष उच्यते परिक्रयः । न चावयवः फलवान् । समुदायात्फलनिष्पत्तेः । समुदायं चाङ्गीकृत्य परिक्रयः क्रियमाण आसमुदायनिवृत्तेः परिक्रयः कृत इत्यन्तरा न भूयः क्रियते ।

अपि च । पौण्डरीकशब्दसंयोगेन परिक्रयविशेष उच्यमानस्तच्छब्दवाच्यस्यैव भवतीति गम्यते । समुदायश्च पौण्डरीकशब्दवाच्यो नावयवः । स हि समुदायशब्देन लक्ष्यते । तत्र लक्षणैव दोषः । असंभवे हि लक्षणाऽऽश्रीयते । न चेहासंभवः । अतः समुदायमङ्गीकृत्य सकृदेव ऋत्विजो व्रियेरन्निति । तस्मात्सकृत्परिक्रय इति । सकृद्दाने च प्रयोगवचनानुग्रहः । प्रयोगप्राशुभावाच्च महाविषयता शास्त्रस्येति । तस्मादप्येतदेव न्याय्यमिति ॥ ६७ ॥

भेदस्तु गुणसंयोगात् ॥ ६८ ॥

यदुक्तं द्वादशाहप्रकृतित्वात्पौण्डरीकस्य, तत्र च द्वादशाहे दक्षिणाभेदात्तथाभूताया एवेह विशेष उच्यत इति । तत्परिहर्तव्यम् । अत्रोच्यते । तत्राप्येकत्वात्क्रतोरेक एव परिक्रयः । भेदस्तु वचनात्सुत्यासंबन्धप्रयोजनो दक्षिणासंस्कारप्रयोजनश्च, न तस्मिन् भिद्यमाने परिक्रयैकत्वं भिद्यत इति ॥ ६८ ॥

---

॥ ६६ ॥ ६७ ॥ ६८ ॥

( पौण्डरीके प्रत्यहं विभज्य दक्षिणानयनाधिकरणम् ॥ १८ ॥ )

[ १८ ] प्रत्यहं सर्वसंस्कारः प्रकृतिवत्सर्वासां सर्वशेषत्वात् ॥ ६९ ॥ पू०

पौण्डरीक एवोदाहरणम् । तत्रैतत्समधिगतं सकृदेव परिक्रय इति । अस्ति तु प्रकृतौ माध्यंदिने सवने दक्षिणा नीयन्त इति । तत्र संशयः । किं सर्वासां कार्त्स्न्येन प्रत्यहं नयनमुत सकृन्नयनमथवा प्रविभज्य नयनमिति । किं प्राप्तम् । प्रत्यहं सर्वासां संस्कारः स्यात् । कुतः । प्रकृतिवत् । प्रकृतौ हि सकला दक्षिणास्तस्मिन्न काले संस्कृताः । इहापि तद्वदेव सकलाः संस्कर्तव्या इति । कथम् । अह्नां प्राधान्यात् । तद्गुणभावाच्च दक्षिणानाम् । सर्वा एताः सर्वेषामह्नां शेषभूताः । शेषभूतस्य चार्थस्य यः संस्कारः, स तेन तेनाह्ना प्रयुज्यत इति । तस्मात्प्रत्यहं सर्वसंस्कारः ॥ ६९ ॥

एकार्थत्वान्नेति चेत् ॥ ७० ॥

न चैतदस्ति, प्रत्यहं सर्वसंस्कार इति । किं तर्हि । सकृदेव संस्कारः स्यात् । कुतः । एकार्थत्वाद्दक्षिणानाम् । एकं कार्यमानमनं, तासां च नयनादिसंस्कारसंस्कृतानां प्रत्यर्पणं कार्यम् । एकस्मिन्नपि चाहनि तत्संस्कारसंस्कृतासु दीयमानासु कृतश्चोदनार्थ इति भूयः संस्कारेण प्रयोजनं नास्ति । तस्मात्सकृत्संस्क्रियेरन्निति ॥ ७० ॥

स्यादुत्पत्तौ कालभेदात् ॥ ७१ ॥

न चैतदस्ति, सकृत्संस्कार इति । किं तर्हि । प्रत्यहम् । कुतः । उत्पत्तौ कालभेदात् । उत्पत्तौ दक्षिणानां विशिष्टकालसंबन्धः श्रूयते । तस्मात्त्रिष्टुभो लोके माध्यंदिने सवने दक्षिणा नीयन्त इति । सर्वाश्चैताः सर्वेषामह्नां शेषभूताः । तेषां चाह्नां माध्यंदिनानि सवनानि भिद्यन्ते । तत्र चागम्यमानविशेषत्वाद्यस्य माध्यंदिने सवने न संस्क्रियेरन्, तस्यैव संस्कारलोपः स्यात् । प्रयोगभेदात् । न चान्यत्र

॥ ६९ ॥ ७० ॥

संस्क्रियमाणा अन्यत्र संस्कृता भवन्ति । तस्माद्भेदेन संस्क्रियेरन्निति ॥ ७१ ॥

विभज्य तु संस्कारवचनाद्द्वादशाहवत् ॥ ७२ ॥

न चैतदस्ति, समस्तानां प्रत्यहं संस्कार इति । किं तर्हि । विभज्य संस्क्रियेरन् । कुतः । वचनात् । द्वादशाहे प्रत्यहं नयनादिसंस्कारो वचनात्क्रियते । अन्वहं द्वादशशतं ददातीति । पौण्डरीकश्च द्वादशाहप्रकृतिः, न ज्योतिष्टोमप्रकृतिः । तस्मात्परिक्रयैकत्वेऽपि सति वचनाद्भेदेन संस्कार इति ॥ ७२ ॥

( विकृतिविशेषे सामिधेनीकार्येऽपेक्षितानामेव मनुलिङ्गानामृचामेकादशानां दाशतयीभ्यः समानयनाधिकरणम् ॥ १९ ॥ )

( १९ ] लिङ्गेन द्रव्यनिर्देशे सर्वत्र* प्रत्ययः स्याल्लिङ्गस्य सर्वगामित्वादाग्नेयवत् ॥ ७३ ॥ पू०

क्वचित्कर्मविशेषे श्रूयते, मनोर्ऋचः सामिधेन्यो भवन्तीति । तत्र संशयः । किं यावत्यो मनुलिङ्गा ऋचः, ताः सर्वा दाशतयीभ्य आनीय सामिधेनीषु विनियोक्तव्या उत काश्चिदेव न सर्वा इति । किं प्राप्तम् । सर्वा एवंलिङ्गा उपादेयाः । कुतः । लिङ्गस्य सर्वगामित्वात् । इहैतावच्छ्रूयते, मनोर्ऋचः सामिधेन्यो भवन्तीति । मनुशब्दसंयोगो हि लक्षणमृचामुपादयिमानानाम् । मनुसंबन्धेन च शब्द उपलक्षयन् यावतीषु संभवेत्, तावतीरविशेषाच्छक्नोत्युपलक्षयितुम् । एतच्च वचनं लिङ्गमात्रसंबन्धेन विनियोजकं, नेयत्तापरिच्छिन्नानां विशेषकम् । तस्मादविशेषात्सर्वास्तल्लिङ्गवत्य उपादेयाः आग्नेयवत् । यथा ऋजीषाणामाग्नेयेन= संवत्सरमुपधाने आसीत सूक्तेन सूक्तस्याविच्छेदायेति, आग्नेयेन सूक्तेनेत्युक्ते यावन्त्याग्नेयानि सूक्तानि दाशतयानि, सर्वैरिष्टका उपधीयन्ते, एवमिहापि मनुलिङ्गाभिः सामिधेनी-

---

॥ ७१ ॥ ७२ ॥

---

* सर्वप्रत्ययः स्यात्–श्री० । = अत्र च शास्त्रदीपिकादिपुस्तकेषु ' आग्नेयैः सूक्तैः संवत्सरमुपदधान आसीत ' इत्येवं पाठ उपलभ्यते ।

कार्यं कर्तव्यमिति । यथा वाऽहर्गणे, ऋजीषमप्सु प्रास्यतीति, सर्वेषामह्नां यदृजीषम्, अविशेषात्तत्सर्वं प्रास्यते । तद्वदिहाप्यविशेषात्सर्वासामुपादानमिति ॥ ७३ ॥

यावदर्थं वाऽर्थशेषत्वादल्पेन परिमाणं स्यात्तस्मिंश्च लिङ्गसामर्थ्यम् ॥ ७४ ॥ सि०

न चैतदस्ति, सर्वासां मनुलिङ्गानां दाशतयीनामागम इति । किं तर्हि । यावदर्थमुपादेया इति । कुतः । अर्थशेषत्वात् । कार्यशेषभावेन हि सामिधेनीनामुपादानम् । तच्च कार्यमल्पाभिरपि सिध्यतीति । सिद्धत्वात्कार्यस्य, यद्यपि लक्षिताः सन्त्यपरा ऋचः, तथाऽपि प्रयोजनाभावान्नैवोपादीयन्त इति । ननु कार्यशेषभावः सर्वत्र वाचनिकः, इहापि प्रत्यक्षवचनाल्लिङ्गपरिच्छिन्नाः सामिधेन्यो विधीयन्त इति सर्वासां विधानं भविष्यतीति ।

अत्राभिधीयते । सत्यं सर्वत्र वाचनिकः शेषभावः, न त्विह सामिधेन्यो विधीयन्ते । किं तर्हि । चोदकप्राप्तानामियत्तापरिच्छिन्नानां केवलमनेन विशेष उच्यते, मनोर्ऋच इति । सोऽयं विशेष उच्यमानो यावत्य उपन्यस्ताः, ता एव विशेष्य कृतार्थत्वाद् व्यावर्तन्ते, नापरा अपि तल्लिङ्गाः प्रसज्यन्ते । तस्माल्लिङ्गवतीनां नियतानामुपादानं न सर्वासामिति । न च लिङ्गवतीनां भावाद्गुणानुरोधेन प्रधानावृत्तिर्न्याय्या । एवं च लाघवं प्रयोगप्रांशुभावश्च भविष्यतीति। अपि चास्मिन् पक्षे लिङ्गमपि समर्थमेव । कथम् । लिङ्गं हि लक्षणत्वेन सामिधेनीनामुच्यते । तत्र यद्यपि न तल्लिङ्गाः सर्वा उपादीयन्ते, यास्त्विह प्रयुज्यन्ते तास्माल्लिङ्गा एव, नान्यलिङ्गाः, तथाऽपि लिङ्गमनुगृहीतमेव, न बाधितमिति । तस्माद्यावदर्थमुपादानं न सर्वासामिति ॥ ७४ ॥

आग्नेये कृत्स्नाविधिः ॥ ७५ ॥

---

॥ ७३ ॥ ७४ ॥

यदुक्तं यथा, आग्नेयैः सूक्तैरिष्टका उपदधाति, इत्युक्ते सर्वाणि लिङ्गविशिष्टान्युपादीयन्ते, न कानिचित् । एवमत्रापि द्रष्टव्यमिति । तत्परिहर्तव्यम् । अत्रोच्यते । युक्तमाग्नेयेषु कृत्स्नविधानम् । कुतः । इष्टकाबहुत्वात् । प्रतिसूक्तमुपदधातीति वचनाद्बह्वीनामुपधेयानां सूक्ताल्पत्वात्कात्स्न्येनोपादानमविरुद्धम् । इह त्वियत्तापरिमितानां विशेष उच्यत इत्यपदिष्टो हेतुः । तस्मादयमिहादृष्टान्त इति ॥७५॥

ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिः स्यात् ॥ ७६ ॥

यदप्युक्तमहर्गणे यथा, ऋजीषस्य कृत्स्नस्याप्सु प्राशनम्, एवमत्राप्यविशेषात्सर्वासामुपादानमिति । तत्परिहर्तव्यम् । अत्रोच्यते । ऋजीषस्य प्रधानत्वाद्युक्तम् । ऋजीषस्याविशेषात्प्रतिपत्तिरियमभिधीयते । सा सर्वस्य ऋजीषस्य स्यात् । यस्य न क्रियेत, तस्य संस्कारपरिलोपः स्यात् । तस्मात्सर्वेषामह्नां यदृजीषं, तत्सर्वं प्रास्यते । इह त्वर्थशेषत्वादित्यपदिष्टो हेतुः । तस्माद्विषममेतदृजीषेणेति ॥७६॥

( ज्योतिष्टोमे वाससि सोममानोपावहरणयोरनुष्ठानाधिकरणम् ॥ २० ॥ )

[ २० ] वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात् ॥ ७७ ॥ सि०

ज्योतिष्टोमे मानोपावहरणे समाम्नाते । तत्र संशयः । किं यत्र क्वचिन्मानं, येन केनचिदुपावहरणं कार्यमुत वाससि मानं, वाससा चोपावहरणमिति । किं प्राप्तम् । अर्थाद्यत्र क्वचिन्मानं, येन केनचिदुपावहरणम् । एवं चानियमे लाघवं प्रयोगप्राशुभावश्च भविष्यतीति । एवं प्राप्ते ब्रूमः । वाससि मानं, वाससा चोपावहरणं+ कार्यम् । कुतः । वचनात् । वचनमिदं भवति । वाससि मिनोति, वाससा चोपावहरतीति । वचनस्य सामर्थ्यान्नियम्येत ।

॥ ७५ ॥ ७६ ॥

———

+ उपावहरणं च—मु० ।

अथवा, नैवात्र संशयः। वचनाद्वासासि मानं, वाससा चोपावहरणम्। एवं प्राप्तमुत्तराविवक्षया कीर्त्यते विशेषं चिन्तयितुम्। यच्च प्राप्तमुत्तराविवक्षया कीर्त्यते, न तत्र पूर्वोत्तरपक्षाभ्यां प्रयोजनमिति ॥ ७७ ॥

( अहर्गणे, उपावहरणार्थं वासोन्तरोत्पादनाधिकरणम् ॥ २१ ॥ )

[ २१ ] तत्राहर्गणेऽर्थाद्वासःप्रक्लृप्तिः* स्यात् ॥ ७८ ॥ सि०

अस्ति द्वादशाहः। तत्र चोदकप्राप्तमुपावहरणं, वाससोपावहरतीति। तत्र संशयः। किमुपावहरणार्थमन्यद्वास उत्पाद्यमुत नेति। किं प्राप्तम्। नोत्पाद्यम्। कुतः। न वचनमस्ति, अन्यद्भेदेनोत्पाद्यमिति। वचनादृते न प्रतीमो भेदेनोत्पत्तिम्। तस्मान्नोत्पाद्यमिति। एवं प्राप्ते, ब्रूमः। अहर्गणेऽर्थाद्वास उत्पाद्यम्। कथम्। अहर्बहुत्वात्। बहून्यहानि। तत्र चोदकेनैतत्प्राप्यते। वाससोपावहरतीति। भेदेन चानुत्पाद्यमाने, उपावहरणार्थं एव न सिध्येत्। तस्मादुत्पादयितव्यमिति ॥ ७८ ॥

( अहर्गणे तत्तदहःसंबन्धिसोमोपावहरणकाल एव वासोन्तरोत्पादनाधिकरणम् ॥ २२ ॥

[ २२ ] मानं प्रत्युत्पादयेत्प्रकृतौ तेन दर्शनादुपावहरणस्य ॥ ७९ ॥ पू०

तत्रैवाहर्गणे चिन्त्यते। उक्तमेतत्, अर्थाद्वास उत्पाद्यमिति। तत्र संशयः। किं मानं प्रत्युत्पाद्यमुतोपावहरणं प्रत्युत्पाद्यमिति। किं प्राप्तम्। मानं प्रत्युत्पाद्येत। कुतः। प्रकृतौ तेन दर्शनादुपावहरणस्य। ज्योतिष्टोमे यस्मिन्न मीयते तेनैवोपावहरणं क्रियते। प्रकृतिवच्च विकृतौ। चोदकानुग्रहाय तस्मिन्नेव काल उत्पाद्यमिति ॥ ७९ ॥

---

॥ ७७ ॥ ७८ ॥ ७९ ॥

---

* वासः प्रक्लृप्तिः स्यात्–मु०।

हरणे वा श्रुत्यसंयोगादर्थाद्धि+ प्रकृतौ तेन ॥ ८० ॥

न चैतदस्ति, मानं प्रत्युत्पाद्यमिति । किं तर्हि हरणं प्रत्युत्पाद्यम् । कथम् । श्रुत्यसंयोगात् । न हि श्रूयते, मानं प्रत्युत्पाद्यमिति । श्रुत्यभावाच्च नैकान्ततोऽध्यवसीयते, अत्रैवेति । यस्य चार्थः प्रयोजकः, स प्रयोजनप्रयुक्तत्वात्तत्काल एव न्याय्यो नान्यकाल इति । हरणकाले चानेन प्रयोजनमिति हरण एव न्याय्यमुत्पादयितुमिति । यदुक्तं, प्रकृतौ माने यद्वासस्तस्य हरणे दर्शनादिह चोदकानुग्रहाय तत्कालमेवोत्पाद्यमिति । तत्परिहर्तव्यम् । अत्रोच्यते । न श्रूयते, तेनैव वाससोपावहरणं कर्तव्यमिति । किंत्वर्थात्तेन क्रियते । एकत्वादह्नः । न हि तद्वासोऽन्यत्र व्यापृतमिति तेनैव क्रियते । यच्चार्थात्कृतं, न तच्चोदकः प्रापयति । अवाचनिकत्वात् । न चेह तदेव वास उभयार्थं संभवति । अहर्बहुत्वात् । तस्माद्धरणकाल एवोत्पाद्यमिति ॥ ८० ॥

इति श्रीशबरस्वामिविरचिते मीमांसाभाष्ये दशमाध्यायस्य षष्ठः पादः ॥

---

॥ ८० ॥

---

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां दशमाध्यायस्य षष्ठः पादः ॥

---

+ अर्थाद्धिकृतौ तेन—क. मु०।

## अथ दशमाध्याये सप्तमः पादः ।

—–

( अग्नीषोमीये पशौ हृदयाद्यङ्गानामेव हविष्ट्वाधिकरणम् ॥ १ ॥ )

[ १ ] पशोरेकहविष्ट्वं समस्तचोदितत्वात् ॥ १ ॥ पू०

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभत इति । तत्र संशयः । किं कृत्स्नः पशुरेकं हविरुत प्रत्यङ्गं हविर्भेद इति । किं प्राप्तम् । कृत्स्नः पशुरेकं हविरिति । कुतः । समस्तस्य चोदितत्वात् । समस्तो हि पशुरग्नीषोमौ प्रति चोद्यते, न पृथगङ्गानामग्नीषोमीयता । तस्मात्पश्वाकृतिकाद्द्रव्यादवदायाग्नीषोमाभ्यां दातव्यम् । अङ्गहविष्ट्वे पशुशब्दे लक्षणा स्यात् । तस्मात्कृत्स्नः पशुरेकं हविः । तच्च दर्शयति । अथो खल्वाहुः, कापेया दक्षिणस्य पूर्व= पदस्यावदेयं, तत्सर्वस्य पशोरवत्तं भवतीति । अथो खल्वाहुः, गोपायना दक्षिणस्य पूर्वं पदस्यावदेयं, तत्सर्वस्य पशोरवत्तं भवतीति कृत्स्नस्य पशोरवदानं दर्शयति । तस्मादपि कृत्स्नः पशुरेकं हविरिति ॥ १ ॥

---

द्वितीयेऽध्याये* 'हृदयस्याग्रेऽवद्यति' इत्येवमादीनि न यागं चोदयन्तीति स्थितम् । इदं यागचोदना 'अग्नीषोमीयं पशुम्+' इति । किं हृदयादीनि हवींषि, उत पश्वाकृतिलक्षिता व्यक्तिर्हविरिति× ।

तत्र पूर्वपक्षः । पशोरग्नीषोमसंबन्धः श्रूयते, न हृदयादीनाम् । तेषामग्नीषोमसंबन्धे लक्षितलक्षणा स्यात् । तस्य सांनाय्यादिव्यन्तः÷ । तेन मध्यात्पूर्वार्धाच्चावदाने प्राप्ते हृदयादिदेशा विधीयन्ते । तेषां च विकल्प इति ॥ १ ॥

—–

---

= पूर्वपदस्य—ग० । * द्वितीय इति—( अ० २ पा० २ अ० ६ सू० १७ ) इत्यत्रेति शेषः । + पशुमिति–अग्नीषोमीयं पशुमालभेत ' इत्यस्य स्थितेऽपि यागचोदनात्वेऽत्रैवं विचार इति पूरणम् । × व्यक्तिरिति–ङ० । ÷ अग्नीषोमीयात्—मु० ।

प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक्प्रकल्पनत्वात् ॥ २ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति। नैतदस्ति, कृत्स्नः पशुरेकं हविरिति। किं तर्हि। प्रत्यङ्गं हविर्भेदः। कुतः। पृथक्प्रकल्पनत्वात्। पृथगङ्गानि प्रकल्पन्ते=। हृदयस्याग्रेऽवद्यति,× जिह्वाया अवद्यति, वक्षसोऽवद्यति, दोष्णोरवद्यति, पार्श्वयोरवद्यति, गुदस्यावद्यति। हृदयाकृतिकादिभ्योऽवदानं श्रूयते, नैतदविशासिते पशौ संभवति। तस्माद्धृदयाद्यर्थेन विशसितव्यः पशुः। तस्मिंश्च विशस्यमाने पश्वा-

---

एकस्तावदयमेव दोषो लक्षणया हृदयादिदेशादिति। विकल्पदोषश्च। यस्य पशुव्यक्तिर्हविरिति, तस्य तस्या एव व्यक्तेः सकाशादवदानं प्राप्नोति, न हृदयादिभ्यः। अथावद्यतिरनुवाद इति। तन्न। यद्यवद्यतिमनूद्य हृदयादीनि विधीयेरन्, ततोऽथशब्दाग्रशब्दावनर्थकौ स्याताम्। विधातुं तावन्न शक्यते। वाक्यभेदभयात्*। न चानूद्येते। अप्राप्तत्वात् ÷।

यदि× च हृदयावद्यतिविशिष्टः पदार्थो= विधीयते, जिह्वाया अवद्यतीत्येवमादयश्च, तथा सत्यथशब्दोऽनुवादः स्यात्। कथम्। अयमथशब्द+ आनन्तर्ये वर्तते, यदा च पूर्वोत्तरौ पदार्थाववगतौ तदाऽऽनन्तर्यम्÷। यदा तु तौ न स्तः, कस्याऽऽनतर्यं ब्रूयात्। अवगतौ चेत्पाठादेवावगतः* क्रमः। तत्राथशब्दोऽनुवादः। न च भवता पदार्थविधानमिष्यते, येनाथशब्दोऽग्रशब्दश्चानुवादौ+ स्याताम्। तस्माद्धृदयादिविशिष्टोऽवद्यतिर्विधीयते। एवं जिह्वादिष्वपि। एवं च यस्माद्द्रव्यादवदीयते तद्धविरिति। यथा, 'ऐन्द्रवायवं गृह्णाति' इति वाक्यैर्द्रव्यं पृथक् कल्प्यते, तदेव मुख्यं हविः, एवमिहापि। न चैत एकादशावद्यतयोऽदृष्टार्थाः। पशोरेव सकाशाद्द्व्यवदानाद्याग इति।

---

= प्रकल्पनात्वात्-श्री०। × हृदयस्यावद्यति—ग०। * वाक्यभेदभयादिति—हृदयादिवाक्ये प्राप्तावदानानुवादेन हृदयादिप्रदेशस्य, अग्रादिपदवाच्यस्य क्रमस्य च विधाने वाक्यभेदादित्यर्थः। ÷ अप्राप्तत्वादिति—हृदयादिप्रदेशानां क्रमस्याप्राप्तत्वादित्यर्थः। × स्वमते प्राप्तिमाह-यदि चेति। = पदार्थ इति-भावनाख्य इति शेषः। + अथशब्द—मु०। ÷ तदेति-तदा तयोरानन्तर्यमवगमयितुं शक्यत इत्यर्थः। * यागादेव-घ. मु०। + अथशब्दाग्रशब्दावनुवादौ—ङ.।

कृतिर्न भवति। तदेवमापतति। पश्वाकृत्या यागस्य क्रियमाणस्योपकुर्यात्। तां पश्वाकृतिमन्तर्धाय च न शक्यते साक्षाद्यागद्रव्यं परिच्छेत्तुम्। तस्मात्प्रणाड्या साऽऽकृतिरुपकर्तुमर्हतीति पश्वाकृतिकस्य द्रव्यस्य हृदयादीनि यानि, तानि हवींषि। तेभ्योऽवदाय प्रदातव्यमिति। ग्रहवत्। यथा सोमे, ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति, आश्विनं गृह्णातीति पृथक्कल्पनत्वात्सोमरसो हविः, न सोमलता, एवमत्रापि द्रष्टव्यम्। समस्तचोदना त्वङ्गहविष्ट्वेऽपि प्रमाड्याऽवकल्पत एव। अथ यद्दर्शनमुक्तं, तत्सुतरामनेकहविष्ट्व उपपद्यते। कथम्। कृत्स्नपशोरवदानमन्येनानुजिघृक्षन् न कृत्स्नस्य पशोरवदीयत इति दर्शयति ॥ २ ॥

( हृदयादीनामेवावदानसंबन्धितया श्रूयमाणानां हविष्ट्वेन तदितरावयवानां हविष्ट्वपरिसंख्याधिकरणम् ॥ २ ॥ )

[ २ ] हविर्भेदात्कर्मणोऽभ्यासस्तस्मात्तेभ्योऽवदानं स्यात् ॥ ३ ॥ पू०

प्रत्यङ्गं हविर्भेद इत्येतत्समधिगतम्। इदमिदानीं संदिह्यते। किं येन केनचिदङ्गेन हविषा यागो निर्वर्तयितव्य उत सर्वेभ्योऽवदातव्यम्, अथवा परिसंख्या केनचिदिति। किं प्राप्तम्। सर्वेभ्योऽवदातव्यमिति—अवदानकर्माभ्यसितव्यमिति। कुतः ? हविर्भेदात्। भिन्नानि हवींषि हृदयादीनि। यान्यवदाने संकीर्तितानि, अवशिष्टानि च पश्वाकृत्या प्रणाड्या परिच्छिन्नानि, तेभ्यः सर्वेभ्योऽवदातव्यम्।

---

अस्मिंस्तु पक्षेऽदृष्टार्थत्वमेव दोषः। एतेषु यागार्थेषु न किंचिददृष्टम्। पशुचोदनाऽपि लक्षितलक्षणया हृदयादीनि लक्षयन्त्यग्नीषोमाभ्यां सह संबध्यते। एवं च येषामङ्गानामवद्यतिः श्रूयते तान्येव यागसाधनानि, नाङ्गान्तराणि। कुतः। पशुशब्दोऽयं हृदयादीनि वाक्यानि दृष्ट्वा ततो लक्षणावृत्त्या कल्पितः। यानि दृष्ट्वा कल्पितस्तान्येव लक्षयति। अन्येषामश्रूयमाणानां कः प्रसङ्गो, येन+ तानि हविष्ट्वेन लक्षयेत् ॥ २ ॥

---

+ येनेमानि हवींषि न लक्षयेत—पु० ।

पश्वाकृत्या× हि न केचिच्छद्विशेषाः परिच्छिद्यन्ते। तद्यदि, एकस्मादङ्गादवदीयेत, न पश्वाकृतिपरिच्छिन्नाः सर्वे विशेषा उपसंगृह्येरन्=। तत्र पश्वाकृत्याऽङ्गभावो न कृतः स्यात्। अनेकविशेषणविशिष्टं हि मांसराशिं परिच्छिन्दती, अङ्गभावं नीता भवति, नान्यथा। एकहविष्ट्वे हि पश्वाकृतिपरिच्छिन्नाङ्गराशेः सर्वावदानानभ्यासेनैव* यथाश्रुतादेवावत्तं भवति। पृथक्प्रकल्पितेष्वङ्गेष्वेकस्मादङ्गादवद्यन् कांश्चिद्विशेषाञ्जह्यात्। अभ्यस्यंस्त्ववदानानि सर्वान् विशेषान् परिगृह्णाति। तस्मात्सर्वेभ्योऽवदातव्यमिति।

आह। ननु पश्वाकृतिपरिच्छिन्नानां विशेषाणां यागार्थत्वादन्यतमेन यागः सिध्येत्। उच्यते। सिध्येदेवं+ यदि विशेषाणां यागसंबन्धः श्रूयेत। पश्वाकृतेस्तु श्रूयते। तस्माद्विशेषेषु गृह्यमाणेष्वङ्गभावः कृतो भवतीति तदर्थं प्रयोगवचनेन विशेषा गृह्यन्ते, नावगम्यते+ विशेषः, को वा विशेषो गृहीतः को वा नेति। अतः सर्वे गृह्यन्ते प्रयोगवचनानुग्रहाय। यश्च विशेषो न गृहीतः, तेन विनाऽपि यथाश्रुतमेव भवतीति कल्प्यमाने, तस्य पश्वाकृत्या परिच्छेदे न कश्चिदप्याधिकोऽर्थोऽङ्गीकृतो भवतीत्यनादरस्तं प्रत्याश्रितः स्यात्। तस्मात्सर्वेभ्योऽवदेयं हृदयादिभ्योऽवशिष्टाच्चेति ॥ ३ ॥

आज्यभागवद्वा निर्देशात्परिसंख्या स्यात् ॥ ४ ॥ सि०

हृदयादिभ्योऽवदातव्यं नावशिष्टात्। कुतः। तेषां निर्देशात्। निर्दिश्यन्ते हृदयादीनि, एकादश वैतानि पशोरवदानानीति। तत्र प्राप्तत्वादेवैषामेष विधिर्न संभवति+। आनर्थक्यान्नानुवादः। निर्गुणं च पुनःश्रवणमितरेषामश्रुतानां* परिसंख्यापकं× भवति। यथा,

॥ ३ ॥

× पश्वाकृत्या हि केचित्—ग. मु.। = उपसंह्रियेरन्—ग.। * सर्वावदानाभ्यासेनैव यथाश्रुतादवत्तं—म.। + सिध्येदेव—क०। = न च गम्यते—क.। नत्ववगम्यते—ग.। ÷ परिच्छेदे कश्चिदपि—क०। + संभवतीति—मु०। * पुनःश्रवणमिति, इतरेषां—क.। × परिसंख्यायकं—क०। परिसंख्याय—ग.।

न गन्तव्यं न भोक्तव्यमिति च विस्पष्टं प्रतिषेधः, एवमेव परिसंख्यायां प्रतिषेधः क्रियते । आज्यभागवत् । यथा, गृहमेधीये पञ्चमे पक्ष आज्यभागग्रहणं परिसंख्यार्थमित्युक्तम्= । एवमिहापि प्राप्नोति । तस्मात्परिसंख्येति ॥ ४ ॥

तेषां वा व्यवदानत्वं विवक्षन्नभिनिर्दिशेत्पशोः÷ पञ्चावदानत्वात् ॥ ५ ॥

वाशब्दः पक्षं व्यावर्तयति । न चैतदस्ति, परिसंख्येति । तत्र हि त्रयो दोषाः–स्वार्थप्रहाणं, परार्थकल्पना, प्राप्तबाधश्चेति* । यदुक्तं निर्देशादिति । नैतदेवम् । तेषां हृदयादीनां व्यवदानत्वं विवक्षन्नभिनिर्दिशेत् । नैवं वचनव्यक्तिर्भवति, एकादशैव पशोरवदानानि नाभ्यधिकानि । यान्यवदानानि तानि द्विर्द्विरवद्यतीति । कथं तर्हि । एकादश द्विर्द्विरवद्यतीति । कुतः । नात्रावदानमनूद्यते । अप्राप्तत्वात् । कथमप्राप्तिः । पशोः पञ्चावदानत्वात् पञ्चावदानत्वं हि पशोः श्रूयते । तस्मान्नानुवादः एतानि द्विर्द्विरवद्यतीति, एतेषां द्विरवदानं विधाय कृतार्थः शब्दो भवति । अवशिष्टानां त्यागं न वारयति । तस्मात्सर्वेभ्योऽवदेयामिति ॥ ५ ॥

अंसशिरोनूकसक्थिप्रतिषेधश्च तदन्यपरिसंख्यानेऽनर्थकः स्यात्प्रदानत्वात्तेषां÷ निरवदानप्रतिषेधः स्यात् ॥ ६ ॥

इतश्च न परिसंख्या । कुतः । अंसशिरोनूकसक्थिप्रतिषेधात् । एवमेतेषां प्रतिषेध उपपद्यते, यदि न परिसंख्यानं भवति । भवति च सः । नांसयोरवद्यति, न शिरसो, नानूकस्य, नापरसक्थ्योरिति । परिसंख्याते, अंसशिरोनूकसक्थ्नां प्रतिषेधोऽनर्थकः स्यात् । अथ तु न परिसंख्या, ततः प्रदानत्वात्, यान्यंसादीनि, तेषां निरवदानं प्र-

॥ ४ ॥ ५ ॥

---

× उत्त्रमिति–( अ० १० पा० ७ अ० ९ सू० २८ ) इत्यत्र वक्ष्यत इत्यर्थः । ÷ अभिनिर्देशात् –श्री. ग. । * प्राप्तबाधश्च–क० । = प्रधानन्यायत्वात्तेषां–श्री. क० ग. ।

तिषिध्यते। किमिदं निरवदानमिति । निष्कृष्य तस्माद‌ङ्गादवदानं निरवदानं,= द्विरवद्यतीति । तत्प्रतिषिध्यत इति । अतः सर्वैरेवाङ्गैरिज्या क्रियत इति ॥ ६ ॥

अपि वा परिसंख्या स्यादनवदानीयशब्दत्वात् ॥ ७ ॥

अपि वेति पक्षव्यावृत्तिः । परिसंख्यैव स्यात् । नैव सर्वेभ्योऽवदातव्यम् । कुतः । पुनःश्रवणस्यार्थवत्त्वात् । ननु त्रिदोषा परिसंख्येत्युक्तम् । उच्यते । नात्रायं दोषो भवति । कथम् । अवदानं हि चोदकेन होमार्थं प्राप्नोति । इह तस्य हृदयादिभिः संबन्धः क्रियते । तेन हृदयादीनि वाक्येन× होमसंबद्धानि भवन्ति, नान्यान्यङ्गानि पश्वाकृतेर्देवतासंबन्धीनि । न चैतस्मिन्न् प्रत्यक्षे हृदयादिवाक्ये सति पश्वाकृतेर्देवतासंबन्धोऽन्येषामङ्गानां होमसाधत्वेनोपपद्यते । हृदयादिष्वण्येवमाकृतिकाद्गृह्यमाणेष्वाकृतेर्देवतासंबन्ध उपपद्यत एव । तस्मादन्यान्यङ्गानि परिसंख्यायन्ते ।

अपि च, अनवदानीयशब्दो भवति । मारुत्यान्* अनवदानीयान् खुराग्रहांश्चाऽऽजिसृद्भ्यो हरतीति । यदि परिसंख्या, ततः किंचिदङ्गमनवदानीयं भवति । इतरथा सर्वमवदानीयं स्यात् । अनवदानीयशब्दो नोपपद्यते । तस्मात्परिसंख्येति । ननु शृङ्गखुराभिप्रायमनवदानीयं भविष्यति । नेत्युच्यते । अनदनीयं= हि तत् । अनदनीयहरणे,÷ आजिसृद्भ्य इति चतुर्थी नोपपद्यते । न हि शृङ्गखुरेण, आजिसृतोऽभिप्रेयन्ते । स्यादेतत् । परिक्रयार्थं तद्भविष्यतीति । उक्तमेतत् । न देवताद्रव्येण स्वकार्याणि कर्तव्यानीति । तस्मान्न शृङ्गखुराभिप्रायम् ॥ ७ ॥

---

॥ ६ ॥ ७ ॥

---

= निरवदानम् । द्विरवद्यतीति तत्प्रतिषिध्यते-मु० । ×वाक्येनैव -ग. । * मारुत्या अनव—ग० । = अनवदानीयं-ग. मु. । ÷ अनवदानीय—ग. मु. ।

अब्राह्मणे च दर्शनात् ॥ ८ ॥

इतश्च परिसंख्येति । कुतः । अब्राह्मणे हि भक्षं दर्शयति । कथम् । ककुभो राजपुत्रः प्राश्नाति ध्रुवपोप इति ककुभो भक्षं दर्शयति । इतरथा यागे प्रवृत्तस्यादर्शनं स्यात् । सर्वप्रदानं+ च भवेत् । निरवदानप्रतिषेधात् । तस्मादपि परिसंख्येति ॥ ८ ॥

श्रृताश्रृतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वम् * ॥ ९ ॥

इतश्च परिसंख्येति । कुतः । शृताशृतोपदेशात् । शृताशृतोपदेशो हि भवति, द्वयान्यङ्गान्याभिमृशति,= शृतान्यशृतानि चेति । यदि न परिसंख्या, सर्वेषां श्रपणं स्यात् , अशृतदर्शनं नोपपद्येत । परिसंख्याने तु सति हृदयादिभ्योऽन्येषाम् , अयज्ञशेषत्वम् । यथा, पर्यग्निकृतं पात्नीवतमुत्सृजन्तीति । तेषां तत्र श्रपणं न स्यात् । अशृतदर्शनं चोपपद्यते । तस्मादपि परिसंख्येति ॥ ९ ॥

( अग्नीषोमीये पशावनिज्याशेषैस्त्रिभिरङ्गैः स्विष्टकृद्यागानुष्ठानाधिकरणम् ॥ ३ ॥ )

[ ३ ] इज्याशेषात्स्विष्टकृदिज्येत प्रकृतिवत् ॥ १० ॥ पू०

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभेतेति । अस्ति तत्र चोदकप्राप्तः स्विष्टकृत् । इहैवं श्रूयते, त्र्यङ्गैः स्विष्टकृतं यजतीति । तत्र संशयः । किमिज्याशेषेभ्यस्त्रिभ्योऽङ्गेभ्यः स्विष्टकृता यष्टव्यमुतानिज्याशेषेभ्यः इति । किं प्राप्तम् । इज्याशेषेभ्य इति । कुतः । एवं प्रकृतिवच्छब्दानुग्रहो भविष्यति । त्रीण्यङ्गानि यानीज्याशेषभूतानि, तेभ्य इज्यायां क्रियमाणायां त्रिशब्दोऽप्यनुगृहीतो× भवति ॥ १० ॥

त्र्यङ्गैर्वा शरवद्विकारः स्यात् ॥ ११ ॥ सि०

---

॥ ८ ॥ ९ ॥ १० ॥

—·—

एकादशानां तावन्मध्ये त्रित्वं नास्ति, यद्विधीयते । संख्या हि केनचि-

---

+ सर्वप्रदानं भवेत्–क० । * अयज्ञशेषत्वं सर्वेषां श्रपणं स्यात्–क० । = द्वयानि मांसानि–ग. । × त्रिशब्दोऽनुगृहीतो भविष्यति–ग. ।

अनिज्याशेषैस्त्र्यङ्गैरिज्येत। एष विकारः स्यात्। न त्रीणि यानि कानिचिदङ्गानि। यदि यैः कैश्चित्त्रिभिरङ्गैरिज्या कर्तव्येत्यभ्युपगम्येत, तत्राङ्गैरिति न विधीयेत। प्राप्तत्वादेव×। त्रित्वार्थं विधानं स्यात्। त्रिभिरिज्येतेति। तत्र त्रिशब्दोऽङ्गशब्देनासमर्थ+ एव स्यात्, असामर्थ्ये समासो नोपपद्येत। अपि च, असत्यां त्रयाणामङ्गानामेकस्यां साधारण्यां क्रियायामेकस्मिन्वा साधारणे गुणे त्रिशब्दस्याङ्गशब्देन विशेषणविशेष्यसंबन्धाभावात्सामर्थ्यं न विद्यते। यानि त्रीण्यङ्गानि त्रित्वसंबद्धानि तानि त्र्यङ्गानीति। असति विशेषे व्यवहाराभावात्साकाङ्क्षं भवति, कतमानि त्र्यङ्गानीति।

त्वत्पक्षेऽपि कथम्। तदुच्यते। समाहार एष समासः। येषां समाहार उक्त एकाक्रियागुणसंबन्धो वा, तानि त्र्यङ्गानि। एषां च समाहार उच्यते। यद्दोष्णः पूर्वार्धादग्नये समवद्यति, गुदस्य मध्यतः, श्रोण्या जघनत इति। समवदानं समाहारः, एकेनाग्निना गुणेन संबन्धः, एकया च समवद्यतिक्रियया। तस्मादेतानि त्र्यङ्गानि, एतानि चानिज्याशेषाणि। अतो वचनप्रामाण्यादनिज्याशेषैस्त्र्यङ्गैः स्विष्टकृदिज्येतेति। शरवत्। यथा, शरमयं बर्हिरिति वचनप्रामाण्याच्छरैः कुशा बाध्यन्ते, एवमिहापीज्याशेषता बाधिष्यत इति।

आह, इज्याशेषाणां प्रतिपत्तिरेषा। न चान्येनेज्यायां क्रियमाणायामेतत्प्रतिपादितं भवति। तस्मादिज्याशेषाणां कार्येऽवर्तमानानि नेज्याशेषविकारभूतानि भवितुमर्हन्तीति। अत्रोच्यते। यद्यपि प्रति-

---

+दकेनावान्तरधर्मसंयोगेन= प्रवर्तते। न च केषांचिदेकधर्मयोगोऽस्ति। येनैकादशभ्योऽवच्छिद्येत त्रित्वम्। समासानुपपत्तिश्च स्यात्। अङ्गशब्दो यदि त्रित्वेन संबध्येत ततो न स्विष्टकृता×। यदि स्विष्टकृता न त्रित्वेन। दोरादीन्येकया * समवद्यतिक्रियया युक्तानि भवन्त्यग्निसंयोगेन। तत्र समासार्थो विशेषणविशेष्यभावश्च घटते तेषु गृह्यमाणेषु।

---

× प्राप्तत्वात्। एवं त्रि—ग.। * असंबद्ध एव—ग०। = भेद—मु०। × स्विष्टकृतेति—संबन्धः स्यादिति शेषः। * दोषादीनि—घ. ङ. नु०।

पाद्यन्ते तथाऽपि नान्यथा । तस्यां× निर्वृत्ताविज्याशेषैः, कर्तव्यायामनिज्याशेषाणि विधीयन्ते । एतानि तत्र प्रतिपादयितव्यानि । एतान्यपि हि कृतकार्याणि प्रतिपादयितव्यान्येव । यानि तु शेषभूतानि तानीह प्रतिषिद्धानि यथाकाममन्यत्र प्रतिपादयिष्यन्त इति ॥ ११ ॥

---

अत्र चोद्यते । प्रकृतौ यागद्रव्यशेषसंस्कारको इष्टः स्विष्टकृत् । नैतैर्दोरादिभिर्यागः= कृतो येन प्रतिपाद्येरन् । तस्मात्स्विष्टकृत्प्रतिरूपकं यागान्तरमेतदप्राकृतकार्यं विधीयते । हृदयादिभिश्चोदकप्राप्तः स्विष्टकृत्केन वार्यते ।

अत्रोच्यते । यदि स्विष्टकृदनुवादेन त्र्यङ्गानि* विधीयेरन्, त्र्यङ्गविशिष्टो वा स्विष्टकृत्, ततोऽप्राकृतकार्यः स्यात् । इह तु त्र्यङ्गानि प्रति स्विष्टकृद्विधीयते । तान्यपि प्रतिपादनयोग्यानि, तुषकणवत् । या तु तृतीया विभक्तिः, साऽर्थप्राप्तैवानूद्यते । हृदयादीनि तु येन केनचिदुपायेन प्रतिपाद्यन्ते, न स्विष्टकृद्यागेन ।

यदि,× यदङ्गैः स्विष्टकृतं यजति तत्त्रिभिरिति, तस्याङ्गशब्दः× स्विष्टकृद्विशेषणार्थमुच्चार्यते, विशेषणं च न कार्ययोगि, विशेष्यश्च स्विष्टकृत्तस्य त्रिरभ्यासः प्राप्नोति । न चैकादशानां मध्ये त्रिसंख्या विद्यते । क्रियायोगगुणयोगाभावात् =। यश्चैकादशानां मध्ये त्रीणि गृह्णीयात्तेनापोद्धारप्रयत्नः कर्तव्यः । योऽप्यविकृतानां त्रयाणां ग्रहणं करोति तेनापि समाहारप्रयत्नः कर्तव्यः । यस्तु दोरादीनि* गृह्णाति तस्योभयदोषाभावः । प्रमाणान्तरेण समाहारोपोद्धारयोः कृतत्वात् ।

ननु यागद्रव्यशेषस्याप्रतिपादनादप्राकृतकार्यं आपद्येत । तस्माद्द्विरभ्यासः स्विष्टकृतः प्राप्नोति । एवं वर्ण्यमान उच्यते । स्विष्टकृदयमन्यत्र विधीयते प्राकृतात्कार्यादाच्छिद्येति× ॥ ११ ॥

---

× तस्यानिवृत्ताविज्या—ग० । = दोषादिभिः—घ. ङ. मु० । * अङ्गानि—ङ. । + पूर्वोक्तमेव सिद्धान्तं संक्षेपेण प्रतिपादयितुं पुनरारभते—यदीत्यादिना ।×तस्येति—एवंवादिन इत्यर्थः । = क्रियेति—क्रियायोगस्य, गुणयोगस्य वाऽभावादित्यर्थः । * दोषादीनि×घ. ङ. मु० । × अवच्छिद्य—घ. मु० ।

( अध्यूध्न्या होतुः प्राकृतकृत्स्नेडाभक्षनिवृत्त्यधिकरणम् ॥ ४ ॥ )

[ ४ ] अध्यूध्नी तु होतुस्त्र्यङ्गवदिडाभक्षाविकारः स्यात् ॥ १२ ॥ सि०

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभत इति । तत्रेदमाम्नायते । अध्यूध्नीं होत्रे हरन्तीति । तत्रायमर्थः सांशयिकः । किमध्यूध्नी होतृभक्षस्य विकार उताविकारो होतुर्नियम्यत इति । कथं विकारः स्यात् । कथं नियम्यत इति । यदि, अध्यूध्नी विधीयते, होत्रे हरन्तीत्येतदनूद्य ततो विकाकारः । अथ, अध्यूध्नीमुद्दिश्य होत्रे हरन्तीति विधीयते, ततो नियमः । किं प्राप्तम् । होतुर्भक्षस्य विकारः स्यात् । कुतः । अपूर्वाऽध्यूध्न्यदैवतशेषत्वादिडाभक्षे न प्राप्ता । सा न शक्याऽनुवादितुम् । अतो विधीयते, होतृभागहरणे । अध्यूध्नी भवन्ती होतृहरणे प्रत्यक्षा, आनुमानिकमिडाभक्षं* निवर्तयतीति । त्र्यङ्गवत् । यथा, अनिज्याशेषैस्त्र्यङ्गैरिज्याशेषाणि निवर्तन्ते तद्वत् ॥ १२ ॥

शेषे वा समवैति तस्माद्रथवन्नियमः स्यात् ॥ १३ ॥

वाशब्दः पक्षं व्यावर्तयति, इडाभक्षाविकार इति । कथम् । स्यादिडाभक्षाविकारः, यद्यपूर्वाऽध्यूध्नी स्यात् । सा हीडायां समवैति । कथम् । अनास्थाभिरिडां वर्धयन्तीति तस्या हरणं प्राप्तम् । होतृसंबन्धो न प्राप्तः । स विधीयते । यामिमामध्यूध्नीं हरन्ति, तां होत्रे, नान्यस्मा इति । होत्रे त्वन्यं भक्षं कुर्वन्तीति । अपि च, होत्रे हरन्तीत्यानन्तर्यादेकवाक्यता प्रत्यक्षा । इतरस्मिन् पक्षे, अध्यूध्नीं हरन्तीति च होतृशब्दव्यवधानात्कल्पयितव्या भवेत् । तस्माद्भागे नियमः । रथवत् । यथा, यजुर्युक्तं रथमध्वर्यवे ददातीति रथस्य वाक्यान्तरेण प्राप्तत्वादव्यवधानाच्चाध्वर्युभागे नियमः । एवमिहापि होतृभागे नियम इति ॥ १३ ॥

---

॥ १२ ॥ १३ ॥

---

* भक्षणं—ग० ।

अशास्त्रत्वात्तु नैवं स्यात् ॥ १४ ॥

तुशब्दः पक्षं व्यावर्तयति । न भागे नियमः×। इडाभक्षविकार इति । कुतः । नाऽस्ति शास्त्रं, येनेडाभक्षेऽध्यूध्नी+ स्यात् । नन्विदमुक्तम्, अनस्थिभिरिडां वर्धयन्तीति । उच्यते । अनुवादसरूपत्वादस्य* । प्राप्तत्वाच्चानास्थिकानां वचनान्तरेण । अथ यद्यत्परिशिष्यते÷ तत्समवत्तधान्यामानयति, यद्हृदयं प्रास्यति जिह्वां वक्षस्तनिमतः, तस्या वनिष्ठुमिति । अनुवाद इति गम्यते । न चात्राध्यूध्नी कीर्त्यते । तस्मादप्राप्ता । अप्राप्ता चेत् । होतृहरणमुद्दिश्य विधीयते । यत्तु व्यवधानादप्राप्तेवैकवाक्यता कल्पायितव्येति । अपूर्वत्वादध्यून्या अनुवादाभावेऽनर्थकत्वपरिहाराय कल्पयिष्यामः । एवं च स्वपदगतं हरणं विहितं भविष्यतीति । इतरथा तु होत्रध्यूध्नीसंबन्धो= विधीयेत, न स्वपदगतं हरणम् । तस्मादपि भक्षविकारः ॥ १४ ॥

अपि वा दानमात्रं स्याद्भक्षशब्दानभिसंवन्धात्× ॥ १५ ॥

अपि वेति पक्षव्यावृत्तिः । यद्येवं,× न वचनान्तरेणेडाभक्षेऽध्यूध्नी प्राप्ता, साऽपूर्वा+ हर्तव्या विधीयते । न तर्हि भक्षविकारः । दानमात्रमेतत् । होत्रेऽध्यूध्नीं हरन्तीति । नात्र भक्षशब्देनाभिसंयोगो विधीयते । तस्मान्न भक्षविकार इति ॥ १५ ॥

दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्याच्छेषं प्रत्यविशिष्टत्वात् ॥ १६ ॥

---

॥ १४ ॥ १५ ॥

---

× नियम इति—ग. । + येनेडामध्यूध्नी प्राप्नुयात्—ग. । * अनुवादस्वरूप—क. ग. । ÷ यद्युपरिशिष्यते—क. । = होत्रेऽध्यूध्नीसंबन्धो विधीयते । न स्त्रपदगतहरणम्—मु. । × संयोगात्—श्री. ग. । * यदैवं–मु० : + साऽपूर्वा विधीयते—ग. ।

तुशब्दः पक्षं व्यावर्तयति, दानमात्रमेतन्न भक्षविकार इति। नैतद्दानम्। दातुरभावात्। पशुर्ह्येवं संकल्पितः। यागं वर्जयित्वा नान्यत्स्वकार्यमनेन कार्यमिति। तेन स्वाम्यभावाद्दानं नास्ति। कथं स्वाम्यभावः। शेषं प्रत्यविशिष्टत्वात्। शेषं प्रति यथा यजमानस्तथा होता। उभावपि न प्रभवतो द्रव्यस्येति नास्ति दानम्। अथ कथं भक्षशब्दानभिसंयोगे भक्षः। चतुर्थीश्रवणात्। चतुर्थी तादर्थ्ये भवति। होत्रर्थाऽध्यूध्नी। तया होताऽभिप्रेयते। सा* होतुरुपकरोति। सा भक्ष्यमाणा सामर्थ्यजननस्य दृष्टस्य लाभाय, यया च यावत्या च मात्रयोपकारिणी भवति। तत्र चतुर्थीश्रुतिरनुगृह्यते। इतरथा ह्यदृश्यमान उपकारे चतुर्थीश्रुतिर्बाध्यते। तस्मादिडाभक्षाविकार इति ॥ १६ ॥

[ वनिष्ठ्वाऽग्नीधः प्राकृतकृत्स्नैडाभक्षानिवृत्त्यधिकरणम् ॥ ५ ॥]

[ ५ ] अग्नीधश्च वनिष्ठुरध्यूध्नीवत् = ॥ १७ ॥ सि०

तत्रैवाग्नीषोमीये पशौ श्रूयते, वनिष्ठुमग्नीध इति। तत्राधिकरणप्रदेशः। तत्र यः संशयः, स इहापि। किं वनिष्ठुरग्नीधे विकारो भक्षस्य, उत तस्य भागनियम इति। ततः स एव पूर्वपक्षः। अपूर्वत्वाद्विधीयते। तस्माद्विकार इति। तस्य तदेवोत्तरम्। वचनान्तरेण प्राप्तत्वाद्भागनियम इति। ततस्तदेवोच्यते। अनास्थिभिरिडां वर्धयन्तीत्यनुपात्तत्वादप्राप्तो वनिष्ठुर्विधीयत इति।

अत्राऽऽह। ननु वनिष्ठुरपि÷ तत्र संकीर्तनात्प्राप्त एवेति। अत्रोच्यते। वनिष्ठुं प्रास्यतीत्येतावत्तत्र। तेनेडायां प्रासनमात्रं तस्य विधीयत इडासंस्कारार्थेन। नासाविडा, न तस्य भक्षशब्दसंयोगः। तस्मात्प्रासनमात्रं, न तस्य भक्षे प्राप्तिः। पूर्वस्मिन् वचने* न चतुर्थीसंबन्धः, तस्यैतदग्नीध इति। चतुर्थीसंबन्धेन भक्षणं= विधीयते।

॥ १६ ॥

—

* होत्रे सा—क० मु०। = वनिष्ठुः—श्री, ग.। ÷ वनिष्ठुरपि—ग.। * वचनेन—क० ग.। = अभक्षः स्यात्—ग.।

तस्मात्पूर्वेणाधिकरणेनातुल्याशङ्कायां तुल्यता सूत्रेणातिदिश्यते । सर्वेष्वेवाधिकरणप्रदेशेष्वतुल्याशङ्का निवर्त्यते ॥ १६ ॥

( पशौ मैत्रावरुणस्यापि शेषभक्षप्रतिपादनाधिकरणम् ॥ ६ ॥ )

[ ६ ] अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् ॥ १८ ॥ पू०

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभत इति । अस्ति तत्र मैत्रावरुण ऋत्विक् । तं प्रति संदेहः । किं तस्य चोदकप्राप्तः शेषभक्षोऽस्ति, नेति । किं प्राप्तम् । अप्राकृतोऽसौ, न तस्य भक्षे क्रियमाणे प्रकृतिवत्कृतं भवति । तस्मादप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् ॥ १८ ॥

स्याद्वा होत्रध्वर्युविकारत्वात्तयोः कर्माभिसंबन्धात् ॥ १९ ॥ सि०

स्याद्वा मैत्रावरुणस्य* भक्षः । प्रैषेषु+ ह्यसावध्वर्युविकारः । अनुवचनेषु होतुः । तस्मान्मैत्रावरुणः प्रेष्यति चानु चाऽऽह, इति । अतस्तस्य तयोः कर्माभिसंबन्धादर्थापत्त्या× भक्षं लभते । तस्मात्स भक्षः स्यादिति ॥ १९ ॥

[ पशौ मैत्रावरुणस्यैकभागत्वाधिकरणम् ॥ ७ ॥ ]

[ ७ ] द्विभागः स्याद्द्विकर्मत्वात् ॥ २० ॥ पू०

अथेदानीं मैत्रावरुणमेव प्रति भवति संदेहः+ । किं द्विभागो मैत्रावरुण उतैकभाग इति । किं प्राप्तम् । द्विभागः स्यात् । अध्वर्युविकारत्वादध्वर्युभागं प्राप्नोति, होतृविकारत्वाद्धोतृभागं प्राप्नोति । तस्माद्द्विभागः स्यादिति ॥ २० ॥

एकत्वाद्वैकभागः स्याद्भागस्याश्रुतिभूतत्वात् ॥ २१ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । न विभागः स्यात् । एकभागो भवेदिति । कुतः । भागस्याश्रुतिभूतत्वादिति । नेहाध्वर्युभागो मैत्रावरु-

---

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

---

* मैत्रावरुणभक्षः—मु. । × प्रैषेष्वसौ–मु. × अर्थापत्त्या—स्थानापत्त्येत्यर्थः । + संशयः—ग. ।

णस्य श्रूयते, नापि होतृभागः। यदि ह्युभौ श्रूयेयाताम्, एकेन भागेन कृतेऽपि संस्कारे द्वितीयोऽपि वचनप्रामाण्यात्स्यात्। चोदकेन तयोः प्राप्तिर्गम्यते। तत्रैकत्वान्मैत्रावरुणस्य, एकेनैव** भागेन यावती प्राकृती शक्तिः सा कृतेति द्वितीयभागं चोदको न प्रापयति। तस्मादेकभागः स्यादिति ॥ २१ ॥

( पशौ प्रतिप्रस्थातुर्भक्षाभावाधिकरणम् ॥ ८ ॥ )

[ ८ ] प्रतिप्रस्थातुश्च वपाश्रपणात् ॥ २२ ॥ पू०

अग्नीषोमीय एव पशौ प्रतिप्रस्थाता नाम ऋत्विक् श्रूयते। तं प्रति संदेहः। किं तस्य शेषभक्षो भवेत्, नेति। किं प्राप्तम्। भवेदिति। कुतः। वपां हि= श्रपयन्नध्वर्युकर्म करोति, प्रतिप्रस्थाता वपां श्रपयतीति। तस्मात्स्यादस्य भक्ष इति ॥ २२ ॥

अभक्षो वा कर्मभेदात्तस्याः सर्वप्रदानत्वात् ॥ २३ ॥ सि०

अभक्षः स्यात्प्रतिप्रस्थाता। कुतः। यस्मिन् यागेऽसावध्वर्योर्विकारः,* तस्य द्रव्यशेषो नास्ति। वपामसौ श्रपयाति। तस्याः सर्वप्रदानत्वम्। तत्र शेषाभावात्किं भक्षयेत्। यत्र शेषोऽस्ति हृदयादिष्वङ्गेषु,= न तत्रासावध्वर्योर्विकारः। अन्याद्धि वपापूर्वमङ्गापूर्वात्। चोदकेन च यस्यापूर्वस्य शेषः प्रतिपाद्यते, तस्य तत्कर्मकरे भक्षः। एवं हि तस्योपकारको भवतीति। अन्यकर्मकरे भक्षयाति तदुपकाराभावादनङ्गं स्यात्। तस्मान्नान्यकर्माणि भक्षणं चोदकः प्रापयतीति।

नन्वङ्गेष्वपि प्रतिप्रस्थाताऽध्वर्युविकारः। स ह्यवदानं करोति, दक्षिणतो निधाय प्रतिप्रस्थाताऽवद्यतीति। यस्यां शाखायामेतन्नास्ति, तत्रैषा विचारणा। अथवा, अन्यकार्यमेतदवदानम्, अन्यकार्यकं×

---

॥ २१ ॥ २२ ॥

---

** एकेन च—ग.। = स श्रपयाति। अध्वर्यु—ग.। * यागे सोऽध्वर्योः—क० मु०। = हृदयादिष्वंशेषु—क० मु०। × अन्यत्कार्यं प्राकृते—ग०।

प्राकृतम् । तत्र प्रकृतौ यजतिशब्देन प्रदानारम्भेऽवदाने गृहीते द्विसंख्या केवला श्रूयते, नावद्यत्यर्थः । इह पुनः प्रतिप्रस्थातुरवदानं चोद्यते, नाऽऽरम्भः÷ । यदत्रावदानं भविष्यति, स प्रदानारम्भः । तत्र प्रकृतौ प्रदाने चिकीर्षितेऽर्थादध्वर्युरचोदितोऽवदानं निर्वर्तयति । तेन वाऽन्येन वा तत्कर्तव्यम् । संनिधानादध्वर्युरेव करोति, न नियोगतस्तत्त्राध्वर्युकर्म । यच्चार्थात्कृतं, न तच्चोदकः प्रापयति । अर्थादेव तादिहाध्वर्युणाऽन्येन वा कर्तव्यं, प्रतिप्रस्थातुर्वचनं नियमार्थम् । तस्मान्नावद्यन्नपि प्रतिप्रस्थाताऽध्वर्युकर्माणि दर्तत इति नास्याङ्गेषु भक्षः स्यात् ॥ २३ ॥

( गृहमेधीयस्याऽऽज्यभागपुनःश्रवणेनापूर्वत्वप्रतिपादनाधिकरणम् ॥ ९ ॥ )

[ ९ ] विकृतौ प्राकृतस्य विधेर्ग्रहणात्पुनःश्रुतिरनर्थिका स्यात् ॥ २४ ॥ पू०

चातुर्मास्येषु श्रूयते, मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनमिति* । तत्रेदं समामनन्ति, आज्यभागौ यजतीति । तत्र संशयः । किं चोदकेन प्राप्तयोराज्यभागयोरनुवादमात्रमेतत्, किंवा चोदकेनानेन= च द्वाभ्यामेकं कर्म चोद्यते, किंवाऽर्थवादार्थं ग्रहणम्, उताधिकयोः कर्मान्तरयोरुत्पत्तिः, अथ परिसंख्यार्थम्, अथवा, आज्यभागौ वर्जयित्वाऽन्यच्चोदकः प्रापयति, अथवा चोदकेनाऽऽज्यभागावेव प्राप्येते, चोदक एव वा नास्ति, अपूर्वो गृहमेधीय इति । किं प्राप्तम् । विकृतावेतस्यां प्राकृतयोराज्यभागयोः प्राप्तयोर्गृह्यमाणयोः पुनःश्रवणमनर्थान्तरं स्यात् । अनुवादमात्रमेव सुहृद्भूत्वाऽऽचार्य उपदिशति स्म, नार्थान्तरशङ्कया खेदितव्यं मनः । ज्ञातमेतदनुवादमात्रमेतादित्यन्याच्चिन्त्यतामिति+ । कथम् । तद्धि गम्यते,

॥ २३ ॥

—

÷ न स प्रदानारम्भः—न. । * सायमोदन इति—क० ग. मु० । = चोदकेनैतेन च—ग. । + अन्याच्चिन्त्यताम् '—इत्यारभ्य ' एवमेतदपीति '—इत्यन्तो ग्रन्थः, ग. पुस्तकेनास्ति ।

अन्यच्च नावगम्यत इति । यथाऽस्मिन् गृहे ये ब्राह्मणास्त आनीयन्तां, देवदत्तो यज्ञदत्तो विष्णुमित्र इति, भवन्ति लोकेऽनुवादमात्रस्य वक्तारः । एवमेतदपीति ॥ २४ ॥

अपि वाऽऽग्नेयवद् द्विशब्दत्वं स्यात् ॥ २५ ॥

यदि ह्येतावदेवास्य सामर्थ्यं गम्येत, उदितमनुवदितुं, ततोऽस्य नान्योऽर्थः स्यात् । अथ त्वन्यदपि कर्तुमस्य सामर्थ्यमस्ति, ततः कथमर्थान्तरशङ्का न भवतीति । अस्ति च सामर्थ्यं, चोदकेनानेन च द्वाभ्यां संहत्यैकोऽर्थ उच्यते । गृहमेधीयो हि भवति प्रकृतिवत् । किं तत्सादृश्यम् । आज्यभागौ यजतीति। प्रकृताविदं श्रूयते, आज्यभागौ यजति । एवं प्राकृतेन यागेन स्वकार्यं करोतीति । इह पुनराज्यभागौ यजतीति । स प्रकारोऽतिदिश्यते । एवमनेन प्रकारेण यागः स्वकार्यं करोति । यथा द्वाभ्यां शब्दाभ्यामेकोऽर्थ उच्यते । आग्नेयवत् । आवाहने—अग्निमग्न आवह, इति य एवं संबोध्यते, स एवोच्यते, आत्मानमावहेति । यथा वा, एष दण्डः, दण्डेन प्रहरेति द्वाभ्यामेक एव दण्ड उच्यते । एवमिहापि प्राकृतौ, आज्यभागौ यजतीति विकृतावपरेणाऽऽज्यभागवचनेन तद्वन्तं गृहमेधीयं करोतीति वाक्यं पूर्यते, न यागान्तरं चोद्यते । नापि चोदकप्राप्तस्यानुवादमात्रमिति ॥ २५ ॥

---

॥ २४ ॥

—

अगत्याऽनुवादाश्रयणं कल्प्येत । अस्ति चात्र गतिः । यथा निर्वपतिशब्दः* श्रूयमाणो दर्शपूर्णमासविध्यन्तं नियमयति, पुनःश्रवणात् । एवमाज्यभागौ श्रूयमाणावैष्टिकविध्यन्तं नियमतः । सादृश्येन विध्यन्तो नियम्यते । न चान्यत्सादृश्यकारणमस्ति । तस्माच्चोदकनियम आज्यभागश्रवणात् ॥ २५ ॥

—

---

* निर्वपतिशब्द इति—'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इत्यत्रेति शेषः ।

न वा शब्दपृथक्त्वात् ॥ २६ ॥

वाशब्दः पक्षं व्यावर्तयति । नैतदाग्नेयावाहनेन तुल्यम्। तत्र हि, अग्ने आवहेत्येतावताऽऽवोढाऽग्निरुक्तः । अग्निमावहेत्येतावता वोढव्योऽग्निरुच्यते । न* ताभ्यामेकोऽर्थः क्रियते । इह तु प्रकृतिवदित्येकेनैव वचनेनाऽऽज्यभागवत्ताऽवगम्यते । पुनः, आज्यभागौ यजतीति कृतकरं शास्त्रमनर्थकं स्यात् । तस्मादनुवादमात्रमित्यध्यवसातव्यम् । नन्वनुवादोऽनर्थकः=। नेत्युच्यते । अर्थवादार्थेन+ भविष्यति, आज्यभागौ यजति, यज्ञताया इति । यदेतत्प्रकृतिवत्करोति, तथा कुर्वन् आज्यभागौ यक्ष्यति । तत्र यज्ञता संपत्स्यत इति ॥ २६ ॥

अधिकं वाऽर्थवत्त्वात्स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ॥ २७ ॥

अथवा—अधिकयोः कर्मान्तरयोरुत्पत्तिः । नानुवाद इति,

---

'अग्न आवह' इत्यावाहनाक्रियां× प्रत्यग्निः कर्ता । तस्यां चाऽऽवाहनक्रियायां न ज्ञायते क आवोढव्यः । तत्राग्निमिति निर्दिश्यते किंचिदावोढव्यम् । तत्रैतौ भिन्नार्थौ शब्दौ । एकः कर्ताऽपरः कर्म । इह तु चोदकेनाऽऽज्यभागौ प्राप्येते । प्रत्यक्षेणाप्याज्यभागावेव तत्रैकार्थौ द्वावपि शब्दौ स्याताम्।

यदप्युच्यते चोदकनियमं करिष्यत्याज्यभागश्रवणं निर्वपतिवदिति । तदपि न युक्तम् । ओदनशब्दस्य श्रुतत्वात्स* एव सादृश्यमापादयान्विघ्यन्तनियमं करिष्यति । निर्वपतिशब्दे तु नान्यः शब्दो विद्यते, यो विघ्यन्तनियमं कुर्यात् । तस्मान्न द्वाभ्यामेकोऽर्थो गम्यत इति युक्तम् । किं तर्हि । प्राकृतविधिस्तुत्यर्थोऽयम् । ईदृशोऽयं दार्शपौर्णमासिको विघ्यन्तः शोभनः, यत्राऽऽज्यभागावपि स्तः। तौ च यज्ञसंपत्त्यर्थे । अनेन द्वारेण स्तुतिः ॥ २६ ॥

---

अर्थवादोऽपि न । भिन्नवाक्यत्वात् । विधीयमानस्य च वाक्यशेषत्वेन

---

* तत्र द्वाभ्यां वचनाभ्यां नैकोऽर्थः—ग. । = अनुवादः—ग. । + अर्थवादः—ग. । × आवहनाक्रियां—मु० । * श्रुतत्वादिति—' मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम् ' इत्युत्पत्तिवाक्य इति शेषः ।

आज्यभागावत्र क्रियेते एवेति । किं तर्हि । उपदिश्येते यागावत्र कर्तव्याविति । कुतः । अनुवादमात्रं ह्यनर्थकम् । शब्दपृथक्त्वान्न द्वाभ्यामेकं कर्मोच्यते । अथ कस्मान्नार्थवादार्थता, गुणार्थता, विकारार्थता वा भवतीति । उच्यते । अर्थवादासंकीर्तनान्नात्रार्थवादार्थता। नन्वत्र, यज्ञताया इत्यर्थवादः संकीर्त्यते । उच्यते । न वाक्यान्तरेण विहितेऽर्थे वाक्यान्तरेणार्थवादेन किंचित्प्रयोजनमस्ति । तस्माद्यागान्तरविधानार्थ एवायं, नार्थवादः ।

ननु यागान्तरं नास्त्याज्यभागसंज्ञकम् । उच्यते । आज्यभागकर्मकं भविष्यति । न च गुणसंकीर्तनमस्ति । यथा, अग्नीषोमावाज्यभागौ यजतीति । नचान्यो वचनप्रकारोऽस्ति । यथा, नान्यामाहुतिं पुरस्ताज्जुहुयादिति । निन्दित्वा, स्रुवेणाऽऽघारमाघारयतीति= वचनम् । तेषु हि सत्स्वेवमर्थवत्ता स्यात् । तस्मात्कर्मान्तरवचनम् । अपूर्वत्वात् । एवमपूर्वमर्थं करिष्यति । इतरथा न विशिष्टोत्पत्तिः स्यात् । किं पुनरत्र कर्मान्तरे+ लक्षणमिति । एकस्यैवं* पुनःश्रुतिरविशेषादनर्थकं हि स्यादिति । अतः क्रमेण प्रधानयागादुपरिष्टादपरौ यागावाज्यभागधर्मकौ विधीयेते । अज्ञातौ ज्ञाप्येते इत्यर्थः ॥ २७ ॥

---

स्तावकोऽर्थवादो भवति । न चैष गृहमेधीयस्य वाक्यशेषत्वेन घटते + । तस्मात्कर्मान्तरम् । चोदकेनाऽऽज्यभागौ । प्रत्यक्षेणाऽऽप्याज्यभागौ । 'एकस्यैवं* पुनः श्रुतिः' इत्यनेन न्यायेन कर्मान्तरम् । यदि गृहमेधीये दार्शपौर्णमासिके विध्यन्तो न स्यात्तथा सति 'प्रकरणान्तरे+' इत्यनेन न्यायेन कर्मान्तरं स्यात् ॥ २७ ॥

—

---

= स्रुवेणाऽऽघारयति—क० । + कर्मान्तरलक्षणं—ग० । * ( अ० २ पा० २ अ० २ सू० २ ): + घटत इति—'आज्यभागौ यजति' इत्यस्य वाचनिकगुणविधिव्यवहितत्वेन न गृहमेधीयविध्यैकवाक्यताऽस्य घटत इत्यर्थः : * ( अ० २ पा० २ अ० २ सू० २ ) । + ( अ० २ पा० ३ अ० ११ सू० २४ ) ।

प्रतिषेधः स्यादिति चेत् ॥ २८ ॥

इति चेत्पश्यसि, कर्मान्तरचोदनेति। तन्न। तस्याऽऽज्यभागाविति नामसंकीर्तने सति, अनाज्यभागौ न शक्यौ प्रतिपादयितुम्*। तद्धर्मकत्वे सति लक्षणाशब्दः। आज्यभागाविति = च विशेषणस्याविवक्षा स्यात्। तस्मान्न कर्मान्तरवचनम्। किंतु परिसंख्यया प्रतिषेधः स्यात्। यथा, पञ्च पञ्चनखा भक्ष्या इति शशादीनां पञ्चानां कीर्तनादन्येषां× भक्षणं प्रतिषिध्यत इत्ययमर्थो वाक्येन गम्यत इति। एवमिहाप्यन्येषामङ्गानां प्रतिषेधो भविष्यतीति ॥२८॥

नाश्रुतत्वात्* ॥ २९ ॥

नैतदेवम् = । न ह्यत्र प्रतिषेधवाचि किंचित्पदं श्रूयते। नापीतराङ्गवचनम्। न चासंप्रतिपन्नपदार्थको वाक्यार्थः प्रमाणं भवति। पदार्थो हि वाक्यार्थस्य मूलं, नास्य पृथक् सिद्धिरस्तीति। तदुक्तं तद्भूतानां* क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वादिति। तस्मान्न प्रतिषेधः। तत्र हि त्रयो दोषाः—अस्वार्थग्रहणं, परार्थकल्पना, प्राप्तबाधश्च। तस्मात्कर्मान्तरवचनमेतादिति+ ॥ २९ ॥

---

आज्यभागशब्दो लक्षणार्थो* भवेत्। अप्राकृतात्वदृष्टार्थः सन्निधिको भवेत्। तस्मात्पुनर्वचनं परिसंख्यार्थम्। अन्येषां निवर्तकमित्यर्थः। ननु नात्र निवर्तकः शब्दो नापि निवर्त्यशब्दः=। उभयोरभावाद्भ्रान्तिरेषा निवृत्तिरिति।

उच्यते। आज्यभागविधानं तावदेतन्न भवति। चोदकेन प्राप्तत्वात्तयोः। किं तर्हि। एतस्माद्वाक्यादन्यनिवृत्तिरवगम्यते। सा चाप्राप्ता, सैव विधीयते। यथा देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्युक्त्वा पुनः + श्रूयते, पश्चम्यां विष्णुमित्रो भोजयितव्य इति। तत्र न भोजनं विधीयते, प्राप्तत्वात्। अन्येषां च निवृत्तिर्विधीयते। एवमत्रापि ॥ २८ ॥ [ २९ ] ॥

---

* प्रतिपत्तुम्—मु.। = इति विशेषस्य—भु०। × संकीर्तनात्—ग०। * नाश्रुतित्वात्—श्री. ग.। = नैतदेवम्—क० मु. पुस्तकयोर्नास्ति। * ( अ० १ पा० १ अ० ७ सू० २५ )। * लक्षणार्थ इति—कर्मान्तरत्वपक्षे, इति पूर्वं शेषः। = निवर्त्यशब्द इति—निवर्त्यानामङ्गान्तराणां वाचकः शब्द इत्यर्थः। + पुनः श्रूयत इति—पुनर्यहा यत इत्यर्थः।

अग्रहणादिति चेत् ॥ ३० ॥

इति चेत्पश्यासि कर्मान्तरचोदनेति । उक्तस्तत्र दोषः। स एव महान्। तस्मात्किं भवतु। आज्यभागयोः स्वशब्देन ग्रहणम्। अन्येषामङ्गानां चोदकेन। स्वशब्देनाऽऽज्यभागौ गृहीतौ दृष्ट्वा चोदकस्तौ न प्रापयति। अन्यान्यङ्गान्यगृहीतानि प्रापयिष्यतीति। किमेवं भविष्यतीति। संहत्यकारिता न कल्पयिष्यते। चोदकप्राप्तयोर्वाक्यान्तरेणार्थवादवचनमनर्थकं न प्रतिज्ञातं भविष्यति। विस्पष्टं संज्ञाग्रहणेन पुनःश्रुतिरित्येतन्न कर्मान्तरं कल्पयिष्यते। यथा देवदत्तोऽत्र तिष्ठतीत्युक्ते, न तिष्ठन्नैव तिष्ठतीत्युक्तः, एतावता देवदत्तादन्योऽयमभिधीयत इति गम्यते। न च परिसंख्या त्रिदोषा सती कल्पिता भविष्यति। तस्माच्चोदकेनागृहीतावाज्यभागौ गृहीताविति।

आह। कस्मादिदं गौरवमाश्रितम्। यदि हि प्रत्यक्षमाज्यभागौ न गृहीतौ स्यातां चोदक एष तौ शक्नुयाद्गृहीतुम्, प्रत्यक्षवचनेन चोदकंग्रहणाशक्तौ गौरवे किं प्रयोजनमिति। उच्यते। न गौरवस्य किंचित्साधु प्रयोजनं, न तु गौरवेण यत्कृतं तन्न कृतं भवति। गौरवस्य तु दोषोऽस्ति, न तु दोषोऽपि सति चोदक आज्यभागौ गृह्णाति। यः परिहारेण पथा ग्रामं गच्छाति, परिहारदोषमसौ प्राप्नोति, न तु ग्रामगमनं न भवति। तस्मादग्रहणादाज्यभागयोर्ग्रहणामिति ॥ ३० ॥

न तुल्यत्वात् ॥ ३१ ॥

---

प्रत्यक्षेणाऽऽज्यभागौ गृहमेधीये प्राप्येते। अन्यानि त्वङ्गानि चोदकेन। नन्वाज्यभागावपि प्राप्नुतः। सत्यम्। प्रत्यक्षेण तु शीघ्रं प्राप्तिः, विलम्बिता चोदकेन। तस्मादाज्यभागवर्जमन्यच्चोदकः प्रापयति। एवं कर्मान्तरमपि * न भविष्यति ॥ ३० ॥

———

यदि विकृतिः शास्त्राण्यपेक्षेत पदार्थान्वा, तत आज्यभागौ न प्रापयेत्,

---

* कर्मान्तरमपीति—अपिना त्रिदोषा परिसंख्याऽपि न कल्पिता भविष्यतीति सूच्यते।

नैतदेवम् । यदि हि चोदकः पृथक् पृथक् प्राकृतान् पदार्थान-पेक्षेत, तत्राऽऽज्यभागौ गृहीताविति कृत्वा तौ नापेक्षेत । अन्यांश्च गृह्णीयात् । न त्वसौ पृथक् पृथक् पदार्थानपेक्षते । किंतु प्राकृतम-पूर्वमपेक्षते, यद्वत्तेन, तद्वदनेनेति । तस्मिन्नपेक्ष्यमाण आज्यभागव-त्ताऽप्यपेक्षिता भवति । तत्रैतदेवमागच्छति, कृतकरं शास्त्रमनर्थकं भवतीति तस्मादन्यैरङ्गैस्तुल्यत्वान्न चोदकेनागृहीतयोराज्यभागयो-र्ग्रहणमिति ॥ ३१ ॥

तथा तद्ग्रहणे स्यात् ॥ ३२ ॥

अथ यद्युच्येत, आज्यभागावेव चोदकेन गृहीतौ प्रकृतिवद्गृह-मेधीयो भवति । कथम् *। आज्यभागौ यजति, एवमिति । यथा, सप्तदश सामिधेन्यो भवन्त्यध्वरकल्पादिष्विति वाक्यशेषान्नान्या-स्विष्टिषु साप्तदश्यम् । यथा शिंशपामानय वृक्षमिति नान्योऽपि वृक्ष आनीयते, शिंशपैव वृक्षशब्देन गृहीता भवति, एवमिहापि चोदके-नाऽऽज्यभागावेव गृहीताविति द्रष्टव्यम् । एवं प्राप्ते ब्रूमः । तथा

---

प्रत्यक्षाम्नानात् । किं तर्हि । विकृतिः प्रकारमपेक्षते= । स चैकः प्रकारः × । प्रकारापेक्षायां प्रमाणमस्ति । न शास्त्रापेक्षायाम् । सौर्येण साधयेत् , कथमित्य-पेक्षायां सादृश्येनाऽऽग्नेये बुद्धिर्भवति । आग्नेयेनापि प्रकाराः * । तान् गृह्णा-ति विकृतिः । ते चापेक्षिताः । शास्त्राणि पदार्थाश्चानपेक्षितानि, व्यवहितानि च । तस्मात्कृत्स्नं चोदकः प्रापयति ' कृत्स्नप्रापितत्वान्नोपसंहार = इति । ननु

---

* कथमाज्यभागौ—क. मु. । = प्रकारमिति—यागगतव्यापारविशेषाख्यमित्यर्थः। × प्रकार इति—विकृत्याऽपेक्ष्यत इति शेषः । तथा च तस्मिंश्चैकस्मिन् प्रकारे आज्य-भागयोरप्यन्तर्गतत्वात्कथं तयोरप्राप्तिरित्याशयः । * प्रकारा इति—स्वगताः प्रकारा एव प्रथममुपस्थाप्यन्त इत्यर्थः । + नोपसंहार इति—अनेन च—प्रत्यक्षशास्त्रेण सामान्य-शास्त्रस्यातिदेशस्योपसंहार इति ' तथा तद्ग्रहणे स्यात् ' इति सूत्रसूचितः । पूर्वपक्षोऽपि निराकृतो ज्ञेयः । तथा च कृत्स्नप्रापिचोदकस्याऽऽवश्यकत्वान्नोपसंहारो युक्तः, न वा तद्वर्ज्यातिदेश इत्याशयः ।

तद्ग्रहणे स्यात्। तुल्यमग्रहणेन तद्ग्रहणम्। पृथक्पदार्थापेक्षिणि चोदके स्यात्। अग्रहणमन्येषामङ्गानाम्। प्राकृतापूर्वापेक्षिणि तु नैतदुपपद्यत इति ॥ ३२ ॥

अपूर्वतां तु दर्शयेद्ग्रहणस्यार्थवत्त्वात् ॥ ३३ ॥ सि०

एवं तर्ह्यपूर्वो गृहमेधीयः। कुतः। ग्रहणस्यार्थवत्त्वात्। एवं= ग्रहणम्। आज्यभागौ यजतीत्यर्थवद्भविष्यति। पूर्ववत्त्वे तदनर्थकं स्यात्। आज्यभागाभ्यां प्रत्यक्षभूताभ्यां गृहमेधीयो निराकाङ्क्षो न चोदकेनान्यान्यङ्गानि गृह्णातीति। यस्यां तु विकृतावपूर्वं किंचिद- ङ्गमुक्तं, तेन+ सहैकवाक्यतामगत्वा प्राकृतान्यङ्गानि गृह्णातीति। कुतः। केन प्रकारेण कुर्यादिति तस्याऽऽकाङ्क्षा, न किं कुर्यादिति।

---

सामान्यस्यापि× विशेषेणोपसंहारः संभवति। एवं तर्ह्यनर्थकश्चोदकः÷ ॥३१॥ ॥ ३२ ॥

---

भावयेत्फलम्। केन। गृहमेधीयेन। कथमित्यपेक्षायां प्रकरणेनाऽऽज्य- भागौ गृह्णाति। तौ च क्लृप्तोपकारौ दृष्टौ। तस्मात्तौ गृह्णाति। उपमित- प्रापणं+ यावद्गृहमेधीयकथंभावो नैव गच्छति तावत्प्रत्यक्षाभ्यामाज्यभागाभ्यां गृहमेधीय एकवाक्यतां गतः। तस्मादानुमानिकेन प्रकृतिवच्छब्देन न संबध्यते गृहमेधीयः।

यत्त्वपूर्वमङ्गं× तत्क्लृप्तोपकारं न भवति। अक्लृप्तोपकारत्वात्कथंभावा-

---

= तदेवं—ग.। + न तेन—क. मु.। × सामान्यस्य विशे—ङ. ज.। ÷ अन- र्थक इति—यद्यप्युपसंहारपक्षे, उपदेशातिदेशाभ्यामवगतयोरेवाऽऽज्यभागयोरनुष्ठाने फलमिति कल्पनया सार्थकश्चोदकः, तथा सिद्धान्तापेक्षया पूर्वपक्षेऽनुष्ठाने विशेषश्च लभ्यते। तथाऽपि, उपदेशस्य प्रत्यक्षत्वेन झटिति प्रवृत्तेः पुनस्तन्मात्रविषयकातिदेशकल्पने प्रमाणाभाव इति तात्पर्यम्। + उपामितप्रापणमिति—उपमितया प्रकृत्या लक्षणद्वारं विध्यन्तप्रापणमित्यर्थः। × नन्वेवं नक्षत्रेष्ट्यादेरपि स्वसंनिधौ प्रत्यक्षपठितोपहोमा- दिभिरेव नैराकाङ्क्ष्यादतिदेशो न सिध्येदिति शङ्कां वैषम्यप्रदर्शनेन परिहरति—यत्त्वि- त्यादिना।

प्रकृतौ चाङ्गवत्ता नाम प्रकारो विदितः÷, प्रयोगवचनेन चाऽऽकाङ्क्ष्यते, न तु विकृतावङ्गवत्ता कल्प्ता। सा कल्पयित्वाकाङ्क्षिता= भवति। न च क्लृप्तामुज्झित्वा कल्पनीयसंबन्धो न्याय्यः। तस्मात्तत्रापि चोदकेनाङ्गानि गृह्यन्त इति। गृहीतेषु च प्राकृतेषु वैकृतानामङ्गानां विधानमनर्थकं मा भूदिति तेषामङ्गतां× कल्पयित्वा सर्वाङ्गोपसंहारिणा प्रयोगवचनेन संग्रहः क्रियत एवेति ॥ ३३ ॥

( गृहमेधीये प्रत्यक्षश्रुतस्विष्टकृदादेरप्यनुष्ठानाधिकरणम् ॥ १० ॥

[ १० ] ततोऽपि यावदुक्तं स्यात् ॥ ३४ ॥ सि०

गृहमेधीय एवोदाहरणम्। तत्रैषोऽर्थः समधिगतः। आज्यभागाभ्यामेवैतन्निराकाङ्क्षमन्यान्यङ्गानि*+ न गृह्णातीति। तदुच्यते। किमेष एवोत्सर्गः, सर्वाण्येवान्यान्यङ्गानि न गृह्णातीति = । एवं खलु प्राप्ते, उच्यते। ततोऽपि यावदुक्तं स्यात्। तत एवमुक्तम्, अङ्गानि नान्यानि गृह्णातीति। अगम्यमाने विशेषे÷ न गृह्णीयात्। गम्यते चात्र विशेषः। प्रत्यक्षाविहितत्वादाज्यभागयोरिति×। अतो यस्य* यस्य प्रत्यक्षवचनं, सर्वेषु तेषु पुनर्गम्यते विशेषः। तस्माद्यावदुक्तं स्यात्। यथा, अग्नये समवद्यतीति, इडामुपह्वयतीति ॥३४॥

( गृहमेधीये—आज्यभागपुनःश्रवणस्य परिसंख्यार्थमिति पञ्चमे पक्षे स्विष्टकृच्छ्रवणमपि स्वसजातीयप्रतिपत्त्यन्तराणां शेषकार्याणां निवर्तकमिति प्रयोजनप्रतिपादनाधिकरणम् ॥ ११ ॥ )

[ ११ ] स्विष्टकृति* भक्षप्रतिषेधः स्यात्तुल्यकारणत्वात् ॥ ३५ ॥ सि०

---

काङ्क्षां न शक्नोति पूरयितुम्। तत्रावश्यं प्रकृतिरपेक्षितव्या। अपेक्षितायां च चोदकेन निराकाङ्क्षी क्रियते ॥ ३३ ॥ ३४ ॥

---

÷ विहितः—ग.। = आकाङ्क्षितव्या—ग.। × तेषामङ्गवत्तां—ग.। * आज्यभागाभ्यामेतत्—क.। + अन्याङ्गानि—क.। = गृह्णातीति। आह। एवं खलु प्राप्तम्। एवं प्राप्ते, उच्यते—ग.। ÷ विशेषे गृह्णीयात्—ग.। × प्रत्यक्षगृहीतत्वात्—ग.। * यस्य प्रत्यक्षवचनं, सर्वत्र पुनर्गम्यते विशेषः—ग.। * स्विष्टकृद्भक्षप्रतिषेधः—क. मु.।

अस्ति गृहमेधीयः । तत्रैषोऽर्थः समधिगतः, अपूर्वो गृहमेधीय इति । तत्रेदमामनन्ति, अग्निं स्विष्टकृतं यजतीति । तत्रेदं संदिह्यते । किमन्येषां शेषकार्याणां भक्षणस्य च परिसंख्यापकः स्विष्टकृच्छब्दः; उत नेति । आह । नन्वपूर्वत्वाद्गृहमेधीयस्य नैव शेषभक्षा विद्यन्ते । अत्रोच्यते । पूर्ववान् गृहमेधीय इति कृत्वा चिन्तेयम् । पूर्वस्याधिकरणस्य प्रयोजनं चिन्त्यते । यदि परिसंख्या भवेत्, आज्यभागाभ्यां यागाः परिसंख्यायेरन्, नान्य इति । इदमपि प्रयोजनं भवति । स्विष्टकृच्छ्रवणेन शेषभक्षाः किं परिसंख्यायन्ते, नेति । किं प्राप्तम् । स्विष्टकृति श्रूयमाणे परिसंख्या स्याद्भक्षाणाम् । कुतः । तुल्यकारणत्वात् । तुल्यं हि कारणं स्विष्टकृतो भक्षाणां च । उभयमपि शेषसंस्कारार्थम् । तत्र वचनादयं शेषसंस्कारो भवति, नान्य इति प्रतिषिध्येरन् भक्षाः ॥ ३५ ॥

अप्रतिषेधो वा दर्शनादिडायां स्यात् ॥ ३६ ॥

यथैव स्विष्टकृच्छ्रवणेऽन्येषां शेषकार्याणामदर्शनमिति शेषभक्षा न सन्तीत्युच्यते, एवं भक्षणदर्शनाद्भक्षाः सन्तीति गम्यते । दर्शनादर्शनयोश्च दर्शनं प्रमाणम् । किं तद्दर्शनम्+ । इडामुपह्वयतीत्युपह्वानं ह्यनुज्ञापनम् । तत्सति भक्षणे भवति, नासति । तस्मान्न प्रतिषेधः ॥ ३६ ॥

प्रतिषेधो वा विधिपूर्वस्य दर्शनात् ॥ ३७ ॥

प्रतिषेधो वा । तुल्यकारणेन हि प्रत्यक्षश्रुतेनाऽऽनुमानिकं बाध्यते । अथ यद्दर्शनमुक्तं, तद्विधिपूर्वस्य भक्षस्य* भविष्यति । एवं ह्याम्नायते । अथेडामेवावद्यति,× न प्राशित्रमुपहूय प्राश्नातीति, तस्य दर्शनम् । कृत्वा चिन्तायाः प्रयोजनं न वक्तव्यम् । पूर्वाधि-

॥ ३५ ॥ ३६ ॥

+ दर्शनं—म. । * इडाभक्षस्य—ग. । × अथेडामवद्यति—ग. ।

करणस्य हि तत्प्रयोजनम्। न च प्रयोजनस्य प्रयोजनमुच्यते। यत्प्रयोक्तव्यं,* तस्य प्रयोजनम्। तच्च पूर्वाधिकरणम्॥ ३७॥

( प्रायणीयातिथ्ययोर्नियमेन शंय्विडान्तत्वाधिकरणम्॥ १२॥ )

[ १२ ] शंय्विडान्तत्वे विकल्पः स्यात्परेषु पत्न्यनुयाजप्रतिषेधोऽनर्थकोहि+ स्यात्॥ ३८॥ पू०

ज्योतिष्टोमे श्रूयते, शंय्वन्ता प्रायणीया संतिष्ठते, न पत्नीः संयाजयन्तीति। इडान्ताऽऽतिथ्या संतिष्ठते, नानुयाजान् यजतीति। तत्र संशयः। प्रायणीया किं शंय्वन्ता, कृत्स्नसंस्था वा, उत शंय्वन्तैव। तथा, आतिथ्या किमिडान्ता, कृत्स्नसंस्था वा, उतेडान्तैव। किं प्राप्तम्। शंय्विडान्तत्वे विकल्पः स्यादिति। कुतः। पत्न्यनुयाजस्य प्रतिषेधात्। शंय्वन्ता संतिष्ठत इति तावद्व्यक्तमेव वचनम्। अपरमपि वचनं, न पत्नीः संयाजयन्तीति। यदि शंय्वन्तैव नित्यं, पत्न्यनुयाजप्रतिषेधोऽनर्थकः स्यात्। तस्मात्पत्न्यनुयाजप्रतिषेधेन कृत्स्नसंस्थानमुच्यते। कथम्। प्रायणीयायां पत्नीसंयाजान् केवलान् न करोति, नान्यं न करोतीति। तथा, आतिथ्यायामनुयाजान् केवलान् न करोति, नान्यं न करोतीति। अकर्तव्यपरिसंख्यानार्थमेवेदं भिन्नमेव वाक्यद्वयं पूर्वाभ्यां वाक्याभ्यामिति॥ ३८॥

नित्यानुवादो वा कर्मणः स्यादशब्दत्वात्॥ ३९॥ सि०

न त्वेतदस्ति, विकल्प इति। एक एव कल्पः, शंय्विडान्तत्वम्। तत्र हि विस्पष्टं× वचनम्। द्वितीयः कल्पो नास्त्येव। न हि तस्य वचनमस्ति। न च पत्न्यनुयाजप्रतिषेधकं* कृत्स्नसंस्थानवाचकम् ÷। किं तर्हि। तन्नित्यानुवादः। नित्यप्राप्तमनुवदति। यथा, नान्तरिक्षे न दिव्यग्निश्चेतव्य इति। पूर्वाभ्यां सहैकवाक्यते-

॥ ३७॥ ३८॥

---

* यत्प्रयोक्तव्यं तच्च पूर्वाधिकरणम्—क.। + अनर्थकः स्यात्—ग. मु.। × विशिष्टं—मु.। * प्रतिषेधः—ग.। ÷ वाचकः—ग.।

वानयोः,* शंय्वन्ता प्रायणीया संतिष्ठते, न पत्नीः संयाजयन्तीति । तथा, इडान्ताऽऽतिथ्या संतिष्ठते, नानुयाजान् यजतीति +। अत्र = यत्नलाघवेन स्तुतिः । ननु प्रतिषेधवचनः कृत्स्नसंस्थानं वदेत् । य एव हि श्रुतस्यार्थस्योत्सर्गे दोषः स एवाश्रुतकल्पनायाम् । तस्माच्छंय्विडान्ततैव स्यादिति ॥ ३९ ॥

( प्रायणीयातिथ्ययोः पूर्वाभ्यामेव शंय्विडाभ्यां शंय्विडान्तत्वाधिकरणम् ॥ १३ ॥ )

[ १३ ] प्रतिषेधार्थवत्त्वाच्चोत्तरस्य परस्तात्प्रतिषेधः स्यात् ॥ ४० ॥ पू०

इदमेवोदाहरणं, शंय्वन्ता प्रायणीया संतिष्ठते, न पत्नीः संयाजयन्तीति । इडान्ताऽऽतिथ्या संतिष्ठते, नानुजान् यजतीति । तत्र द्वौ शंयू, द्वे इडे इति । तत्रायमर्थः सांशयिकः । किं परेण शंयुना शंय्वन्ता संतिष्ठते, उत पूर्वेण । एवं किं परयेडया, इडान्ता संतिष्ठते, उत पूर्वेणेति । किं प्राप्तम् । पूर्वाभ्यां शंय्विडाभ्यामिति । कुतः । पूर्वाभ्यामपि संस्थापयता श्रुत्यर्थः कृतो भवतीति । कृते च शब्दार्थे कस्मादुत्तरान् पदार्थान् कुर्यादिति । उच्यते । उत्तराभ्यामपि संस्थापयञ्छब्दार्थमेव करोति। तत्र श्रमात्पूर्वाभ्यां× संस्थापयञ्च शब्दार्थं परिच्छिन्द्यात् । शब्दार्थं परिच्छेत्स्यामः । यद्युत्तराभ्यामपि संस्थापनं शब्दो वक्ष्यति, ततस्ताभ्यां संस्थापयन् भूयांसमुपकारं लप्स्यते । तस्मादनियमः, पूर्वाभ्यामुत्तराभ्यां वेति । एवं प्राप्ते, ब्रूमः ।

उत्तराभ्यामिति । कुतः । प्रतिषेधार्थवत्त्वात् । तदैव* पत्नी-

---

॥ ३९ ॥

---

शंय्वन्ताङ्गरीतिर्विधीयते । सा च विधीयमानाऽऽज्यभागवन्निराकाङ्क्षी करोति प्रायणीयाम् । तस्यां = च द्वे शंय्वन्तते परिप्लवेते । तत्र पूर्वस्यां शं-

---

* एतयोः ग. । + यजन्तीति–मु. । = अवयवेन लाघवेन च–ग. । × नियमात्–क० मु० । * एवं पत्नीसंयाजानुयाजप्रतिषेधः—ग. । = तस्यां द्वौ शंयू परि–ङ. ।

संयाजस्यानुयाजस्य च प्रतिषेधोऽर्थवान् भवति । यद्युत्तराभ्यां न संस्थाप्येत, नैव पत्नीसंयाजानुयाजौ प्राप्नुतः। तस्मादुत्तराभ्यामिति। ननु च प्रतिषेधस्य नित्यानुवादत्वमुक्तम् । उच्यते । न सत्यां गतौ तन्न्याय्यम्*। तस्मान्न पूर्वाभ्यामिति। उच्यते। लिङ्गमेतदुपदिष्टम्=। न च लिङ्गं साधकं भवति । प्राप्तिरुच्यतामिति । पक्षेऽपि हि लिङ्गस्यार्थवत्ता स्यात् ।

अत्रोच्यते । इयं प्राप्तिः । यदा विशेषो नावगम्यते, शंयुरन्ते यस्या अङ्गरीतेः, सा शंय्वन्ता । एवम् , इडान्ला । सैषाऽङ्गरीतिर्विधीयते शंय्वन्ता, इडान्ता च । सा च विधीयमानाऽन्यान्यङ्गानि परिसंचष्टे । कथम् । शय्वन्तयाऽङ्गरीत्या, इडान्तया च संकीर्त्यमानयैकवाक्यतायां+ च सत्यामन्यान्यङ्गानि नाऽऽकाङ्क्षयन्ते। अनाकाङ्क्षयमाणानि च नैकवाक्यतां यान्ति । अतोऽप्राप्तानीति गम्यते। नन्वेवं सति पूर्वाभ्यां शंय्विडान्तता न कंचिदर्थमभ्यधिकं साधयतीति । उच्यते । नैष दोषः । न हि तस्यार्थे पृथग्वाक्यं, यस्याऽऽनर्थक्यं परिजिहीर्ष्यते । अस्य वाक्यस्योत्तरान्तता प्रयोजनं, तस्मादुत्तराभ्यां× संस्था स्यादिति ॥ ४० ॥

प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात् ॥ ४१ ॥ सि०

नैतदस्ति, उत्तराभ्यां शंय्विडाभ्यां संतिष्ठत इति । पूर्वाभ्यामेव। कुतः । नेह शंय्वन्ताया अङ्गरीतेर्भावो विधीयते, इडान्तायाश्च । किं

---

य्वन्ततायां गृह्यमाणायामुत्तरस्य शंयोः प्राग्ये पदार्थाः कर्तव्या अवगतास्ते बाध्येरन् । उत्तरस्यां तु गृह्यमाणायां न किंचिद्बाधितं भवति । शब्दार्थश्च संपादितः । एवमुत्तरस्यापि शंय्वन्तत्वाविशेषात् । पत्न्यनुयाजप्रतिषेधार्थवत्त्वं च । इतरथाऽनुवादमात्रमनर्थकं स्यात् । संतिष्ठतिश्चानुवादः ॥ ४० ॥

—

मात्राङ्गरीतिर्विधीयते । किं तर्हि । संपूर्वस्तिष्ठतिः । एवं श्रुत्यर्थोऽनु-

---

* न्याय्यम्—क० । = अपदिष्टम्—क० । + शंय्विडान्ततायां—क० । ÷ अधिकं—क० । उत्तराभ्यां शंय्विडाभ्यां संस्थानं—ग. ।

तर्हि । संस्था* विधीयते । शंय्विडान्ता संतिष्ठते । प्रवर्तमाना शंय्विडान्ता च जाता संतिष्ठते, न प्रवर्तते ; तिष्ठत्स्वेव कर्तृषु संतिष्ठतीत्युच्यते । तत्र पूर्वाभ्यामुत्तराभ्यामिति विशेषेऽनवगम्यमाने पूर्वाभ्यां च न प्रवर्तेत उत्तराभ्यां च । तदेव तत्र पूर्वाभ्यामेव संस्थाने कृतं भवति । प्रतिषेधश्च नित्यानुवाद इत्युक्तम् ॥ ४१ ॥

प्रतिषेधस्य त्वरायुक्तत्वात्तस्य च नान्यदेशत्वम् ॥ ४२ ॥

इतश्च पूर्वाभ्यां परं न कर्तव्यमिति । कुतः । त्वरायुक्तो हि प्रतिषेधोऽयं कृतः । कथम् देवासुराः सत्यमभजन्त । अर्धं देवाः सत्यस्याभजन्त, अर्धमसुराः । तदसुरैः सत्यमनूच्यमानं देवानपाक्रामत् । ते प्रायणीयं निरवपन् । तच्छंय्वन्तमासीत् । अथासुरा यज्ञमायंस्ततो यज्ञस्तत्वर इति । तमेवं कृत्वा त्वरितमाध्रियन्त इति । तथा, आतिथ्यं निरवपंस्तदिडान्तमासीदथासुरा यज्ञमायंस्ततो यज्ञस्तत्वर इति । तदिडान्तमेव कृत्वा त्वरितमाध्रियन्त इति । त्वराकृतश्च पूर्वमपेक्षन्ते, नोत्तरम् । तस्मान्नान्यो देशः प्रतिषेधस्य । तस्माच्च पूर्वाभ्यामेव शंयूविडाभ्यां परं न कर्तव्यमिति ॥ ४२ ॥

( उपसदामपूर्वत्वाधिकरणम् ॥ १४ ॥ )

[ १४ ] उपसत्सु यावदुक्तमकर्म स्यात् ॥ ४३ ॥ पू०

अस्ति ज्योतिष्टोमः । तत्रेदमाम्नायते । षडुपसद× उपसाद्यन्त

---

गृहीतो भविष्यति+ । इतरथा शंय्वन्ततायाः प्रायणीयायाश्च संबन्धं कर्तुं संतिष्ठतिरुच्चार्येत । तत्रात्यन्तं वाक्यं स्यात् । त्रिविधाऽपि श्रुतिरुत्सृज्येत । संतिष्ठतिविधाने चोदकोऽङ्गानि प्रापयति । तस्मादाज्यभागन्यायोऽत्र नास्ति । तत्र पूर्वां शंय्वन्ततामतिलङ्घ्य यो गच्छेत्तेनाऽऽगमो बाधितः स्यात् ॥ ४१ ॥
॥ ४१ ॥ ४२ ॥

---

* संस्थानं—ग. । × 'षडुपसदः' इत्येव सर्वत्र पाठो दृश्यते । परं तु ( अ० ३ क० ३ अ० ८ ) इत्यत्र 'तिस्र एव साह्नस्योपसदः' इत्येवं ज्योतिष्टोम उपसत्प्राय-यस्यैव पूर्वमभिधानादत्रत्यं भाष्यं पर्यालोचनीयं भवति । + भवति—मु. ।

इति । ताः प्रकृत्याऽऽमनन्ति, अप्रयाजास्ता अननुयाजा इति । तत्र संशयः । किं यावत्प्रतिषिद्धं तावन्न कर्तव्यम्, अन्यत्सर्वं कर्तव्यम्, अथ किं यावदुपदिष्टं तावत्कर्तव्यम्, अन्यत्सर्वं न कर्तव्यम्, अथवाऽपूर्वा÷ उपसद इति । किं प्राप्तम् । उपसत्सु यावदुक्तं न कर्तव्यम्। अप्रयाजास्ता अननुयाजा इति प्रयाजानुयाजानां प्रतिषेधं कृत्वा कृतार्थः शब्दोऽवशिष्टांश्चोदकप्राप्तान् न वारयति । तस्मादविशिष्टं सर्वं कर्तव्यमिति ॥ ४३ ॥

स्रौवेण+ वाऽगुणत्वाच्छेषप्रतिषेधः स्यात् ॥ ४४ ॥

न चैतदस्ति, प्रतिषिद्धं वर्जयित्वा सर्वं कर्तव्यमिति । यावदुपदिष्टं कर्तव्यम् । स्रौवेणाऽऽघारेण सर्वमन्यत्परिसंख्यायते । अविशिष्टो ह्यसौ स्रौव आघारः पुनराम्नायते । न तत्र कश्चिद्गुणो विशिष्टः । श्रूयते । तस्मात्तेन तत्परिसंख्यायते ॥ ४४ ॥

अप्रतिषिद्धं= वा प्रतिषिध्य प्रतिप्रसवात् ॥ ४५ ॥

न चैतदस्ति—यावदुक्तं कर्तव्यम्, अवशिष्टं नेति । किं तर्हि । सर्वं कर्तव्यं प्रतिषिद्धं वर्जयित्वेति । एवं हि श्रूयते, अप्रयाजास्ता अननुयाजास्ता इति । एवं प्रतिषेधं कृत्वा कृतार्थः शब्दो नान्यस्य बाधको भवितुमर्हति । यदुक्तं, निर्गुणं स्रौवाघारश्रवणमिति । प्रतिप्रसवोऽयं, न परिसंख्या । एवं श्रूयते, नान्यामाहुतिं पुरस्ताज्जुहुयात् । यदन्यामाहुतिं पुरस्ताज्जुहुयादन्यन्मुखं कुर्यात् । स्रुवेणाऽऽघारमाघारयतीति । नान्यामाहुतिं पुरस्ताज्जुहुयात्प्राकृतिकीभ्यः । एता ह्याघारादिका आहुतयः सर्वेष्टीनां मुखम् । यदन्यामाहुतिमौपसदीमग्न्यादिकां जुहुयादन्यन्मुखं कुर्यात् । तस्मात्, स्रुवेणाऽऽघारमाघार-

---

॥ ४३ ॥ ४४ ॥

---

÷ अथापूर्वा—क० मु० । + स्रौवेण वा गुणत्वात्—श्री. ग. । = अप्रतिषेधो वा—श्री. क. ग. ।

यतीति, आघारादिका+ आहुतीर्जुहोतीत्याघारादीनामभावमाशङ्क्य पुनः प्रतिप्रसवोऽयम् । आघारमाघारयतीति, नान्यन्न* करोति । किं तर्हि । आघारमाघारयति, न नाऽऽघारयतीति । तस्मान्न परिसंख्या । प्रतिषिद्धं वर्जयित्वा सर्वं कर्तव्यमिति ॥ ४५ ॥

अनिज्या वा शेषस्य मुख्यदेवतानभीज्यत्वात्
॥ ४६ ॥ सि०

अथवा, अपूर्वा उपसदः । अनिज्या प्राकृतस्य शेषस्य । नित्यानुवादोऽयम्, अप्रयाजास्ता अननुयाजा इति । मुख्यदेवतामनभीज्यामुपदिश्य प्रधानदेवता विधीयन्ते । नान्यामाहुतिं पुरस्ताज्जुहुयादाग्नेय्याः, अग्निर्हि मुखमित्यभिधाय, यदन्यामाहुतिं पुरस्ताज्जुहुयाद्वैकृतीम्, अन्यन्मुखं कुर्यादाग्नेय्याः । अग्निर्हि मुखम् । स्रुवेणाऽऽघारमाघारयति, नान्यं यजते—अग्निमनीकं, सोमं शल्यं, विष्णुं तेजनमिति । तदेतदाघारेण निराकाङ्क्षीकृतं नान्येन प्राकृताङ्गेन सहैकवाक्यतामेति । अतः प्राप्ता मुख्यदेवता अनभीज्या अत्रोपदिश्यन्ते, नान्यं यजति, तस्मादग्निः प्रथम इज्यत इति ॥ ४६ ॥

( अवभृथस्यापूर्वत्वाधिकरणम् ॥ १५ ॥ )

[ १५ ] अवभृथे बर्हिषः प्रतिषेधाच्छेषकर्म
स्यात् ॥ ४७ ॥ पू०

अस्ति ज्योतिष्टोमेऽवभृथः, वारुणेनैककपालेनावभृथमभ्यवयन्तीति । तत्रैतदाम्नायते, अपबर्हिषः प्रयाजान् यजति, अपबर्हिषावनुयाजौ यजतीति । तत्रैषोऽर्थः सांशयिकः । किं बर्हिर्मात्रं वर्जयित्वाऽन्यत्सर्वं कर्तव्यमुताऽऽज्यभागाभ्यामन्यत्परिसंख्यायते, अथवाऽपूर्वोऽवभृथ इति । किं प्राप्तम् । बर्हिर्मात्रं वर्जयित्वा शेषकर्म

॥ ४५ ॥ ४६ ॥

———

+ आघारादिका ह्याहुतीः—क० । * नान्यत्करोति—क० मु० । = प्रकृताङ्गेन—मु० ।

स्यात् × । सर्वं कर्तव्यम् । कुतः । बर्हिःप्रतिषेधात् । अपबर्हिषः प्रयाजान् यजति, अपबर्हिषावनुयाजौ यजतीति बर्हिर्मात्रं प्रतिषिध्य कृतार्थः शब्दोऽन्यच्चोदकप्राप्तं न शक्नोति वारयितुम् । तस्मादन्यत्स्यादिति । ननु, आज्यभागौ यजतीति परिसंख्यार्थं ग्रहणम् । अप्सुमन्तावाज्यभागौ यजतीति गुणार्थं तन्मन्यते स्म ॥ ४७ ॥

आज्यभागयोर्वाऽगुणत्वाच्छेषप्रतिषेधः= स्यात् ॥ ४८ ॥

न चैतदस्ति, शेषकर्म कर्तव्यमिति । किं तर्हि शेषप्रतिषेधः स्यात् । कुतः । आज्यभागयोः श्रवणात्, अप्सुमन्तावाज्यभागौ यजतीति । ननु, अप्सुमत्तागुणविधानार्थं तदित्युक्तम् । नेत्याह । लिङ्गक्रमाभ्यां प्राप्तावेवाप्सुमन्तौ मन्त्रौ, अप्स्वग्ने सधिष्टव, अप्सु मे सोमो अब्रवीदिति । ताभ्यामेतावाज्यभागावप्सुमन्तावेवेति,÷ निर्गुणमेवेदं वचनमितरेषामङ्गानां परिसंख्यापकं भवितुमर्हति । यत्तु अपबर्हिषः प्रयाजान् यजति, अपबर्हिषावनुयाजौ यजतीति । परिसंख्यातानां प्रयाजानामनुयाजयोश्च विधानार्थं भवतीति+ । तस्माच्छेषाणामेवाङ्गानां× परिसंख्येति ॥ ४८ ॥

प्रयाजानां त्वेकदेशप्रतिषेधादवाक्यशेषत्वं तस्मान्नित्यानुवादः स्यात् ॥ ४९ ॥

तुशब्दः पक्षं व्यावर्तयति । न चैतदस्ति, परिसंख्येति । त्रिदोषा परिसंख्येत्युक्तम् । किंच, अपबर्हिषः प्रयाजान् यजतीति वाक्यशेषो नावकल्पते । यदि, प्रयाजान् यजतीत्येष विधिस्तदा बर्हिःप्रयाजोऽपि प्राप्नोति । तत्र, अपबर्हिष इत्येतन्नोपपद्यते । अथ बर्हिषः प्रतिषेधः । प्रयाजानां विधिर्नावकल्पते । तत्राप्राप्तस्य बर्हिषः प्रतिषेधोऽनुपपन्नः। उभयविधाने वाक्यं भिद्येत । वाक्यशेषो नोपपद्यते । एकं चेदं वाक्यम् । तस्मान्न शेषपरिसंख्या ॥ ४९ ॥

---

॥ ४७ ॥ ४८ ॥ ४९ ॥

---

× स्यात् । कुतः—मु. । = गुणत्वात्—श्री. क. ग. । ÷ अप्सुमन्तावेव-क० । + भविष्यतीति ग. । × शेषाणामङ्गानां—ग. । ग. । * वाक्यशेषत्वं—मु. ।

आज्यभागयोर्ग्रहणं नित्यानुवादो गृहमेधीय-
वत्स्यात् ॥ ५० ॥ सि०

अथवा अपूर्वोऽवभृथः । यद्वद्गृहमेधीयः, तद्वत्स्यात् । आज्यभागाभ्यां प्रत्यक्षश्रुताभ्यामेकवाक्यतामित्वा निराकाङ्क्षो नान्यैः प्राकृतैरेकवाक्यतामेति । तस्मादपूर्वोऽवभृथ इति ॥ ५० ॥

( वाजपेयादिविकृतौ वैकल्पिकानां प्राकृतानामन्यतमपुनःश्रुतौ
नियमविधित्वाधिकरणम् ॥ १६ ॥ )

[ १६ ] विरोधिनामेकश्रुतौ नियमः स्याद्ग्रहण-
स्यार्थवत्त्वाच्छरवच्च श्रुतितो विशि-
ष्टत्वात् ॥ ५१ ॥ सि०

अस्ति वाजपेयः, शरदि वाजपेयेन स्वाराज्यकामो यजेतेति । अत्र श्रूयते । खादिरो यूपो भवतीति । तत्र संशयः । किं खादिरो वा, पालाशो वा, रौहितको वा, उत खादिर एवेति । तथाऽन्यत्र श्रूयते, बृहत्पृष्ठं भवतीति । तत्र संशयः । किं बृहद्वा पृष्ठं, रथंतरं वा, उत बृहदेवेति । त्रैधातव्यायां श्रूयते, यवमयो मध्यम इति । तत्र संशयः । किं यवमयो वा, व्रीहिमयो वा, उत यवमय एवेति । सर्वेष्वेषु किं प्राप्तम् । विरोधिनामन्यतमे* श्रूयमाणे नियमः स्यात् । खादिर एव यूपः, बृहदेव पृष्ठं, यवमय एव मध्यम इति । कुतः । ग्रहणस्यार्थवत्त्वात् । एवं बृहत्खादिरयवानां ग्रहणमर्थवद्भविष्यति । इतरथा प्राप्तानुवादमात्रमनर्थकं स्यात् । श्रुत्या विशिष्टाः खदिरादयश्चोदकप्राप्तान् पलाशादीन् बाधेरन् । शरवत् । यथा शरमयं बर्हिर्भवतीति शरेषु श्रुतेषु कुशा निवर्तन्ते, एवमिहापीति ॥ ५१ ॥

उभयप्रदेशान्नेति चेत् ॥ ५२ ॥

इति चेत्पश्यसि, उभयं हि प्रदिशति चोदकः, खादिरं पालाशं

---

॥ ५० ॥ ५१ ॥

---

* अन्यतमस्मिन्—क० ग० मु० । + खदिर—क० ।

च, बृहद् रथंतरं च, व्रीहीन् यवांश्च । केनेदानीं चोदकेन तुल्ये प्रदेशे सति पलाशादयो निवर्तिताः । खादिरग्रहणमशक्तं = परिसंख्यातुम् । त्रिदोषत्वात्परिसंख्याया इत्युक्तम् । तस्मान्न नियमः, विकल्प एवेति ॥ ५२ ॥

शरेष्वपीति चेत् ॥ ५३ ॥

यद्युभयप्रदेशादुभयं भवतीत्यध्यवसीयते, शरेष्वपि श्रुतेषु कुशा नैव निवर्तेरन्निति, स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति स्म ॥ ५३ ॥

विरोध्यग्रहणात्तथा शरेष्विति चेत् ॥ ५४ ॥

इति चेत्पश्यसि, एष न्याय उच्यमानः शरेष्वपि दोषं प्रसञ्जयतीति । न शरेषु किंचन दोक्ष्यति । यत्तत्र+ कुशा निवर्तन्त इति, तथा स्यात् । कुतः । विरोध्यग्रहणात् । न हि विरोधिषु शरेष्वङ्गीक्रियमाणेषु कुशाः शक्या अङ्गत्वेनोपादातुम् । तस्मात्कुशा निवर्तन्त इति ॥ ५४ ॥

तथेतरस्मिन् ॥ ५५ ॥

तथा, इतरस्मिन्नपि खदिरादौ विरोधिन्यङ्गीक्रियमाणे न शक्याः पलाशादयोऽङ्गत्वेनोपादातुम् । तस्मान्निवर्तिष्यन्त इति ॥ ५५ ॥

श्रुत्यानर्थक्यमिति चेत् ॥ ५६ ॥

इति चेत्पश्यसि, विरोध्यग्रहणात्पलशादीनां निवृत्तिर्भविष्यतीति । चोदकश्रुतेरानर्थक्यं स्यात् । प्रापयति हि चोदकः पलाशादीनि । स हि तुल्यः खदिरादिषु पलाशादिषु च । तदुक्तम्—अग्रहणादिति* चेत्, न तुल्यत्वादिति÷ । न च शक्यं वक्तुं,* खदिरादिभिः प्रयोगवचन एकवाक्यतामेतीति । बध्नातिप्रयोगवचनेन हि

---

॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥

---

= खदिर—क. । + तत्र—क० । * ( अ० १० पा० ७ अ० ९ सू० ३० ) । ÷ ( अ० १० पा० ७ अ० ९ सू० ३१ ) । * वदितुं–ग० ।

स श्रूयमाणः परम्परया पशुयागं यास्यतीति । अथेदानीं यागप्रयोगवचनस्तद्विशिष्टान् यागान् यास्यति । तेषु पलाशादयो विशेषाश्चोदकप्राप्ता न खदिरादिभिर्निर्वर्तिताः । तस्माद्विकल्प इति ॥ ५६ ॥

ग्रहणस्यार्थवत्त्वादुभयोरप्रतिपत्तिः स्यात् ॥ ५७ ॥

बध्नातिप्रयोगवचनो हि प्रत्यक्षश्रुतेन खदिरेणैकवाक्यतामेति । तस्मिन् निराकाङ्क्षे न पलाशः प्रवर्तिष्यते । तस्मात्खदिरविशिष्टः पशुयागो यागप्रयोगवचनेन गृहीतो न पलाशविशिष्टः । तस्मात्खदिरस्यैव प्रवृत्तिर्नोभयो* । एवं रथंतरे, यवमये च । तस्मात्खदिरादीनां नियमः । नैषां= पलाशादिभिर्विकल्प इति ॥ ५७ ॥

( विकृतावुपदिष्टैर्द्रव्यदेवतादिभिः प्राकृतद्रव्यदेवतादीनां बाधाधिकरणम् ॥ १७ ॥ )

[ १७ ] सर्वासां गुणानामर्थवत्त्वाद्ग्रहणमप्रवृत्ते स्यात् ॥ ५८ ॥ सि०

काम्या इष्टयः श्रूयन्ते । आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः, अग्नीषोमीयमेकादशकपालं निर्वपेच्छ्यामाकं ब्रह्मवर्चसकामः, ऐन्द्रमेकादशकपालं निर्वपेत्प्रजाकाम इति । तत्रैतेषु यागेष्वयमर्थः सांशयिकः। किं प्राकृतं द्रव्यदेवतं निवर्तते, उत न निवर्तत इति । सर्वासामेवंजातीयकानां चोदनानामुत्पन्नानां द्रव्यदेवतेनैव सहोत्पत्तिः । तस्योत्तरकालं चोदकः । तस्मादगृहीते द्रव्यदेवते चोदकेन, विधिनैव प्राप्ते । द्रव्यदेवतं प्रति निराकाङ्क्षे यागेऽवशिष्टान्यङ्गानि चोदकः प्रापयिष्यतीति× । अथ यदुक्तम् ,+ अग्रहणाद्ग्रहणामिति । तदिह सिद्धम् ॥ ५८ ॥

अधिकं स्यादिति चेत् ॥ ५९ ॥

॥ ५६ ॥ ५७ ॥ ५८ ॥

---

* वृत्तिः—मु० । = नैवः—मु० । × तीति । यदु—क. । + यदुक्तमिति—(अ० १० पा० ७ अ० ९ सू० ३० ) इत्यत्रेति शेषः ।

इति चेत्पश्यसि, विधिना प्राप्तत्वादवशिष्टानि चोदकः प्रापयिष्यतीति। नैतदेवम्। अधिकं स्यात्। उक्तमेतत्,* तुल्यश्चोदकः सर्वेष्वङ्गेषु। न हि स पदार्थमाकाङ्क्षति। पदार्थकृतं प्रकारमाकाङ्क्षति। तस्माद्द्रव्यदेवतमपि चोदकः प्रापयति। प्राप्ते वचनप्रामाण्यादधिकं भविष्यति। एकं वचनप्रापितं, अन्यच्चोदकेनेति ॥ ५९ ॥

नार्थाभावात् ॥ ६० ॥

नैतदेवम्, अधिकं कर्तव्यमिति। कुतः। अर्थाभावात्। प्रयोजनाभावादित्यर्थः। सत्यं, चोदकप्राप्तं प्रत्यक्षश्रुत्या न प्रतिषिद्धं द्रव्यदेवतम्। किंतु परार्थं तत्, यागनिर्वृत्तये। स च याग एकेनैव द्रव्येणैकया देवतया निर्वर्तयितव्यः श्रूयते, आग्नेयमष्टाकपालं निर्वपेद्रुक्काम इत्येवमादि। तस्मिन् सहायापेक्षे कल्प्यमाने निर्देशो बाध्येत। अथ तेन निर्वर्तिते चोदकप्रापितस्य न किंचिदस्ति प्रयोजनमिति तच्छ्रुतमपि सिद्धत्वात्प्रयोजनस्य न करिष्यते ॥ ६० ॥

( विकृतौ श्रूयमाणेनौदुम्बरत्वेन प्राकृतखादिरत्वादेर्निवृत्त्यधिकरणम् ॥ १८ ॥ )

[ १८ ] तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः प्रवृत्तौ हि विकल्पः स्यात् ॥ ६१ ॥ सि०

क्वचित्कर्मविशेषे श्रूयते, औदुम्बरो यूपो भवतीति +। तत्र संशयः। किं प्राकृतमत्र यूपद्रव्यं बाध्यत उत× न प्राप्यत इति। किं प्राप्तम्। एकार्थविकारेऽस्मिन् औदुम्बरे–एकार्थश्चासौ खदिरादिभिर्विकारश्च,= तत्र प्राकृतस्य खदिरादेरप्रवृत्तिः। यथा प्राकृतस्य द्रव्यदेवतस्य पूर्वस्मिन्नधिकरणे, तथाऽस्मिन् खादिरस्य यूपद्रव्यस्याप्रवृत्तिः। प्रवृत्तौ हि तस्य विषमशिष्टो विकल्पः स्यात्, चोदकप्राप्तस्य प्रत्यक्षश्रुतस्य च। न चैष न्याय्यः। तस्मादप्रवृत्तिः ॥ ६१ ॥

---

॥ ५९ ॥ ६० ॥ ६१ ॥

---

* उक्तमिति–( अ० १० पा० १७ अ० ९ सू० ३१ ) इत्यग्रेति शेषः। + भवति–क० मु०। × उत प्राप्यते–क० मु०। = विकारश्च भवति–ग.।

यावच्छ्रुतीति चेत् ॥ ६२ ॥

इति चेत्पश्यसि, विकल्पः सदोष इति। समुच्चयो भवतु। उभयस्मिन् सह नियुज्यतां पशुः। तदा चोदकानुग्रहो भविष्यति ॥६२॥

न प्रकृतावशब्दत्वात् ॥ ६३ ॥

नैतदेवम्। केवले ह्यौदुम्बरे नियोजनं श्रूयते। केवले च खादिरे प्रकृतौ, खादिरे बध्नातीति। उभयस्मिंश्च बन्धनद्रव्ये न प्राकृतं वाक्यं, न च प्रत्यक्षश्रुतम्। तेन× समुच्चयस्य प्रमाणमेव नास्ति। अतः प्राकृतं यूपद्रव्यं निवर्तत इति ॥ ६३ ॥

( सौमारौद्रादियागे श्रूयमाणैः शुक्लादिगुणविशिष्टव्रीहिभिः प्राकृतयवानां निवृत्त्यधिकरणम् ॥ १९ ॥ )

[ १९ ] विकृतौ त्वनियमः स्यात्पृषदाज्यवद् ग्रहणस्य गुणार्थत्वादुभयोश्च प्रदिष्टत्वाद्गुणशास्त्रं यदीति= स्यात् ॥ ६४ ॥ पू०

सौमारौद्रं घृते चरुं निर्वपेच्छुक्लानां व्रीहीणां ब्रह्मवर्चसकामः, सौमारौद्रं चरुं निर्वपेत्कृष्णानां व्रीहीणामभिचरन्, नैर्ऋतं चरुं निर्वपेत्कृष्णानां व्रीहिणां, सौर्यं चरुं निर्वपेच्छुक्लानां व्रीहीणामिति। तत्र संशयः। किं व्रीहिभिर्यवैर्वा यष्टव्यमुत व्रीहिभिरेव। किं प्राप्तम्। विकृतौ तु विरोधिनामन्यतमे+ गृह्यमाणेऽनियमः स्यात्, व्रीहिभिर्यवैर्वेति। कुतः। ग्रहणस्य गुणार्थत्वात्। तस्य हि व्रीहेर्ग्रहणं गुणार्थं, न यागसंबन्धार्थम्। शुक्ला व्रीहयो भवन्ति, यागस्तूभाभ्यामपीति। यथा, पृषदाज्येनानुयाजान् यजतीति, आज्यं पृषत्तासंबन्धार्थं भवति। एवमिहापि व्रीहयः शुक्लगुणसंबन्धार्थाः, न यागसंबन्धेनान्यपरिसंख्यानार्थाः।

---

॥ ६२ ॥ ६३ ॥

---

× ततः—ग०। = यदेति—क० ख० मु०। + अन्यतमस्मिन्—ग. मु०। अन्यतरास्मिन्—क०।

तथा, यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या, इत्येतच्छ्रवणमुपपद्यते। यद्येवंजातीयकेन प्राकृतं न निवर्त्येत, ततः पञ्चावत्तेन चतुरवत्तेऽनिवर्तिते, यद्यपि चतुरवत्तीति दर्शनं युक्तं भवति। न चानर्थको गुणोपदेशो भवति। उभयोः प्रदिष्टत्वात्। उभये व्रीहियवाश्चोदकेन प्राप्ता विकल्पन्ते। यदा व्रीहयः, तदा गुणशास्त्रम्। अव्रीहिपक्षेऽसंभवादर्थान्निवर्तेत। तस्माद्विकल्प इति ॥ ६४ ॥

ऐकार्थ्याद्वा नियम्येत श्रुतितो विशिष्टत्वात् ॥ ६५ ॥

एकार्था हि व्रीहियवाः। तत्र व्रीहीणां श्रुतत्वाद्यवा नैव प्राप्नुवन्ति। ननूक्तं गुणसंबन्धार्थाः× व्रीहय इति। नैतदेवम्। यदि गुणसंबन्धार्था भवेयुस्ततो न नियमः स्यात्। न तु गुणसंबन्धार्थाः। विकारसंबन्धे हि षष्ठी भवेत्, व्यतिरिक्ते प्रातिपदिकार्थे। तेन विकारविशेषणं श्रुत्या भवति। गुणविशेषणं वाक्येन। श्रुतिश्च वाक्याद्बलीयसीति÷। तस्माच्छ्रुत्या व्रीहयो यागेन संबध्यमानाः समानार्थान् यवान्निवर्तयेयुः ॥ ६५ ॥

विरोधित्वाच्च लोकवत् ॥ ६६ ॥

विरोधिनश्चैते। कथम्। ये ह्येकस्मिन् कार्ये विकल्पेन साधकाः श्रूयन्ते, ते परस्परेण विरोधिनो भवन्ति। विरोधिनां च न सह प्रवृत्तिः। लोकवत्। यथा, मत्स्यान् न पयसा समश्नीयादिति। यद्यपि सगुणा मत्स्या भवन्ति, तथाऽपि पयसा सह न समश्यन्ते। तस्मात्सगुणा अपि व्रीहयो यवान्निवर्तयन्त्येव ॥ ६६ ॥

कृतेऽश्च तद्गुणत्वात् ॥ ६७ ॥

यदि व्रीहीणां विकारेण संबन्धः, कथमेषां गुणेनापि संबन्धो भविष्यतीति। अत्रोच्यते। नैवैषां गुणेन संबन्धः श्रुत्या वाक्येन वा,

---

॥ ६४ ॥ ६५॥ ६६ ॥

---

× गुणसंबन्धार्था हि-मु०। ÷ बलीयसी—ग०।

नापि गुणस्य व्रीहिभिः । कथं तर्हि । क्रतोस्तद्गुणत्वात् । क्रतुरयं शुक्लगुणः श्रूयते, कृष्णगुणश्च । तत्रैकवाक्यत्वादेकस्मिन् क्रतावर्थेन+ द्रव्यगुणौ संबध्येते । तेनार्थभेदोऽपि परिहृतो भवति ॥ ६७ ॥

विरोधिनां च तच्छ्रुतावशब्दत्वाद्विकल्पः स्यात् ॥ ६८ ॥

विरोधिनां चान्यतमे* प्रत्यक्षे श्रूयमाणे, अन्यस्मिंश्च चोदकप्राप्ते, अशब्दत्वात्प्रत्यक्षे विरोधिनि सति चोदकस्यान्याय्यो विकल्पः स्यात् । तस्मादपि नियमः ॥ ६८ ॥

पृषदाज्ये समुच्चयाद्ग्रहणस्य गुणार्थत्वम् ॥ ६९ ॥

पृषदाज्ये तु युक्तम् । न हि तत्र केनचिद्विरोध आज्यस्य । तेन न पाक्षिकमाज्यम् । ततस्तत्र दध्नाऽऽज्यसमुच्चयः । यतः पृषत्तासंजननार्थं दधि । तेन न पाक्षिकं दधि । आज्येन च समुच्चय इति ॥ ६९ ॥

यद्यपि चतुरवत्तीति तु नियमे नोपपद्यते ॥ ७० ॥

अथ यदुक्तं, यद्येवंजातीयकेषु नियमो भवेत्, यद्यपि चतुरवत्ती, इति चतुरवत्तदर्शनं नोपपद्यत इति । तत्परिहर्तव्यमिति ॥ ७० ॥

क्रत्वन्तरे वा तन्न्यायत्वात्कर्मभेदात् ॥ ७१ ॥

क्रत्वन्तर एव वा, दर्शपूर्णमासयोश्चतुरवत्तदर्शनं भविष्यति । यद्यपि दर्शपूर्णमासयोश्चतुरवत्ती यजमानः, तथाऽपि पञ्चावत्तैव वपा भवतीति । अन्यस्मिन् कर्मणि चतुरवत्तम् । अन्यस्मिन् पञ्चावत्तम् । यद्यप्येवंजातीयकेषु नियमस्तथाऽपि चतुरवत्तदर्शनमुपपद्यत इति ॥ ७१ ॥

---

॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥

——

---

+ अर्थेन संबध्येते—ग. । * अन्यतमस्मिन्—क. ग. मु. ।

( अग्नीषोमीये पशौ हृदयाद्यङ्गेष्वपि पञ्चावदानाधिकरणम् ॥२०॥ )

[ २० ] यथाश्रुतीति चेत् ॥ ७२ ॥ पू०

अस्ति ज्योतिष्टोमे* पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभत इति। तत्रेदमाम्नायते, यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्येति। तत्रैषोऽर्थः सांशयिकः। किं वपायां श्रूयमाणं पञ्चावत्तमङ्गापूर्वे चतुरवत्तं निवर्तयति, उत नेति। किं प्राप्तम्। इति चेत्संशयः, नेति+ संशयः। कुतः। यस्मिन् श्रूयते पञ्चावत्तं तत्रैव चतुरवत्तं निवर्तयति, नान्यत्र। यथा क्रत्वन्तरे न निवर्तयति, एवमङ्गापूर्वेष्वपि पञ्चावत्तश्रुतिर्न निवर्तयितुमर्हति ॥ ७२ ॥

न चोदनैकत्वात् ॥ ७३ ॥

नैतदेवम्। एका ह्येषा चोदना, यो दीक्षितो यदग्नीषोमीयं

---

'पञ्चावत्तैवं वपा कार्या' इति किमत्र विधीयते त्वत्पक्षे=। येनाङ्गेष्वपि÷ मन्यसे*। न ह्यत्रावदानोद्देशेन संख्या विधीयते। किंतु वपोद्देशेन पञ्चावदानम्। उद्देश्यविशेषणस्य चाविवक्षोक्ता,= नोद्देश्यस्यापि। इतरथा ग्रहस्याप्यविवक्षितत्वाच्चमसेष्वपि संमार्गः स्यात्। तस्माद्वपायागापूर्वप्रयुक्तमिदम् ॥७२॥

---

उच्यते। अवत्तेत्यनेन निष्ठान्तेन द्रव्यमवदानसंयुक्तं, स्त्रीलिङ्गमेकसंख्यायुक्तं चोच्यते। तच्चानूद्य पञ्चसंख्या विधीयते। तस्य चानूद्यमानस्य* यदि लिङ्गसंख्यं विवक्ष्यते, वपया च विशिष्येत, वाक्यभेदः स्याद्ग्रहाधिकरणन्यायेन÷। तस्मादवदानप्रातिपदिकस्य पञ्चसंख्या विधीयते। सा च विधीययाना प्रकरणाद्यागेन गृह्यते। तच्च= प्रकरणाविशेषात्सर्वावदानेषु निविशते। ननु नन्वेवकारश्रवणादन्यनिवृत्तिर्गम्यते,+ न पञ्चसंख्याविधानम्। यथा

---

* सोमे–ग०। + नेति। कुतः—मु०। = त्वत्पक्षे—सिद्धान्तिपक्षे। ÷अङ्गेऽपि–ङ. ज.। * मन्यस इति—पञ्चावदानमिति शेषः। =अविवक्षा, नो–ङ. ज.। * उद्दिश्यमानस्य—ङ. ज०। + ( अ० ३ पा० १ अ० ७ )। = तत्र—ङ० ज०। + गम्यत इति–चधेया गम्यत इत्यर्थः।

पशुमालभत इति। तत्र प्रकरणे पञ्चावत्तं× श्रुतम्। अतः प्रकरणाद-ङ्गापूर्वे भविष्यति । आह । ननु वाक्याद्वपायां भवितुमर्हतीति । नेत्यु-च्यते । वपा हि द्रव्यम् । न तत्संबन्धे प्रयोजनमस्तीति । उच्यते । पञ्चावत्तता+ वपाप्रयोगवचन उपसंहरिष्यति । तथा न दोषो भवि-ष्यतीति । अत्रोच्यते । एवं सत्यप्यङ्गापूर्वे पञ्चावत्तं सिध्येत् । कथ-म् । एका हि सा चोदना । अङ्गयागो वपायागश्च । तेन चेत्पञ्चा-वत्तं संबध्यते, तदाऽङ्गेष्वपि भवितुमर्हति ।

ननु च वपासंबन्धाद्वपैव पञ्चावत्ता, नाङ्गानीति । उच्यते । नैतदेवं वचनं, वपैव पञ्चावत्तेति । कथं तर्हि । पञ्चावत्तैव वपेति । यत एवकारकरणं ततोऽन्यत्रावधारणम् । न चाविशेषेण या पञ्चाव-त्तप्राप्तिः सा शक्या वपासंबन्धेन निवर्तयितुम् । निवर्तकस्य शब्द-स्याभावात् । तस्मादङ्गेषु न चतुरवत्तम् । अपि* चैवंजातीयकेष्वङ्गेषु पञ्चावत्ते ज्ञाते= ततोऽपरा चोदना, तानि द्विर्द्विरवद्यतीति,÷ वपाग्रहणं तत्र हविर्लक्षणार्थं प्राथम्यादवसरप्राप्तं श्रूयते । विधित्सिते हि तस्मिन् वाक्यभेदप्रसङ्गः । तस्मादङ्गेष्वपि पञ्चावत्तमेवेति ॥ ७३ ॥

इति श्रीशबरस्वामिविरचिते मीमांसाभाष्ये दशमा-ध्यायस्य सप्तमः पादः ॥

---

' षड्विंशतिरित्येव ब्रूयात् ' इति चतुस्त्रिंशद्व्यावृत्त्यर्थं, न षड्विंशतिविधाना-र्थम् , एवमिहापि चतुरवदाननिवर्तकमिदं,× न पञ्चावत्तताविधायकम् । तस्मात्प-ञ्चावदानमपि न प्राप्नोति । अन्यपरत्वाद्वाक्यस्य ।

उच्यते । पञ्चसंख्यैवात्र विधीयते * । तस्यां च विधीयमानायां चोद-कप्राप्तौ नैव भवतीत्यर्थादेवकारार्थो लभ्यते । सोऽनुवादः । यत्र तु द्वे संख्ये प्राप्नुतस्तत्रैवकारोऽन्यतरन्निवर्तयेत् । तत्रैवकारार्थः परिगृह्यते । इह तन्नास्ति॥७३॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां दशमाध्यायस्य सप्तमः पादः ॥

---

× पञ्चावदानं—मु. । + पञ्चावत्तत्वं—ग. । * अथैवं—ग. । = जाते—क. मु । ÷ अ-वद्यन्तीति—मु. । × निवृत्त्यर्थम्—मु. । * विधीयत इति—इतरथा पञ्चत्वस्य प्राप्त्यभा-वेनानुवादासंभवाद्ग्रहणं प्रमादपठितं स्यादित्याशयः । × प्राप्नुत इति—यथा ' षड्विंश-तिरित्येव ब्रूयात्' इत्यत्र चोदकात्' षडशीतिरमीषां वङ्क्रयः, इति समस्यवचनं, वैशे-षिकमन्त्राम्नानाच्चाश्वस्य चतुस्त्रिंशद्वचनमित्येवं प्राप्नुत इत्यर्थः ।

## अथ दशमाध्यायेऽष्टमः पादः ।

( अनुयाज—महापितृयज्ञयोर्येयजामहहोतृवरणपर्युदासा-
धिकरणम् ॥ १ ॥ )

[ १ ] प्रतिषेधः प्रदेशेऽनारभ्यविधाने च प्राप्तप्रतिषि-
द्धत्वाद्विकल्पः स्यात् ॥ १ ॥ पू०

प्रतिषेधः+ श्रूयते, चोदकेन प्रदिष्टे धर्मे, क्वचिदनारभ्यवादेन प्राप्ते । चोदकेन प्रदिष्टे—महापितृयज्ञे, न होतारं वृणीते नाऽऽर्षेयमिति । तथा, अनारभ्यवादेन प्राप्ते—आश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरं, यजेति द्व्यक्षरं, ये यजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः, एष वै प्रजापतिः सप्तदशो यज्ञेष्वन्वायत्त इति । ततो नानुयाजेषु ये यजामहं करोतीति । तत्रायमर्थः सांशयिकः । किं प्रदेशानारभ्यवादयोः प्रतिषेधः, स च विकल्पः, उत पर्युदास इति ।

किं प्राप्तम् । विकल्प इति । प्राप्तिप्रतिषेधयोः प्रमाणवत्त्वात् । उभौ हि प्राप्तिप्रतिषेधौ प्रमाणवन्तौ । प्राप्तिस्तावत्प्रमाणवती । महापितृयज्ञेन यजेत प्रकृतिवदिति । तथा, एष वै प्रजापतिः सप्तदशो यज्ञेष्वन्वायत्त इति भवति वाक्यं प्राप्तेः प्रतिषेधमनपेक्ष्यमाणं प्रमाणभूतम् । तथा प्रतिषेधः प्रमाणवान्, न होतारं वृणीते, नाऽऽर्षेयं, मृत्योरेवैनानुत्सृजतीति । तथा, नानुयाजेषु ये यजामहं करोतीति ।

---

' न होतारं वणीते ' ' नानुयाजेषु× येयजामहं करोति ' इति इत्यत्र पूर्वःपक्षः । अयं नञ्श्रुत्या कर्तव्यतां प्रतिषेधति । ये धातुनामनी ते अपि तामेव विशेषयतः । एवं सर्वाणि पदानि स्वार्थवृत्तानि भवन्ति प्रतिषेधे । पर्युदासे तु लक्षणावृत्तानि भवन्ति । यथा, अब्राह्मणमानयेत्यत्र नञ्ब्राह्मणपदं चान्यस्य लक्षणार्थमुच्चार्येते क्षत्रियादेः, न स्वार्थम्, एवमिहापि नञ्शब्दोऽनुया-

---

+ प्रतिषेधः कश्चित्—ग. । × नानुयाजेषु—ङ. ज. ।

सर्वेषु यजिषु येयजामहक्रिया प्राप्ता, न करोत्यनुयाजेष्विति प्रतिषिध्यते। ये यजामहः कर्तव्य इति वचनात्स येयजामहकः प्रयोगः

जशब्दश्चान्यस्य यजतेर्लक्षणार्थमुच्चार्येयाताम्।× तस्मात्पर्युदासो न ग्रहीतव्यः=।

ननु प्रतिषेधेऽपि पर्युदासफलं÷ भवत्येव। यथा दधि ब्राह्मणेभ्यो दीयतां, तक्रं कौण्डिन्यायेति। अथ ब्राह्मणजातिर्वर्णैरुपात्ता। तदुपलक्षिता तु व्यक्तिर्न+ वर्णोपात्ता। कौण्डिन्ये तूपात्ता* व्यक्तिः। तत्र यद्दधिदानमवर्णं× कौण्डिन्ये प्राप्नोति तद्वर्णेन+ तक्रदानेन विरोधाद्बाध्यते। एवमत्रापि यज्ञसामान्यं वर्णोपात्तम्। यज्ञविशेषश्च लक्षणया। 'नानुयाजेषु' इति वर्णोपात्त एव यज्ञविशेषः। तत्र÷ विशेषेः श्रूयमाणः प्रतिषेधः सामान्यं बाधते। चोदकस्त्वश्रूयमाणः कल्पनीयः। कल्पितोऽप्यङ्गानि सामान्येन ब्रवीति। 'न होतारं वृणीते' इति विशेषेण श्रूयमाणमुपमितकल्पितसामान्यप्राप्तिं बाधते।

उच्यते। नकारोऽयं निवृत्तिं ब्रवीति। सा च प्रवृत्तिमन्तरेण न संभवति। सा सामान्यशास्त्रेण वा भवेद्विशेषशास्त्रेण वा। यद्यनुयाजेषु,× येयजामहो न* स्यात्तथा सति प्रवृत्तिरेव न स्यात्। एवं च प्रतिषेधानर्थक्यमेव स्यात्। यथा+ तर्हि 'ब्राह्मणो न हन्तव्यः' इति, एवं भविष्यति। न हि। तत्र ह्यर्थाद्धननं प्राप्तं कुर्यां वा न वेति। यदा करोति तदा प्रतिषिध्यते, न हन्तव्य इति। तत्रार्थप्राप्तस्य शास्त्रेण नित्यबाधः। इह तु द्वे शास्त्रे। तेन द्वे

× लक्षणार्थावु—घ. मु.। = ग्राह्यः—मु.। ÷ पर्युदासफलमिति—अविकल्परूपमित्यर्थः। + व्यक्तिः। न तु सा वर्णोपात्ता—ङ. ज.। व्यक्तिः। नैव सोपात्ता—मु.। * उपात्तेति—वर्णोपात्तैव व्यक्तिरित्यर्थः। × अवर्णमिति—ब्राह्मणपदवाच्यजातिलक्षितव्यक्त्युद्देशेन विधीयमानं लाक्षणिकमित्यर्थः। + वर्णेनेति—कौण्डिन्यपदोपात्तव्यक्तिविशेषोद्देशेन विधीयमानेन श्रौतेनेत्यर्थः। + तत्र श्रूय—घ. मु.। अनूयाजेषु—ङ. ज.। * न स्यादिति—विहितो न स्यादित्यर्थः। × पुनः शङ्कते—यथा तर्हीति। यथा 'ब्राह्मणो न हन्तव्यः' इति प्रवृत्त्यधीनोऽपि प्रतिषेधस्तामेकान्तेन बाधते, एवमत्रापि प्राप्तायाः प्रवृत्तेः प्रतिषेधेन बाधो भवत्वित्याशङ्काशयः।

फलवानिति गम्यते । न कर्तव्यो ये यजामह इति वचनादयेयजामहकः प्रयोगः फलवानिति गम्यते । उभयोः प्रामाण्यादुभयथाऽपि फलमिति गम्यते । तस्माद्विकल्पः । एवं होत्रार्षेयवरणेऽपि । तस्मात्प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात् ॥ १ ॥

अर्थप्राप्तवदिति चेत् ॥ २ ॥

इति चेदवगम्यते विकल्पः स्यादिति । तन्न । अर्थप्राप्तवत्स्यात् । तद्यथा लोकेऽर्थप्राप्ते× यत्र प्रतिषेधो भवति, न विषं भक्षयितव्यं, न सर्पायाङ्गुलिर्देया, न कण्टकः पादेनाधिष्ठेय इति, अक्रियैव तस्यार्थस्य भवति, न विकल्पः । तेन मन्यामहे, विधिप्रतिषेधयोः प्रतिषेधो बलीयानिति । प्राप्ते हि विधौ प्रतिषेधो भवति । येन च नाम प्राप्ते= यदुच्यते तत्तस्य बाधकं भवति । तस्मादक्रियैवानुयाजेषु येयजामहस्य, महापितृयज्ञे च होत्रार्षेयवरणस्येति ॥ २ ॥

न तुल्यहेतुत्वादुभयं शब्दलक्षणम् ॥ ३ ॥

नैतदेवम् । तुल्यो हि हेतुरिह प्राप्तेः प्रतिषेधस्य च । उभयं शब्दलक्षणं, प्राप्तिरपि प्रतिषेधोऽपि । प्राप्तिरपि प्रतिषेधे प्राप्ते, प्रतिषेधोऽपि प्राप्तौ प्राप्तायाम् । लोके पुनरुभयमर्थलक्षणं प्रत्यक्षतो ग-

---

अपि ग्रहीतव्ये । तयोर्विरोधाद्विकल्पः स्यात् । चोदकोऽप्येवमेव* ।

अपि चैकस्य शास्त्रस्य कर्तव्यता प्रमेया, अपरस्य निवृत्तिः । तस्माद्भिन्नविषयत्वान्न बाध्यबाधकभावः । तस्माद्विकल्पः । न चेदं पूर्वपक्षोक्तिमात्रं, पारमार्थिकमेव । तथा सूत्रभाष्यकारावाहतुः । 'सर्वप्रतिषेधो× वाऽसंयोगात्पदेन स्यात्' इति । वचनेन ऋक् प्रतिषिध्यते । आनुमानिकी प्राप्तिः, प्रकरणाम्नानात् । तत्र विकल्पोऽभ्युपगतः, नाऽऽनर्थक्येन प्रमाणेन । आनर्थक्यं हि परित्यागे कारणं, नोपादने । तस्माद्युक्तो विकल्पः ॥ १ ॥ २ ॥

---

× अर्थप्राप्तयोः—ग. । = प्राप्तेन—ग. । * चोदकोऽपीति—चोदकस्यापि शास्त्ररूपत्वादुपजीव्यत्वाच्च नात्यन्तं बाधः संभवति । अपि तु विकल्प एवेत्यर्थः। ×(अ०९ पा० ४ अ० २ सू० २१ )।

भ्यमानं गुणदोषकरम्। तत्र विधिप्रतिषेधयोर्यतरो गुणवान् सोऽनुष्ठीयते। न तु शब्दलक्षणे गुणदोषौ शक्येते अवगन्तुम्। तस्माद्यद्वाक्येन प्राप्तं, तत्तदुभयमवधार्येत। उभौ च प्राप्तिप्रतिषेधौ प्राप्नुतः। तस्माद्विकल्पस्तत्र तत्रेति ॥ ३ ॥

अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य
विधीनामेकदेशः स्यात् ॥ ४ ॥ सि०

अपि त्विति पक्षव्यावृत्तिः। वाक्यशेषः× स्यात्प्रतिषेधः, प्रदेशानारभ्यविधानयोः। नैवमभिसंबन्धः, अनुयाजेषु येयजामहो न कर्तव्यं इति। कथं तर्हि। नानुयाजेष्विति नशब्दोऽनुयाजशब्देन* सह संबध्यते, न करोतिना। किमतो यद्येवम्। नानुयाजेष्वित्येतावदपरिपूर्णं वाक्यं, तत्साकाङ्क्षं पूर्ववाक्यैकदेशेन संभन्त्स्यते। यदेतत्, येयजामहं करोतीत्युक्तं, तन्नानुयाजेषु। यावदुक्तं स्यात्। अनुयाजवर्जितेषु यजतिषु येयजामहं करोतीति। तस्माद्विधिरेव पर्युदस्तानुयाजकः, नास्ति प्रतिषेध इति न विकल्पो भविष्यति। महापितृयज्ञेऽपि प्रकृतिवदितिवचनाद्धोत्रार्षेयवरणमिह कर्तव्यं प्राप्तम्। तदुच्यते प्रकृतिवत्कर्तव्यं वरणं वर्जयित्वेति। नशब्दोऽत्र वृणीतेरर्थेन संबध्यते। प्रत्ययार्थस्त्वनुवादः। यदत्र प्रकृतिवत्कर्तव्यं तद्वरणं वर्जयित्वेति।

---

॥ ३ ॥

— —

प्रतिषेधे÷ सति शास्त्रस्य भ्रान्तिः कल्पनीया, विकल्पापत्तेः। द्विरदृष्टकल्पना च। प्रतिषेधादक्रियायां कोऽप्युपकारो भवतीति, विधौ क्रियायाम्। तस्मात्पर्युदासः =। तत्र लक्षणा केवला, नादृष्टकल्पना। अदृष्टकल्पनायाश्च लक्षणा ज्यायसी। ननु 'अर्थैकत्वात् ×' इत्ययं न्यायोऽत्र नास्ति। येनैकवाक्यता स्यात्।

---

× वाक्यशेषः प्रतिषेधः प्रदेशानारभ्यवादयोः—क. मु.। * शब्देन संबध्यते—मु०।
÷ प्रतिषेधशास्त्रस्य—मु०। = पर्युदास इति—श्रेयानिति शेषः। ×( अ० २ पा० १ अ० १४ सू० ४६ )।

**किमर्थं पुनरनुयाजैर्वृत्रूधात्वर्थेन च नशब्दः संबध्यत इति ×। उच्यते। अन्याय्यत्वाद्विकल्पस्य। अन्याय्यो हि विकल्पः। कथम्। इह यजतिषु येयजामहं करोतीत्युच्यते। यद्येवमवगम्यते, न शक्यः* स विना येयजामहेन यजतिरभिनिर्वर्तयितुम्। तत्र प्रतिषेधवचनमनर्थकम्। प्रतिषेधेऽपि विज्ञाते विधिवचनमनर्थकम्। तस्मादन्याय्यो विकल्पः। नन्वन्यतरस्य विधेरानर्थक्यप्रसङ्गाद्विकल्प आश्रयणीयो भवति। उच्यते। यत्रान्यतरदानर्थक्यमापद्यते, कल्पेतापि तत्र विकल्पः, यत्र न केनचिदपि प्रकारेणार्थवत्ता संभवति। इह त्वनुयाजसंबन्धपर्युदासेनार्थवत्ता। तस्मान्न विकल्पः।**

---

उच्यते। सत्यमयं न्यायो नास्ति। किं तु यथा 'दध्ना जुहोति' इति होमः पूर्वेण वाक्येन प्राप्तो विपरिवर्तते। तत्र दधि विधीयते। भवति चैकवाक्यत्वम्। एवमिहापि,= येयजामहं विपरिवर्तमानमनूद्य पर्युदासार्थो विधीयते। तथा चोदकेऽपि यत्प्रकृतिवत्पितृयज्ञेन तद्वरणवर्जमिति। अथवा येयजामहः सामान्येन= प्राप्यमाण एवानुयाजवाक्येन विशेष्यते, अनुयाजवर्जं येयजामहं करोतीति। पितृयज्ञेष्वेवमेव।

**अत्र ग्रन्थ। नन्वनुयाजसंबन्धे नशब्दस्य समासः प्राप्नोति। पर्युदासपक्षे समासः स्यात्।** न चात्र समासः। येन पर्युदासः स्यात्। तस्माद्विकल्प एवाऽऽश्रीयते।

उच्यते। 'विभाषा÷' इत्यनेन समासो वाक्यं वा भवति। यदि समासलक्षणमेवाऽऽश्रीयेत, राज्ञः पुरुषः इत्यपप्रयोगः स्यात्। तस्माद्राज्ञः पुरुष इत्येतदपि साधु। राजपुरुष इत्यपि। उभयोरप्यनुगमात्। यत्रानुगमो नास्ति तत्रासाधुप्रयोगः। यथा गावीति। तेनासत्यपि समासे स एवार्थः समासेऽपि। तेनासमासत्वमदोषः।

**नित्यो ह्यस्य नञः सुबन्तसंबन्धे समास इति। कोऽभिप्रायः। भिन्नार्थावेतौ वाक्यसमासौ। वाक्येन पुंलिङ्गैकत्वविशिष्टस्य* पुरुषः प्रतीयते।**

---

× इत्युच्यते—क. ग.। * शक्यते—ग.। = एवामिहापीति—पर्युदासस्थले पृथगाख्यातश्रवणात्पदैकवाक्यत्वासंभवेऽपि वाक्यैकवाक्यत्वं संभवत्येवेत्याशयः। = सामान्यवाक्येन प्राप्यमाणः—मु.। ÷ पा० सू० (२-१-११)। * विशिष्टः—मु.।

आह । नन्वनुयाजसंबन्धे नशब्दस्य समासः प्राप्नोति । नित्यो ह्यस्य नशब्दस्य सुबन्तसंबन्धेन समास इति वार्तिककारो भगवान् कात्यायनो मन्यते स्म । वावचनानर्थक्यं च स्वभावसिद्धत्वादिति । नेति भगवान् पाणिनिः । स हि, विभाषा*–इति प्रकृत्येदृशं समासमुक्तवान् । सद्वादित्वाच्च पाणिनेर्वचनं प्रमाणम् । असद्वादित्वान्न कात्यायनस्य । असद्वादी हि विद्यमानमप्यनुपलभ्य ब्रूयात् । तस्मात्पर्युदास इति ॥ ४ ॥

[ सोमे, आज्यभागप्रतिषेधस्य नित्यानुवादत्वेन पशावाज्यभागप्रतिषेधार्थवादार्थत्वाधिकरणम् ॥ २ ॥ ]

[ २ ] अपूर्वे चार्थवादः स्यात् ॥ ५ ॥ सि०

---

समासे तु न ज्ञायते किं द्वयोः पुंसोरुत बहूनामुत स्त्रिया उत नपुंसकस्येति । तस्माद्वाक्यसमासौ नैकार्थौ । गोशब्दे त्वेकोऽर्थः प्रतीयते । तत्र यस्यानुगमः स साधुरितरेऽपभ्रंशाः । यथैको गोणीशब्द आवपने साधुर्न सास्नादिमति । अत्र राजपुरुष इति लिङ्गसंख्यावियुक्ते वाक्ये नित्यं समास एव साधुः । तद्युक्ते राज्ञः पुरुष इति वाक्यमेव । अत आह– 'वावचनार्थक्यं× च स्वभावसिद्धत्वात्' इति । तेन पर्युदासो नास्ति । समासाभावात् ।

अत्रोच्यते । 'समर्थः= पदविधिः' इति समर्थयोः समासः । सामर्थ्यं च यदि लिङ्गसंख्यादिकं नापेक्षते राजशब्दस्ततः स्यात् । ततः पुरुषेण समस्यते । तस्माल्लिङ्गसंख्यावियुक्तः श्रूयमाणः समासेऽवयवार्थो गम्यते । प्रतीतेस्तुल्यत्वात्× । एवं सत्येकोऽर्थः । तस्मादुभयोरनुगमः कर्तव्यः । उभयोश्चानुगमाद्वाक्ये पर्युदासः सिद्धः ॥ ४ ॥

---

'न तौ पशौ करोति, न सोमे' इत्याज्यभागयोः* पर्युदासो न घटते ।

---

* पा० सू० ( २—१—११ ) । × वृत्तिवाक्ययोर्भिन्नार्थकत्वेन समासविधिना वाक्यस्य साधुत्वानिवारणादुभयोरपि भिन्नार्थकत्वरूपन्यायेनैव विकल्पस्य सिद्धत्वाद्विकल्पविधायि विभाषासूत्रं पाणिनीयमनर्थकमित्यर्थः । = पा० सू० ( २—१—१ ) । × नन्वेवं सत्यर्थभेदः स्यादित्यत आह—प्रतीतेरिति । * इतीति—अनयोर्वाक्ययोर्मध्य आद्यवाक्ये पशावाज्यभागयोः पर्युदासो न घटत इत्यर्थः ।

स्तो दर्शपूर्णमासौ, तत्राऽऽज्यभागौ प्रकृत्य समामनन्ति. न तौ पशौ करोति, न सोमे, इति। तत्रायमर्थः सांशयिकः। किं पर्युदासः, उत प्रतिषेधः, अथवाऽर्थवाद इति। किं प्राप्तम्। यथा पूर्वत्र पर्युदासस्तथा तावत्पर्युदासो नावकल्पते। कथम्। दर्शपूर्णमासयोरेतच्छ्रूयते। तत्र कः प्रसङ्गो यत्सोमे स्यात्। यदि सोमः पर्युदस्येत, संबन्ध एव न स्यात्, सोमवर्जितयोर्दर्शपूर्णमासयोरिति। तस्माच्चोदकप्राप्तयोः सोमे प्रतिषेधः। नन्वपूर्वः सोमः। नैव× तत्र चोदकेनाऽऽज्यभागौ प्राप्नुतः। उच्यते। लक्षणार्थः सोमशब्दो भविष्यति। सौमिकेषु दीक्षणीयादिषु पशुबन्धमात्रे च न कर्तव्याविति। एवं प्राप्ते, ब्रूमः।

अपूर्वे चार्थवादः स्यादिति। अपूर्वे सोमे नैवाऽऽज्यभागौ प्राप्नुतः। तस्मान्न* तत्र प्रतिषेधः। अथ दीक्षणीयादीन् सोमशब्दो लक्षयति तत्रायमेव दोषो भवति यल्लक्षणा। अपि च प्राप्तप्रतिषिद्धत्वाद्दीक्षणीयादिषु विकल्पः प्राप्नोति। विकल्पश्चान्याय्य इत्युक्तम्। तस्मात्संभवत्यस्मिन्न* विकल्पो भविष्यति। संभवति चायं, तौ न

---

यदि पशुप्रकरण इदं श्रूयेत, तथा सति चोदकप्राप्तौ पर्युदस्येयाताम्, आर्षेयवरणवदाज्यभागवर्जं प्रकृतिवत्कुर्यादिति। इह तु दर्शपूर्णमासप्रकरण इदं वर्तते×। तत्रेयं वचनव्यक्तिराज्यभागवर्जं दर्शपौर्णमासौ कुर्यादिति दर्शपूर्णमासविशेषः स्यात्। ततो विधानमाज्यभागयोरनर्थकं स्यात्। पशावित्ययं च प्रमादपाठः स्यात्।

अथोच्येत, नाऽऽज्यभागाभ्यां नञः संबन्धः, अनाज्यभागौ दर्शपूर्णमासाविति। किं तर्हि। पशुशब्देन। यद्दर्शपूर्णमासयोराज्यभागौ कुर्यात्तदपशौ पशुवर्जितयोरिति। एतदपि+ न। अपशुत्वाद्दर्शपूर्णमासयोः। तस्मात्पशावाज्यभागयोः प्रतिषेधः। ततश्च विकल्प इति स्थितम्।

---

× न च तत्र—ग.। * तस्मान्न प्रतिषेधः—क.। * तस्मादसंभवति, अस्मिन्। विकल्पो भविष्यति—क. मु.। × विपरिवर्तते—ङ.। + तदपि—ङ. ज.।

पशौ करोतीतयस्यार्थवादत्वेन । कः*पुनरत्र प्रशंसार्थः। सोमे, आज्यभागौ न क्रियेते, पशावपीति । तद्यथा, आदित्यो यूप इत्यञ्जने कृते तेजःसामान्यादुच्यते, एवमिहापि पशावाज्यभागौ कथं न क्रियेयातामिति । तदर्था प्रशंसेति ॥ ५ ॥

( अतिरात्रे षोडशिग्रहणप्रतिषेधाधिकरणम् ॥ ३ ॥ )

[ ३ ] शिष्ट्वा तु प्रतिषेधः स्यात् ॥ ६ ॥ सि०

आह । प्रथमेऽधिकरणे नशब्दः पर्युदासार्थः । द्वितीये त्वर्थवादार्थः । अथ किंलक्षणकः प्रतिषेध इति । लक्षणमुच्यते । शिष्ट्वा तु प्रतिषेधः स्यात् । यथा, नातिरात्रे गृह्णाति षोडशिनमिति । न तत्र शक्यं वक्तुं पर्युदास इति । संबन्ध एव हि न स्यात्, अतिरात्रवर्जितातिरात्रे गृह्णाति षोडशिनमिति । नापि कस्यचिदर्थवादत्वेन संभवति । तस्मान्नञो× गृह्णातीत्यत्र संबन्धः ।

ननु परस्परं विरुद्धौ विधिप्रतिषेधौ न संभवतः। उच्यते । वचनप्रामाण्यात्प्रतिषेधो विधिं बाधित्वा भविष्यति । विधिरपि प्रतिषे-

---

'आनर्थक्यात्तदङ्गेषु*' इत्ययं न्यायोऽत्र नास्ति, सोमे येन प्रतिषेधः स्यात् । 'वाजपेयस्य' इति षष्ठ्या संबन्ध्युपात्तः । तस्य सप्तदशारत्निता निधीयते । संबन्धमात्रं चाङ्गाङ्गिस्याप्यस्त्येवेति यूपे निवेशः । इह त्वाधारत्वेन सोमः श्रूयते, न संबन्धिमात्रतया । न च परस्परासंबन्धेऽस्त्याधारत्वमिति साक्षादेवायं सोमसंबन्धः प्रतीयते । स चाप्राप्त इति । तस्मादर्थवादार्थं सोमग्रहणम् ॥ ५ ॥

---

तृतीये= प्रतिषेधः । न तत्र पर्युदासो भवति । यत्रनातिरात्रे गृह्णा-

---

× कः पुनरत्रा । प्रशं—मु. । × तस्मान्न गृह्णातत्यित्र—क. मु. । * ( अ० ३ पा० १ अ० ९ सू० १८ )। = ननु प्रथमेऽधिकरणे पर्युदासः । द्वितीये त्वर्थवादः । क. तर्हि प्रतिषेध इति चेदाह-तृतीये प्रतिषेध इति-तृतीयेऽधिकरणे । 'नातिरात्रे षोडशिनं गृह्णाति' इत्यस्मिन् वाक्ये प्रतिषेध इत्यर्थः ।

धम् । नान्या गतिरस्तीति पक्षे मिथ्याप्रत्ययः कल्पयिष्यते । तदा विधिर्यदा न प्रतिषेधः । तदा प्रतिषेधो यदा न विधिरिति । ननु सर्वदा विधिः प्रतिषेधश्च प्राप्नोति । उच्यते । उक्तमेतद्वचनप्रामाण्याद्विरोधाच्चमिथ्याप्रत्ययः प्रयोगवचन एकं कल्पं गृहीत्वा न द्वितीयमपि गृह्णातीति । तस्मादन्यतरेण कल्पेन सिध्यतीति । ननु कल्पान्तरभावे वैगुण्यम् । अत्रोच्यते । सत्यं वैगुण्यम् । वैगुण्येऽपि तत्सिद्धिरेव=वाक्यात्प्रमाणादवगम्यते। तस्माददोषः यत्र पुनरन्या वचनव्यक्तिरस्ति वाक्यस्य, तत्र न विकल्पो भवति । यथा नानुयाजेषु येयजामहं करोतीति ॥ ६ ॥

( जर्तिलयवाग्वादिनिषेधस्य पयोहोमविध्यर्थवादत्वाधिकरणम् ॥४॥ )

[ ४ ] न चेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादः स्यादानर्थक्यात्परसामर्थ्याच्च ॥ ७ ॥ सि०

इदं समाम्नायतेऽग्निहोत्रे, जर्तिलयवाग्वा वा जुहुयात्, गवीधुकयवाग्वा+ वा जुहुयात्, न ग्राम्यान् पशून् हिनस्ति, नाऽऽरण्यान् ÷ । अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च*, पयसाऽ-

---

तीति, अतिरात्रे न ग्रहीतव्यः । तत्र विधानानर्थक्यं षोडशिनः । अथ 'अषोडशिनं गृह्णीयात्' इति । तथाऽप्ययमेव दोषः ॥ ६ ॥

---

चतुर्थे= नास्ति पर्युदासः । अजर्तिलयवाग्वा जुहुयादित्यनेन संबधेन पर्युदासाभावः+ । यदि* पयोविधेः, होमे पयश्च जर्तिलयवागूश्च प्राप्नुयात्तथा

---

= तद्विधिरेव वाक्यप्रमाणात्—ग. । + गवेधुक—क., मु. । ÷ नाऽऽरण्यानिति—क. ग. । * गवेधुक—क. मु. । = पूर्वपक्षमाह—चतुर्थ इत्यादिना । + पर्युदासाभाव इति— न हि 'अनाहुतिर्वै जर्तिलाश्च गवीधुकश्च' इत्यत्राऽऽहुतिपदेन समस्तस्य नञो जर्तिलादिपदेन संबन्धे सामर्थ्यमस्ति । अभ्युपेत्यापि च संबन्धं, न तावदयं जर्तिलादिविधे शेषो भवितुमर्हति । न हि—अजर्तिलयवाग्वेति संबन्धो घटते । अत एवं पर्युदासो न संभवीत्याशयः । * भवतु तर्हि पयोहोमविधेः शेष इति चेत्तदपि न संभवतीत्याह—यदि पयोविधेरिति । शेषस्तदाऽपि पर्युदासो न युज्यत इति पूरणम् ।

ग्निहोत्रं जुहुयादिति । अत्र संदेहः । किं जर्तिलयवाग्वा गवीधुकयवाग्वा* वा जुहोतीति विधिः, अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेति* प्रतिषेधः, अथवोभावेतावर्थवादार्थौ, पयसाऽग्निहोत्रं जुहोतीति विधिरिति ।

किं प्राप्तम् । जर्तिलयवाग्वेति विधिः । विधिशब्दस्य प्रत्यक्षत्वात् । अनाहुतिरित्यपि प्रत्यक्षः प्रतिषेधः । पयसाऽग्निहोत्रं जुहोतीत्यपरो विधिः, प्रत्यक्षत्वादेव । एवं सति विकल्पः । जर्तिलयवाग्वा गवीधुकयवाग्वा* वा होतव्यम् । न वा ताभ्याम् । पयसा होतव्यमिति । न चात्र पर्युदासोऽवकल्पते । न हि नशब्दस्य जर्तिलयावाग्वा गवीधुकयवाग्वा* वा सामर्थ्यमस्ति । आहुतिशब्देन सह समस्तत्वात् । कल्प्यमाने वा सामर्थ्ये संबन्ध एव न स्यात् । अजर्तिलयवाग्वा, जर्तिलयवाग्वा जुहोतीति । अनर्थकश्च पर्युदासे विधिर्भवेत् । कृत्स्नस्य पर्युदस्तत्वात् । क्षीरविधाने च पर्युदासानर्थक्यम्+ जर्तिलगवीधुकानामप्राप्तत्वात् *। तस्माद्विकल्प इति । एवं प्राप्ते, ब्रूमः ।

भवेदयं* प्रतिषेधेन विकल्पः । न चेदन्यं विधिं प्रकल्पयेत् । पयसाऽग्निहोत्रं जुहोतीत्यस्य विधेः प्रक्लृप्तौ= जर्तिलगवीधुकहोमवचनमनाहुति वचनमप्यर्थवादार्थं स्यात् । आनर्थक्यात् । अनर्थको हि भवति तदा प्रतिषेधः । यदा हि पयसा जुहोति,+ अर्थादेव

---

सति पर्युदासः स्यात् । न चैतयोः प्राप्तिः । पयसस्तु केवलस्य ।

अथैवमुच्येत, अजर्तिलयवाग्वा जुहुयादिति, ततो जर्तिलविधानमनर्थकम् । किं तेन विहितेन । अथैवमुच्येत, अनाहुतिः कर्तव्येति । तथा सर्वमेव× न घटते । तस्मात् ‘ जर्तिलयवाग्वा जुहुयात् ’ इति विहिता यवागूरनेन निषिध्यते । निषिध्य पयो विधीयते । तस्माद्विकल्पः ।

---

* गवेधुक—क. मु. । + पर्युदासानपेक्षत्वात् । जर्तिल–प. । * गवेधुक–क. मु. ।
* भवेदयं प्रतिषेधो विकल्पेन–ग० । = प्रक्लृप्तौ गवेधुक–क० मु० । + जुहोतीति—ग० । × सर्वमेवेति—तथा च होमस्यैवाभावाज्जर्तिलविधानं पयोविधानं च न घटत इत्यर्थः ।

तदाऽनाहुतिर्जर्तिला गवीधुकाश्च* भवन्ति । अथ कथमसावनाहुतिः, या यज्ञे हूयते । परसामर्थ्याच्च । परेण च—पयसाऽग्निहोत्रं जुहोतीत्यनेन विधिना सामर्थ्यं जर्तिलगवीधुकविधेः* प्रतिषेधस्य च भवति । तस्मात्सर्वमिदमेकं= वाक्यम् ।

कथम् । जर्तिलयवाग्वा जुहुयात, गवीधुकयवाग्वा* वेति साक्षान्निन्दावचनेनैतत्संबध्यते =, अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेति* । सा÷ च निन्दा पयोविधिप्रशंसार्था । कथम् । जर्तिलगवीधुकाहुतिर्गुणवती* । न तत्र ग्राम्याः पशवो हिंस्यन्ते, नाऽऽरण्याः । एवमपि गुणवती पयोहोमं प्रत्यनाहुतिरेव । एवं पयोहोमो गुणवत्तर इति । जर्तिलयवाग्वा जुहुयादिति न कर्तव्यार्थं कीर्त्यते । किं तर्हि । प्रतिषेद्धुम् । कर्तव्योपदेशे हि कल्पनीयं किंचित् । प्रतिषेधसंबन्धे प्रत्यक्षनिन्दयेतरस्तुतिः । आनन्तर्यानुग्रहश्च । यथा, विषं भक्षयितव्यं न कदाचिदिति विषभक्षणस्य कर्तव्यता प्रतिषेधसंबन्धार्थं कीर्त्यते, नानुष्ठानाय । एवमिहापि द्रष्टव्यमिति ॥ ७ ॥

---

उच्यते =। अर्थवादोऽयम् =। 'अनाहुतिर्जर्तिलाश्च×' इत्यनाहुतिवचनेन प्रतिषिद्धस्य विकल्पमिच्छसि । स च 'पयसा जुहुयात्' इत्यनेनैव लभ्यते विकल्पो विना प्रतिषेधवचनेन । तस्मात्प्रतिषेधो न घटते । सर्वस्त्वयं 'पयसा जुहुयात्' इत्यस्य विधीयमानस्य वाक्यशेषत्वेन घटते । यथा देवदत्तः शोभनो विद्वानिति, एवंगुणविशिष्टोऽपि यज्ञदत्तमपेक्ष्याविद्वानशोभनश्चेति । तत्र ये देवदत्तस्य निन्दास्तुती न ते देवदत्तार्थमुच्चार्येते । किं तर्हि । यज्ञदत्तार्थे । एवमत्रापि निन्दास्तुती पयोविधानार्थे+ ॥ ७ ॥

——

---

* गवेधुक—क० मु० । = सर्वमेकं—क० । = वचनेनैवैतत्—मु० । ÷ या च तन्निन्दा सा पयो—मु० । = सिद्धान्तमाह—उच्यत इत्यादिना । + अर्थवादोऽयमिति—पयोहोमस्तुत्यर्थः, न तु यवागूः स्तूयते । अपि तु निन्द्यत इत्यर्थः । × कथमिति चेदाह—आनाहुतिरिति । + पयोविधानार्थे इति—यद्यपि हिंसाया अभावेन पश्वपेक्षया प्रशस्तत्वेऽपि जर्तिलगवाधुकयवाग्वोः पयोपेक्षया निन्द्यत्वमेव तथाऽपि तु पय एव होमे प्रशस्ततरमिति स्तुतिप्रकारोऽत्र ज्ञेयः ।

( त्र्यम्बकहोमादिषु—अभिघारणानभिघारणादीनामर्थवादार्थत्वाधिकरणम् ॥५॥ )

[ ५ ] पर्दैश्च तुल्यकालत्वात् ॥ ८ ॥ सि०

चातुर्मास्येषु त्रैयम्बकानधिकृत्य* समामनन्ति, अभिघार्या नाभिघार्या इति मीमांसन्ते। यदाभिघारयेत्, रुद्रायाऽऽस्ये पशून-भिदध्यात्। यन्नाभिघारयेन्न रुद्रयाऽऽस्ये पशूनभिदध्यात्। अथो खल्वाहुरभिघार्या एव। न हि हविरनभिघृतमस्तीति। तथा, होत-व्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः। यदि जुहुयाद-यथापूर्वमाहुतीर्जुहुयात्, यन्न जुहुयादग्निः परापतेत्, तूष्णीमेव हो-तव्यं, यथापूर्वमाहुतीर्जुहोति, नाग्निः परापततीति। अत्रायमर्थः= सांशयिकः। किमभिघारयितव्यास्त्रैयम्बकाः,÷ (उत) नाभिघार-यितव्या इति, होतव्यमग्निहोत्रं, न होतव्यं वा विधिप्रतिषेधावेताावि-ह+ उतार्थवादार्थमेतयोः संकीर्तनमिति।

किं तावत्प्राप्तम्। विधिप्रतिषेधाविति ब्रूमः। तद्रूपत्वात्। वि-धिप्रतिषेधयोर्हि प्रत्यक्षं रूपमुपलभ्यते। श्रुत्या चानुष्ठानार्थता प्रति-षेधार्थता चावगम्यते। वाक्यादर्थवादार्थता। श्रुतिश्च वाक्याब्दली-यसी। न च पर्युदासोऽवकल्पते। तस्मादग्निहोत्रं होतव्यं न होतव्यं वा। यदा होतव्यं तदा तूष्णीम्। त्र्यम्बका अभिघारयितव्याः, न* वाऽभिघारयितव्याः। यदा पुनरभिघारयितव्याः, तदाऽभिघारयित-व्यवचनमर्थवादार्थं, प्रतिषेधसंकीर्तनादभावाशङ्कायां पुनरुच्यत इति। एवं प्राप्ते ब्रूमः।

पूर्वाधिकरणोदाहरणैस्तुल्यकालानीमान्युदाहरणानि। का-तुल्यकालता। पूर्वं विधिप्रतिषेधावभिधायोत्तरेण तयोरभिसंबन्धः क्रियत इति। तदेतत्पूर्वाधिकरणेनैव तुल्यम्। यौ विधिप्रतिषेधौ श्रूयेते, न तावनुष्ठातुं, वर्जयितुं वा। किं तर्हि। मीमांसितुम्। एव-माह, अभिघार्या नाभिघार्या इति मीमांसन्ते। तथा, होतव्यमग्नि-होत्रं, न होतव्यमिति मीमांसन्ते ब्रह्मवादिन इति। मीमांसा चेतर

---

* त्र्यम्बकानाधि—ग०। = तत्र—ग०। ÷ त्र्यम्बकाः—ग०। + इह चेह च भवतु, उत—ग०। * च—ग०।

विधिप्रशंसार्था । तथा प्रत्यक्षः शब्दार्थेन संबन्धः । न किंचित्कल्पनीयम् । विधिप्रतिषेधयोर्हि किंचित्कल्पनीयं स्यात् । यदभिधारयेत्, रुद्रायाऽऽस्ये पशूनभिदध्यादिति । इदमभिघारणं गुणवत्तरं, यदीदृशोऽपि दोषो नाऽऽद्रियत इति । तथा, यज्जुहुयादयथापूर्वमाहुतिर्जुहुयात्, यन्न जुहुयादग्निः परापतेदिति—इत्थं तूष्णीं होमः प्रशस्तः, यदस्मिन्क्रियमाण उभावपि दोषौ परिहृतौ भवत इति ॥ ८ ॥

[ आधाने निन्दावादेन, विहितसामगानप्रतिषेधात्सामविकल्पाधिकरणम् ॥ ६ ॥ ]

[ ६ ] उपवादश्च तद्वत् ॥ ९ ॥ सि०

अस्त्याधानम् । तत्रेदमामनन्ति । य एवं विद्वान् वारवन्तीयं गायति, य एवं विद्वान् यज्ञायज्ञीयं गायति, य एवं विद्वान् वामदेव्यं गायतीति । तत्रेदमाम्नायते, उपवीता* वा एतस्याग्नयो भवन्ति, यस्याग्न्याधेये ब्रह्मा सामानि गायतीति । तत्रायमर्थः सांशयिकः । किमयमुपवादः प्रतिषेधार्थः, उत पर्युदासार्थः, उतार्थवादार्थ इति । किं+ प्राप्तम् । न पर्युदासः। ब्रह्मणोऽप्राप्तत्वात् । असतो वचनमर्थवादार्थं भवति । यथा, प्रजापतिर्वा एक आसीत्, स आत्मनो वपामुदक्खिददिति । एवं प्राप्ते ब्रूमः ।

न ब्रह्मण उपवादः कस्यचिदर्थवादः संभवति । न च वाक्यान्तरस्थेनार्थवादेन किंचिदपि प्रयोजनमस्ति । तस्मादुपवादस्तद्वत् । किंवत् । यथा, अतिरात्रे गृह्णाति षोडशिनमिति विधाय प्रतिषेधार्थं स्यात् । कथम् । ब्रह्मणो गानं नैव प्राप्तमिति ब्रह्मगानप्रतिषेधार्थं वचनं नावकल्पते । तस्माद्ब्रह्मग्रहणमविवक्षितम् । सामगानप्रतिषेध एवैष स्यात् । ब्रह्मशब्दः प्रमादपाठ इति चेत् । नैतदेवम् । ब्राह्मणवाचित्वादुद्गात्रभिधानं भविष्यति ॥ ९ ॥

॥ ८ ॥ ९ ॥

—

* उपवीताः—अचिरान्नष्टा इत्यर्थः । तथा चानया निन्दया 'न ब्रह्मा सामानि गायेत' इत्येवं निषेधवचनं प्रकल्प्य तेन चाऽऽधाने सामप्रतिषेधाद्ग्रहणाग्रहणवद्विकल्प इत्याशयः । + किंच तत्—मु० ।

प्रतिषेधादकर्मेति चेत् ॥ १० ॥

इति चेद्दृश्यते, सामगानस्यैव* निन्देति । अकर्म× सामगानस्य । न हि निन्दितं कर्तव्यं भवतीति ॥ १० ॥

न शब्दपूर्वत्वात् ॥ ११ ॥

नैतदेवम् । यथैव हि निन्दया न कर्तव्यमिति गम्यते, एवमुपदेशात्कर्तव्यमिति= गम्यते । न चान्यत्कर्तव्यमिति कश्चिद्विधिः प्रकल्पते, यस्य प्रशंसार्थं निन्द्येत । तस्मादनुष्ठातुं विधिः, वर्जयितुमुपवाद इति ॥ ११ ॥

[ पुरुषार्थदानपाकहोमानां दीक्षितकर्तृकत्वपर्युदासाधिकरणम् ॥७॥ ]

[ ७ ] दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात्सर्वदानहोमपाकप्रतिषेधः स्यात्

॥ १२ ॥ पू०

ज्योतिष्टोमे श्रूयते, दीक्षितो न ददाति, न जुहोति, न पचतीति। अत्रैषोऽर्थः सांशयिकः । किं सर्वदानहोमपाकानां प्रतिषेधः, उताक्रतुयुक्तानाम्, अथवा क्रतुयुक्तानामपि चोदकप्राप्तानां प्रतिषेधः, अथवा पर्युदास इति । किं प्राप्तम् । सर्वदानहोमपाकानां प्रतिषेधः । कुतः । अविशेषात् । नास्ति विशेषवचनः शब्दः । तस्मात्सर्वेषां प्रतिषेध इति ॥ १२ ॥

अक्रतुयुक्तानां वा धर्मः स्यात्क्रतोः प्रत्यक्षशिष्टत्वात् ॥ १३ ॥

वाशब्दः पक्षं व्यावर्तयति । न सर्वेषां प्रतिषेधः । केषां तर्हि । अक्रतुयुक्तानां धर्मः स्यात् । कुतः । क्रतोः प्रत्यक्षशिष्टत्वात् । प्रत्यक्षं हि क्रतोर्दानादीनां+ शासनमस्ति । तस्मात्प्रत्यक्षं वर्जयित्वा प्रतिषेधः स्यात् ॥ १३ ॥

---

॥ १०॥ ११ ॥ ११ ॥ १३ ॥

---

* सामगानस्यैषा—ग. । × अकर्म च—ग. । = एवमुपादेयतया कर्तव्य-क० मु. । + क्रतौ- क० । श्रुतौ—मु. ।

तस्य वाऽन्यानुमानिकमविशेषात् ॥ १४ ॥

अपि वा तस्य क्रतोर्यदानुमानिकं चोदकप्राप्तं, तत्प्रतिषिध्यते । आनुमानिकं हि तत्र* प्रत्यक्षम् । प्रत्यक्षश्रुतश्च प्रतिषेधः ॥ १४ ॥

अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्प्रतिषेधे विकल्पः स्यात् ॥ १५ ॥ सि०

तुशब्दोऽवधारणायाम् । वाक्यशेषः स्यात्प्रतिषेधः । उक्तानामविशेषेण दानादीनां ज्यौतिष्टोमिकपर्युदासेन प्रतिषेधो वाक्यशेषः स्यात् । अहरहर्दद्यादित्यस्य शेषो, न दीक्षित इति । एवं होमपाकवाक्ययोरपि । असति पर्युदासे, प्रतिषेधे विकल्पः स्यात् । स चान्याय्य इत्युक्तम् । तस्मात्पर्युदास इति ॥ १५ ॥

[ ज्योतिष्टोमादौ विशेषविहितवर्त्मादिना सामान्यविहिताहवनीयबाधाधिकरणम् ॥ ८ ॥ ]

[ ८ ] अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत्संदिग्धमाराद्विशेषाशिष्टं स्यात् ॥ १६ ॥ सि०

इदं समामनन्ति ज्योतिष्टोमे, वर्त्मनि जुहोतीति । राजसूये, वल्मीकवपामुपगृह्य= जुहुयादिति । इदमपि श्रूयते, यदाहवनीये जुहो-

॥ १४ ॥ १५ ॥

---

नन्वदृष्टार्थत्वात्पदाहवनीययोर्न विकल्पो न बाध्यबाधकभावः । कथमदृष्टार्थता । याग आधारं नाऽऽक्षिपति । विनाऽप्याधारेण सिध्यमानत्वात् । यदि चाऽऽधारमाक्षिपेत्तथा सत्याहवनीयो नियम्येत । यथा, 'आग्नेयोऽष्टाकपालो भवति' इत्यष्टाकपाले द्रव्यमाक्षिप्तम् ×। तत्र व्रीहयो नियम्यन्ते । इहाऽऽधारो वचनसामर्थ्याद्विधीयते । तस्माद्यथा प्रयाजा अदृष्टेनोपकुर्वन्तो नोपहोमादिभिः सह विकल्प्यन्ते । न च बाध्यबाधकभावः । एवमिहाप्याहवनीयपदयोः । तथा च, देवताग्निशब्दक्रियाणां प्रतिनिधिरित्युक्तम्* । तेन प्रतिनिधिकाण्ड-

---

* तत्राप्रत्यक्षम्—मु० । = वपायां—प. । × द्रव्यमिति—यत्किंचित्प्रकृतिद्रव्यमित्यर्थः । * इत्युक्तमिति—( अ० १ अ० ५ सू० १८ ) इत्यत्रेति शेषः ।

ति, तेन सोऽस्याभीष्टः प्रीतो भवतीति। तत्रैषोऽर्थः सांशयिकः। किं ज्योतिष्टोमे वर्त्मनि होतव्यं, राजसूये वल्मीकवपायाम्, उत विकल्प एतयोराहवनीयेनेति। किं प्राप्तम्। होमार्थत्वात्तावद्वर्त्मवल्मीकवपयोः समुच्चयो न प्राप्तः। अन्यतरेण होमनिर्वृत्तेः कृतत्वात्। होमार्थता चैतयोः प्रतिज्ञायेत। कुतः। भूतभव्यसमुच्चारणे भूतं भव्यार्थं भवति। न च बाधोऽत्यन्तमेव वर्त्मविषयः। आहवनीयहोमोऽपह्नुतो भवति। विकल्पे, पक्षे तावदनुगृह्यत इति। एवं प्राप्ते, ब्रूमः।

अविशेषेण यच्छास्त्रं तस्याऽऽराद्विशेषशिष्टं स्यात्। यद्विशेषेण शिष्यते, तदस्य दूरं स्यात्। असंबद्धमित्यर्थः। संदिग्धं हि तत्। कथमिव। यदि सामान्यं विशेषलक्षणार्थं ततो विशेषेऽपि प्राप्तम्। अथ न लक्षणार्थं ततो न प्राप्तम्। एवं संदिग्धम्। अथवा, सामान्यं विशेषेण विरुध्यते, न विरुध्यत इत्येवं संदिग्धम्। अथवा, सामान्यं तस्मिंश्च विशेषे, अन्यस्मिंश्चेत्येवं संदिग्धम्। तत्सामान्यविधानं विशेषविधौ न स्यात्। किं कारणम्। अन्याय्यत्वाद्विकल्पस्य। कथमन्याय्यो विकल्पः।

---

न्याये स्थिते समुच्चयस्यैव युक्तत्वात्कथमिदमधिकरणमारभ्यते।

उच्यते। सत्यम् 'आग्नेयोऽष्टाकपालो भवति' इत्यनेन यथा द्रव्याक्षेपस्तथा न यागेनाऽऽक्षिप्त आहवनीयः। तथाऽपि नानाकाङ्क्षितः संबध्यते। यदाहवनीये' इति सप्तम्यन्तं साकाङ्क्षं जुहोतीत्यनेन निराकाङ्क्षी क्रियते। जुहोतीत्यपि साकाङ्क्षमाहवनीयेन निराकाङ्क्षी क्रियते। यद्याकाङ्क्षा न स्यात्तथा सति 'यदाहवनीये जुहोति' इति संबन्ध एव न स्यात्। स च विधीयमानो दृष्टेनैवोपकरोति*। व्यवदानस्याऽऽधेयस्याऽऽधारतां प्रतिपादयति।

एवं× वर्ण्यमाने सिध्यतो बाधविकल्पौ। प्रतिनिधिस्तु प्राप्नोति। दृष्टार्थत्वाद्द्रव्यान्तरवदिति। उच्यते। युक्तं द्रव्यान्तरेषु। तत्र 'आग्नेयोऽष्टाकपालो भवति' इत्ययं यागः फले चोदितः। यदा व्रीहयो न सन्ति प्रक्रान्ते कर्मणि, तदाऽपि यागचोदना द्रव्यमाक्षिपति। द्रव्येण विना यागो न निर्वर्तते।

---

* उपकरोतीति—होमस्येति शेषः। × चोदयति—एवमिति।

अत्रोच्यते । यदि वर्त्माद्यधिकरणता एषु होमेषु श्रूयते, सा पक्षे न भवतीति विकल्पमाश्रयता प्रमाणापेता कल्पयितव्या । अथ वर्त्माद्यधिकारणता एषु न श्रूयते, ततः पक्षे सा भवतीति प्रमाणापेतैव । वर्त्मग्रहणं च श्रूयमाणमविवक्षितं स्यात् । अथोच्येत, अर्थात्पक्षे भावः । स× चार्थो होमनिर्वृत्तिराहवनीयेनेति । तन्न । यदि हो-

---

यदा त्वाहवनीयः प्रक्रान्ते कर्मणि नास्ति, तदा यागचोदना नाऽऽक्षिपत्याहवनीयम् । विनाऽप्याहवनीयेन यागस्योपपद्यमानत्वात् । तेनानाक्षिप्तत्वान्नास्त्याहवनीयस्य+ प्रतिनिधिः । नन्वनेन* न्यायेन देवताया यागेनाऽऽक्षिप्तत्वात्प्रतिनिधिः प्राप्नोति ।

तत्र केचिद्वर्णयन्ति । सादृश्येन प्रतिनिधिः । यदि देवताशब्दो न स्मर्यते ततः सादृश्यमेव न ज्ञायते । अथ स्मर्यते तथा सति स एवोच्चारणीयः । एवं वर्ण्यमाने, यदा व्रीहयो नष्टाः प्रकान्ते कर्मणि वचनसामर्थ्याद्यागोऽवश्यं = समापनीयः । न च व्रीहीन् स्मरति, कीदृशा व्रीहय इति । तेषां चास्मरणान्न शक्नोति सादृश्यं संपादयितुम् । ईदृश्यामवस्थायां यागो नैव कार्यः । न चेदृश्यवस्था नास्ति । कदाचिद्विद्यते । तस्मात्सादृश्याभावाद्देवतायाः प्रतिनिधिर्नास्तीत्येतदयुक्तम् ।

तेनान्योपपत्तिर्वक्तव्या + । सा च षष्ठे वर्णिता, + न प्रतिनिधीयमाना देवता भवतीति । तेनादृष्टार्थत्वादाहवनीयस्यानाक्षेपात्प्रनिधिकाण्डेन नेदं विरुद्धम् । अपि चाऽऽहवनीयः पदनिरपेक्षः सप्तम्याऽऽधारत्वं प्रतिपद्यते । पदमप्याहवनीयनिरपेक्षम् । यथा ‘ व्रीहिभिः ’ इति कारकविभक्तिर्यवनिरपेक्षान्प्रति-

---

× सर्वार्थो होमनिर्वृत्तिः—क० ग० । + अनपेक्षितत्वात्–ङ. । *यदि यागचोदनयाऽनाक्षिप्तस्य न प्रतिनिधिस्तदा यागचोदनयाऽऽक्षिप्तत्वाद्देवतायाः प्रतिनिधिर्भवत्विति शङ्कते—नन्विति . = वचनसामर्थ्यादिति—शिष्टा हि प्रारब्धकर्मणोऽपरिसमापने विगर्हन्ते प्राक्रमिकोऽयमिति । अतः शिष्टाचारानुमितं वचनसामर्थ्यात्प्रकान्तं कर्म परिसमापनीयमेवेत्यर्थः । + वक्तव्येति—देवतायाः प्रतिनिध्यभाव इति शेषः । + ( अ० ६ पा० ३ अ० ५ ) इत्यत्रेति शेषः ।

मनिर्वृत्तिमात्रं कर्तव्यम् । तत आहवनीयेनाप्यर्थात्सिध्येत् । इह तु वर्त्माद्यधिकरणताऽपि विधीयते । साऽऽहवनीय उपादीयमाने नोपसंन्हियेत । अनुपसंहारे च प्रयोगवचनो बाध्येत ।

अत्रोच्यते । यद्यपि वर्त्माद्यधिकरणताऽपि विधीयते होमे, गुणभूतत्वाद्धोमं समीचीनं करोतीति । तत्रानुपसंहारोऽपि न दोषः । अधिकरणान्तरेण समीचीनो भविष्यतीति । तस्माद्विकल्प एवेति । नेत्युच्यते । वर्त्मादिहोमसंबन्धोऽत्र विधीयते । स च प्रधानभूतः, न होमः । तस्मिन्ननुपसंह्रियमाणे न यथाश्रुतं कृतं स्यात् । अत्रोच्यते । संबन्धेऽपि विधीयमाने द्वयं विधीयते । एकं साध्यम्, एकं साधनम् । यत्साध्यं, तत्प्रधानम्* । स च होमः । तस्माद्विकल्पः÷ । संबन्धेऽपि च श्रूयमाणेऽवश्योपादातव्यो भवति होमः । होमश्चेदाहवनीयः प्राप्नोत्येवेति ।

---

पादयति यागसाधनत्वेन, तथा 'यवैः' इति । तत्र यः समुच्चयं कुर्यान्नासौ पुरोडाशं न निर्वर्तयति । शक्यते मिश्रैरपि *। किंतु वाक्येन योऽर्थः प्रतिपादितस्तं बाधेत । एवमिहापि ।

अपि च व्रीहियवाभ्यां मिश्राभ्यां पुरोडाशो निवर्तते, न प्रत्यक्षविरोधः। पदाहवनीययोस्तु समुच्चये, पदे वाऽऽहवनीयो निक्षिप्येत, आहवनीये वा पदम् । तत्र यदाऽऽहवनीयोऽधिकरणं,= तद्व्यवधानात्पदमधिकरणं + न स्यात् । एवं पदेऽपि× । तस्मान्न वस्तुतो न शब्देन÷ पदाहवनीययोः समुच्चयो घटते ।

उदाहरणे तु चोद्यते । 'पदे जुहोति' 'वर्त्मनि जुहोति', इतीदं जुहोति श्रवणं तुल्यमाहवनीयपदयोः एकत्रापि होमसामान्यमन्यत्रापि तदेव । तस्मादत्र सामान्यविशेषाभावाद्बाध्यबाधकभावो न घटते । अन्यत्तूदाहरणं मृग्यं, यत्र सामान्यविशेषौ स्तः । तदुच्यते । 'गार्हपत्ये पत्नीसंयाजान् जुहोति' इति ।

---

* प्रधान—ग. । ÷ विकल्प इति—ग. । * मिश्रैरपीति—पुरोडाशोऽभिनिर्वर्तयितुमित्यर्थः । = बाधते–ङ. ज. मु. । + आहवनीयोऽधिकरणमिति—आहवनीयः पदे निक्षिप्तः सन् होमाधिकरणं भवतीत्यर्थः । × तद्व्यवधानादिति—आहवनीयेन पदस्य व्यवधानादित्यर्थः । ÷ शब्दतो वा—मु०।

तन्न। आहवनीयस्यानङ्गत्वात्। कथमनङ्गत्वम्। विशेषेष्वप्राप्तेः। कथमप्राप्तिः। वर्त्माद्यधिकरणतायां सत्यामाहवनीयाधिकरणताया ज्ञानं करणं च प्रत्यसंभवात्। यद्धि वर्त्माद्यधिकरणमिति ज्ञायते, न तदाहवनीयाधिकरणं शक्यं ज्ञातुं कर्तुं वा। आह। यथा शक्यते तथा कर्तव्यमित्याख्यातार्थो भविष्यति। तस्माद्वर्त्मादि बाधित्वाऽऽहवनीयो भविष्यतीति। उच्यते। स्यादेतदेवं, यदि वर्त्मादिबाधामन्तरेणाऽऽहवनीयोपदेशो नावकल्पेत। द्वेधा हि शक्यते कर्तुं, वर्त्मादि बाधित्वा परिहृत्य वा। अत्र बाधायां वर्त्मनीति प्रत्ययोऽपह्नोतव्यो भवति। तस्मात्परिहारः श्रेयानिति।

आह। परिहारेऽपि, आहवनीये× भवतीति* प्रत्ययोऽपह्नूयेत। अपह्नोष्यामहे। भवत्याहवनीयप्रत्ययः× अशक्योऽसौ कर्तुमित्यपि किं न भवति। अशक्यं न करिष्यते। आह। योऽयं सामान्यप्रत्यय उच्यते, स सर्वेषु विशेषेषु कार्यमासजति। एवं चेद्वर्त्मादिहोमेषु चान्यत्र च तेनाऽऽहवनीयो विहितः। तत्र यो वर्त्मादिहोम आहवनीयप्रत्ययः स न शक्यः परिहर्तुम्। अतो वर्त्मादिहोमं* बाधित्वाऽवतिष्ठेतेति।

---

अत्र पत्नीसंयाजशब्दो विशेषं ब्रूते श्रुत्या। यदाहवनीये जुहोति ' इति सामान्यं श्रुत्या। अत्र बाध्यबाधकभावो घटते। यथा, दधि ब्राह्मणेभ्यो दीयतां, तक्रं कौण्डिन्यायेति। तत्र ब्राह्मणशब्देन ब्राह्मणजातिर्वर्णैरुपात्ता*। कौण्डिन्ये व्यक्तिरेव। न च कौण्डिन्ये सामान्यं विद्यते। यथा गोत्वमश्वादिभ्यो व्यतिरिच्यते, शाबलेयादिनिन्वेति। तच्च गोत्वं प्रत्यक्षेणोपलभ्यते। न च कौण्डिन्ये वस्तु विद्यतेऽवान्तरसामान्यं, यत्प्रत्यक्षेण गृहीत्वा शब्दः प्रवर्तेत। तस्मात्कौण्डिन्यशब्देन विशेष एवोच्यते।

---

× आहवनीयः—क० ग.। * भवन्तीति—ग.। × आहवनीये—ग.। * वर्त्मादिहोमं बाधित्वेति—होमे वर्त्माद्यधिकरणतां बाधित्वेत्यर्थः। अथवा ' वर्त्मादि बाधित्वा ' इति वा पाठ आवश्यक इति भाति। * उपात्तेति—व्यक्तयस्तु लक्ष्यन्त इत्यर्थः।

अत्रोच्यते। नैतदेवम्। न हि सामान्यवाची शब्दो विशेषानभिवदति। यदि चाभिवदेत्, अद्यजाते गवि नावकल्पेत। पूर्वदर्शनाभावात्। सामान्ये च दृष्टपूर्वत्वादवकल्पते। तस्मान्न सामान्यं विशेषानभिवदति। तस्मान्न वर्त्मादिहोम आहवनीयप्रत्ययः। अभिवदन्वा न मुख्यया वृत्त्याऽभिवदेत्। कथं तर्हि। लक्षणया। लक्षणा च श्रुत्या बाध्येत। तस्माद्वर्त्मादिहोमे श्रुत्या वर्त्मादिषु प्राप्तेष्वशक्य आहवनीयो विज्ञातुं कर्तुं चेति।

आह। ननु विपरीतमप्येतत्स्यात्, आहवनीये प्राप्ते वर्त्मादिप्रत्ययो न शक्य× इति। भवेदेवं, किंतु विशेषे वर्त्मादिप्रत्ययः श्रौतः, आहवनीयप्रत्ययो लक्षणया। तत्र श्रुतिप्रत्ययो बलीयानित्युक्तम्। ननुसामान्येऽप्याहवनीयप्रत्ययः श्रौतः। उच्यते। वर्त्मादिप्रत्ययोऽपि सामान्ये श्रौतः। होमे हि स विशिष्टे विधीयते, नाहोम एतद्विशेषयति*। तस्माद्वर्त्मादिहोमं वर्जयित्वाऽन्येषु होमेष्वाहवनीयः करिष्यत इति ॥ १६ ॥

---

अपि च वाक्यार्थे पदवचनमिदम्। =वाक्यार्थश्चेत्, न सामान्यं प्रत्याययति। तस्माद्विशेष एव शब्देनोच्यते। तत्र चानन्तर एव कार्यम्। इतरस्मिन्सामान्येन; विशेषः प्रकरणादिभिरवच्छेत्तव्यः। तस्मात्तत्र विप्रकर्षः। इह तु संनिकर्षः। अनेन न्यायेन विशेषश्रुतेन+ गार्हपत्येनाऽऽहवनीयो बाध्यते।

अथवा—इदमेवोदाहरणं संभवति। आहवनीयः पवमानेष्ट्यादिभिरुत्पादितः प्रयोजनमपेक्षते। तस्यानारभ्यवादेनाधिकरणभावो होमेषु विधीयते। इह तु पदविशिष्टो होम उत्पाद्यते। तत्राऽऽहवनीयो न शक्यते विधातुम्। पदेन होमस्य व्याप्तत्वात्। आहवनीयो विधीयमान उत्पत्तिवाक्येन यादृशा होमा अवगतास्तादृशाननूद्य विधीयते। तत्र शुद्धेषु÷ विधातुं युज्यते। अधिकरणोत्पन्नेषु× न घटते ॥ १६ ॥

---

× शक्यत इति—ग.। * विशेषयति—मु.। = पदवचनमिदमिति—कुण्डिनस्यापत्यं गोत्रमिति पूरणम्। + विशेषश्रुतेन—पत्नीसंयाजेषु श्रुतेनेत्यर्थः। शुद्धेषु—आधारविधुरेषु होमेष्वित्यर्थः। अधिकरणोत्पन्नेष्विति—ये साधिकरणा उत्पन्ना होमास्तेष्वित्यर्थः।

( वैमृधादिषु साप्तदश्यपुनःश्रवणस्यानारभ्याधीतसाप्तदश्योपसंहारार्थ-
त्वाधिकरणम् ॥ ९ ॥ )

[ ९ ] अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृत-
माज्यभागवत्प्राकृतप्रतिषेधार्थम् ॥ १७ ॥ पू०

अनारभ्य किंचिदाम्नायते, सप्तदश सामिधेनीरनुब्रूयादिति । तत्प्रकृतौ विशेषविहितेन पाञ्चदश्येन बाधितं सर्वविकृतीरनुप्राप्तं, कासुचिद्विकृतिषु पुनः श्रूयते—वैमृधेऽध्वरकल्पायां पशौ चातुर्मास्येषु मित्रविन्दायां त्रैधातव्यायामाग्रयणेष्ट्यामिति । तासु विकृतिष्वस्य श्रवणं किमर्थमिति विचार्यते । किं प्राप्तम् । अप्रकरणे यच्छास्त्रमाम्नातं विकृतिविशेषे पुनराविकृतं श्रूयते, तत्प्राकृतमङ्गजातं प्रतिषेद्धुम्, वैमृधादिषु सप्तदश सामिधेनीरनुब्रूयादिति, नान्यत्प्राकृतं कुर्यादिति=। न चैवं विज्ञायते, वैमृधादिष्वेव साप्तदश्यं नान्यासु विकृतिष्विति । तासु तत्प्रत्यक्षेण वाक्येन श्रुतं न शक्यं बाधितुम् ॥ १७ ॥

विकारे तु तदर्थं स्यात् ॥ १८ ॥

यदि तु सामिधेनीनां विकारः कश्चिच्छ्रूयेत, ततो विकारार्थमाम्नातमिति गम्यते । न तु विकारः श्रूयते । तस्मात्प्राकृतप्रतिषेधार्थमेवेति ॥ १८ ॥

वाक्यशेषो वा क्रतुनाऽग्रहणात्स्यादनारभ्यवि-
धानस्य× ॥ १९ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । वाक्यशेषोऽयं वैमृधादिष्वनारभ्यविधानस्य, सप्तदश सामिधेनीरनुब्रूयादेतासु विकृतिष्विति । तेनान्यासु विकृतिषु न स्यात् । ननु प्रत्यक्षश्रुतमन्यासु विकृतिषु तन्न

---

॥ १७ ॥ १८ ॥

— —

---

= किंचित्कुर्यात्—ग. । × ग्रहणात्—श्री. क. ग. मु. ।

शक्यं बाधितुम् । उच्यते । सत्यं प्रत्यक्षश्रुतं सामिधेनीषु, न तु तत्क्रतुना गृह्यते । क्रतुसंबन्धाभावात्प्रयोगवचनोऽपि न गृह्णाति, सति वैमृधादिसंबन्धकरे वाक्ये । यदेतत्साप्तदश्यमनारभ्योक्तं, तद्वैमृधादीनामङ्गमिति प्रत्यक्षं वाक्यम् । तस्मान्नान्या विकृतयस्तद्गृह्णन्ति । अक्रतुग्रहणे सति सामिधेनीनां साप्तदश्यं निष्फलत्वान्न क्रियेत । तस्मादनारभ्यविधेर्वैमृधादिषु वाक्यशेषः । आह । ननु वाक्यभेदो भवति । सामिधेन्यः सप्तदश भवन्ति । ताश्च वैमृधादिष्विति । उच्यते । द्वे× एते वाक्ये । पूर्वेण वाक्येन योऽर्थ उक्तस्तस्यैव विशेषः परेण वाक्येन विधीयत इति वाक्यशेष इति ॥ १९ ॥

( क्वचिद्दर्विहोमे स्वाहाकारपुनःश्रवणस्यानारभ्याधीतस्वाहाकारानुपसंहारकत्वाधिकरणन ॥ १० ॥

[ १० ] मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात्स्यात् ॥ २० ॥ सि०

दर्विहोमं प्रकृत्य श्रूयते, पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा, वायवे स्वाहा, इति । अस्ति चानारभ्यवचनं, वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयत इति । तत्र संदेहः । किं तस्यायं वाक्यशेषः, स्वाहाकारेणान्नं प्रदीयते देवेभ्य इति । एतस्मिन् दर्विहोमे पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहेति, उत नायं वाक्यशेषः; येष्वपि प्रदानेषु स्वाहाकारो नाऽऽम्नातस्तेष्वपि स्वाहाकार इति । किं प्राप्तम् । अनन्तरवृत्तेनाधिकरणेन वाक्यशेष इति । एवं प्राप्ते, ब्रूमः ।

---

॥१९॥

---

अनारभ्य प्रदानसंयोगेन* स्वाहाकारवषट्कारौ श्रूयेते । सोऽनारभ्यवादो= मन्त्रेण न शक्यो विशेष्टुम् । मन्त्रस्य प्रमाणान्तरप्राप्तमर्थं प्रकाशयितुं

---

× द्वे एवैते—ग. । * प्रधान—घ. मु. । = तौ चानारभ्यवादौ मन्त्रेण विशेष्टुं न शक्येते—

मन्त्रेषु वाक्यशेषत्वं न स्यात्। न हि विधायकाविधायकवाक्ययोरेकवाक्यत्वं भवति। विधायकं ब्राह्मणम्, अविधायको मन्त्रः। अपि च, अनन्तराधिकरणे न क्रतुसंबन्धोऽस्ति। इह तु संबन्धो गम्यते, वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयत इति। प्रदानं ह्यत्र प्रधानकर्म। अपि च, गुणोपदेशो+ भवति तस्मिन् द-

---

सामर्थ्यं, नानारभ्यवादं विशेष्टुम्। अविधायकत्वात्। न = चात्र 'छागो÷ वा मन्त्रवर्णात्' इति न्यायः। कथम्। तत्र यावदग्नीषोमीयापूर्वं तावन्मन्त्रः प्रयोक्तव्यः*। 'अग्नीषोमीयं पशुमालभेत' इति न कश्चित्पशुजातिविशेषः श्रूयते। तत्रावश्यं जातिविशेषो ग्रहीतव्यः। स यद्यनियमेन गृह्यते ततो यद्यपि चोदना न विरुध्यते, यत्तु नित्यवच्छ्रुतं मन्त्राम्नातं तत्पाक्षिकं कृतं स्यात्। तस्माद्येषा नियमेन चोदना सा मन्त्रवर्णालोचनेन× जातिविशेषपरा कल्प्यते। न च मन्त्रविध्योर्विशेषणविशेष्यता। प्राप्तार्थप्रकाशकत्वान्मन्त्राणामित्युक्तम्।

अपि÷ च 'पृथिव्यै स्वाहा' इति पृथिव्या इत्यनेन देवतोच्यते। तदर्थमिदमाम्नानम्। तस्याश्च× संप्रदानत्वात्स्वाहाकारो वषट्कारो वा प्राप्नोति। तत्र स्वाहाकारो नियम्यते वषट्कारनिवृत्त्यर्थम्। वषट्कारनिवृत्तिपरत्वाच्च वाक्यस्यान्येषु क्रतुषु स्वाहाकारो नास्तीत्याशङ्का= नास्ति। स्वाहा पृथिव्या

---

+ गुणोपदेशो भवतीति—'पृथिव्यै स्वाहा' इत्येवं चतुर्थ्यन्तपदेन देवतालक्षणगुणोपदेशो भवति। अतोऽस्य मन्त्रस्य देवताविधिकल्पकत्वमेव, न तु 'स्वाहाशिरस्केण मन्त्रेण जुहुयात्' इत्येवं स्वाहाकारविधिकल्पनयोपसंहारार्थत्वमिति भावः। = ननु षष्ठान्त्ये पशुविधेः, अविधायकस्यापिऽछागमन्त्रवर्णस्य च विशेषणविशेष्यभावो दृष्ट एवेत्यत आह—न चेति। तस्मान्न च—घ. मु.। ÷ (अ० ६ पा० ८ अ० १० सू० ३१)। * प्रयोक्तव्य इति—अग्नीषोमीयप्रकरणे मन्त्रस्य नित्यवदाम्नानादिति शेषः। × मन्त्रवर्णतो वचनेन—ध. मु.। ÷ भवतु वा विधिमन्त्रयोर्विशेषणविशेष्यभावस्तथाऽपि प्रकृतोदाहरणे नास्त्युपसंहार इत्याह—अपि चेत्यादिना। + यदि देवताविधानार्थं मन्त्राम्नानं किमर्थस्तर्हि स्वाहाकार इति चेदाह—तस्याश्चेति। = न भवतीति—ङ. ज.।

र्विहोमे। पृथिव्यै स्वाहा, इत्येवं समुच्चारणं भवति, न स्वाहा पृथिव्या इति। तस्मादन्येष्वपि दर्विहोमेषु स्वाहाकारोऽस्तीति ॥ २० ॥

अनाम्नाते च दर्शनात् ॥ २१ ॥

यत्रापि दार्विहोमे नाऽऽम्नायते स्वाहाकारः, तत्रापि क्वचिद्दृश्यते। घृतेन द्यावापृथिवी आपृणेथामित्यौदुम्बर्या* विशाखे जुहोति, आन्त्रादवस्रावयति,+ भूमिप्राप्ते स्वाहाकरोतीति प्राप्तं स्वाहाकारं दर्शयति ॥ २१ ॥

प्रतिषेधाच्च ॥ २२ ॥

क्वचिच्च प्रतिषेधो भवति, न स्वाहेति वचनं करोति, मन्त्रं च नाऽऽहेति। प्राप्तिपूर्वकः प्रतिषेधो भवतीत्यवाक्यशेषताऽध्यवसीयते ॥ २२ ॥

( अग्न्यातिग्राह्ययोर्विकृतावतिदेशाधिकरणम् ॥ ११ ॥ )

[ ११ ] अग्न्यातिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् ॥ २३ ॥ पू०

इदमाम्नायते, य एवं विद्वानग्निं चिनुत इति। तथा, उपष्टम्भनं वा एतद्यज्ञस्य यदातिग्राह्या इति। तत्र संदेहः। किमग्न्यातिग्राह्यं वि-

---

इति यद्येवं श्रूयेत तथा* सति योऽसावनारभ्यवादेन विहितः स्वाहाकारस्तमनूद्यास्मिन्नियम्येतेत्यादि× अस्मिंश्च पक्षे नान्येषु। न= चेदृशमपि वाक्यमिति ॥ २० ॥ २१ ॥ २२ ॥

---

× 'आपृणेथामित्यन्तरा कर्णौ जुहोति ' भूमिगत आज्ये स्वाहाकारः ' इति भाट्टदीपिकायां पाठो दृश्यते। सोमनाथीये तु, आपृणेथामित्यौदुम्बर्यां जुहोति । भूमिगते स्वाहाकारं करोति ' इति च ( अ० ८ पा० ४ अ० २ ) इत्यत्र दृश्यते। + अन्त्रान्—मु०। * तथा सतीति—तथा च स्वाहाकारस्य प्राथम्यादुद्देश्यलक्षणापत्तेरित्यर्थः। × अस्मिन्निति—पृथिवीदेवत्यप्रदानविशेषे नियम्येतेत्याद्याशङ्क्येतेत्यर्थः। = न चेदृशमपीति—ईदृगर्थकमपीदं वाक्य न भवतीत्यर्थः।

कृतौ चोदकः प्रापयति, उत नेति । किं प्राप्तम् । अग्न्यतिग्राह्यस्य विकृतावप्रवृत्तिरिति । अग्निश्चातिग्राह्यश्चाग्न्यतिग्राह्यम् । तद्विकृतौ न प्रवर्तते । कुतः । विकृतावुपदेशात् । विकृतौ हि तदुपदिश्यते । अथातोऽग्निमग्निष्टोमेनानुयजति, तमुक्थेन, तमतिरात्रेण, तं चतूरात्रेण, तं पञ्चरात्रेणेति । तथा, यत्पृष्ठ्येऽतिगृह्णीयात्प्राञ्चं यज्ञं पृष्ठानि संगृह्णीयुः, यदुक्थेऽतिगृह्णीयादिति । न नूनमग्न्यतिग्राह्यं चोदकः प्रापयति, यत्साक्षात्कस्यांचिद्विकृतौ चोद्यत इति ॥ २३ ॥

मासिग्रहणं च तद्वत् ॥ २४ ॥

इदं चाऽऽम्नायते, मासि मास्यतिग्राह्या गृह्यन्त इति । यदि चोदकः प्रापयेन्न, मासि मास्यतिगृह्यन्त इत्युपदेशः स्यात् ॥ २४ ॥

ग्रहणं वा तुल्यत्वात् ॥ २५ ॥ सि०

गृह्यते वा चोदकेनाग्न्यतिग्राह्यं, न ह्यस्यान्यैरङ्गैरस्ति विशेषः। अन्यान्यङ्गानि गृह्णाति, एतन्न गृह्णातीति नैतदवकल्पते ॥ २५ ॥

लिङ्गदर्शनाच्च ॥ २६ ॥

लिङ्गं खल्वापि दृश्यते, कङ्कचितं चिन्वीत, शीर्षचितं चिन्वीत, यः कामयेत सुशीर्षा अस्मिँल्लोके संभवेयमिति । तथा, पञ्चैन्द्रानतिग्राह्यान् गृह्णातीति । कङ्काकारतामैन्द्रतां च विशेषं ब्रुवन्नग्न्यतिग्राह्यस्य विकृतौ प्राप्तिं दर्शयति ॥ २६ ॥

ग्रहणं समानविधानं स्यात् ॥ २७ ॥

अथ यदुक्तं, विकृतावुपादिश्यत* इति । तत्परिहर्तव्यम् । अत्रोच्यते । यस्यां विकृतावुपदिश्यते, तस्यां प्रकृतौ च समानः स विधिः। अवशिष्टासु विकृतिषु चोदकः प्रापयतीति ॥ २७ ॥

---

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

—

यत्समानविधाने गुणकामानां प्रवृत्तिस्तन्नोपपद्यते= । कथम् । प्रकृतौ वैकल्पिकोऽग्निः, उत्तरवेद्यां निधातव्यः, स्थले वा । स चोदकेन वैकल्पिक एव

---

* उपादिश्यः—मु. । = तन्नोपपद्यत इति—गुणकामप्रवृत्तिः समानविधानप्रयोजनमिति मीमांसकसमयासिद्धं नोपपद्यते, विस्पष्टप्रयोजनान्तरसद्भावादित्यर्थः ।

मासिग्रहणमभ्यासप्रतिषेधार्थम् ॥ २८ ॥

अथ मासि ग्रहणं कथमिति । तदभ्यासप्रतिषेधार्थम् । नाहन्यहानि गृह्यन्ते, मासि मासि गृह्यन्त इति ॥ २८ ॥

( उपस्तरणाभिघारणाभ्यां सह चतुरवत्तसंपत्त्यधिकरणम् ॥ १२॥ )

[ १२ ] उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यमतुल्यत्वाल्लोकवदुत्पत्तेर्गुणभूतत्वात् ॥ २९ ॥ पू०

दर्शपूर्णमासयोराम्नायते, चतुरवत्तं जुहोतीति । तत्रायमर्थः सांशयिकः । किं सहोपस्तरणाभिघारणाभ्यां चतुरवत्तमुत प्रधानद्रव्यादेव चतुरवदातव्यम् । अधिकमुपस्तरणमभिघारणं चेति । किं प्राप्तम् । प्रधानद्रव्यादेव चतुरवदातव्यम् । कुतः । उत्पत्तितादर्थ्यात् । पुरोडाशोत्पत्तेर्होमार्थता भवति । यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीति* । यज्जुहोति तच्चतुरवत्तं कर्तव्यम् । पुरोडाशश्च होमार्थो नोपस्तरणाभिघारणे । तस्मात्पुरोडाशस्य चतुरवदातव्यमिति । अधिकमाज्यं स्यात् । अतुल्यं+

---

प्राप्नोति । तत्र पुनर्वचनं नियमार्थं भविष्यति । यथा खदिरादिपुनर्वचनं नियमार्थम् । यद्यग्निर्द्विरात्रादीनां× प्रकरण आम्नायेत, अग्निरत्र कर्तव्य इति, एवं नियामकं स्यात् । यथा 'खादिरो यूपो भवति' इति । अयं त्वग्निरनारभ्य सेतिकर्तव्यताको विहितः । तं विधायैभिर्वाक्यैस्तस्य+ क्रतुसंबन्धः क्रियते । एतानि च वाक्यान्यस्मिन्नेव प्रकरणे । तत्र च द्विरात्रादीनां प्रकरणं न विपरिवर्तते । येन द्विरात्रादिषु चोदकेन प्राप्तस्य नियामकानि स्युः । तेन द्विरात्रादीनां चोदकेन वैकल्पिक एवाग्निः । पुनर्वचनं तु यदाऽग्निस्तदा गुणकामानां प्रवृत्तिरिति ॥ २७ ॥ २८ ॥

---

× भवति—ग. । + अतुल्यं हि तत् । पुरोडाशौ होमार्थौ । तद्गुणभूतमाज्यम्—ग.।
× उक्थ्यादिविकृतिषु चयनपुनःश्रवणस्य यन्नियमार्थत्वमाशङ्कितं तन्निराकरोति—यदीत्यादिना । + एभिर्वाक्यैरिति—'अथातोऽग्निमग्निष्टोमेनानुयजन्ति, तमुक्थ्येन' इत्यादिवाक्यैरित्यर्थः ।

हि तत्पुरोडाशेन। पुरोडाशे होमार्थे तद्गुणभूतमाज्यम्। तेन यद्यपि सहाऽऽज्येन षडवत्तं भवति, तथाऽपि होमे चतुरवत्तमेव कृतम्। यथा लोके प्रस्थभुग्देवदत्त इत्युच्यते। यद्यपि सूपशाकादिभिराधिकः प्रस्थो भवति, तथाऽपि भुजौ प्रस्थो निर्दिश्यते, व्यञ्जनान्योदनार्थानि*॥ २९ ॥

तत्संस्कारश्रुतेश्च ॥ ३० ॥

प्रधानावदानसंस्कारार्थेन चोपस्तरणाभिघारणे श्रूयेते। यदुपस्तृणाति, अभिघारयति, अमृताह्लुतिमेवैनां करोतीति। तेनोपस्तरणाभिधारणसंयुक्तं= प्रधानद्रव्याच्चतुरवत्तं होतव्यमिति गम्यते ॥ ३० ॥

ताभ्यां वा सह स्विष्टकृतः सकृत्त्वे द्विरभिघारणेन तदाप्तिवचनात् ॥ ३१ ॥ सि०

ताभ्यां वा सह द्विर्हविषोऽवदाय चतुरवत्तं कर्तव्यम्। कुतः। स्विष्टकृतः सकृत्त्वे द्विरभिघारणेन तदाप्तिवचनं भवति। सकृदुपस्तृणाति, सकृदवद्यति, द्विरभिघारयति, चतुरवत्तस्याऽऽप्त्यै, इति द्विरभिघारणेन चतुरवत्तं पूर्णं दर्शयति। इतरथा षडवत्तं तेन पूर्येत। आह। दर्शनमेतत्। प्राप्तिरुच्यतामिति। अत्रोच्यते। चतुरवत्तं होमे श्रूयते, चतुरवत्तं जुहोतीति, न होमार्थे पुरोडाशे सांनाय्ये वा।

---

॥ २९ ॥ ३० ॥

---

यज्जुहोतीति यदि जुहोतिरनूद्येत तथा सति हविर्लक्षणार्थमुच्चार्येत। अयं दोषः स्यात्। तस्मादियं वचनव्यक्तिर्नास्ति। यच्चतुरवत्तं* तज्जुहोतीति। तच्चतुरवत्तं विद्यते=। विद्यमानत्वात्तच्छक्यतेऽनुवदितुम्। अनूद्य+ चतुर-

---

* ओदनार्थानीति—ग.। = संयुक्तप्रधानद्रव्याच्चतुरवत्तं कर्तव्यं, होतव्यमिति—ग.। × का तर्हि वचनव्यक्तिरिति चेत्तद्दर्शयति—यच्चतुरवत्तमिति। = विद्यत इति—हविषो द्विरवदानविधानादुपस्तरणाभिघारणविधानाच्च प्राप्तं विद्यत इत्यर्थः। + अनूद्य च तस्य होम—घ. ज.।

नैवं श्रूयते, यद्धोमार्थं द्रव्यं तच्चतुरवत्तं कुर्यादिति। चतुरवत्तं श्रूयमाणं होमेनासंबध्यमानमनर्थकं स्यात्।

अथोच्यते: प्रयोगवचनग्रहणादर्थवद्भविष्यति। तन्न। साक्षाद्धोमसंबन्धे वचने सति चतुरवत्तं जुहोतीति, नान्यत्प्रयोगवचनं कल्प्यते। अस्मिंश्च साक्षाद्वचने तदर्थादवत्तं, नातदर्थादिति न विशेषः श्रूयते। तदर्थादतदर्थाद्वा चतुरवखण्डनसंयुक्तं द्रव्यं होतव्यम्। एवं च श्रुतिः परिगृह्यते। इतरस्मिन् पक्षे वाक्यं परिगृह्येत। द्विर्हविषोऽवद्यतीति च विकल्पः स्यात्। यदि हविश्चतुरवत्तं दीयेत, तथेदमपरं श्रवणमसदनुवादभूतं स्यात्। चतुरवत्तं वा विकल्पयेत्। अभावाच्च पक्षे विकल्पो न न्याय्यः स्यात्। तस्मात्सहोपस्तरणाभिघारणाभ्यां चतुरवत्तमिति॥ ३१॥

तुल्यवच्चाभिधाय सर्वेषु भक्त्यनुक्रमणात्॥ ३२॥

चत्वारि वा एतानि देवदधान्यवदानानि, यदुपस्तृणाति तदनुवाक्यायै, यत्पूर्वमवदानं तद्याज्यायै, यदुत्तरं तद्देवतायै, यदभिघारयति तद्वषट्कारायेति, चतुरवत्तस्य चत्वार्यवदानानि संकीर्त्यानुवाक्यादिभिर्भक्तिवादेनावयवशः संकीर्तयन्नुपस्तरणादीनि दर्शयति। तस्मात्सहोपस्तरणाभिघारणाभ्यां चतुरवत्तमिति। दधशब्दो भागधेयवचनः। तद्यथा, कङ्कटकाय दधं, नापिताय दधमिति। देवदधानि—देवभागा इत्यर्थः॥ ३२॥

(उपांशुयाजे, उपस्तरणाभिघारणयोर्लोपेऽपि हविष एव चतुरवत्तसंपत्त्याधिकरणम्॥ १३॥)

[ १३ ] सान्तदश्यवान्नियम्येत॥ ३३॥ पू०

---

वत्तस्य होमसंबन्धः क्रियते। तत्र होमो वा चतुरवत्तार्थः, चतुरवत्तं वा होमार्थमिति ×। यदि होमश्चतुरवत्तार्थः, तदाऽदृष्टं कल्पनीयम्*। अथ चतुरवत्तं होमार्थं, ततो दृष्ट एवार्थो होमनिर्वृत्तिः। तस्माच्चतुरवत्तं होमार्थमिति॥ ३१॥३२॥

---

× इतीति—इति प्रसङ्गाच्चिन्त्यते इति शेषः। * कल्पनीयमिति—न हि होमेन चतुरवत्त किंचिद्दृष्टं प्रयोजनमस्तीति शेषः।

दर्शपूर्णमासयोरुपांशुयाजोऽस्ति +। तत्र* चतुरवत्तं जुहोतीति। तत्र संशयः। किमुपांशुयाजे चतुरवत्तं कर्तव्यमुत नेति। किं प्राप्तम्। साप्तदश्यवन्नियम्येत। यथा, साप्तदश्यमनारभ्याधीतं परिगणितासु विकृतिषु पुनः श्रूयमाणं वाक्यशेषात्तास्वेव÷ नियम्यते, एवमिदमपि चतुरवृत्तमुपस्तरणाभिघारणाश्रयत्वाद्यत्र ते तत्रैव नियम्येत, औषधसांनाय्ययोः उपांशुयाजे* न स्यादिति ॥ ३३ ॥

हाविषो वा गुणभूतत्वात्तथाभूतविवक्षा स्यात् ॥ ३४ ॥

वाशब्दः पक्षं व्यावर्तयति। नैतदस्ति, नोपांशुयाजे चतुरवत्तमिति। होमे चतुरवत्तं गुणो विधीयते। स उपांशुयाजहोमेऽपि स्यात्। अत्रापि चतुरवदातव्यम्। अथ यदुक्तम्। औषधसांनाय्ययोरेव चतुरवत्तम्, उपस्तरणाभिघारणाश्रयत्वादिति। नोपस्तरणाभिघारणवचनं चतुरवत्तस्य वाक्यशेषभूतम्। यथा, सप्तदश सामिधेनीरनुब्रूयादिति, मित्रविन्दादिषु सप्तदशानुब्रूयादिति=। नैवमिह, चतुरवद्येत्+ कथम्, उपस्तृणीयात्, अभिघारयेच्चेति। कथं तर्हि। चतुरवदानसंयुक्तं द्रव्यं जुहुयात्, हविश्चोपस्तृणीयात्, अभिघारयेच्चेति। यत्र हविष्युपस्तीर्यमाणेऽभिघार्यमाणे च चतुरवत्तयुक्तं प्रदानं भवति, तत्र न प्रधानद्रव्याच्चतुरवदातव्यम्। यत्र पुनः प्रधानद्रव्याच्चतुरवखण्डनमन्तरेण न चतुरवत्तं भवति, तत्र प्रधानद्रव्याच्चतुरवदातव्यम्। चतुरवत्तभूतमिह होतव्यं विवक्ष्यते, नेतस्ततो वा चतुरवदातव्यामिति। तस्मादुपांशुयाजेऽपि चतुरवत्तं कर्तव्यमिति ॥ ३४ ॥

---

॥ ३३ ॥ ३४ ॥

---

+ दर्शपूर्णमासयोरस्त्युपांशुयागः—ग.। * अस्ति च तत्र—ग.। ÷ वाक्यशेषत्वात्—ग.। * यागे—ग.। = अनुक्रमात्—मु.। + चतुरवत्तं, तत्कथम्—ग.।

( दर्शपूर्णमासयोरसोमयाजिनः पुरोडाशद्वयश्रवणस्यानुवादत्वाधिकरणम् ॥ १४ )

[ १४ ] पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेशस्तच्छ्रुतित्वाद्वैश्यस्तोमवत् ॥ ३५ ॥ पू०

दर्शपूर्णमासयोरिदमाम्नायते, पुरोडाशाभ्यामेवासोमयाजिनं याजयेत्, यावेतावाग्नेयश्चैन्द्राग्नश्चेति। तत्रैष संशयः। किमधिकारश्रुतिवाक्यशेषोऽयम्—दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्याभ्यां पुरोडाशाभ्यामसोमयाजीति, अथ किमधिकयोः कर्मान्तरयोरुत्पत्तिः—अपराभ्यामेवंजातीयकाभ्यां पुरोडाशाभ्यां यजेतेति, अथवा, अङ्गकर्तुरुपदेशः—आभ्यां पुरोडाशाभ्यामृत्विग्याजयेदिति, अथवा,* असोमयागकाले, आभ्यां यजेतेति कालोपदेशः, उतैन्द्राग्नस्य विधिराग्नेयस्य चानुवादः, अथवोभयोरनुवाद इत्येते पक्षाः।

किं तावत्प्राप्तम्। अधिकारशेष इति। यदेतत्स्वर्गकामो यजेतेति तस्य शेषः, आभ्यां पुरोडाशाभ्यामसोमयाजी स्वर्गकामो यजेतेति। कुतः। तच्छ्रुतित्वात्। तच्छ्रुतिमन्तौ हि पुरोडाशौ शब्देनानूद्येते। तेन नाभ्यधिकौ। असोमयाजिनश्च कर्तुर्व्यापार आभ्यां संबध्यते श्रुत्या, न कालः। स हि लक्ष्येत। श्रुतिश्च लक्षणाया= गरीयसी। तत्र सोमयाजिनो वा न पुरोडाशौ। असोमयाजिनो वा न सांनाय्यम्। यदि पुरोडाशावधिकृत्यासोमयाजी विधीयते, ततो नासोमयाजी सांनाय्ये। तत्रैवकारः समर्थितो भवति। पुरोडाशाभ्यां केवलाभ्यामसोमयाजी, न सांनाय्येनेति। अथासोमयाजिनमधिकृत्य पुरोडाशौ विधीयेते, तथा न सोमयाजिनः पुरोडाशौ। तत्रास्थाने, एवशब्दो भवति, पुरोडाशाभ्यामसोमयाजिनमेवेति। तथा—

यमेव+ विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम्।
यस्ते न द्रुह्येत्कतमच्चनाह तस्मै मां ब्रूया निधिपाय ब्रह्मन्॥

इति।

---

* किंवा–ग.। = लक्षणात्–ग.। + निरुक्तम्–( अ० २ पा० १ ख० ६ )।

यं शुचिमेव विद्या इति यदितव्ये यमेव विद्याः शुचिमिति। एवमत्रापि। तदुभयोरपि वचनव्यक्त्योरधिकारश्रुतिवाक्यशेष इत्युभयथाऽयं पूर्वपक्षो भवति। यथा वैश्यस्तोमेऽधिकारश्रुतिशेषः, वैश्यो वैश्यस्तोमेन यजेतेति। तद्वदत्राप्यधिकारश्रुतिशेष एवेति ॥३५॥

न त्वनित्याधिकारोऽस्ति विधेर्नित्येन = संबन्धस्तस्माद्वाक्यशेषत्वम् ॥ ३६ ॥

तुशब्दः पक्षं व्यावर्तयति। नैतदेवम्, अधिकारवाक्यशेष इति। नित्यौ हि दर्शपूर्णमासौ, यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति। नित्यौ च तत्रेमौ पुरोडाशौ फलं प्रति सहकारिणौ। तावनित्यमसोमयाजिनं प्रति विधीयेते इत्यनुपपन्नम्। कथम्। नित्यौ हि दर्शपूर्णमासयोर्भविष्यतः। यश्चासोमयाजी तस्योपकरिष्यत इति नोपपद्येत। पुरोडाशविधेर्नित्येन दर्शपूर्णमाससमुदायेन संबन्धः। तस्मान्नासोमयाज्यधिकारश्रुतिवाक्यशेषः ×। किं तर्हि। अधिकयोः कर्मान्तरयोरुत्पत्तिरिति। नैवमभिसंबन्धः क्रियते। यावेतौ पुरोडाशौ दर्शपूर्णमासयोर्विहितौ, तौ प्रत्यसोमयाजी विधीयत इति। कथं तर्हि। असोमयाजी यः स्वर्गकामः+ स आग्नेयं कुर्यादैन्द्राग्नं चेत्येते कर्मणी विधीयेते। विधीयेते चेत्पूर्वाभ्यां कर्मान्तरे। तत्र, यावेतावित्यनुवादवचनं धर्मापेक्षं भविष्यति। यथा, एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वेति। एवशब्दश्च पुनरित्यस्मिन्नर्थे भविष्यति। यथा क्षीरेण भुक्त्वा देवदत्तः क्षीरेणैव भुञ्जीतेति *। भुञ्जीतैवेति पुनरिति गम्यते। एवमिहापि सोमयाजिनश्चासोमयाजिनश्च दर्शपूर्णमासविधानेन विहितौ पुरोडाशौ पुनरसोमयाजिनस्तौ विधीयेते, पुरोडाशाभ्यामिवासोमयाजिनं याजयेदिति। तद्धर्मकाम्यामिति गम्यते ॥ ३६ ॥

---

॥ ३५ ॥ ३६ ॥

---

= विधौ-क० मु०। × तस्मान्न सोम-क० ग०। + स स्वर्गकामः सन्नाग्नेयं-क०।
* भुञ्जीतेति। भुक्त्वा देवदत्तो भुञ्जीतैवेति—क०।

सति च नैकदेशेन कर्तुः प्रधानभूतत्वात् = ॥ ३७ ॥

सति चाधिकारशेषे पुरोडाशयोरसोमयाजिकर्तुसंबन्धो चोपपद्यते। अधिकारशेषे हि प्रधानभूतः कर्ता निर्दिश्यते×। न चासति फले प्रधानभाव उपपद्यते। न च दर्शनपूर्णमासैकदेशभूतौ पुरोडाशौ + फलस्य साधकौ भवतः। न च वचनप्रामाण्यात्फलं कल्पयिष्यते। वचनव्यक्त्यन्तरस्य भावात्। तस्मादपि नास्त्याधिकारशेष इति ॥ ३७ ॥

कृत्स्नत्वात्तु तथा स्तोमे ॥ ३८ ॥

यदुपवर्णितं, वैश्यस्तोमवदिति। युक्तं वैश्यस्तोमे। कृत्स्नो वैश्यस्तोमो न कस्यचिदेकदेशः। तत्र फलं संभवति। न चात्र फलं संभवति। न च तत्र* किंचिदेकं नित्यमनित्येन संबध्यते। तस्माद्वैषम्यं = वैश्यस्तोमेन ॥ ३८ ॥

कर्तुः स्यादिति चेत् ॥ ३९ ॥

इति चेन्मन्यसे, नाधिकारश्रुतिशेषोऽवकल्पत इति। तत्रोच्यते। कर्मान्तरयोरुत्पत्तिर्नावकल्पते। यावेतौ—इति व्यपेक्षावचनं × लक्षणया कल्प्येत*। कथं तर्हीदमिति। अङ्गकर्तुरुपदेशः। अङ्गे यः कर्ता, न प्रधाने। याजयेदिति हेतुकर्तुरेवैतत्प्रत्यक्षं वचनम्। लक्षणया यजेः कर्तुः। अपि च नित्यानित्ययोर्विरुद्धः संबन्धोऽभ्युपगतो न भविष्यति। न चैकदेशस्य फलं कल्पयिष्यते। असोमयाजी पुरोडाशाभ्यां याजयितव्य इति याजयितुरुपदेशोऽभ्युदयाय भविष्यति ॥ ३९ ॥

न गुणार्थत्वात्प्राप्ते च नोपदेशार्थः ॥ ४० ॥

नैतदेवम्, अङ्गकर्तुरुपदेश इति। अङ्गकर्ता हि प्रधानकर्तुरेव क्रियोपदेशेन गुणभूतः प्राप्नोति। न चास्य फलं श्रूयते। न च क-

---

॥ ३७ ॥ ३८ ॥ ३९ ॥

---

= प्रधानत्वात्—श्री.। × निर्दिश्येत—क.। + पुरोडाशयागौ—ग.। * अग—क० मु०। = विषमं—ग.। × व्यपेक्षवचनं—ग.। * कल्पेत—ग. मु.।

ल्पयितुं शक्यम्, उपग्रहविशेषात्। न च प्राप्तस्य पुनरुपदेशे किंचिदस्ति प्रयोजनम्। अर्थप्राप्तस्य त्वनुवादः पुरोडाशयोर्यागं विधातुम्। न च परिसंख्या। त्रिदोषत्वात्। सोमयाजिनश्च विनाऽङ्गकर्त्राऽसंभवान्*। तस्मात्कर्मान्तरयोरुत्पत्तिरिति ॥ ४० ॥

कर्मणोस्तु प्रकरणे तन्न्यायत्वाद्गुणानां लिङ्गेन कालशास्त्रं स्यात् ॥ ४१ ॥

तुशब्दः पक्षं व्यावर्तयति। नाधिकयोः कर्मान्तरयोरुत्पत्तिरिति। एतयोः कर्मणोः प्रकरणे काल उच्यते। नासोमयाजिनं कर्तारं प्रति पुरोडाशौ विधीयेयाताम्। कुतः। तन्न्यायत्वात्। स हि न्यायः, योऽसावुक्तः। अपि× वा कालमात्रं स्याददर्शनाद्विशेषस्येति। इहापि स एव न्यायः। असोमयागकाले दर्शपूर्णमासयोरेतौ पुरोडाशौ भवत इति। किमेवं भविष्यति। फलकल्पनादोषो न भविष्यति। यदा समुदायः= पूरयिष्यते, तदा सर्वेषां संहतानां फलं भविष्यतीति+। शक्यते चासोमयागेन विशेषलिङ्गेन कालो लक्षयितुम्। तस्मिन्न काले पुरोडाशाभ्यामेव यजेत, न सांनाय्येनेति ॥ ४१ ॥

यदि तु सांनाय्यं सोमयाजिनो न ताभ्यां समवायोऽस्ति विभक्तकालत्वात् ॥ ४२ ॥

तुशब्दः पक्षं व्यावर्तयति। यदि सांनाय्यं सोमयाजिनः, न कालार्थं श्रवणं भवितुमर्हति। सांनाय्यं च सोमयाजिन एव। अनाशङ्किते तास्मिन्नाशङ्कितवचनम्÷। यथा—

शास्त्राणि चेत्प्रमाणं स्युर्गतास्ते परमां गतिम्। इति।

एवं हि श्रूयते, नासोमयाजी संनयेदिति। एवं सति न कालार्थं श्रवणम्। कथम्। नैव ताभ्यां पुरोडाशाभ्यां सांनाय्यस्य समवायः प्राप्तः। विभक्तकालत्वात्। प्राक् सोमयागात्पुरोडाशौ। ऊर्ध्वं सां-

---

॥ ४० ॥ ४१ ॥ ४२ ॥

---

* अङ्गकर्तुः—ग.। × (अ० ४ पा० ४ अ० ३ सू० ६)। = समुदाये व्यापरिष्यते—क० मु०। × भविष्यति—क० मु०। ÷ अस्मिन्—ग.।

नाय्यं* प्राप्तमेव। न तदर्थं यतितव्यम्। तस्मान्न कालार्थं श्रवणं कर्मान्तरचोदनैवेति× ॥ ४२ ॥

अपि वा विहितत्वाद्गुणार्थायां पुनःश्रुतौ संदेहे श्रुतिर्द्विदेवतार्था स्याद्यथाऽनभिप्रेतस्तथाऽऽग्नेयो दर्शनादेकदेवते ॥ ४३ ॥

अपि वेति पक्षव्यावृत्तिः। नैतत्कर्मान्तरचोदनेति। अनुवाद आग्नेयस्य। विहितत्वात्। विहितो ह्यसावुभयत्र, यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीति। ऐन्द्राग्नस्य भवति विधिः। उभयत्राविहितत्वात्। स यत्र न प्राप्नोति। पौर्णमास्यामैन्द्राग्नविधानार्थैषा श्रुतिः। यथाऽनभिप्रेतस्तथाऽऽग्नेय उच्चरितः। विधानं चोभयत्र। तस्य दर्शनं च, आग्नेयं चतुर्धा करोतीति। तथा साकंप्रस्थायीये,= आज्यभागाभ्यां प्रचर्याऽऽग्नेयेन पुरोडाशेनेति ॥ ४३ ॥

विधिं÷ तु बादरायणः ॥ ४४ ॥

तुशब्द एतमपि पक्षं व्यावर्तयति। नैतदेवम्, आग्नेयेऽनुवाद ऐन्द्राग्ने विधिरिति। उभयोः कालविधिः स्यात्। कुतः। बादरायण आचार्यो मन्यते स्म, प्रागपि सोमयागात्सांनाय्यविधिरिति। असोमयाजिनोऽपि सांनाय्यं श्रूयते, तद्धु संनयेदिति। तथा, तथेह स्माऽऽहुर्गोपायनाः सांनाय्यमेवासोमयाजिनः। तस्मात्कालार्थः संयोग इति ॥ ४४ ॥

---

॥ ४२ ॥ ४३ ॥ ४४ ॥

---

* सांनाय्यं, प्राप्तत्वे च न—ग.। × चोदनेति—ग.। = श्रुतिर्हि देवतार्था—ग.। = साकंप्रस्थाय्ये—इत्येव सर्वेष्वादर्शपुस्तकेषु पाठो दृश्यते। परंतु स पाठो व्याकरणाननुगत इत्युपेक्षितः। किंच 'साकंप्रस्थायीये स्विष्टकृदिडं च तद्वत्' (अ० ३ पा० ५ अ० २ सू० १३) इति सूत्रे तत्रत्यभाष्ये च साकंप्रस्थायीयशब्द एव पठ्यमानो दृश्यते। ÷ विधिस्तु—श्री०।

प्रतिषिद्धविज्ञानाद्वा× ॥ ४५ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति, कालविधिरिति । नाप्यधिकयोः कर्मणोरुत्पत्तिः । न* वाऽऽग्नेयस्यानुवादः, ऐन्द्राग्नस्य विधिः । किं तर्हि । उभयोरनुवादः । कथम् । सोमयाजिनः सांनाय्यविधानार्थमेतद्वाक्यम् । अतो नैन्द्राग्नस्यापि विधिः । भिद्येत हि तदा वाक्यम् । एवमभिसंबन्धः क्रियते । असोमयाजिनः पुरोडाशावेतौ, यौ प्राप्तौ । सोमयाजिनः सांनाय्यमपरमपीति । पुरोडाशाभ्यामेवासोमयाजिनं याजयेत् । यावेतावाग्नेयश्चैन्द्राग्नश्च, सांनाय्येन सोमयाजिनमिति, एवमेकेन वाक्येन सोमयाजिनः सांनाय्यं विधीयते । अपरेणापि वाक्येनासोमयाजिनः । तस्मादुभयोरप्यनुवाद इति ॥ ४५ ॥

तथा चान्यार्थदर्शनम् ॥ ४६ ॥

अन्यार्थोऽपि चैतमर्थं दर्शयति, न कर्मान्तर÷ इति । कथम् । चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायामिति । कर्मान्तरोत्पत्तावभ्याधिका आहुतयो भवेयुरिति ॥ ४६ ॥

[ उपांशुयाजे ध्रौवाज्यविधानाधिकरणम् ॥ १५ ॥ ]

[ १५ ] उपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रुतित्वाद्यथाकामी प्रतीयेत ॥ ४७ ॥ पू०

दर्शपूर्णमासयोराम्नायते, उपांशुयाजमन्तरा यजतीति । तत्र द्रव्यं प्रति संदेहः । किमनियम उत नियतं किंचिद्द्रव्यमिति । किं प्राप्तम् । न किंचिद्धवीरूपं श्रूयते । तस्माद्यथाकामी प्रतीयेत । तत्रोच्यते । श्रूयते हवीरूपम्, आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति । तस्मादाज्यद्रव्यकं स्यात् । उच्यते । एवमप्यनियमः । यत्किंचिदाज्यं गृहीत्वेज्येतेति ॥ ४७ ॥

---

॥ ४५ ॥ ४६ ॥ ४७ ॥

---

× प्रतिषिद्धविधानाद्वा–श्री. ग. । * न च–ग. । ÷ कर्मान्तरमिति–ग. ।

ध्रौवाद्वा सर्वसंयोगात् ॥ ४८ ॥ सि०

ध्रौवाद्वाऽऽज्यादिज्येत्, न यतः कुतश्चित् । कुतः । सर्वसंयोगात् । सर्वयजातिभिर्हि संबद्धं,* सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमिति + । तस्माद्ध्रौवाज्यद्यजेतेति ॥ ४८ ॥

( उपांशुयाजस्य दर्शपूर्णमासतन्त्रगतदेवतान्यतमदेवतानियमाधिकरणम् ॥ १६ ॥ )

[ १६ ] तद्वच्च देवतायां स्यात् ॥ ४९ ॥ पू०

देवतां प्रत्युपांशुयाजस्य संशयः । किमानियमः, नियम इति । किं प्राप्तम् । यद्वद्द्रव्यं प्रत्यानियमः पूर्वाधिकरणपूर्वपक्षे, तद्वद्देवतायामनियमः । नन्वग्नीषोमौ विधीयेते । उच्यते । पुराकल्पसरूपोऽयं= न विधिसरूपः । इमास्तर्हि, विष्णुरुपांशु यष्टव्य इत्येवमादिना देवता विधीयन्ते । उच्यते । उक्तमजामिकरणवचनार्था × एते अर्थवादा इति । तस्मादनियमः ॥ ४९ ॥

तान्त्रीणां= प्रकरणात् ॥ ५० ॥ सि०

न हि देवतामन्तरेण यागो भवति । न च वचनमन्तरेण देवता । न चान्यस्य विहिता देवताऽन्यस्यावकल्पते । तस्मात्प्रकृतानां तन्त्रभ* वानामन्यतमया देवतया प्रकृतत्वादेकवाक्यतां कृत्वा देवतामवगमिष्यामः । एकया च कृतार्थत्वाद् यां कांचिद् देवतामिति ॥ ५० ॥

( उपांशुयाजे वैकल्पिकविष्णवादिदेवता-पौर्णमासीमात्रकालिकत्वोभयप्रतिपादनाधिकरणम् ॥ १७ ॥

[ १७ ] धर्माद्वा स्यात्प्रजापतिः ॥ ५१ ॥ पू०

तान्त्रीणामन्यतमा** देवतेत्युक्तम् । तत्र संदेहः । किं तान्त्रीष्वनियमः, अथवा प्रजापतिः, अथवाऽग्निः, अथवा विष्णुः । अमावा-

॥ ४८ ॥ ४९ ॥ ५० ॥

* तत्संबद्धम्-क. । + आज्यम्-मु० । = पुराकल्परूपः—क. मु. । × उक्तमिति—( अ० २ पा० २ अ० ४ ) इत्यत्रेति शेषः । = तान्द्रीण-मु० । तन्द्र-मु. । ** तान्द्रीणां—मु. ।

स्यायां चोपांशुयाजः, अथवा पौर्णमास्यामुपांशुयाजः, विष्णुश्च देवता। अथवोभयत्रोपांशुयाजः, देवताविकल्पश्चेति। अथवा पौर्णमास्यामेवोपांशुयाजः, तत्रैव विष्णवाद्या देवता इत्येते पक्षाः। किं तावत्प्राप्तम्। प्रजापतिर्देवता। कुतः। धर्मात्। तस्य ह्युपांशुत्वं धर्मः, तस्माद्यत्किंचित्प्राजापत्यं यज्ञे क्रियते, उपांश्वेव तत्क्रियत इति। उपांशुयाजनामकत्वाच्चास्य कर्मण इदमवगम्यते नूनमस्योपांशुत्वं धर्म इति। आत्मनि साधनेषु च नोच्चैस्त्वेनास्य संबन्ध इति। तेन प्रजापतिरिति गम्यते। स ह्यनुच्चैर्धर्मकः। अन्यस्यां सत्यामुच्चैस्त्वेनास्य संबन्धो भवेदिति ॥ ५१ ॥

देवतायास्त्वनिर्वचनं तत्र शब्दस्येह मृदुत्वं तस्मादिहाधिकारेण ॥ ५२ ॥

तुशब्दः पक्षं व्यावर्तयति। नैतदस्ति, प्रजापतिर्देवतेति। तान्त्रीणां* मुख्योऽग्निर्देवता स्यात्। प्रजापतेर्देवताया अनिर्वचनं धर्मस्तूष्णींभावः, प्रजापतिं मनसा यजेदिति। ननूपांशुत्वं प्रजापतेर्धर्मः, तस्माद्यत्किंचित्प्राजापत्यं क्रियते, उपांश्वेव तत्क्रियत इति। उच्यते। अनुवादसरूपत्वादर्थवाद एषः, प्रजापतिं मनसा यजेदित्यस्य विधेः। इह पुनरुपांशुयाजे तत्र शब्दस्य मृदुत्वम्। तस्मान्न प्रजापतिः, अधिकृतानां मुख्योऽग्निः स्यादिति ॥ ५२ ॥

विष्णुर्वा स्याद्धौत्राम्नानादमावास्याहविश्च स्याद्धौत्रस्य तत्र दर्शनात् ॥ ५३ ॥

वाशब्दात्पक्षो निवर्त्यते ×। नैतदेवम्, अग्निः स्यादिति। कथं तर्हि। विष्णुर्देवता स्यात्। हौत्राम्नानात्। अमावास्यां प्रकृत्य वैष्णवं होत्रमाम्नायते, इदं** विष्णुर्विचक्रमे, प्रताद्विष्णुः+ स्तवते वीर्येणेति। तदेवमर्थवद्भवति। यदि विष्णुदेवत्य उपांशुयाजः। एव-

॥ ५७ ॥ ५२ ॥

* तान्द्रीणां—मु०। × विपारवर्तते—ग.। ** ऋ. सं० (अष्ट० १ अ० २ व.७)। + ऋ० सं० ( अष्ट० २ अ० २ व० २४ )।

ममावास्यायामाम्नानमर्थवद्भवति, यद्यमावास्यायामुपांशुयाजः । तस्मादमावास्यायामुपांशुयाजः स्यादिति ॥ ५३ ॥

अपि वा पौर्णमास्यां स्यात्प्रधानशब्दसंयोगाद्गुणत्वान्मन्त्रो यथाप्रधानं स्यात् ॥ ५४ ॥

यदुक्तं विष्णुर्देवतेति तद्गृह्यते, न त्वमावास्यायामुपांशुयाज इति । विधायको हि तस्य शब्दः पौर्णमास्याम्, आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति । तं मन्त्राम्नानं न शक्नोत्यमावास्यायामाक्रष्टुम् । उपांशुयाजे मन्त्रस्य विधानाद्यत्रोपांशुयाजस्तत्र + मन्त्र इति गम्यते, न यत्र मन्त्रस्तत्रोपांशुयाज इति । उपांशुयाजस्य हि मन्त्रो विधीक्ते, न मन्त्रस्योपांशुयाजः ॥ ५४ ॥

आनन्तर्यं च सांनाय्यस्य पुरोडाशेनादर्शयत्यमावास्याविकारे ॥ ५५ ॥

इतश्च नामावास्यायामुपांशुयाजः । अमावास्याविकारे हि साकंप्रस्थायीये* सांनाय्यस्याऽऽनन्तर्यं पुरोडाशेन दृश्यते । कथम् । आज्यभागाभ्यां प्रचर्याऽऽग्नेयेन पुरोडाशेनाग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नाह, इत्याग्नेयादानन्तर्यं सांनाय्यस्य दर्शयति, नोपांशुयाजस्य । तस्मान्नामावास्यायामुपांशुयाज इति ॥ ५५ ॥

अग्नीषोमविधानात्तु पौर्णमास्यामुभयत्र विधीयते ॥ ५६ ॥

तुशब्दः पक्षं व्यावर्तयति । नैतदेवं, पौर्णमास्यामेवोपांशुयाज इति । उभयत्र स्यात् । देवताविकल्पश्च= । कुतः । अविशेषेण ह्युपांशुयाज। श्रूयते, उपांशुयाजमन्तरा यजतीति । यदेतत्, आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति । देवताविधानमेतत्पौर्णमास्याम् । तस्मादग्नीषोमदेवत्यः पौर्णमास्यामुपांशुयाजः । मन्त्राम्नानाद्वैष्णवोऽमावास्यायामिति देवताविकल्पः स्यात् ॥ ५६ ॥

---

॥ ५३ ॥ ५४ ॥५५॥ ५६ ॥

---

+ विधानाच्च—ग. । * साकंप्रस्थाय्ये—क० ग. मु० । = विकल्पस्तु—क० ग० ।

प्रतिषिध्य विधानाद्वा विष्णुः समानदेशः स्यात् ॥ ५७ ॥ सि०

न चैतदस्ति, यदुक्तमुभयत्रोपांशुयाजो देवताविकल्पश्चेति । किं तर्हि । पौर्णमास्यामेवोपांशुयाजः । तत्रैव च विष्ण्वाद्या देवता इति । कुतः । प्रतिषिध्य विधानात् । किमिदं प्रतिषिध्य विधानादिति । अमावास्यां वर्जयित्वा पौर्णमास्यां विधानादिति । कथम् । आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति प्रकृत्य समाम्नायते, जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ, उपांशुयाजमन्तरा यजतीति । पौर्णमास्यामिति गम्यते । तत्रैव चेदं वचनं, विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वायेति । तत्र पौर्णमास्यामेवोपांशुयाजः । तत्रैव च विष्ण्वाद्या देवता इति ॥ ५७ ॥

तथा चान्यार्थदर्शनम् ॥ ५८ ॥

इतश्च नामावास्यायमुपांशुयाजः । कुतः । अन्यार्थोऽप्येतमर्थं दर्शयति । कथम् । चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्ययामिति× । इतरथाऽमावास्यायामपि चतुर्दशाहुतयो भवेयुः, त्रयोदशेति नोपपद्यते । तस्मान्नामावास्यायामुपांशुयाज इति ॥ ५८ ॥

न चानङ्गं सकृच्छ्रुतावुभयत्र विधीयेतासंबन्धात् ॥ ५९ ॥

इतश्च नामावास्यायाम् । न हि सकृच्छ्रूयमाणमनङ्गमुभयत्र भवति+ । अङ्गं हि प्राधानार्थत्वादुभयत्र स्यात् । प्रधानं चेदं, नाङ्गम् । तस्मात्पौर्णमास्यां श्रूयमाणं नामावास्यायां भवेत् । असंबन्धात् । न हि प्रधानं प्रधानेन, अङ्गमङ्गेन संबन्धं यातीति ॥ ५९ ॥

॥ ५७ ॥ ५८ ॥ ५९ ॥

---

× अमावास्यायामिति । चतुर्दश भवेयुः—क. मु. । + भवितुमर्हतीति—ग. ।

* प्रधानेन संबन्धं यातीति—क० मु० ।

गुणानां च परार्थत्वात्प्रवृत्तौ+ विधिलिङ्गानि दर्शयति ॥ ६० ॥

गुणानां च परार्थत्वात्प्रधानेषु प्रवृत्तौ विधिलिङ्गानि दर्शयति। न प्रधानानाम्, अपरार्थत्वात्। कथम्। अप्सुमन्तावाज्यभागौ यजतीति, एकादश प्रयाजान् यजत्येकादशानुयाजानिति। तस्मादप्युपांशुयाजो नामावास्यायामिति ॥ ६० ॥

विकारे चाश्रुतित्वात् ॥ ६१ ॥

अमावास्याविकारे च साकंप्रस्थायीये,* उपांशुयाजो न श्रूयते। कथम्। आज्यभागाभ्यां प्रचर्याऽऽग्नेयेन च पुरोडाशेनाग्नीधे स्रुवौ प्रदाय सह कुम्भीभिरभिक्रामन्नाहेति, आग्नेयादनन्तरं सांनाय्यं दर्शयति, नोपांशुयाजम्। तस्मादपि नामावास्यायामुपांशुयाज इति ॥ ६१ ॥

( एकपुरोडाशायामपि पौर्णमास्यामुपांशुयाजविधानाधिकरणम् ॥ १८ ॥ )

[ १८ ] द्विपुरोडाशायां स्यादन्तरार्थत्वात् ॥ ६२ ॥ पू०

दर्शपूर्णमासयोरिदमामनन्ति, उपांशुयाजमन्तरा यजतीति। तत्रायमर्थः समधिगतः, पौर्णमास्यामुपांशुयाज। तत्र च विष्णवाद्या देवता इति। अस्ति चोर्ध्वं सोमाद्द्विपुरोडाशा पौर्णमासी। प्राक् सोमादेकपुरोडाशा। तत्रायमर्थः सांशयिकः। किं द्विपुरोडाशायामेवोपांशुयाज उत द्विपुरोडाशायामेकपुरोडाशायां चेति। किं प्राप्तम्। द्विपुरोडाशायां स्यात्। कुतः। अन्तरार्थत्वात्। अन्तरासंयोगेन हि श्रूयते, उपांशुयाजमन्तरा यजतीति। प्राक् पुरोडाशसंकीर्तनात्पुरोडाशावन्तरेति गम्यते। द्विपुरोडाशायामन्तरा शक्यं कर्तुं। नैकपुरोडाशायाम्। तत्र** क्रियमाणमयथाश्रुतं स्यात्। तस्माद्द्विपुरोडाशायामेवेति ॥ ६२ ॥

---

॥ ६० ॥ ६१ ॥ ६२ ॥

---

+ प्रकृतौ—मु०। * प्रस्थाय्ये—क० ख० मु०. ** तत्र हि क्रियमाणे न यथा श्रुतं कृतं स्यात्—ग.।

अजामिकरणार्थत्वाच्च ॥ ६३ ॥

इतश्च द्विपुरोडाशायामेवेति । कुतः । अजामिकरणार्थत्वमत्र श्रूयते । जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति । विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वायेति । जामिसादृश्यमिति*। पुरोडाशयोश्च सादृश्यदोष उच्यते । जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ, पुरोडाशं कृत्वा पुनरनूचीनः पुरोडाश एवेति । यत्र दोषस्तत्र दोषविघातार्थेन भवितव्यम् । तस्माद्द्विपुरोडाशायामेवेति । ६३ ॥

तदर्थमिति चेन्न तत्प्रधानत्वात् ॥ ६४ ॥

इति चेत्पश्यसि, तदर्थत्वादन्तरार्थत्वाद्द्विपुरोडाशायामेव भविष्यतीति । तन्न । तत्प्रधानत्वात् । पौर्णमासी प्रधानतः, अन्तरार्थो गुणतः । उपांशुयाजः पौर्णमास्या × अवयवो विधीयते । उपांशुयाजस्याप्यन्तरालं गुणः । एकपुरोडाशाऽपि भवत्येव पौर्णमासी । तस्यामुपांशुयाजः केन न स्यात् । अन्तरालं÷ तु गुणोऽसंभवान्न भविष्यतीति*। तस्मादसत्यन्तराले, एकपुरोडाशायामुपांशुयाजः कर्तव्य इति ॥ ६४ ॥

अशिष्टेन च संबन्धात् ॥ ६५ ॥

अशिष्टेन चाश्रुतेनान्तरालार्थेनोपांशुयाजस्य संबन्धः कर्तव्यः स्यात् । अन्तरालगुणक उपांशुयाज इति । न ह्यन्तरालं गुणत्वेन विधीयमानं पश्यामः । तस्मादेकपुरोडाशायामप्युपांशुयाजः कर्तव्य इति ॥ ६५ ॥

उत्पत्तेस्तु निवेशः स्याद्गुणस्यानुपरोधेनार्थस्य विद्यमानत्वाद्विधानादन्तरार्थस्य नैमित्तिकत्वात्तदभावेऽश्रुतौ स्यात् ॥ ६६ ॥

॥ ६३ ॥ ६४ ॥ ६५ ॥

* सादृश्यमिति—तथा च नैरन्तर्येण पुरोडाशद्वयकरणमालस्यसदृशं भवतीत्यर्थः ।
× पौर्णमासस्यावयवः—क० । ÷ अन्तरालं गुणौ—क० मु० । * भविष्यति—ग० ।

तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति । गुणत्वेनान्तरालं न श्रूयत इति । उत्पत्तिवाक्येनैवापांशुयाजोऽन्तराले निविशते । अन्तरालमस्य गुण उत्पत्तिवाक्येन श्रूयते, उपांशुयाजमन्तरा यजतीति । त स्यादस्य गुणस्यानुपरोधेन गुणी निविशेत, नैकपुरोडाशायां स्यात् । नैकपुरोडाशायामक्रियमाणोऽनर्थको भवति । अन्तरालार्थो हि द्विपुरोडाशायां विद्यते । तदभावे—अन्तरालार्थस्याभावे, अश्रुतौ + यदि द्विपुरोडाशा न श्रयेत, ततः स्यादेकपुराडाशायामुपांशुयाजः । अस्ति त्ववकाशो द्विपुरोडाशा पौर्णमासी । तस्मादेकपुरोडाशायां स्यादिति ॥ ६६ ॥

उभयोस्तु विधानात् ॥ ६७ ॥

तुशब्दः पक्षं व्यावर्तयति । उभयोः पौर्णमास्योरुपांशुयाजः । एकपुरोडाशायामपि स्यादित्यर्थः । कुतः । विधानात् । विधीयते हि स एकपुरोडाशायामपि । साऽपि हि पौर्णमासी । आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति पौर्णमासीशब्द एकपुरोडाशां वर्जयन्नुपरुध्येत । तस्मादेकपुरोडाशायामपि स्यात् ॥ ६७ ॥

गुणानां च परार्थत्वादुपवेषवद्यदेति स्यात् । ६८ ॥

गुणश्चान्तरालं प्रधानार्थं श्रूयत उपांशुयाजार्थेन, अन्तरालेनोपांशुयाजस्योपकर्तव्यमिति । नासावेकपुरोडाशायामुपांशुयाजं निवर्तयितुमर्हति । पौर्णमास्यां श्रूयमाण उपांशुयाज एकपुरोडाशाया अपि पौर्णमासीत्वात्तत्र प्राप्नोति । अन्तराले च श्रुतत्वादन्तरालेऽपि प्राप्नोति । एकपुरोडाशायामन्तरालाभावान्नान्तराले स्यात् । तस्मादन्तरालस्य गुणस्य शास्त्रं यदा पौर्णमासी तदेति स्यात् । उपवेषवत् । यथा, उपवेषेण कपालान्युपदधातीति यदोपवेषस्तदा= तेनेति गम्यते । एवमिहापि यदाऽन्तरालं, तदाऽन्तराले भविष्यति । तस्मादेकपुरोडाशायामपि स्यादिति ॥ ६८ ॥

---

॥ ६६ ॥ ६७ ॥ ६८ ॥

---

+ अश्रुतौ—न हि द्विपुरोडाशौ न श्रूयेते—ग. = यदा नोपवेषस्तदा नेति गम्यते—ग.।

अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ॥ ६९ ॥

उच्यते । नन्वन्तरालगुणक उपांशुयाजः श्रूयमाणोऽन्तराला-भावादुच्यमानोऽपि पौर्णमास्यामेकपुरोडाशायां वैगुण्यात्फलस्यासाधक इति न क्रियेत । न हि पौर्णमासीविशेषे यत्रान्तरालमित्यन्तरालगुणता विधीयते । अविशेषेण हि द्विपुरोडाशायां च तद्विधानम् । तस्मादेकपुरोडाशायां प्रयोजनाभावान्न करिष्यत इति । आह । एवं सत्युपांशुयाजाभावादेकपुरोडाशाया नैव कर्तव्या । अत्रोच्यते । नैष दोषः । फलवती हि सा भविष्यति, यदा* द्विपुरोडाशा संभविष्यतीति ।

अत्रोच्यते । यद्येकपुरोडाशायां वैगुण्यमुपांशुयाजस्य स्यात्, ततो न क्रियेत । न तु वैगुण्यमस्ति । न ह्यन्तरालं गुणतः श्रूयते । किं तर्हि । कालं लक्षयितुं, यौ पुरोडाशौ तयोर्मध्ये, इति । कथम् । अनूद्य हि तौ पुरोडाशावेतद्विधीयते, जामि वा एतद्यज्ञस्य क्रियते । यदन्वञ्चौ पुरोडाशौ, उपांशुयाजमन्तरा यजतीति । यौ तावनूदितौ यथा व्यवहितौ भवतः, तथोपांशुयाजः कर्तव्यः । तस्मिन् काल इति गम्यते । अनपायश्च तस्य कालस्यैकपुरोडाशायामपि । कथम् । यो हि द्वयोः पुरोडाशयोर्मध्य+ इति कालोऽवगम्यते, स एव पूर्वस्मादुत्तर इति । एवं चेत्, यद्यप्येकपुरोडाशायां द्वौ पुरोडाशौ न स्तः । तथाऽपि स पूर्व आग्नेयोऽस्ति । तस्मादुत्तरः स एव कालः, योऽसावन्तरालेन लक्षितः । यथा, नागवेलायामागन्तव्यं, शङ्खवेलायामागन्तव्यं, पटहवेलायामागन्तव्यमिति । यस्मिन्× ग्रामे न नागाः, न शङ्खाः, न पटहस्तस्मिन्नपि स एव कालः । तत्र ह्यागमनं क्रियते । एवमिहापि द्रष्टव्यम् । तस्मादेकपुरोडाशायामुपांशुयाजः कर्तव्य इति ॥ ६९ ॥

---

॥ ६९ ॥

---

* यदि—क० मु० । + मध्ये—क० । × यस्मिन्नपि ग्रामे न नागाः, पटहश्च—ग० ।

प्रशंसार्थमजामित्वं* यथाऽमृतार्थत्वम् ॥ ७० ॥

अथ यदुक्तम्, अजामिकरणार्थत्वादिति । तत्परिहर्तव्यम् । अत्रोच्यते । प्रशंसैषोपांशुयाजस्य वैचित्र्येण, न त्वेतदेवात्र फलं विधीयते, यदजामित्वमिति । कुतः । विहितस्य हि प्रयोजनं विधीयते । न चैवं सत्युपांशुयाजो विहितः स्यात् । विधाने चार्थद्वयविधानं दोषः । न चाजामिकरणं नाम किंचिदिष्टं फलम् । तस्मात्प्रशंसैषा । यथोपस्तरणाभिघारणयोरमृतार्थत्वम् । अमृतं वा आज्यं मर्त्यं हविर्यदुपास्तृणत्यभिधारयत्यमृताहुतिमेवैनां करोतीति । तस्मादेकपुरोडाशायामप्युपांशुयाजः कर्तव्य एवेति ॥ ७० ॥

इति श्रीशबरस्वामिकृतौ मीमांसाभाष्ये दशमस्याध्यायस्याष्टमः पादः ॥ दशमाध्यायश्च समाप्तः ॥

---

॥ ७० ॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां दशमाध्यायस्याष्टमः पादः ॥

दशमाध्यायश्च समाप्तः ॥

---

* 'प्रशंसार्थमजामित्वम्' इत्येव सर्वत्र मुद्रितपुस्तकेषु पाठो दृश्यते । परंतु श्रीसंज्ञके पाठान्तरस्य भाष्यसंमतस्योपलम्भात्स एव प्रकाशितः ।

## टुपटीकासहितशाबरभाष्यसहिते मीमांसादर्शने

### अष्टम-नवम-दशमाध्यायेषु

### शुद्धिपत्रम् ॥

| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १२ | इत्यसाघारण्य | इत्यसाधारण्य |
| ५ | ८ | उपहोमादिमि | उपहोमादिभि |
| ६ | ५ | बाहु | बाहू |
| ८ | १४ | लिङ्गदर्शतात् | लिङ्गदर्शनात् |
| १० | ५ | तमा | तथा |
| १० | २४ | तथ ऽपि | तथाऽपि |
| १३ | १४ | पुरुषस्यापकरोति | पुरुषस्योपकरोति |
| २८ | १२ | द्वादशाहोऽगर्हणः | द्वादशाहोऽहर्गणः |
| २९ | ३ | कर्मोभयाविध | कर्मोभयविध |
| २९ | १३ | तस्मच्चोदना | तस्माच्चोदना |
| ३० | १६ | हीनत्वश्रूयते | हीनत्वंश्रूयेत |
| ३१ | २० | म चेदृग्वॅचॅन | न चेदृग्वचन |
| ३३ | ८ | प्रतीयता | प्रतीयेता |
| ३४ | ६ | त्तोदकमात्पाना | चोदकप्राप्ताना |
| ३७ | १० | दूपचयः | दुपचयः |
| ४१ | २४ | यत्रा | यथा |
| ४२ | ८ | प्रतिकृतिवचनौ | प्रतिकृतिवचनो |
| ४६ | २३ | वैदिकाना | वैदिकानां |
| ५३ | २६ | नारिष्ठहोमाना | नारिष्ठहोमानां |
| ५४ | २३ | कुताश्चिदपि | कुतश्चिदपि |
| ५६ | १० | दशमान्तर | दशमानन्तर |
| ५७ | २ | तऽपूर्व | तेऽपूर्वं |

| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५७ | ११ | तस्मायाद्विषयभेदः | तस्माद्विषयभेदः |
| ५७ | २२ | दक्षिायित्वा | दीक्षयित्वा |
| ६३ | ३ | | वाक्यविनियुक्तेषु प्रोक्षणादि संनिपत्योपकारकेष्वपूर्वं प्रयुक्तत्वाधिकरणम् ॥ २ ॥ |
| ६३ | २१ | कर्माण्युत्पद्यते | कर्मण्युत्पद्यते |
| ६४ | ५ | हन्तिपिषिभ्या | हन्तिपिषिभ्यां |
| ६६ | २० | गृह्यत | गृह्यते |
| ६९ | ११ | धर्मास्त्रैतवीयायां | धर्मास्त्रैधातवीयायां |
| ६९ | १८ | लँमते | लँभते |
| ७० | ५ | दर्शपूर्णमासाभ्यां | दर्शपूर्णमास्तभ्यां |
| ७७ | ७ | तत्रैतदसंबद्धं | तत्रैतदसंबद्धं |
| ८२ | ५ | संख्धा | संख्या |
| ८३ | २५ | किमन्त्रक णं | किमन्त्रकरणं |
| ८८ | ९ | वा। | वात् |
| ८९ | २४ | विद्येत | भिद्येत |
| ९३ | १७ | यकिंचि | यत्किंचिं |
| १०५ | १६ | पदार्थमभिद्यत्ते | पदार्थमभिधत्ते |
| १०९ | ३ | सवित्र दिदेवत्यं | सवित्रादिदेवत्यं |
| ११४ | ५ | एवेत्साह | एवोत्साह |
| ११४ | २२ | वचनव्यक्ति | वचनव्यक्तिः |
| ११९ | १ | दोष | दोषः |
| १२८ | १८ | स्तात्रापूर्व | स्तोत्रापूर्वं |
| १२९ | ३ | दर्शति | दर्शयति |
| १३१ | १८ | सामछब्द | सामशब्द |

| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४० | ९ | स्तुतिमामि | स्तुतिमाभि |
| १४५ | १५ | मानन्यर्या | मानन्तर्या |
| १४९ | २० | सूप्तपञ्चाशद् | सप्तपञ्चाशद् |
| १५३ | १० | कधम् | कथम् |
| १५६ | १८ | प्रगीयेति | प्रगीतयेति |
| १६६ | २१ | ततस्तधर्मैः | ततस्तद्धर्मैः |
| १६९ | १६ | रथंनरं | रथंतरं |
| १७० | २३ | दृष्टार्थत्याच्चापूर्वभेदः | दृष्टार्थत्वाच्चापूर्वभेदः |
| १७२ | १७ | बृहद्रथंतरो | बृहद्रथंतरो |
| १७८ | १० | प्रत्युनुष्ठानं | प्रत्यनुष्ठानं |
| १७९ | १९ | एतावर्थौः | एतावर्थौ |
| १८२ | ८ | स्तरणद्रव्यगुत्तं | स्तरणद्रव्यगुणं |
| १८४ | १६ | स्पृशेथज्ञस्य | स्पृशेद्यज्ञस्य |
| १८६ | १ | इत्यपवगस्य | इत्यपवर्गस्य |
| १८८ | २ | बन्ध श्च | बन्धाच्च |
| १९३ | १६ | शोपाददानः | वोपाददानः |
| १९६ | १२ | जोराश्यि | जोरस्मि |
| १९९ | ५ | टिव | द्विव |
| २०१ | ८ | तस्निन् | तस्मिन् |
| २०३ | ११ | कचनान्तेन | कवचनान्तेन |
| २०५ | ११ | प्रका– | प्रकाश– |
| २०५ | १४ | संख्य - | संख्या– |
| २०५ | १८ | संख्य | संख्या |
| २०६ | २४ | अस्यशब्पस्य | अस्यशब्दस्य |
| २०७ | २ | दोपः | दोषः |

| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २०७ | १२ | णेयत्त | णेयत्ता । |
| २२३ | १७ | वाक्यनापि | वाक्येनापि |
| २२४ | ४ | सर्वकर्मार्थमतत् | सर्वकर्मार्थमेतत् |
| २२४ | ११ | म्नावहन्यहानि | म्नावहन्यहानि |
| २२४ | १७ | तहिं | तर्हि |
| २२७ | १७ | के ांचित्प | केषांचित्प |
| २२८ | १५ | थत्तु | यत्तु |
| २२८ | १६ | तहिं | तर्हि |
| २४१ | ७ | सर्व | सर्वं |
| २४१ | १० | सर्व | सर्वं |
| २४२ | २३ | व्यवाश्वताः | व्यवहिताः |
| २४३ | ७ | पाकृतपयोजनं | प्राकृतप्रयोजनं |
| २४३ | २४ | पवार्थान् | पदार्थान् |
| २४३ | २४ | श्रतिश्च | श्रुतिश्च |
| २४६ | ४ | म्भस्य | रम्भस्य |
| २४७ | १ | सीन्यष्द्व्यावृत्तिः | सीन्याद्व्यावृत्तिः |
| २५२ | २३ | सप्तमीसभासे | सप्तमीसमासे |
| २५८ | २१ | शेषभूतत्वादेवतायः | शेषभूतत्वाद्देवतायाः |
| २६० | १९ | शृतवद्गुर्णभूत | शृतवद्गुणभूत |
| २६२ | २४ | ष्टिवद्भापिष्यति | ष्टिवद्भविष्यति |
| २६४ | १ | पसिद्धिग्रहणत्वाच्च | प्रसिद्धग्रहणत्वाच्च |
| २६८ | १६ | चारुसाधनार्थां | चरुसाधनार्थां |
| २७२ | २१ | यदुपस्णात्य | यदुपस्तृणात्य |
| २८५ | २ | कस्यः | कस्य |
| २८५ | १५ | उदयसानीयः | उदवसानीयः |
| २८८ | ५ | बहुकर्तुकता | बहुकर्तृकता |

| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २८८ | २४ | कर्तार। | कर्तारः |
| २८९ | १० | उदवलातॄणा | उदवसातॄणां |
| २९० | २४ | लच्यते | उच्यते |
| २९२ | ११ | चछद्वेन | चशब्देन |
| २९७ | २८ | लिङ्गत्सोमयागः | लिङ्गात्सोमयागः |
| २९९ | ४ | स्यादीति | स्यादिति |
| ३०२ | ११ | .................. | क्रियास्याद्धर्ममात्राणाम् |
| ३०७ | १९ | कुनाश्चि | कुताश्चि |
| ३११ | १९ | अर्येन | अर्थेन |
| ३२३ | २५ | तस्पात् | तस्मात् |
| ३३० | २८ | आधिकारण | आधिकरण |
| ३३७ | ६ | सत्या | सत्यां |
| ३४७ | १२ | जतः | अतः |
| ३४८ | १५ | दादातिना | ददातिना |
| ३४८ | १९ | मकाशो | प्राकाशो |
| ३५० | २५ | मकाशददात्योः | प्राकाशददात्योः |
| ३५० | २६ | मकाशयोः | प्राकाशयोः |
| ३६८ | ८ | स ुच्चया | समुच्चया |
| ३६९ | २२ | उदगाना | उपगाना |
| ३७६ | ७ | स्तोभविवृद्धौ | स्तोमविवृद्धौ |
| ३७६ | १९ | कचित् | क्वचित् |
| ३७८ | १३ | प्रसीयते | प्रतीयते |
| ३७८ | २१ | ब्दार्थक | पदार्थक |
| ३७९ | ८ | प्राप्ते | प्राप्ते |
| ३७९ | १३ | पराणे | पुराणे |
| ३७९ | २४ | तस्मादिग्नि | तस्मादाग्नि |

| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३८१ | १७ | बथा | यथा |
| ३८६ | ३ | वर्णयन्ति | र्णयन्ति |
| ३८७ | १२ | ऋंतूपते | ऋतुपते |
| ३८८ | ६ | तद्विकृतो | तद्विकृतौ |
| ३९३ | ३ | तस्मा | तस्माद |
| ३९४ | ७ | प्रविभककवात् | प्रविभक्तत्वात् |
| ३९५ | १ | औदुस्वरो | औदुम्बरो |
| ३९७ | १८ | नवापदार्थंत्वा | नवापरार्थंत्वा |
| ३९८ | ४ | नत्र | तत्र |
| ३९८ | १४ | मस्पाभिः | मस्माभिः |
| ३९९ | ४ | दधिपानित्यत्येव | दधिपानित्येव |
| ४०२ | ४ | खलवप्यन्तलोपे | खलवप्यन्त्यलोपे |
| ४०४ | २२ | क्रिमस्येति | क्रमस्येति |
| ४०६ | ११ | संभवादूदश | संभवाद्दश |
| ४०७ | १६ | श्रुततसंख्या | श्रुतसंख्या |
| ४१६ | १ | आम्नातं | आम्नानं |
| ४११ | ११ | प्रतिषेधात्पेक्षे | प्रतिषेधात्पक्षे |
| ४१६ | १८ | तस्याऽऽग्रहणात् | तस्याऽऽग्रयणाद् |
| ४१७ | २२ | आर्तिं | आर्तिं |
| ४२० | २ | स्तुतशत्त्रयो | स्तुतशस्त्रयो |
| ४२० | ५ | सस्तुतशस्नो | सस्तुतशस्त्रो |
| ४२४ | २३ | तस्मादिक्रुतौ | तस्माद्विकृतौ |
| ४२६ | १९ | विकल्प | विकल्पः |
| ४३६ | २ | गवभिरनीकैः | नवभिरनीकैः |
| ४३६ | २३ | चोदित्वात् | चोदितत्वात् |
| ४३८ | १२ | पक्षासि | पक्षसि |

| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ४४० | २५ | दीर्वायत्वाय | दीर्वायुत्वाय |
| ४४१ | ५ | गायत्राच्छन्दाः | गायत्रच्छन्दाः |
| ४५२ | २५ | गुणभूतयोच्चैका | गुणभूतयोश्चैका |
| ४५७ | २४ | कात्रर्न्येन | कात्स्न्येन |
| ४६३ | १७ | घृतमान्नं | घृतप्राशनं |
| ४६७ | १८ | मह्ला | मह्लां |
| ४७० | १७ | माध्नोतीति | मार्ध्नोतीति |
| ४७३ | ३ | कर्भ | कर्म |
| ४७५ | २२ | इदि | इति |
| ४७९ | ८ | वचनाद्भेहेन | वचनाद्भेदेन |
| ४८० | २२ | तास्माल्लिङ्ग | तस्माल्लिङ्ग |
| ४८२ | ७ | चोदकप्राप्त | चोदकप्राप्त |
| ४८३ | ८ | तत्कालपेवो | तत्कालमेवो |
| ४८८ | २१ | परिसंख्यानं मवति | परिसंख्यानंभवति |
| ४८९ | २० | स्पादेतत् | स्यादेतत् |
| ४९१ | २२ | दकेनावान्तर | देकेनावान्तर |
| ४९४ | १० | दध्यून्या | दध्यूध्न्या |
| ५०२ | २१ | पश्चम्यां | पञ्चम्यां |
| ५०९ | १२ | शंयृ | शंयू |
| ५०९ | १७ | ञ्छदार्थ | ञ्छब्दार्थे |
| ५१४ | १९ | वाक्यशेपो | वाक्यशेषो |
| ५१४ | २२ | ऽनुपमन्नः | ऽनुपपन्नः |
| ५१७ | ८ | प्रवृत्तिर्नीभयो | प्रवृत्तिर्नोभयोः |
| ५२३ | २३ | सोऽनुवावः | सोऽनुवादः |
| ५२३ | २३ | प्रप्नुत | प्राप्नुत |
| ५२४ | १६ | पितुवज्ञेन | पितृयज्ञेन |
| ५३३ | ९ | जर्तिलयावा | जर्तिलयवा |

| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५३४ | २२ | अयैवमुच्येत | अथैवमुच्येत |
| ५३४ | १४ | नानुष्ठनाय | नानुष्ठानाय |
| ५४० | २ | कल्पयिव्या | कल्पयितव्या |
| ५४० | ३ | द्यधिकारणता | द्यधिकरणता |
| ५४९ | १२ | वास्थाया | वास्यायां |
| ५५० | ११ | द्विरमिघारणेन | द्विराभिघारणेन |
| ५५२ | ५ | चतुरवृत्त | चतुरवत्त |
| ५५२ | १३ | सब्तदशा | सप्तदशा |
| ५५३ | ६ | चैन्द्राग्नयेति | चैन्द्राग्नश्चेति |
| ५५४ | १ | यदितव्ये | वदितव्ये |
| ५५५ | १ | कर्तुसंबन्धोचोप | कर्तृसंबन्धोनोप |
| ५५५ | ४ | दर्शनपूर्ण | दर्शपूर्ण |
| ५५६ | ४ | ऽसंभवान् | ऽसंभवात् |
| ५५९ | ८ | नियभ | नियम |
| ५६० | २३ | होत्रमाम्नायते | हौत्रमाम्नायते |
| ५६२ | १० | आग्नि— | अग्नी— |
| ५६३ | १६ | मुपांशुयाज | मुपांशुयाजः |

शुद्धिपत्रम् समाप्तम् ॥

———